Digitized by eGangotri and Sarayu Trust.

# BHATTI KAVYA;

A

# POEM

## ON THE ACTIONS OF RAMA.

Part the First.

WITH THE COMMENTARIES

OF

JAYAMANGALA

AND

BHARATAMALLIKA.

PUBLISHED FOR THE USE OF

The Sanscrit College.

UNDER THE AUTHORITY OF THE COMMITTEE OF

PUBLIC INSTRUCTION.

CALCUTTA:

PRINTED AT THE EDUCATION PRESS.

1828.



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.

Sl No. 429

# ॥ भट्टिकाव्यं ॥

॥ अस्य टीका जयमङ्गलरचिता जयमङ्गला ॥

॥ भरतमल्लिकनिर्म्मिता मुग्धबोधिनी च ॥

---

॥ तस्य प्रथमोभागः ॥

---

॥ कलिकाता राजधान्यां कमिटीसाहेवानामाज्ञया

इडकेशन् यन्त्रालये मुद्रितः ॥

---

॥ सम्वत्सरे १८८४ शके १७४९ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.

# जयमङ्गला टीका।

श्रीगणेशाय नमः॥ प्रणिपत्य सकलवेदिनमतिदुस्तरभट्टि काव्यसलिलनिधेः। जयमंगलेति नाम्ना नौकेव विरच्यते टीका। लक्ष्यं लक्षणं चोभयमेकत्र विदुषः प्रदर्शयितुं श्रीस्वामिसूनुः कवि र्भट्टिनामा रामकथाश्रयमहाकाव्यं चकार। तथा ह्यस्योपनिबं धनं कविना द्विधाकृतं एकं लक्षणसूचकैः प्रकीर्णाधिकारप्रसन्नति ङंतकांडैश्चतुर्भिः। द्वितीयं लक्ष्यसूचकैरामसंभवादिभिर्द्वाविं शत्या सर्गैः। तत्र लक्षणं द्विविधं। शब्दलक्षणं काव्यलक्षणञ्च। तत्र प्रथमस्य प्रकीर्णाधिकारतिङंतकांडानि द्वितीयस्य प्रसन्नकांडं यत्रोच्चावचेन बहूनां लक्षणानां प्रकरणं तत्प्रकीर्णकांडं तदेवात्र प्रथममुक्तं तस्य व्यापित्वात्। उत्तरत्रापि द्रष्टव्यमिति प्रदर्शनार्थं अत्र यद्यप्यादौ कविना देवतानमस्कारो न कृतः तथापीष्टदेव तासंकीर्तनमपि विघ्नोपशमनहेतुर्भवतीति मन्यमान आह। अभू दित्यादि तस्य हीष्टदेवता सनातनो विष्णुः स चादौ कीर्त्तितः। त त्प्रतिबंधना चेयं कथेति प्रबंधेनैवात्र संकीर्तनं रामायणवत्तत्र विष्णोर्यस्मिन्काले जगत्कार्यवशादवतारः कृतः तदेव प्रथमं दर्श यति।



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.

# भरतटीका।

नमोगणेशाय॥ नत्वा शङ्करमस्वष्ठगौराङ्गमल्लिकात्मजः। भट्टिटीकां प्रकुरुते भरतो मुग्धबोधिनीं। विहिताः पाणिनीयाद्यैः पठनीयादिबोधिकाः। भट्टिटीका मम त्वेष मौग्धबोधार्थ उद्यमः। कविकल्पद्रुमोक्तानां धातूनामनुबन्धतः। स्पष्टानि यानि कार्य्याणि ततो बोध्यानि तानि तु। नाति स्पष्टानि कार्य्याणि ग्रन्थगौरवभीतितः। वाच्यान्यत्र न चाप्यर्था अतिविस्तृतवाग्भवाः। भर्तृहरिनाम कविः श्रीरामकथाश्रयं महाकाव्यं चकार। अत्र सर्गबन्धो लक्ष्यसूचनाय काण्डबन्धो लक्षणसूचनाय अत्र सर्गा द्वाविंशतिः प्रकीर्णाधिकारप्रसन्नतिङन्तकाण्डानि चत्वारि। शब्दलक्षणकाव्यलक्षणभेदाल्लक्षणं द्विविधं। तत्र काण्डत्रये शब्दलक्षणं प्रसन्नकाण्डे काव्यलक्षणं आदौ बहुलक्षणप्रदर्शनं प्रकीर्णकाण्डं व्यापकत्वाद्दर्शितं। महाकाव्यस्यादावाशीर्नमस्क्रिया वस्तुनिर्द्देशो वा कर्त्तव्य इति सम्प्रदायानुरोधाद्वस्तुनिर्द्देशं कुर्व्वन्नेवेष्टदेवतास्मरणात्मकं मङ्गलमप्यादौ प्रकाशयति।

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.

# भट्टिकाव्यं।

अभून्नृपो विबुधसखः परन्तपः श्रुतान्वितो दशरथ इत्युदाहृतः। गुणैर्वरं भुवनहितच्छलेन यं सनातनः पितरमुपागमत्स्वयं॥ १ ॥

अभूदिति भूतसामान्ये लुङ् भूत इत्यर्थः। अन्यथा राज्ञ जं०म श्चिरातीतत्वात्कवेः परोक्षत्वाच्च लिट् स्यात्। गातिस्थेति सिचो लुक्। भूसुवोस्तिङीति गुणप्रतिषेधः। नयतेर्डिच्चेति नयतेरौणादिक ऋन् नरो मनुष्यास्तान्नॄन् पातीति आतो ऽनुपसर्गे कः आतो लोपः नृपो राजा अत्यंतधर्मविजयित्वाद्देवराजस्य मित्रमासीदित्याह विबुधसख इति विबुध्यंत इति विबुधा देवास्तेषामपि प्रधानत्वात्तत्रेगुपधलक्षणः कः सामान्यशब्दोऽपि देवेषु वर्तमानोऽप्यर्थवशाच्छक्रे प्रयुक्तस्तस्य सखेति राजाहः सखिभ्यष्टच् विबुधसखः अनेन धर्मविजयित्वं दर्शयति विबुधसखत्वस्य धर्मकार्य्यत्वात्। धर्म्माविस्मरणसुरलोकविजयिनश्च ये राजानस्तेषां धर्म्मविजयी प्रधानं। परे शत्रवस्त्रिविधाः उच्छेदनीयोपपीडनीयकर्षणीयाः तत्र ये उपपीडनीयकर्षणीयास्तान्परांस्तापयतीति परंतपः द्विषत्परयोस्तापेरिति खच्। खचिह्रस्वः अरुर्द्विषदजन्तस्येति मुम् नृप इत्यनेन स्वमण्डले वृत्तिराख्याता परंतप इति परमण्डले। श्रूयंत इति श्रुतानि वेदादीनि तैरन्वितः संबद्धः ग्रंथतोऽर्थतश्च

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



गृहीतत्वात्। दशरथ इत्यनेन नाम्ना उदाहृतो लोके गीतः। गुण्यन्त अभ्यस्यन्त इति गुणाः गुण आमंत्रण इति चौरादिकोऽद न्तः तस्मादकर्तरि चेत्यादिना घञ् येषामेरजण्यन्तानामितिद र्शनं। येषां तन्नास्ति तेषामेरच् स्वरं प्रति विवादो न रूपं प्रति। गुणैरभिरामादिभिर्वरं श्रेष्ठं यं नृपं पितरमुपागमदिति संबंधः। व्रियत इति वरः ग्रहादिना कर्मण्यप्। केन हेतुना उपगतवांस्तं पितरं सनातन इत्यत आह भुवनहितच्छलेनेति भवंति उत्पद्यंत इति भुवनानि भूर्भुवःस्वरिति त्रयो लोकाः। रजक्युन्नित्यनुवर्त माने भूसूधूसृंभ्यश्छंदसीत्यौणादिकः क्युन् बहुलवचनाद्भाषा यामपि भवति तेभ्यो हिताः भुवनहिताः विष्णोर्दशावताराः इह तु रामो द्रष्टव्यः तच्छलेन व्याजेन भुवनहितछलेन इदा नीं रावणादिकंटकोद्धारणात् तथाचोक्तं परित्राणाय साधूनां विनाशाय च दुष्कृतां। धर्म्मसंस्थापनार्थाय संभवामि युगे युग इति। सनेत्यव्ययं सदार्थे वर्तते सना भवतीति सायं चिरमितिष्ट्युट्युलौटच्तु सनातनो विष्णुः उपागमत् उपजगाम ऌदित्वादङ्। सत्स्वन्येषु राजसु गुणैर्वरत्वात् यं पितरं जनकम ङ्गीकृतवान् सोऽभूदितियोज्यं। स्वयमित्यात्मना न कर्मणान्ये न वा प्रेरित इत्यर्थः॥ १ ॥

भ० अभूदिति॥ दशरथ इतिनाम्ना उदाहृतःख्यातो नृपो राजा अभूत् स कथंभूतः विबुधसखः विबुधानां देवानां सखा मित्रं अथवा विबुधस्य इन्द्रस्य सखा सामान्यदेवतावाचिनोऽपि वि बुधशब्दस्य विशेषपरत्वात् प्राधान्याद्वा इन्द्रवाचित्वं एतेन वि जयित्वं दर्शितं विबुधसखत्वं विनयेनापि भवतीति प्रतापं दर्शय न्नाह परान् शत्रून् तपतीति परन्तपः श्रुतान्वितः श्रूयन्ते गुरुभ्य

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



इति श्रुतानि शास्त्राणि तैरन्वितो युक्तः अधीतशास्त्र इत्यर्थः सोऽध्यैष्ट वेदानिति वक्ष्यमाणश्लोके वेदाध्ययनस्य नित्यत्वज्ञापनार्थं पुनरुक्तिः श्रुतमत्र वेदादन्यच्छास्त्रं। इत्युदाहृत इत्यत्र केचिद्व्याचक्षते इतं ज्ञानं विद्यतेऽस्येति इती ज्ञानी उदाहृतः ख्यात एव यद्वा इतिषु ज्ञानिषु उदाहृतः इतीति इण्गतावित्यस्माद्भावे क्तः सर्व्वे गत्यर्था ज्ञानार्था इति इतं ज्ञानं ततोऽस्त्यर्थे नैकाजादिति इन्। सनातनो विष्णुर्भुवनहितच्छलेन यं नृपं स्वयमात्मना न पुनरन्यप्रकारेण पितरं उपागमत् अङ्गीकृतवान् सोऽभूदिति योज्यं भुवनेति भुवनानां हितं रावणवधादिरूपं तदेव छलं व्याजस्तेन एतेन भुवनहितमपदिश्य अस्य राज्ञो महत्त्वेनैव पुत्रत्वं प्राप्तवानित्यर्थः। अत्र हेतुगर्भविशेषणमाह गुणैर्धैर्य्यगाम्भीर्य्यादिभिर्व्वरं श्रेष्ठं। अभूदिति भूधातो रूपं अस्तेश्चेत् भूररे इति भ्वादेशः भवद्भूतभव्ये त्रिशः क्याद्या इति भूते टी भूतसामान्यविवक्षायां लुङिति पाणिनीयाः कातन्त्रेऽपि सम्प्रतिवर्त्तमानेत्यत्र सम्प्रतिग्रहणं स्वस्वसंज्ञाकालव्यभिचारसूचनार्थमिति वर्द्धमानमिश्रेण व्याख्यातं। शास्त्रस्य विवक्षाधीनत्वात्सत्यपि परोक्षत्वे भूतसामान्यविवक्षायामद्यतनीति पुरुषोत्तमेनाप्युक्तं अनद्यतनेऽपि वाक्यगम्ये इति क्रमदीश्वरेणोक्तं तेन वोपदेवेन भूतसामान्य एव द्यादय उक्ताः नत्वनद्यतनाद्यतनपरोक्षत्वविभागेन घोटीयोग्यमिति अस्यां सिः भूस्थापिवेति सेर्लुक् सर्व्वविधिभ्यो लोपविधिर्बलवानिति न्यायान्नादौ वसोरस्येतीम् सेर्लुकि लुकि न तत्रेत्यनेन णुर्घुङ इति नणुः ग्रजवदेत्यादिना त्रिस्य निषिद्धः पश्चरः शिश्चेति द्यारत्वं ङिद पिद्द इति अपिद्वस्य ङित्वं तेनादावपि णुर्घुङ इति न गुणः नृप इति नॄन्मनुष्यान् पाति रक्षतीति पा रक्षणे इत्यस्मात् आदन्तत्वात्

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



हन जनादिति डः टेर्लोपोडितीति टेर्लोपः विबुधेति विबुध्यन्ते इति विपूर्व्वबुधधातोरिगुपधज्ञाप्रीकिरः क इति कः विबुधसख इति सख्यहोराज्ञः ष इति षः यचोर्लोप इति इकारलोपः परन्तप इति तृभृवृदृजीत्यादौ नाम्नीत्यच चकाराध्याहारादसंज्ञायामपि खः नाम्न्येवेदं सूत्रमितिचेत् कृत्तद्धितसमासानामभिधानं नियामकमित्युक्तेरसंज्ञायां खः खित्यव्याजरुषइति मन् दशरथ इति शब्देनोक्तत्वात् स्वर्थे वा स्वर्थसम्बुद्ध्युक्तार्थ इति श्री दशरथो नृपोऽभूत्कीदृशः इत्युदाहृतः वक्ष्यमाणश्लोकैरुदाहरणतां प्राप्त इति केचित् गुणैरिति गुणन्ते अभ्यस्यन्ते इति गुणा गुणत्कमंत्रे इत्यस्मात् घञलनडिति अल् ञेर्लोपोऽनात्विति ञेर्लोपः हसाल्लोपोऽशितीत्यकारलोपः वरमिति वृञ धातोः व्रियते योऽसाविति पूर्व्वेणाल् णर्घुङ इति णः सनातन इति नित्यार्थात् सनाशब्दात् त्यनाद्यचिरेत्यादिनाष्टनः सनातनः शाश्वतकंसवैरिणोः शिवे ऽपि चात्मन्यतिथौ सुनिस्थच इति विश्वः। उपागमदिति औगमृगत्यां स्वदित्वात् शासलिद्युदितिङः हनगमेत्यादावङइत्युक्तेर्नोङलोपः। दशरथगुणानाह ॥१॥

सोऽध्यैष्ट वेदांस्त्रिदशानयष्ट पितॄनतार्प्सीत्सममंस्त बंधून्। व्यजेष्ट षड्वर्गमरंस्त नीतौ समूलघातं न्यवधीदरींश्च ॥२॥

ज॰ म॰ सोऽध्यैष्टेत्यादि॥ क्षत्रियस्य धर्मोऽध्ययनं यजनं दानं शस्त्राजीवो भूतरक्षणं चेति उभयं नृपइत्यनेनोक्तं। भूतरक्षणे शस्त्रसङ्गं

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



स नृपो वेदानध्यैष्ट अधीतवानिति स्वाध्याय उक्तः। वेदयंति ज्ञापयंति धर्माधर्माविति वेदाः सामादयः पचाद्यच्। इङोऽधि पूर्व्वस्य विभाषा लुङ्लृङोरिति गाङ् विभाषयेति गाङभावपक्षे रूपं अजादित्वादाट्। आटश्चेति वृद्धिः ङित्वादात्मनेपदमादे शप्रत्यययोरिति षत्वं ष्टुत्वञ्च। त्रिदशान्देवानयष्ट अग्निष्टोमा दिभिः पूजितवान् यजनमुक्तं। यजेः स्वरितजितइतितङ् अनिक्ष मीपगत्वात् हलः लिङ्सिचाविति कित्वं न भवति। अनिगन्तत्वात् शस्त्रादिना षत्वं झलोझलीतिसिचोलोपः। पितृनपारीत् आप्या यितवान् पितरमुद्दिश्य यजनं पृपालनपूरणयोरित्यस्मात् पूरणा र्थात् लुङिरूपं सिचि वृद्धिः इटईटी तिसिचोलोपः अथवा पितृन तार्प्सीदितिपाठः तृपप्रीणन इत्यस्मात् लुङि स्पृशमृशकृषतृप दृपां सिच्वक्तव्य इति स्लेः सिचि। अनुदात्तस्य चेत्यादिना अमभा वपक्षे रूपं पितॄन् तर्पितवानित्यर्थः। सममंस्त बंधून् मातृपित्रादि ज्ञातीन् संमतवान् सदा दानमानादिभिः पूजितवानित्यर्थः मन्य तेरनुदात्तत्वात्तङ्। इट्प्रतिषेधस्य येषां सिच इकार उच्चारणा र्थो येषां त्वनुबंधार्थः तेषां हनः सिजितिकित्करणज्ञापकान्नलोपा भावः। येषां तु इकार इत् तेषामिदित्वान्नकारलोपाभावः। आभ्यंतरं शत्रुमजित्वा कथं परंतप इत्याह व्यजेष्ट षड्वर्गमि ति कामक्रोधलोभमोहमदमात्सर्य्याणां षणां वर्गः षड्वर्गः तम भिभूतवान्। विपूर्व्वस्य जयतेर्विपराभ्यांजेरितितङ्। अरंस्त नीतौ सामादिषु संध्यादिषु च रतः नीतिमानित्यर्थः। समूलघातं न्यव धीत् समूलान्निःशेषानरीन् शत्रून्निहतवान् उच्छेदनीया ये शत्रवः तेष्विदं विधानं समूलोपपदाद्धंतेः समूलाकृतेत्यादिना णमुल्। होहंतेरितिघत्वं वृद्धिः हनस्त इति तत्वं कषादिषु यथेत्यादिना

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



यथाविध्यनुप्रयोगः अनुप्रयोगे लुङि चेति वधादेशः। तस्याकारा
न्तत्वादुपदेशे ऽनेकाच्त्वादिडनिषेधो न भवति। अतो लोपे कृते
तस्य स्थानिवद्भावादतो हलादेरिति विभाषावृद्धिर्न भवति ॥ २ ॥

भ० सोऽध्यैष्टेति ॥ स दशरथो वेदानध्यैष्ट अधीतवान् अधीङ् ल
ध्ययने नवशः पमे इति ङित्वान्नं च्यांसिः षीटीधीध्वित्यमं कृत्वा
आदिगे चोरिति णौ कृते भूयो ऽमजादेरिति पुनरमं कृत्वा
आदिगे चोरिति त्रिः क्त्वादिति षःष्टुभिरिति तस्य टः वेदानिति
वेदयन्तीति वेदाः सामादयः पचादित्वादन् घञलनट् इति
करणे वा घञ् त्रिदशान् देवान् अयष्ट अग्निष्टोमादिना पूजित
वान् केचित्तु यजेरेव देवपूजावाचित्वात् त्रिदशानित्यस्य वैयर्थ्याप
त्तेस्त्रिदशानयष्ट सङ्गतवानित्याहुः वस्तुतस्तूपचारात् पूजामा
त्रवाचित्वे ऽपि यजश्चादेवार्चादानसङ्गकृतावित्यत्र देवो देवनं
क्रीडा अर्चा चेति द्वन्द्वः देवस्यार्चेति तत्पुरुषो ऽपि तात्पर्यभेदाद्वा
क्यभेदो लौकिके न दोष इति केचित् शच्छाजिति जस्य षड्झस
स्वादेति सेर्लोपः ष्टुभिरिति तस्य टः पितॄन् अपारीत् आप्यायित
वान् ञिपृलिञो पालने पूर्त्तौ च्यांसिः रुदादयस्त्वीति ईम् वसोऽरसो
तिदम् झसस्वादिति सेर्लोपः त्यलोपे त्यलक्षणमिति न्यायात् सेर्लो
पेऽपि व्रजवदेत्यादिना त्रिः अतार्प्सीदिति क्वचित् पाठः तृपधातुः
प्रीणने सकर्मकः प्रीतिमात्रे त्वकर्मक इति क्षीरस्वामिप्रभृतयः। ब
न्धून् सममंस्त आदृतवान् मन्योङ् बोधे सम्पूर्वोऽयमादरार्थ औदि
त्वादनिम्। षड्वर्गं कामक्रोधलोभमानमदहर्षरूपं व्यजेष्ट अभि
भवति स्म जिजये चकारात् अभिभवे विपराजेति मं नीतौ अरंस्त
क्रीडितवान् रमूङ् जौ क्रीडे अरीन् शत्रून् समूलघातं यथा स्यात्त
था न्यवधीत् हतवान् समूलानां शत्रूणां घातः प्राणवियोगफलक

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



व्यापारो यत्र हिंसाक्रियायां। अन्ये तु समूलशब्दात् पराङ्गतार्था द्धन्तेश्चणम्विभक्त्यन्ततदनुप्रयोगश्चेत्याहुः। समूलान्निःशेषान् अरीन् प्राप्य हतवानित्यर्थः चणम्वाभीक्ष्ण्ये पूर्व्वकाले इत्यच वाश ब्दस्य व्यवस्थावाचित्वात् योगविभागाद्वा अन्यचापि चणम्वा स्यादि ति देवीदासचक्रवर्त्तिना व्याख्यातं। अरीन् समूलान् हत्वा तत् प्राणत्यागानुकूलव्यापारं कृतवानित्यर्थस्तेन पूर्व्वकालत्वमपीति दुर्गसिंहप्रभृतयः। एतेन पुनः सन्धानशङ्कया सदा सावधानत्वं सूचितं। घातमिति हन्तेर्घञि चणम्वा हनस्तडिति नस्य तङ् खेर्णौ घ इति हस्य घः ञ्णित्यन्तेजुङतोरिति त्रिः न्यबधीदिति हन् लौहिंसागत्योः हनबधश्चीति बधादेशेन बधान्तत्वाद्धसादेः सेम इत्यादौ बधवर्जनाद्बधेः सेम्त्वसूचनाद्वा वसोरस्येतीम् हसादेः सेम इति बधवर्ज्जनान्न त्रिः व्यजेष्ट षड्वर्गमित्यनेन मानसा रिप वः अरीन् न्यबधीदित्यनेन च बाह्याश्च निर्ज्जिता अतः पर न्तप इति प्रागुक्तमुपपादितं॥ २॥

## वसूनि तोयं घनवद्व्यकारीत्सहासनं गोत्रभिदाध्य वात्सीत्। न त्र्यम्बकादन्यमुपास्थिताऽसौ यशांसि सर्व्वे षुभृतां निरास्थत्॥ ३॥

वसूनि॥ वसूनि द्रव्याणि बन्धुव्यतिरेकेण बालादिभ्यो व्यकारीत् दत्तवान् विक्षिप्तवानितिवा। किरतेर्लुङि रूपं कः किमिवेत्यपेक्षा यामाह तोयं घनवदिति तोयं उदकं घनो मेघः फलनिरपेक्षतया यथा विकिरति तद्वत्। एवं सम्यक्पालनादिन्द्रेण तुल्यत्वमाह स हासनं गोत्रभिदाध्यवात्सीदिति गोत्रभिदा इन्द्रेण सहासनं अध्य



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



वात्सीत् अध्युषितवान् अनेनात्यन्तधर्म्मविजयित्वस्य फलं दर्शयति वस निवास इत्यस्य रूपं वसिः संप्रसारणीति वचनादिडभावः। अस्तिसिच इतीट्। वदव्रजेत्यादिना वृद्धिः सस्यार्द्धधातुक इति तत्वं आसनमिति उपान्वध्याङ्वस इति अधिकरणस्य कर्म्मसंज्ञा। त्रीणि अम्बकानि अक्षीणि यस्येति त्र्यम्बको महादेवः तस्मादन्यं नो पास्थित न पूजितवानित्यर्थः उपपूर्व्वात्तिष्ठतेः देवपूजासंगतिकरणपथिष्विति देवपूजायां तङ् स्थाघ्वोरिच्चेत्यादिना इत्वं कित्वं च। ह्रस्वादंगादिति सिचो लोपः। इषून् बिभ्रतीति अन्येभ्यो ऽपि दृश्यत इति क्विप् इषुभृतो धनुर्द्धराः सर्व्वेषां तेषां यशांसि निरास्थत् निरस्तवानित्यर्थः असाधारणीकृतास्त्वत्वं दर्शयति। उपसर्गादस्यत्यूह्योर्वा वचनमिति वचनाद्यदा तङ् नास्ति तदा तिप् अस्यतीत्यादिनाङ्गेरङ् अस्यतेस्थुक् ॥ ३ ॥

भ० वसूनीति ॥ असौ दशरथो वसूनि धनानि व्यश्राणीत् दत्तवान् क इव घनवत् मेघ इव त्वत् साम्ये इति वत् चित्वादव्ययत्वं तोयमिति तोयमिव तोयतुल्यानि वसूनीत्यर्थः। तोयशब्दो ऽयं स्वप्राधान्यैकत्वादत्युक्तैकवचनः अनेकेषामपि वसूनामेकतुल्यतेत्याशयः श्रणविश्राणे सौ व्रजवदेति त्रिः गोत्रान् पर्व्वतान् भिनत्तीति गोत्रभिदिन्द्रः त्रासुसित्यादिना। क्विप्। तेन सह एकमासनमध्यवात्सीत् वसौनिवासे अनिमत्वात् व्रजवदेति त्रिः सत्स्यरे इति सस्य तः कर्म्मक्रिया इत्यादिना उस्य ढत्वं त्र्यम्बकात् महादेवादन्यं न उपास्थित न पूजितवान् मैचाध्वसंज्ञाराधइति आराधनार्थे मं स्थादोर्ङ्रिरिति एनिषेधस्य त्रीणि अम्बकानि नेत्राणि यस्येति विग्रहः द्यौर्भूमिरापस्तिस्रो ऽम्बा यस्येति भारतं। त्रयाणां लोकानामम्बः पितेत्यन्ये तिस्रो ऽम्बाः शक्तयो ऽस्येति केचित् अन्या

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



रभ्येति पी सर्व्वेषुभृतां सकलधनुर्द्धराणां यशांसि निरास्यत् निरस्तवान् ततोऽधिकत्वात् वक्तव्यख्यालिप इति ङः वच्यस्येति अस्यतेरथादेशः इषून् बाणान् बिभ्रतीति पूर्व्ववत् क्विप् सस्य तन्पितीति तन्॥ ३॥

पुण्यो महाब्रह्मसमूहजुष्टः सन्तर्पणो नाकसदां वरेण्यः। जज्वाल लोकस्थितये स राजा यथाऽध्वरे वह्निरभिप्रणीतः॥ ४॥

पुण्यो॥ पुनातीतिपुण्यः पूञोयत् णुक् ह्रस्वश्चेति औणादिकोयत्। णुगागमश्च ह्रस्वश्च अत्यन्तपुण्यकरणाद्राजापि पुण्य इत्युच्यते। तन्मयत्वाद्राजा अग्निरपि पुण्यः पावनात्पुण्यः यागादिः पुण्यः तेन पुरुषः पूज्यते। महतां वेदविदां ब्रह्मणां ब्राह्मणानां समूहेन जुष्टः सेवितो राजा अग्निश्च ब्रह्मशब्दोऽत्र ब्राह्मणपर्य्यायः। नाके स्वर्गे सीदंतीति सत्सुद्विषेत्यादिना क्विप् नाकसदो देवाः तेषां कर्म्मणि षष्ठी संतर्पयति प्रीणयतीति संतर्पणः संतर्पयतेः कृत्यल्युटोबहुलमितिकर्त्तरि ल्युट् राजा यागादिना तर्पयति अग्निरप्यग्निमुखत्वाद्देवानां वरेण्यः श्रेष्ठः राजा अग्निश्च वृङ् एण्यः जज्वाल प्रदीप्तवान् लोकस्थितये मा भूल्लोकस्य स्थित्यतिक्रम इत्येवमर्थी अग्निरपि लोकस्य स्थितये ज्वलति। यथोक्तं। अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इति। अभिप्रणीत इत्यग्निविशेषणं। आभिमुख्येन प्रणीत इतिप्रादिसमासः उपसर्गादसमास इत्यादिना णत्वं मंत्रेणाभिमुखीकृत इत्यर्थः। यथाऽध्वरे यागे ऽभिप्रणीतो वह्निर्ज्वलति तथा राजापीत्यर्थः॥ ४॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



स० पुण्यो महेति ॥ स राजा लोकस्य स्थितये मर्य्यादायै जज्वाल दीप्तवान् प्रतापवान् बभूवेत्यर्थः यथा अध्वरे यज्ञे अभिप्रणीतो मन्त्रेण संस्कृतो ऽग्निर्ज्वलति अग्निज्वलनमपि लोकस्थित्यर्थं स्यात् यदुक्तं अग्नौ प्रागाहुतिः सम्यगादित्यमुपतिष्ठते। आदित्या ज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इति उभयोर्विशेषणमाह पुण्यः पुनातीति पुण्यं धर्म्मः नाम्न्यन्येतिक्केति सूत्रेणान्येऽपि क्वतः प्रयोगाः स्युरिति सूचितं तेन पूधातोर्डुण्ये टेर्लोपो डितीति टे र्लोपः पुण्ययोगात् पुण्यः अर्श्रआदित्वादः। पुण्यं धर्म्मे मनोज्ञे च पावने च प्रयुज्यते। महतां ब्रह्मणां समूहेन जुष्टः सेवितस्तेन प्रीतो वा ब्रह्मा विरिञ्चिद्विजयोरिति विश्वः। शङ्खे तैले तथा मांसे वैद्ये ज्यौतिषिके द्विजे। यात्रायां पथि निद्रायां महत् शब्दो न दीयत इति निषेधान्महता ब्रह्मसमूहेन जुष्ट इति वा विगृह्यते। महांश्चासौ ब्रह्मसमूहजुष्टश्चेति वा यद्वा महद्ब्रह्म तपो येषां तेषां समूहेन जुष्टः। वेदस्तत्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिरित्यमरः। यद्वा अमहा अस्येव विष्णोरिव महस्तेजो यस्यासावमहा इतिपृथक् पदं। यद्वा मह्यते पूज्यते ऽसौ महास्तस्मासुसिति कर्म्मण्यस्। यद्वा अमोरोगस्तं हन्तीत्यमहा तस्मिन् राजनि सति लोकानां व्याधिभयं नासीदित्यर्थः। आरोग्यमपि कविभिर्वर्ण्यते तथाच कालिदासः जनपदे न गदः पदमादधावभिभवः कुत एव सपत्नज इत्यग्रे र्व्याधिहन्तृत्वमस्त्येव। शङ्कीत्रि जुषमुदि सेवे ईदित्वान्नेम् डीश्वीदितीम् निषेधः। नाके स्वर्गे सीदन्तीति नाकसदो देवाः पूर्व्ववत् क्विप् तेषां सन्तर्पणः ग्रहनन्दीति येऽनः ढवेक्ततीति ढे षी सम्यक् तर्पणं यस्मादिति विद्यमानसम्बन्धे षष्ठीत्यन्ये। कं सुखं तद्विपरीतमकं नास्त्यस्मि

Sanskrit College Calcutta India India

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



न्निति नाकः णत्वोऽनौवान्ञ्चमेोरिति व्यवस्थितविकल्पत्वान्ननत्वो ऽनादेशः। वरेण्यो ऽन्यापेक्षया श्रेष्ठः वृञ्धातोः श्रेष्ठार्थे नान्य न्येतिकेत्यन्यकृतसूचनादेन्यः ॥४॥

स पुण्यकीर्त्तिः शतमन्युकल्पो महेन्द्रलोकप्रतिमां समृद्ध्या। अध्यास्त सर्व्वर्त्तुसुखामयोध्यामध्यासितां ब्रह्मभिरिद्धबोधैः ॥ ५ ॥

यत्रस्थो राज्यं चकार तां नगरीं दर्शयन्नाह। स पुण्येतित्यादि। ज०म०
स्वामिगुणपूर्व्वका हि निवासस्य गुणा भवन्तीति प्रदर्शनार्थं पश्चा त्तदभिधानं तथा चोक्तं। यतु यच्छीलस्तच्छीला अस्य प्रकृतयो भवं तीति। स राजा पुण्यकीर्त्तिः पुण्याः पवित्राः कीर्त्तयो यस्य सः। शतमन्युकल्पइति प्रभावं दर्शयति ईषदसमाप्ताविति कल्पः शतम न्युरिन्द्रः महेन्द्रलोकप्रतिमामयोध्यामिति योज्यं। प्रतिमीयते तु ल्यते इतिप्रतिमा आतश्चोपसर्गइत्यङ्। महेन्द्रलोकेन प्रतिमा तु ल्यातृतीयेतियोगविभागात्समासः अमरावतीमिवेत्यर्थः कया समृद्ध्या सम्यगतिशयेन ऋद्धिः समृद्धिः प्रादिसमासः अध्यास्त अ ध्यासितवान् भूतसामान्ये लङ्। आस्तेरनुदात्तेत्त्वात्तङ् अधिशी ङित्यादिना अधिकरणस्य कर्म्मसंज्ञा सुखयतीति सुखा पचाद्यच् सुखहेतुत्वाद्वा सुखा। सर्व्वेषु ऋतुषु सुखेति सप्तमीति योगविभा गात्समासः। अध्यासितां अध्युषितां ब्रह्मभिर्ब्राह्मणैरिद्धबोधैः सर्व्वशास्त्रपरिज्ञानात् पटुबुद्धिभिरित्यर्थः इन्धेर्निष्ठायामनुना सिकलोपः ॥५॥

स पुण्येति। स राजाऽयोध्यामध्यास्त अध्युवास कर्म्मक्रियेत्यादि भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ना ङस्य ढत्वं। त्रिलासङ् उपवेशे घ्यां लुगङ्गोऽप इतिशपो लुक् स किंभूतः पुण्या शोभना कीर्त्तिर्यस्य स तथा। पुण्यं सुगन्धे सुकृते पुण्यं शोभनमुच्यत इति शाश्वतः। शतं मन्यवो यज्ञा यस्य स शतमन्युरिन्द्रस्तस्मादीषदूनस्यादेशीने इतिकल्पः। अयोध्यां किंभूतां समृद्ध्या सम्पत्या महेन्द्रलोकेनामरावत्या प्रतिमा सादृश्यं यस्याः सातां सर्व्वैवृतुषु सुखयतीति पचादित्वादन् सुखहेतुत्वात् सर्व्वर्त्तुसुखां इद्धबोधैर्दीप्तज्ञानैर्ब्राह्मणैरध्यासितां इन्धेः क्ते इद्धः बुधैर्ज्ञप्ति बोधः ॥ ५ ॥

निर्म्माणदक्षस्य समीहितेषु सीमेव पद्मासनकौशलस्य। ऊर्ध्वस्फुरद्रत्नगभस्तिभिर्या स्थितावहस्येव पुरं मघोनः ॥ ६ ॥

निर्म्माणेति॥ पद्मासनो ब्रह्मा पद्ममासनं यस्येतिकृत्वा तस्य कौशलं नैपुण्यमिति षष्ठीसमासः। तस्य पूरणगुणेत्यादिना न प्रतिषेधः तत्र विशिष्टा एव गुणाः रूपरसगंधस्पर्शाः तद्विशेषाश्च शुक्लनीलादयः कटुकाम्लादयःसौरभ्यादयः शीतोष्णादयश्च गृहीताः तत्र रूपादिभिः समासोभवत्येव। तत्स्थैश्च गुणैः षष्ठी समस्यते न तु तद्विशेषगुणैरितिवचनात् अन्यैस्तु समासप्रतिषेधः। एवञ्च कृत्वा मुनित्रयवचनमर्थवद्भवति तद्यथा। अधिकरणैतावत्वे च तदशिष्यं संज्ञाप्रमाणत्वादिति पाणिनेः युगपद्देशपृथक्त्वदर्शनादिति रूपसामान्याद्वा इतिवचनप्रामाण्यादितिचेदल्लोपप्रतिषेध इति कात्यायनस्य नकारग्रहणसामर्थ्यात् लोपो न भविष्यतीति किं पुनरत्रासत्त्वमितिभाष्यकारस्येति। तस्य सीमेव मर्यादेव

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अयोध्या ततो न सृष्ट्यन्तरं शोभनमस्तीत्यर्थः। कीदृशस्य निर्मा णदक्षस्य निर्मितिर्निर्माणं सृष्टिः तत्र दक्षस्य पटोः। क्व विषयेषु समीहितेषु स्रष्टुमीप्सितेष्वित्यर्थः। ऊर्ध्वमुपरिष्टात्स्फुरद्रत्न गभस्तिभिः स्फुरन्तो ये रत्नानां गभस्तयो रश्मयः तैर्हासभूतैर्मे घोन इन्द्रस्य पुरममरावतीं विहस्येव अवस्थिता या तामध्यास्त मघवन् श्वन् उक्षन् इत्यौणादिकः श्वयुवमघोनामिति संप्रसा रणं ॥ ६ ॥

निर्म्माण इत्यादि॥ ऊर्द्धं स्फुरन्तो ये रत्नानां गभस्तयोरश्मयस्तै र्हासभूतैर्म्मघोन इन्द्रस्य पुरं अवहस्येव निर्म्माणदक्षस्य विश्वकर्म्म णः समीहितेषु सम्यक्‌चेष्टितेषु या स्थापिता तामयोध्यामध्यास्तेति पूर्व्वेणान्वयः समुपसर्गेण वङ्कलेन च चेष्टाया आधिक्यं सूचितं। वि श्वकर्म्मणा नेदृशी शोभना पुरी निर्म्मिता अत इमां विलोक्य ईदृक् पुरीनिर्म्माणे चेष्टा जातेत्यभिप्रायः। पद्ममेव आसनं यस्य स पद्मास नोब्रह्मा तस्य कौशलस्यनैपुण्यस्यसीमाइवउत्प्रेक्षायां ब्रह्मणा नेदृ शी शोभनान्या पुरी निर्म्मितेति भावः। अतः सुतरां विश्वकर्म्मण ई दृक्‌निर्म्माणे चेष्टावत्त्वं। यद्वा निर्म्माणदक्षस्य विश्वकर्म्मणः समीहि तेषु निर्म्मितेषु सीमैवेतः परं शोभनं न निर्म्मितं इत्यभिप्रायः। कि म्भूतस्य पद्मासनस्येव कौशलं यस्य यद्वा पद्मासनस्य कौशलं सौन्द र्य्यं यस्य स पद्मासनकौशलो ब्रह्मा तस्य समीहितेषु वाञ्छितेषु सी मेव तस्य किम्भूतस्य निर्म्माणदक्षस्य निर्म्माणचतुरस्य। यद्वा कौ पृ थिव्यां शलते चलतीति कोशलः पचादित्वादन् सरसिजमित्युदा हरता वोपदेवेन क्वचित् समासे विभक्तेर्नलुक इति सूचितं तेनात्र सप्तम्या अलुक् पद्मासनस्यासौ कौशलस्येति कर्म्मधारयस्तस्य

अ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



समीहितेषु सीमेव क्वचिद्विशेष्यः प्राक् प्रयुज्यते प्राग्भावस्य विवक्षाधीनत्वात् इतिपद्मासनस्य प्राग्भावः कौशल इति विशेषणात् पृथिव्यां विहितसृष्टेर्नैतादृशी सृष्टिरिति सूचितं अतएव पृथिव्यां प्रतियोग्यभावात् स्वर्गमुपहृत्य स्थिता मघोनः किम्भूतस्य निर्म्माणदक्षस्य स्वपुरनिर्म्माणं दक्षते हन्तीति पचादित्वादन् इमां पुरीं दृष्ट्वा स्वपुरीनिर्म्माणनिन्दकस्येत्यर्थः ॥ ६ ॥

सद्रत्नमुक्ताफलवज्रभाञ्जि विचित्रधातूनि सकाननानि। स्त्रीभिर्युतान्यप्सरसामिवौघैर्मेरोः शिरांसीव गृहाणि यस्यां ॥ ७ ॥

अ०म० सद्रत्नेति॥ सन्ति शोभनानि यानि रत्नादीनि तानि भजन्ते यानि गृहाणि तानि सद्रत्नमुक्ताफलवज्रभाञ्जि मुक्ताफलवज्रयोरत्नान्तर्भावेऽपि प्राधान्यख्यापनार्थं वचनं गोबलीवर्द्दन्यायाद्वा रत्नशब्देन मरकतपद्मरागवैदूर्य्यादयो गृह्यन्ते। सद्रत्नादियुञ्जीति पाठान्तरं। युजेरसमासे इति प्रतिषेधो न भवति अनपुंसकविषयत्वात् नपुंसके तु झलचणस्य नुमोविधानात्। विचित्रधातूनि विचित्रा नानाप्रकारा धातवो मनःशिलादयो येषु गृहेषु सेवाविरचितचित्रकर्म्मत्वात्। सकाननानि सौधानि स्त्रीभिर्युतानि अप्सरसामिवौघैः तत्रत्याभिस्त्रीभिरप्सरोभिरिवेत्यर्थः। मेरोः शिरांसीव मेरोः शृङ्गाणीव एवंविधानि गृहाणि यस्यामयोध्यायां तामध्यास्त। गृहइति गेहेकः तत्र गृहशब्दो वेश्मनि नपुंसकलिंगः तत्स्थायिषु पुंलिङ्गोनित्यं बहुवचनान्तस्य ॥ ७ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



यस्यामयोध्यायां गृहाणि मेरोः शिरांसीव उभयविशेषणमा भ॰ ह। सद्रत्नइत्यादि॥ सन्ति शोभनानि रत्नानि पद्मरागादीनि मुक्ताफलानि मौक्तिकानि वज्राणि हीरकाणि च भजन्ते इति विण्ञ्णित्यन्तेजुङन्तोरिति वृद्धिः मुक्ताफलवज्राणां रत्नत्वेऽपि प्राधान्यात् प्राचुर्य्याद्वा पृथगुपादानं जातौ जातौ यदुत्कृष्टं तद्धि रत्नं प्रचक्ष्यते इत्यनुशासनात्। सद्रत्नानि शोभनमध्ये उत्कृष्टानीत्यर्थः। युञ्जीति पाठे रत्नादीनां युक् योगो येषु त्वासु क्षितिक्विप् विचित्रा धातवो येषु मनःशिलादिभिः कृतचित्रत्वात् सुमेरुशृङ्गेषु सहजत्वात् काननैः सहवर्त्तमानानि गृह सन्निधिविहितोद्यानात् मेरुशृङ्गेषु सहजत्वात् सहःसोवेति विभाषया सह शब्दस्य सो वहुव्रीहौ अप्सरसामोघैरिव स्त्रीभिर्युतानि ओघशब्दादेकैकशोऽपि स्त्रीणामप्सरःसमूहसादृश्येनातिसौन्दर्य्यं दर्शितं। ओघोवृन्देऽम्भसां रये इत्यमरः॥ ७॥

**अन्तर्निविष्टोज्ज्वलरत्नभासो गवाक्षजालैरभिनिष्पतन्त्यः। हिमाद्रिटङ्कादिव भांति यस्यां गंगाम्बुपातप्रतिमा गृहेभ्यः॥ ८॥**

अन्तरित्यादि। अन्तः गृहमध्ये निविष्टानि निहितान्युज्ज्वलर जं॰म॰ त्नानि यानि तेषां भासो रश्मयः गृहेभ्यो गवाक्षजालैः अभिनिष्पतन्त्यः निर्गच्छन्त्यः यस्यां भान्ति तामध्यास्तेतियोज्यं पर्व्वतस्य उन्नतप्रदेशष्टङ्क इत्युच्यते तस्मात् हिमवत्पर्व्वतटङ्कादिव गङ्गाम्बुपातप्रतिमा गङ्गाजलप्रवाहतुल्याः स्वच्छत्वात्॥ ८॥

ग

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० अन्तरित्यादि॥ यस्यामन्तर्मध्ये निविष्टानामर्पितानां उज्ज्वलानामुद्दीप्तानां रत्नानां भासा दीप्तया गवाक्षजालैर्वातायनसमूहजालाकृतिगवाक्षैर्वा गृहेभ्यो निःसरन्त्यो भवन्ति हिमाद्रेर्हिमालयस्य टङ्कात् पाषाणदारणात् विदीर्णप्रस्तरभागात् निःसरन्त्यो गङ्गाम्बुपातप्रतिमा इव गङ्गाजलपतनच्छटा इव टङ्कः कपित्थभेदे स्यात् मानान्तर खनित्रयोः। कोषे ऽधिकोषे जङ्घायां टङ्कः पाषाणदारण इतिविश्वः। गवामक्षीव गवाक्षः अक्ष्णोऽ चक्षुषीतिअः यथोर्लोपइतीकारलोपः। हिमप्राधान्यात् हिमस्याद्रिर्हिमाद्रिरिति षष्ठी समासः हिमेन युतोऽ द्रिरितिवा निष्पतन्त्य इति नदंतसौलस्यर्थे चेतिसूत्रेण पदत्वनिषेधात् समासेलुप्तविभक्तिकस्य पदान्तत्वं ज्ञापकसिद्धं ज्ञापकसिद्धस्यानित्यत्वं तेन समासे लुप्तविभक्तिकस्य क्वचिदपदान्तत्वमपि तेन सेतुकखपफेवेति सूत्रेण विसर्गसम्बन्धिसस्य कृतत्वात् किलादिति षत्वं स्यादितितु वेमूदित्यादि सूत्रे निष्कुषइति मूर्द्धन्यषनिर्द्देशात् सूचितं तेनात्र सेतुकखपफेवेति विसर्गस्य से कृते किलादिति षत्वं मनीषादित्वाद्वा सेतु कखपफेवेत्यत्र वाशब्दो व्यवस्थात्राची तेनात्र नित्यं सकार इति बोध्यं॥ ८॥

धर्म्यासु कामार्थयशस्करीषु मतासु लोके ऽधिगतासु काले। विद्यासु विद्वानिव सो ऽभिरेमे पत्नीषु राजातिसृपूत्तमासु॥ ९॥

ज०म० धर्म्यासु॥ धर्मादनपेतासु धर्मपथ्यर्थेत्यादिना यत्। कामार्थयशांसि कर्त्तुं शीलं यासां तासु। कृञोहेत्वित्यादिना टाच्छी

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



स्ये टः अतः कृकमीत्यादिना विसर्जनीयस्य सत्वं टित्वात् ङीप् मतासु पूजितासु लोके तासां प्रतीतत्वात्। अधिगतासु काले विवाहयोग्ये काले परिणीतासु सोऽभिरेमे स राजा ऽभिरतत्वा न्पत्नीषु पत्युर्नोयज्ञसंयोग इति नकारः। तिसृषु कौशल्या कै केयीसुमित्रासु उत्तमास्विति सन्नारीगुणैः श्रेष्ठासु विद्यास्विति विदंति आभिर्धर्म्माधर्म्माविति विद्या संज्ञायां समजेत्यादिना क्यप्। तिसृषु सामर्थ्यजुराख्यासु धर्म्यास्वित्यादिकं तुल्यम्। वि द्वानिव यथा अधिगतविद्य इत्यर्थः विदेः शतुर्वसुः दीर्घहल्ङ्या दि संयोगांतलोपः तस्य राज्ञः पत्नीभिस्ताभिः सह रममाणस्य सुता नैवासन्॥ ९॥

धर्म्यास्विति॥ स राजा तिसृषु पत्नीषु अभिरेमे चिक्रीड तृफले त्यादिना अकारस्यैत्वं खिलोपस्य यथा विद्वान् पण्डितो विद्यासु रमते वेत्तेःशतुः कसुर्व्वेति वाशब्दस्य व्यवस्थावाचित्वात् पाण्डि त्यार्थे नित्यमिति बोध्यं। विदन्तीति विद्याः श्रीव्रजयजेत्यादिना क्यप् उभयविशेषणमाह धर्म्म्यासु धर्म्मादनपेतासु ढधेकात् ष्णीकेत्यादिना ष्यः तेषां ष्यादीनां सेत्त्वमनित्त्वञ्च स्यात् अचा नित्त्वं तेन णित्ते ञ्रिरित्यादिना नञिः ञ्निञेति न ईप् काममर्थं यशः कुर्व्वन्ति इति स्तकुष इतिटः। हेत्वाद्यर्थे ट इति परे स्वमते यशस्करी विद्येति उदाहरणेन हेत्वाद्यर्थः सूचितः विद्याया यश स्करणे हेतुत्वात् अन्यथा विद्येति निर्द्देशो निरर्थकः टित्वात् ञ्निञ् ञ्चाहेति ईप् सेतुकखपफेवेति वेःसः लोके मतासु पूजितासु काले विवाहसमये अधिगतासु परिणीतासु पक्षे शैशवसमये गृही तासु श्रेष्ठासु॥ ९॥

भं॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



पुत्रीयता तेन वराङ्गनाभिरानायि विद्वान् क्रतुषु क्रियावान्। विपक्त्रिमज्ञानगतिर्मनस्वी मान्यो मुनिः स्वां पुरमृष्यशृङ्गः॥ १०॥

ज॰म॰ ऋष्यशृङ्गनामा मुनिः पुत्रीयं क्रतुं जानातीति पुरोधसो व शिष्टादुपश्रुत्य राज्ञा वारविलासिनीभिरानायितो मुनिरित्येत त्कथयितुमाह। पुत्रीयतेत्यादि। पुत्रीयता आत्मनः पुत्र मिच्छता इच्छायां सुप आत्मनः क्यजिति क्यच् क्यचिचेतीलम्। तेन राज्ञा प्रयोजककर्त्रा वराङ्गनाभिर्वरस्त्रीभिः प्रयोज्यकर्त्री भिः आनायि स्वां पुरमिति योज्यम्। नीवह्योरित्यादेरपि अकथितञ्चेति चकारेण संगृहीतत्वात् नयतिर्द्विकर्म्मकः। तत्र प्रधानकर्म्मणि लुङ्। चिणिलोपौ चिणोलुगितितशब्दस्य लुक् गु णकर्म्मणि तु पुरमितिद्वितीया गतिबुद्धीत्यादिना प्रयोज्य कर्तरि द्वितीया न भवति। नीवह्योः प्रतिषेध इति वचनात् विद्वान् वेदा र्थतत्त्ववित् एवञ्च ज्ञात्वा क्रतुषु क्रियावान् प्रशस्तक्रियः प्रशंसायां मतुप् विपक्त्रिमज्ञानगतिरिति विपाकेन निर्वृत्तम् पचतेः क्त्रिः क्त्रेर्मप् यत्पूर्व्वजन्मकृतमनिवर्तनीयं कर्म्म तस्योग्रतपःप्रत्ययादि नोपदेशात् ज्ञानात्प्रवृत्तिर्बुद्धावस्य जातेत्यर्थः। मनस्वी प्रश स्तमनाः प्रशंसायामस्मायामेधेत्यादिना विनिः मान्यो माना र्हः अर्हेकृत्यतृचश्चेतिण्यत्। धर्म्मादिमननान्मुनिः मनेरुच्चोप धाया इति इन् उपधायाउकारः। ऋष्यस्य शृङ्गं ऋष्यशृङ्गं तच्छृङ्गमिव शृङ्गं यस्य स ऋष्यशृङ्गः। सप्तम्युपमानेत्यादिना उत्तरपदलोपी समासः॥ १०॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



पुत्रीयतेत्यादि॥ आत्मनः पुत्रमिच्छता तेन राज्ञा प्रयोजक भं० कर्त्रा वराङ्गनाभिः प्रयोज्यकर्त्रीभिर्ऋष्यशृङ्गनामा मुनिः स्वां पुरमानायि णीञ् प्रापणे द्विकर्म्मकः ण्यादिङ्न्ताढेत्यादिना मुख्य कर्म्मोक्तं रतनोर्यगिणाविति तनि इण् इणस्त्लोप इति तनो लोपः। ञेर्लोप इति ञिलोपः तदानयनेहेतुगर्भविशेषणमाह विद्वान् पण्डितः क्रतुषु यज्ञेषु क्रियावान् प्रशस्तक्रियः मोऽग्मश पादिति अस्त्यर्थे वतुः अस्त्यर्थप्रत्ययाः प्राशस्त्यादिविवक्षया भवन्ति। यदुक्तं भूमनिन्दाप्रशंसासु नित्ययोगेति शायने। संसगस्ति विवक्षायां भवन्ति मतुवादय इति। विपाकेन जाता ज्ञानस्य गतिर्म्मार्गोयस्य स तथा विनोपदेशाज् ज्ञानं जातमित्यर्थः अतिपरिणतज्ञानमार्ग इत्यर्थोवा। ङितस्त्ज इति क्तिमक् गतिर्म्मार्गे दशायाञ्च ज्ञाने याचाद्युपायने इतिविश्वः। मनस्वी प्रशस्तमनाः। स्त्रङ्मेधास्त्मायादिति विन् मान्यः मानार्हः ढघेकादिति अर्हार्थे साध्वर्थे वा ण्यः धर्म्मादिमननान्मुनिः मनेर्निपातनात् ऋष्यस्य मृगस्य शृङ्गमिव शृङ्गमस्य आकर्षस्व इत्युदाहरणेन क्वचिन्मध्यपदलोप इति सूचितं षष्ठीप्रथमयोरिवार्थे समास इति श्रीपतिदत्तः तन्मते ऋष्यस्येव मृगस्येव शृङ्गमस्येति विग्रहः। प्रशस्तान्यङ्गान्यासामिति गोतृणेति पामादित्वान्नप्रत्ययेऽङ्गनाः पुत्रीयतेतिक्योऽम्यादितिक्यः अकारस्य ईकारः॥१०॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ऐहिष्ट तं कारयितुं कृतात्मा क्रतुं नृपः पुत्रफलं मुनीन्द्रं। ज्ञाताशयस्तस्य ततो व्यतानीत् स कर्म्मठः कर्म्म सुतानुबन्धि॥११॥

ज॰ म॰ ऐहिष्ट॥ तं मुनीन्द्रं क्रतुं कारयितुं नृप ऐहिष्ट ईहितवान् ईहतेरात्मनेपदिनो लुङि सेट्त्वादिटि च रूपं। द्विकर्म्मकता तु ह्रक्रोरन्यतरस्यामिति। कृतात्मा वशीकृतात्मेतिभावः। पुत्रफलं पुत्रः फलं कार्य्यं यस्य क्रतोः तत उत्तरकालं स मुनिः परचित्तज्ञत्वात् ज्ञाताशयो ज्ञाताभिप्रायो राजाभिमतं कर्म्म कारयितुं तस्य नृपस्य कर्म्म व्यतानीत् प्रारब्धवान्। तनोतेर्लुङीतिहलन्तलक्षणायां प्रतिषिद्धायां अतोहलादेरितिविभाषावृद्धिः कर्म्मठः कर्म्मणिघटते कर्म्मणि घटोठच्। यागक्रियानिष्पादक द्रव्यर्थः सुतानुबन्धं सुताननुबध्नातीति कर्म्मण्यण्। सुतानुबंधीति पाठान्तरम् सुताननुबन्धुं शीलमस्येति। सुप्यजातौणिनिः सुपीत्यनुवर्त्तमाने सुब्ग्रहणमुपसर्गनिवृत्त्यर्थमिति केवलस्योपसर्गस्य निवृत्त्यर्थं द्रष्टव्यम् अन्यथा जाताविति किं ब्राह्मणानामन्त्रयितेति न युज्यते आङित्यस्योपसर्गत्वात्॥११॥

भ॰ ऐहिष्टेत्यादि॥ तं मुनीन्द्रं नृपः पुत्रफलं क्रतुं कारयितुं ऐहिष्ट ईह चेष्टे त्यां सिः बसोरस्येतीम् घीटोघीष्वित्यम् आदिगेचोरिति त्रिः घोऽञोञेरिति प्रयोज्यकर्त्तुः कर्म्मत्वं कृतात्मा कृत आत्मा यत्नो येन आत्मा यत्नोधृतिरित्यमरः ततोऽनन्तरं ज्ञाताभिप्रायः स मुनीन्द्रस्तस्य नृपस्य सुतानुबन्धं कर्म्म व्यतानीत् तनुदञ्विस्तृतौ त्यांसिः हृदाद्यस्येति ईम् बसोऽरस्येति ह्म् हसादेः सेम

6258,

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



इति ञिः सुताननुबध्नाति जनयतीति ढात्षञ्चिति घञि सुतस्यानु बन्धः सुतानुबन्धः घञन्तः ततोऽस्त्यर्थे ठैकाजिति इन् कर्म्मणि कुशलः कर्म्मठः कृत्तद्धितसमासानामभिधान नियामकं इत्युक्तेः कर्म्मणः कौशलेठ इति बोध्यं॥ ११॥

रक्षांसि वेदीं परितो निरास्थदङ्गान्ययाक्षीदभितः प्रधानम्। शेषाण्यहौषीत्सुतसम्पदे च वरं वरेण्यो नृपतेरमार्गीत्॥ १२॥

रक्षांसि॥ वेदीं परितः यजनवेद्याः समन्तात् विघ्नायोपस्थितानि रक्षांसि रक्ष्यते एभ्य इत्यसुन् तानि रक्षोघ्नैर्मन्त्रैर्निरास्थत् निरस्तवान्। पर्य्यभिभ्यांसर्व्वोभयार्थे तसिल्। अभितः परित इत्यादिना द्वितीया अङ्गान्ययाक्षीदभितः प्रधानमिति। यद्देवतामयोयागः सा देवता तत्र प्रधानं पुत्रफलत्वाद्विष्णुः प्रधानम्। तमिष्ट्वा तस्योभयतः पार्श्वयोर्यान्यङ्गानि चतुरादीनि देवतान्तराणि तान्ययाक्षीत्। अग्नावाहुत्या पूजितवान् कर्त्तुः क्रियाफलाभावात्तङ् न भवति पत्वकत्वे शेषाण्यहौषीदिति स्वाङ्गं विष्णुमिष्ट्वा शेषाणि प्रतिकृतानि पिष्टकमयानि सुतानां सम्पदर्थमग्नौ हुतवान्। जुहोतेः सिचिवृद्धावीटि च रूपम्। वरेण्यः श्रेष्ठः वरं चामार्गीत्। मार्गितवान् हे देवा अग्निप्रभृतयो नृपतेः सुता भूयासुरिति। मार्ग अन्वेषणे। आधृषाद्वेतियदा णिज्नास्ति तदा चङभावात्सिजेव भवति॥ १२॥ जं॰ म॰

रक्षांसीत्यादि॥ वरेण्यो मुनिर्व्वेदीं परितो वेद्याः समन्तात् रक्षांसि निरास्थन्निराकृतवान् पूर्व्ववदस्यतेर्ङः अस्यादेशश्च प्रधा भ॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



नमभितः प्रधानयागस्योभयपार्श्वे आदावन्तेच अङ्गानि अयाचीत् अङ्गयागानकार्षीत् यद्वा प्रधानदेवतायाविष्णोरुभयपार्श्वे अङ्गानि चक्षुरादीनि लोकपालनवग्रहादीन् वा पूजितवान् एतेन साङ्गाद्वैदिककर्म्मणः फलावश्यम्भाव इति सूचितं ऊलिहोमे दने आकाशकुलिशाङ्कुशशेषवेशेत्यादि नपुंसकसंग्रहे हेमचन्द्रेण पठितं नृपतेः सुतसम्पत्त्यै च वरं ममार्गीत् मार्गअन्वेषणे अयाचीदिति यजेरनिम्लात् व्रजवदेतिभ्रिः शच्छ्राजेति षङ्षढोः कइतिकः क्विलादिति षत्वं वेदीं प्रधानञ्चेत्यत्र परितोऽभितोयोगे धिक् समयेत्यादिना द्वितीया॥ १२॥

निष्ठां गते दत्त्रिमसभ्यतोषे विहित्रिमे कर्म्मणि राजपत्न्यः। प्राशुर्हुतोच्छिष्टमुदारवंश्यास्तिस्रः प्रसोतुं चतुरस्सुपुत्रान्॥ १३॥

जं॰म॰ निष्ठां॥ निष्ठां समाप्तिं गते कर्म्मणि यागक्रियायां समाप्तायां राजपत्न्यः हुतोच्छिष्टं हुतावशेषं शिष्टचरुं प्राशुः भक्षितवत्यः अश्नातेर्लिटि उसि रूपम् दत्त्रिमसभ्यतोषे दानेन निर्वृत्तोदत्त्रिमः सभ्यानां ब्राह्मणानां तोषो यत्र कर्म्मणि। विहित्रिमे विधानेन निर्वृत्ते कर्म्मणि। दाञो धाञश्चत्रितः क्त्रिरिति क्त्रौविहिते प्रथमस्य दोदद्धोरिति ददादेशः द्वितीयस्य दधातेर्हिरिति हिरादेशः मप् सभायां साधव इतिसभ्याः सभाया यः। उदारवंश्याः महावंशोद्भवाः शेषे यत्। कौशल्या कैकेयी च क्षत्रिये सुमित्रा तु वर्णसंकरजा किमर्थं प्राशुः। प्रसोतुं सुपुत्रान्विनीतान् प्रसवितुं तत्र कौशल्या कैकयी च एकैकं पिण्डं प्राशितवत्यौ

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ताभ्यां चावयोः परिचारिकेति पिण्डभागद्वयं दत्तं सुमित्रा प्राशितवती। ततश्च पुत्रद्वयं जनयिष्यति एवञ्चाभिसन्धाय चतुर इत्युक्तं न तु त्रीनिति। षूङ् प्राणिगर्भविमोचने स्वरतीत्यादिना विभाषितेट्॥ १३॥

निष्ठामित्यादि॥ कर्म्मणि निष्ठां निष्पत्तिं गते सति उदारवंश्या भ० स्तिस्रो राजपत्न्यः चतुरः शोभनपुत्रान् प्रसोतुं ऊतशेषं प्राशुः। अश भोजने षूङ्ल प्रसवे तादर्थ्ये चतुम् वेमूदिदिति इम् पक्षे इमो ऽभावः। वंश्या इति ढघेकादिति भवार्थे ष्यः तस्यानित्त्वा न्नश्रिर्न ङीप्। कर्म्मणि कीदृशे दानेन जातः सभ्यानां तोषो यत्र। डुदाञ्लिदाने ञ्चितस्ताज्जे इति त्रिमक् दद्दोध इति दत्। सभायां साधुः सभ्यः पूर्व्ववत् ष्यः। विहित्रिमे विधानेन जाते पूर्व्ववत् त्रिमक् धाञ्जोहिरिति हिः॥ १३॥

**कौशल्ययासावि सुखेन रामः प्राक्केकयीतो भरत स्ततोऽभूत्। प्रासोष्ट शत्रुघ्नमुदारचेष्टमेका सुमित्रा सह लक्ष्मणेन॥ १४॥**

कौशल्यया॥ कोशलस्य राज्ञोऽपत्यमिति वृद्धेत्कोशलाजा ज०म० दाञ्ञ्यङ्। यङश्चाप् कौशल्यया प्राक् प्रथमं असावि रामः जन्यतेस्म। षूङः कर्म्मणि लुङि चिणिरूपम् सुखेनेति प्रकृत्यादित्वात्तृतीया। महतां जन्मनि न काचिदपि पीडास्ति। तदनन्तरं



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



केकयीतो भरतो ऽभूत्। केकयानाचष्ट इति णिच्। सा हि ईदृ शास्तादृशाः केकया इति कथयति। तदन्तादच इरिति इकार प्रत्यय औणादिकः णिलोपः। कृदिकारादक्तिन इति ङीष्। अ पादानेचाहीयरुहोरिति तसिः। यदा च केकयस्यापत्यम् जनप दशब्दात्क्षत्रियादञित्यञ्। केकयमित्रयुप्रलयाणांयादेरिय इतीयादेशः। टिड्ढाणञिति ङीप् तदा कैकेयीतिद्वितीयं रूपम् सुमित्रा शत्रुघ्नं उदारचेष्टं उदाराचेष्टा यस्येति प्रासोष्ट प्रसूत वती कर्त्तरि लुङ्। ङित्वात्तङ् जातमात्रस्य हि तस्य किल महा सत्वतया तादृशस्यैव चेष्टाभूदिति श्रूयते। एकेति एकैवेति गम्यमा नत्वादेवशब्दो न प्रयुक्तः। सह लक्ष्मणेन लक्ष्मणेन सह॥१४॥

भ० कौशल्येत्यादि॥ कौशल्यया राजकन्यया प्राक् पूर्व्वं सुखेन रामो ऽसावि प्रसूयते स सूङ्ख्यास्तनि कर्म्मणि रूपं कोशलशब्दा दपत्यार्थे वाक्कादीत्यादिना ष्यञः तस्य षकारेत्त्वाविवक्षया षित्व ञ्चाद्देति नेप् अदन्तत्वात् स्त्रियामत आप्। ततो ऽनन्तरं भरतः केकयीतो ऽभूत् केकयस्य स्त्र्यपत्यमिति वाक्काद्यत इति ष्णस्तस्य णकारेत्त्वाविवक्षया न ञिः यतोपायेति जंपी च तस्केरिति तस् एका सुमित्रा लक्ष्मणेन सह उदारचेष्टं शत्रुघ्नं प्रासोष्ट सूङ्ख्या स्तनिरूपं सहवारणेति सहयोगे तृतीया सहवारणेतिसूत्रे सहयो गस्य प्रधानाप्रधानत्वाविशेषोक्तेरत्र सहयोगस्य प्राधान्यं विवक्षि तं पित्रा सहागतः पुत्रः राज्ञा सह वनं यातीत्यादिवत् तेन लक्ष्म णो ज्येष्ठइतिबोध्यं ये तु क्रियादिगौणात् सहार्थे तृतीया इत्याऊ स्तन्मते ऽपि लक्ष्मणस्य ज्येष्ठत्वं। तथाहि युगपदारब्धप्रसवक्रियायां लक्ष्मणस्य गौणत्वं क्रियाया असमापकत्वादियं प्रसूतेति व्यव

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



द्वाराभावात् शत्रुघ्नस्य प्राधान्यं क्रियायाः समापकत्वात् इयं प्रसूतेति व्यवहारात् तेन लक्ष्मणे जाते प्रसवक्रिया न समाप्ता पश्चाद्व्यवहितकाले शत्रुघ्नस्य सम्भवात् तेन लक्ष्मणस्य सहयोगो विवक्षितः। शत्रुघ्नस्य तु क्रियाव्याप्यत्वात् कर्म्मत्वं। वस्तुतस्तु यस्य हि क्रियादिसम्बन्धः साक्षात् शब्देन प्रतिपाद्यते तत् प्रधानं यस्य न प्रतीयते तत् गौणं एतच्च शक्तिस्वभावात पित्रा सहागतः पुत्र इत्यत्र पितुर्गौणत्वं साक्षात् क्रियासम्बन्धाभावात्। न च पिता पुत्रसम्बन्धेन प्रधानाप्रधानता तस्मात् क्रियागुणद्रव्यसम्बन्धे गौणात् सहार्थैर्युक्तात् तृतीया स्यादितिबोध्यं। शत्रुं हन्तीति हनश्च रगष्टक् हनगमित्युङ् लोपे हनोक्तोघ्नः॥ १४॥

आर्चीद्द्विजातीन् परमार्थविन्दानुदेजयान्भूतगणान्न्यषेधीत्। विद्वानुपानेष्ट च तान् स्वकाले यतिर्वशिष्ठो यमिनां वरिष्ठः॥१५॥

आर्चीद्द्विजातीन्॥ तेषु जातेषु द्विजातीन् द्वे जाती येषामिति तान् ब्राह्मणक्षत्रियवैश्यान् परमार्थविन्दान् विन्दन्तीतिविन्दाः विद्लृलाभे इत्यस्मात् अनुपसर्गादित्यादिना शः मुचादित्वान्नुम्। परमार्थस्य विन्दान् लाभिन इति कर्म्मणि षष्ठी तस्याः कृद्योगाच्च षष्ठी समस्यत इति वक्तव्यमिति समासः। तानार्चीत् स्रगादिभिः पूजितवान्। अर्चपूजायामित्यस्मात् लुङि तिप् इट् सिचो लोपः। भूतगणान् राक्षसादिगणान् उदेजयान् उत्कम्पान्। तस्मिन्नेव सूत्रे उत्पूर्व्वएजिर्ण्यन्तोनिर्द्दिष्टः तस्मादुदेजयन्तीति शः तान् न्यषेधीत् उत्सादितवान्। षिधेर्नेटीति हलन्तलक्ष

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



णायाः प्रतिषेधः विद्वान्पौरोहित्यकर्म्मणि कुशलः उपानैष्ट च तान् रामादीन् तेषामुपनयनादिक्रियां चकार सम्माननेत्यादिना आचार्य्यकरणे तङ्। स्वकालइति गर्भादेकादशे वर्षे जातस्य गर्भैकादशेष्वित्यादिना वचनेन उपनयनकाल उक्तः। यमनियमेषु यतत इति यतिः। सर्व्वधातुभ्य इनिति इन्। अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यमकल्मषं। इति पञ्च यमा येषां सन्तीति यमिनः स्मृताः। तेषां वरिष्ठः उत्तमः प्रियस्थिरेत्यादिना उरु शब्दस्य वरादेशो महत्पर्य्यायस्य॥ १५ ॥

भ॰ आर्चीदित्यादि॥ वशिष्ठः पुरोहितो द्विजान् परमार्थविन्दान् उत्कृष्टधनलाभिनः आर्चीत् परमधनेन पूजितवान् इतिपर्य्यवस्यति विद्लृ लाभ इत्यस्मात् साहिशातीत्यादिना शः मुचादित्वा न्नुणागमः। परमार्थ आत्मसाक्षात्कारः अर्चक् पूजायां। उदेजयान् भयहेतुक्रूरभूतगणान् राक्षसादीन् न्यषेधीत दूरीचकार एजृकम्पने पूर्व्ववत् शप्रत्ययः विद्वान् विधिज्ञः तान् रामादीन् स्वकाले गर्भैकादशे वर्षे क्षत्रियोपनयनयोग्ये उपानैष्ट ज्ञानार्थौत्क्षेपणोपनयेत्यादिना सं। यतते यमनियमादिष्विति यतिः औणादिक इः यमिनां मध्ये वरिष्ठः उरुतमः गुणाद्वेष्ठेयस्रु इतिगुणवचनादिष्ठे कृते वाढान्तिकेति उरुशब्दस्य वरादेशः। वसिष्ठ इति पूर्व्ववदिष्ठः वसनिवासेइति दन्त्यमध्यं पारायणिकाः साधयन्ति प्रकृष्टो वशी वशिष्ठ इति तालव्यमध्यमपि प्राहुः॥१५॥

वेदोऽङ्गवांस्तैरखिलोऽध्यगायि शस्त्राण्युपायंसत जित्वराणि। ते भिन्नवृत्तीन्यपि मानसानि समं जनानां गुणिनोऽध्यवात्सुः॥ १६ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



वेदा ॥ शिक्षा कल्पो व्याकरणं छन्दोविवृतिर्निरुक्तं ज्योतिषं चेति षडङ्गानि शास्त्राणि तानि विद्यन्ते यस्य वेदस्येति अङ्गवान्। तैरुपनीतैरामादिभिः अखिलो निःशेषो वेदो ऽध्यगायि अधीत इत्यर्थः इङोऽधिपूर्व्वात्कर्म्मणि लुङि। विभाषालुङ्लृङोरिति गाङादेशः चिण्युक् तलुक्। यद्वा इक्स्मरणे इन्वदिकइति वक्तव्य मिति गाङादेशः। अतएव तैरामादिभिः पूर्व्ववेदिताः साङ्गा वेदा वशिष्ठमुखादधीता इत्यर्थः। शस्त्राणि धनुरादीनि जित्वराणि जयशीलानि। इणनशजीत्यादिना करप् तैरुपायंसत स्वीकृतानि। उपपूर्व्वो यमिः स्वीकरणे वर्त्तते तस्मात्कर्म्मणि लुङ्। आत्मनेपदेष्वित्यादिना अदादेशः हनः सिजितिज्ञापकादनुना सिकलोपाभावः। ततस्ते रामादयो गुणिनो मानसानि मनांसि प्रज्ञादित्वात्स्वार्थे णः भिन्नवृत्तीनि नानाविधप्रवृत्तीनि विषयेषु तानि मानसान्यपि जनानां समं साधारणं क्रियाविशेषणम् अध्यवात्सुः अध्युषितवन्तः। अधिपूर्व्वाद्वसेः सिचि वदव्रजेत्यादिना वृद्धिः सस्येति तत्वम् सिजभ्यस्तेति जुस्। उपाधीत्यादिना अधिकरणस्य कर्म्मसंज्ञा॥१६॥ ज॰म॰

वेदइत्यादि॥ तैरामादिभिः समस्तः साङ्गोवेदो ऽध्यगायि अधीङध्ययने गीङष्टीर्य्योर्वेति ग्यादेशः। शिक्षाकल्पो व्याकरणं निरुक्तं छन्दसांचितिः। ज्योतिषां निचयश्चेति वेदाङ्गानि वदन्ति षट्। तैः शस्त्राणि उपायंसत स्वीकृतानीति उपपूर्व्वो यमिः स्वीकारे मान्तो ऽदनतइत्यत्। जिजये जयन्तीति जित्वराणि क्वरप् स्वजीति क्वरप् स्वस्य तन्पितीतितन् शीलार्थे क्वरबिति परे। स्वमते ऽपि शीलार्थे तृनित्युक्तेः क्वचित्तृन् णिन् इष्णु क्वरप्प्रभृ भ॰

CC-0. In Public Domain. Funding by IKS-MoE

तयः शीलार्थे ऽपि स्युरिति वोध्यं। ते रामादयो जनानां मानसानि विषयेषु भिन्नवृत्तीन्यपि समं साधारणं यथा स्यात्तथा अध्यवात्सुः। वसौनिवासे अनिमलाद्रूजवदेति त्रिः सत्स्यरे इतिसस्य तः अनुस्सिद्देरिति अन उस् गुणिनो गुणवन्तः नैकाजादितीन्। मन एव मानसं विकारसंघेत्यादिना स्वार्थे ष्णः णित्ते त्रिरिति त्रिः कर्म्मक्रियेत्यादिना डस्य ढत्वं ॥१६॥

ततो ऽभ्यगाद्गाधिसुतः क्षितीन्द्रं रक्षोभिरभ्याहतकर्म्मवृत्तिः। रामं वरीतुं परिरक्षणार्थं राजार्ज्जिहत्तं मधुपर्क्कपाणिः ॥१७॥

म०ज०　ततो॥ तेषु रामादिषु तथाभूतेषु गाधिसुतो विश्वामित्रः क्षितीन्द्रं राजानमभ्यगात् अभिगतवान् इणोगादेशः गातिस्थेत्यादिना सिचो लुक्। रक्षोभिर्निशाचरैः अभ्याहता अभिभूता यागादेः कर्म्मणो वृत्तिः प्रवृत्तिर्यस्येति रामं वरीतुं प्रार्थयितुम् वृतोवेति इटोदीर्घत्वम्। परिरक्षणार्थं विहन्यमानस्य कर्म्मण इत्यर्थः तं गाधिसुतं आर्जिहत् पूजितवान् अर्ह पूजायामिति स्वार्थिकण्यन्तश्चौरादिको गृह्यते न भौवादिकः। तस्माद्धेतुमण्णिचात्र न भवितव्यम् णिश्रीत्यादिना चङ् णिलोपः द्विर्वचने ऽचीति स्थानिवद्भावादजादेर्द्वितीयस्येति हिशब्दो द्विरुच्यते रेफस्य न न्द्रा इति प्रतिषेधः चुत्वम्वा आट् वृद्धिः मधुपर्कपाणिः दधि घृत मधूनि एकीकृतानि मधुपर्क इत्युच्यते तस्मिन्पात्रे स्थितः पाणि

Digitized by eGangotri and Sarayu Trust.



र्थस्येति विग्रहः सप्तम्युपमानेत्यादिना उत्तरपदलोपी समासः।
पाद्यादुद्धृत्य मधुपर्केण पूजितवानित्यर्थः ॥ १७ ॥

तत इत्यादि ॥ अनन्तरं गाधिसुतो विश्वामित्रो रक्षोभिरभ्या भ०
हतकर्मवृत्तिः सन् अर्थात् कर्म्मण आत्मनो वा परिरक्षणार्थं रामं
वरीतुं क्षितीन्द्रमभ्यगात्। इणो गाव्यामितिगादेशः भूसुपि
वेत्यादिना सेर्लुक् राजा तं आर्च्चिहत् अर्हक्पूजायां चुर्य्योञिर्व्वे
तिञिः ञिश्रीत्यङ् धुर्द्विष्व्यङीति हेर्द्वित्वं नाजन्तादेरादिर्द्विः
स्यादौ नवङ्क्रोये इति च निषेधान्नादिरेफयोर्द्वित्वं झभखयेति ह
स्य जः ञेर्लोपः मधुपर्कः पाणौ हस्ते यस्य स तथा एतेन मधुपर्क
णार्चनं शस्यते। वरीतुमिति नेमेकाजादित्यादौ वृवर्ज्जनात् वसो
रस्येतीम् वृतोवेमो र्घ इति र्घः॥ १७ ॥

ऐषीः पुनर्जन्मजयाय यत्त्वं रूपादिबोधान्न्यवृतच्च
यत्ते। तत्त्वान्यबुद्धाः प्रतनूनि येन ध्यानं नृपस्तच्छि
वमित्यवादीत् ॥ १८ ॥

ऐषीः ॥ मुक्तिस्तत्त्वावबोधस्तस्या ध्यानं प्रयोजनं तत्र पुनर्जन्म जन्म०
भूयोजन्म तस्य जयाय यत् ध्यानं त्वमैषीः एषितवानसि। इषेर्लुङ्
मध्यमैकवचने इट्इटीतिसिचो लोपे रूपम् रूपादिबोधान्न्य
वृतच्च यत्ते रूपादिषु शब्दस्पर्शरूपरसगंधेषु चक्षुरादिद्वारेण
योबोधः अध्यवसायलक्षणा बुद्धिः तस्माच्च यत् ध्यानं न्यवृतत्
निवृत्तम्। वृतेर्द्युतादित्वात् द्युद्भ्योलुङीति तिप् ञ्लेरङ् तत्त्वानि
पञ्चविंशतिः पुरुषप्रधानमहदहङ्कारादीनि। प्रतनूनि सूक्ष्म

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



णि येन ध्यानेनाबुद्धाः ज्ञातवानसि बुधेरनुदात्तेतोलुङ् थास् सिच् लिङ्सिचावात्मनेपदेष्विति सिचः कित्त्वाद्गुणाभावः सिज्लो पधत्वजश्त्वादि। तद्ध्यानं शिवं शोभनं कच्चिदिति नृपः अवा दीत् न तस्य व्याघात इति। वदव्रजेत्यादिना वृद्धिः ध्यै चिन्ता यां भावे ल्युट् ध्यानं ॥ १८ ॥

भ॰ ऐषीरित्यादि॥ तव तद्ध्यानं शिवं निर्व्विघ्नं तस्य कल्याणमिति वा इति नृपोऽवादीदुक्तवान् व्रजवदेतिव्रिः यद्ध्यानं पुनर्जन्मनो जयाय अभिभवाय त्वं ऐषीः इषुश वाञ्छे ष्यां सिः रुदाद्यस्ती तीम् वसोरस्येतीम् झसस्याज्झसीम इति सेर्लोपः घोठीषोष्विति अम् आदिगेचोरिति णुः भूयोमजादेरिति पुनरम् आदिगेचो रिति व्रिः यच्च ध्यानं ते तव रूपादिबोधात् चक्षुरादिद्वारेण रूप रसादीनां यो बोधो ज्ञानं तस्मात् न्यवृतत् निवृत्तं ध्यानं न रूपर सगन्धादिविषयकं स्यात् वृतेर्द्युतादित्वात् शासुलिद्युदिति ङः ङ विधानं अतएव पं। येन ध्यानेन प्रतनूनि दुर्बोधादतिसूक्ष्मा णि तत्त्वानि त्वं अबुद्धाः बुधेस्थासि झसस्यादिति सिलोपे ढभात्त योरिति थस्य धः झपझसोरितिधस्य दः॥ १८।

आख्यन्मुनिस्तस्य शिवं समाधेर्व्विघ्नन्ति रक्षांसि वने क्रतूंश्च। तानि द्विषद्वीर्य्यनिराकरिष्णुस्तृणेढु रामः सह लक्ष्मणेन ॥ १९ ॥

भ॰ आख्यत्॥ पृष्टो मुनिस्तस्य समाधेर्ध्यानस्य शिवमनुपद्रवमा ख्यत् कथितवान्। चक्षिङः ख्याञ् अस्यतीत्यादिना ख्लेरङ् आतो

CC-0. In Public Domain. Funding by IKS-MoE

लोपः किन्त्वयं दोषः विघ्नन्ति रक्षांसि वने क्रतून्। गमहनेत्यादि ना उपधालोपः हो हन्तेरिति कुत्वं। किं क्रियतामिति चेदाह तानि रक्षांसि द्विषतां वीर्य्यं सामर्थ्यं वीरैः स्वार्थिकष्यन्तादचो यत् तस्य निराकरिष्णुः निराकरणशीलः अलङ्कृञित्यादिना इष्णुच् तृणेढु हिनस्तु तृहेर्विधौ लोट्। एरुः रुधादित्वात् श्नम्। तृणह इम् होढः ष्टुत्वं ढोढे इति ढलोपः सह लक्ष्मणेन लक्ष्मणेन सह॥ १९॥

आख्यदित्यादि॥ ततो मुनिराख्यत् कथितवान् वक्त्यस्यख्या लिपेतिङः उस्येचीत्यालोपः तस्य समाधेः शिवं कल्याणं तस्य नृपस्य आख्यत् सम्बन्धविवक्षया षष्ठीत्यन्ये। तु शब्दो वाक्यभेदे विषयद्योतकत्वे वा। रक्षांसि वने क्रतून् यज्ञान् विघ्नन्ति हन गमेत्युङ्लोपः हनोक्तोघ्नः तानि रक्षांसि रामो लक्ष्मणेन सह तृणेढु हन्तु तृहधकि हिंसे विधिनिमन्त्रणेति प्रार्थनायां गी तुपि रुधादित्वात् दिवसुतुदरुधेति नण् तृह इन् पिद्वत्से इति इन् हो ढोभाविति हस्य ढः ढभात्तथोरिति तस्य धः ष्टुभिरिति धस्य ढः ढोढ्रीति ढलोपः द्विषतां शत्रूणां वीर्य्यं निराकरोतीति भ्रिभाज भू सहेति इष्णुः शीलार्थे वा इष्णुरित्यन्ये॥ १९॥ भ०

**स शुश्रुवांस्तद्वचनं मुमोह राजासहिष्णुः सुतवि प्रयोगं। अहंयुनाथ क्षितिपः शुभंयुरूचे वचस्तापस कुञ्जरेण॥ २०॥**

स राजा तस्य मुनेस्तद्वचनं शुश्रुवान् श्रुतवान् सन् सुत ज०म०

Digitized by eGangotri and Sarayu Trust.



विप्रयोगमसहिष्णुः असहनशीलः मुमोह मोहमुपगतः शृणोते र्भाषायांसदवसश्रुवेत्यनेन क्वसुः। सुतेन विप्रयोगमिति कर्तृक रणेकृतावङ्गलमिति समासः नलोकाव्ययनिष्ठेति षष्ठ्याः प्रतिषे धः। अथानन्तरं अहंयुना अहंकारवता अहंशुभमोर्युस् तापसकुञ्जरेण तपःसहस्राभ्यांविनीनिरित्यनुवर्तमाने अण्चेति मत्वर्थे ऽण् तापसश्च स कुञ्जरश्चेति वृन्दारकेत्यादिना समासः। तेन क्षितिपो राजा शुभंयुः कल्याणवान् पूर्ववद्युस्। वचो व च्यमाणमूचे उक्तः कर्म्मणिलिट् सम्प्रसारणं अहंयुनाथ इति विसर्गान्तपाठान्तरम् तत्र अहंयूनां क्षत्रियाणां नाथ इति यो ज्यम्॥२०॥

भ॰ सशुश्रुवानित्यादि॥ तस्य मुनेर्व्वचनं शुश्रुवान् स राजा मुमोह मुह्यत्वन्नि वैचित्ते यतः सुतविप्रयोगं पुत्रस्य विरहं असहिष्णुः अथानन्तरं तापसकुञ्जरेण तपस्विश्रेष्ठेन क्षितिपो वच्यमाणं वच ऊचे व्ययग्रहेति खेर्ज्जिः ग्रहस्वपाद्योरिति प्रकृतेर्ज्जिः न्या दिग्यन्तेति गौणकर्म्म उक्तं कीदृशेन स्वप्रार्थनाभङ्गसम्भावनया क्रोधादहङ्कारवता कीदृशो राजा शुभंयुः शुभयुक्तः गोतृणमेधे ति अव्ययाभ्यां अहंशुभंशब्दाभ्यां युरस्त्यर्थे॥२०॥

मया त्वमाप्थाः शरणं भयेषु वयं त्वयाप्याप्स्महि धर्म्मवृद्धौ। क्षात्रं द्विजत्वं च परस्परार्थं शंकां कृथा मा प्रहिणु स्वसूनुं॥२१॥

ज॰म॰ मया॥ भयेषु त्वं शरणम् आप्थाः प्राप्तोऽसि मया आपेः कर्म्मणि लुङ्सिज्लोपः। त्वयापि धर्म्मवृद्धौ धर्म्मोपचयाय वय

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



माप्स्महि प्राप्ताः। पूर्व्ववत्सुडादिः उत्तम बहुवचनं सिचोलोपा भावः मकारस्यासत्वात्। तदित्थं द्वाभ्यां द्विजत्वं च धर्म्मवृद्धौ प रस्परार्थं अन्योन्यप्रयोजन कर्म्मव्यतीहारे सर्व्वनाम्नो द्वे भवतः स मासवच्च बहुलमिति यदा न समासवत् तदा अयम्। तस्मान्मा शङ्कां कृथाः माकार्षीः कथमस्मिन्संकटे पुत्रं वियोजयामीति। माङि लुङ् अडभावः उश्चेति कित्वाद्गुणाभावः ह्रस्वादङ्गादिति सिचोलोपः प्रहिणु प्रेषय स्वं पुत्रं हिनोतेः प्रार्थनायां लोट् नुः अपित्वात् ङित्वं गुणाभावः उतश्चप्रत्ययादिति हेर्लुक् हिनुमी नेति णत्वम्॥ २१॥

मयेत्यादि॥ मया भयेषु शरणं रक्षिता त्वं आप्थाः प्राप्तः द्वे थास् आप्लृ व्याप्तौ णिप्रापणे झलखादिति सेर्लोपः। त्वयापि धर्म्म वृद्धौ वयं आप्स्महि प्राप्ताः अत्रापि द्वे महि तस्मात् चत्रियत्वं ब्रा ह्मणत्वञ्च अन्योन्यप्रयोजनकं जातिव्यक्त्योरभेदोपचारात् व्यती हारे गतिहिंसेतिसूत्रे ऽनन्योन्यार्थ इति ज्ञापकात् परस्परं व्यति लुनन्तीत्युदाहरणेन च क्रियाव्यतीहारे परस्परार्थं भवतीति बोद्धव्यं। त्वं शङ्कां मा कृथाः झलखादितिसेर्लोपः घीटीषीस्वित्य त्रामेति वाक्यात् मायोगे अमनिषेधः स्वसूनुं प्रहिणु प्रस्थापय विधिनिमन्त्रणेति प्रार्थनायां गी हिनवर्द्धने गतौ स्वादित्वात् दि वसतुर्दैति नुः हेर्लोप इति हिलोपः प्राग्वन्नोन इति णत्वं॥ २१॥

घानिष्यते तेन महान्विपचः स्थायिष्यते येन रणे पु रस्तात्। मा मां महात्मन्परिभूरयोग्ये न मद्विधो न्यस्यति भारमग्र्यं॥ २२॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० घानि ॥ अनागतमर्थं ज्ञानेन समीक्ष्याह। महान्विपक्षो रावणः त्रैलोक्यविजयित्वात् सोऽपि रामेण घानिष्यते किमुत इतर राक्षसाः। हन्तेः कर्म्मणि लृट् स्यसिजित्यादिना चिण्वदिट् उपधावृद्धिः। होहन्तेरिति कुत्वं पुरस्तादग्रतो यद्रणं युद्धं भावि परशुरामेण सार्द्धमिति भावः। तत्र येन स्थायिष्यते तेन घानिष्यते इतियोज्यं अत्र तिष्ठतेर्भावे लृट् चिण्वदिड्वा आतोयुक् हे महात्मन् महासत्व मा मां परिभूः मावज्ञासीः। किमेवं वदसीति परिपूर्वो भवतिर्निराकरणे वर्त्तते। मद्विध इति विधानं विधा प्रकारः आतश्चोपसर्ग इत्यङ् विधा भेदः सादृश्यञ्च इह सादृश्यं गृह्यते मया विधा सादृश्यं यस्येति मद्विधः प्रत्ययोत्तरपदयोश्चेति मदादेशः मद्विधो मत्सदृशोऽन्यो न भारमग्र्यं अयाग्यत् अयोग्ये असमर्थे न्यस्यति निक्षिपति किमहं येनानागतं समीक्षितमितिभावः। योगाय प्रभवति योग्यः योगाद्यत्॥ २२॥

भ० शङ्काया अकरणे हेतुमाह॥ घानिष्यतइत्यादि॥ येन रामेण रणे पुरस्तादेव स्थायिष्यते नच पराङ्मुखीभविष्यते तेन महान् विपक्षो ऽपि घानिष्यते यद्वा येन हेतुना रामेणैवमेवं करिष्यते ततः शङ्कां मा कृथा इति पूर्व्वेणान्वयः हनग्रहदृशश्चइति स्मिण् खेर्होघोञ्णितिचेति हस्य घः हनस्तङ्इत्यत्र इण् वर्ज्जनात् न तङ् मिनिणोः समानत्वात् स्थायिष्यते इतिपूर्व्ववत् स्मिण् यन ञ्णित् छदिन्यात इतियन् पुरस्तादिति दिक्शब्दाद्दिग्देशकाले इति सप्तम्याः स्तात् पूर्व्वाधरावराःपुराधावेति पूर्व्वस्य पुरादेशः हे महात्मन् हे महामते त्वं मां मा परिभूः न तिरस्कुरु माटीवेति भूस्थापिवेति सेर्लुक् माथोगे ऽम्निषेधः। आत्मादेहमनो

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अच्चस्वभावधृतिबुद्धिष्विति विश्वः। मद्विधोजनः अयोग्ये ऽसम र्थेअर्थ्यंश्रेष्ठं भारं न न्यस्यति नार्पयति योगाय प्रभवति योग्यः ढ घेकादितिष्ण: अनित्त्वविवचया न ग्नि: तत्पुरुषोवा नञः समास इति। नञ्तत्पुरुषसंज्ञकसमासार्थं परे इत्थं कुर्व्वन्ति तन्मते न योग्योऽयोग्य इतिविग्रहः खमते योग्यादन्यः अयोग्यः अन्यार थ्येत्यादिना नञोऽन्यार्थत्वात् पञ्चमीसमासः व्यंपूर्व्वमिति नञः प्राग्भावः नञोनैवेत्यः एवमब्राह्मण इत्यच ब्राह्मणस्य न सदृशो ऽब्राह्मणः समार्थैनेत्यादिना नञः समार्थत्वात् षष्ठी तेनात्रषष्ठी समासः अनिमित्तान्यथा पश्यन्नित्यच एकार्थेन निन्दितानि च ता नि निमित्तानि चेति कर्म्मधारयः नञो निन्दितार्थे एकार्थत्वात् अपापमित्यच पापस्याभावो ऽपापमित्यव्ययीभावः ऽनञोऽव्यय त्वात् एवमन्यच यथान्वयं बोद्धव्यं। तत् सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः इत्य समासे तु नञो वाचकत्वानङ्गीकारात् तद्योगे उक्तव्याख्या प्राप्त विभक्तिर्न स्यात्। मत्सैव विधा प्रकारो यस्य तादृशः सर्व्वं जाना तीत्यभिप्रायः॥ २२॥

क्रुध्यन्कुलं धक्ष्यति विप्रवह्निर्यास्यन्सुतस्तप्स्यति मां समन्युं। इत्थं नृपः पूर्व्वमवालुलोचे ततोऽनुजज्ञे ग मनं सुतस्य॥ २३॥

क्रुध्यन्॥ यद्यहं भूतरचणे ऽधिकृतोऽस्य वचनं न कुर्य्यां तदा क्रुध्यन् सन् दिवादित्वात् श्यन् विप्रो वह्निरिव उपमितिसमासः धक्ष्यति कुलं भस्मसात्करिष्यति दहेर्लृट् दादेरिति घःभष्भावः

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



घत्वं घकारस्य ककारः। इणकोरिति षत्वं यास्यन् गमिष्यन् सुतः मां समन्युं सशोकं तप्स्यति सन्तापयिष्यति तपेर्लट् इत्थमेवं प्रकारं नृपः पूर्व्वमादौ अवालुलोचे अवलोचितवान् अवाङ्पूर्व्वोलोचेर्लिट् तत उत्तरकालं सुतस्य गमनमनुजज्ञे अनुज्ञातं नृपेणेति विभक्ति विपरिणामेन तेनेति योज्यं कर्म्मणि लिट् ज्ञा अवबोधनेइति परस्मैपदित्वात् नचानुपूर्व्वादस्मादात्मनेपदं विहितं॥ २३॥

भ० क्रुध्यन्नित्यादि॥ विप्र एव वह्निः क्रुध्यन् कुलं धक्ष्यति भस्मीकरिष्यति दहौ दाहे औदित्वान्नेम दादेर्घ इति हस्य घः झपझसोरिति घस्य कः किलादिति षः यास्यन् गमिष्यन् सुतः समन्युं सशोकं मां तप्स्यति तपौ दाहे इत्यमनेन प्रकारेण नृपः पूर्व्वमवालुलोचे आलोचितवान् लोचृङ्लोचे धुर्द्दिष्यङीतिद्विः झभखघट्टघेति ओकारस्य उकारः। ततोऽनन्तरं सुतगमनं अनुजज्ञे अत्रानुशब्दस्य उपसर्गप्रतिरूपकत्वेन ञिन्ञ्यन्तपिवेति मं। यद्वा विभक्तिव्यत्ययेन नृपेण सुतस्य गमनमनुजज्ञे अनुज्ञातं कर्म्मणि प्रत्ययः यद्वाअनुपश्चात् ततस्तेन सुतस्य गमनं जज्ञे ज्ञातं तस् क्तेरिति तस् यद्वा जनोङेरूपं अनुज्ञातार्थता हनगमित्युङ्लोपः ॥२३॥

आशीर्भिरभ्यर्च्य ततः क्षितीन्द्रं प्रीतः प्रतस्थे मुनिराश्रमाय। तं पृष्ठतः प्रष्ठमियाय नम्रो हिंस्रेषु दीप्रास्त्रधरः कुमारः॥२४॥

ज० म० आशी॥ रामगमनस्यानुज्ञातत्वात् प्रीतो मुनिः क्षितीन्द्रं

CC-0. In Public Domain. Funding by IKS-MoE

राजानं आशीर्भिरभ्यर्च्य पूजयित्वा आङ्शासेः क्विप्युपसंख्या
नात् उपधाया इत्वं प्रतस्थे पुनराश्रमाय आश्रमं पुनः प्रस्थि
तवान्। तिष्ठतेः समवेत्यादिना लिटि तङ् प्रष्ठं अग्रयायिनं
तं प्रष्ठोऽग्रगामिनीति षत्वं पृष्ठतः पश्चात् इयाय कुमारः। इणो
णलि वृद्धिरायादेशः द्विर्वचनेचीतिस्थानिवद्भावात् द्विर्वचनमि
कारस्य अभ्यासस्यासवर्णे इतीयङ् नम्रो ऽनुकूलः हिंस्रनशी
लाः इषवः शराः हिंस्रेषवः आप्तमविसम्वादि यद्धनुः तत् हिंस्रे
षुदीप्तमाप्तंधनुर्य्यस्य कुमारस्येति विग्रहः। अत्र धनुषस्येति
अनङ् न भवति समासान्तविधिरनित्य इति। दीप्तास्त्रधनुरि
ति पाठान्तरं दीप्तमस्त्रं धृष्टतया यस्य धनुषस्तत् दीप्तास्त्रं धनु
र्य्यस्येति सः। कस्मिन्विषये हिंस्रेषु नान्येष नम्रादयो नमिकम्पी
त्यादिना रप्रत्ययान्ताः॥ २४॥

आशीर्भिरित्यादि॥ मुनीरामस्य गमनानुज्ञया प्रीतः सन् चिती
न्द्रंपुनराशीर्भिरभ्यर्च्य आश्रमाय प्रतस्थे प्रतिज्ञानिर्णयप्रकाशे सं
प्रव्यवाचस्य इति मंगत्यर्थमन्यढे इतिचतुर्थी आङः शासः क्विप्
शासुङिङ्ढुस इति उङ आकारस्य इः सषेसुस्येति रङि र्व्यनच्त
यीतिर्घः कुमारो रामस्तं प्रष्ठं अग्रगं मुनिं पृष्टतः पश्चात् इयाय।
इण्गतौ णप् धुर्द्दिष्व्यङीतिद्वि र्णित्यन्ते जुङतोरितिशि; खेर्य्यौ
रियुवर्णौ इति इय प्रातस्थो ऽग्रगेइति षत्वं पृष्ठत इति स्पास्तस्।
नम्रो।विनयावनतः हिंस्रदीपेति कर्त्तरि रः हिंस्रेषु हिंसकेषु दीप्तं
दीप्यमानं अस्त्रं धरतीति पचादित्वादन् हिंस्रदीपाभ्यां पूर्व्वेण
रः। हिंस्रेषु दीप्तात्तधनुरिति पाठे हिंस्रेण इषुणा दीप्तमात्तं
गृहीतं धनुर्य्येन इतिविग्रहः॥ २४॥

भ०

Digitized by eGangotri and Sarayu Trust.
CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



प्रयास्यतः पुण्यवनाय जिष्णोरामस्य रोचिष्णुमुखस्य धृष्णुः। त्रैमातुरः कृत्स्नजितास्त्रशस्त्रः सध्र्यङ् रतः श्रेयसि लक्ष्मणोऽभूत् ॥ २५ ॥

ज०म० प्रया॥ प्रयास्यतो गमिष्यतो रामस्य लक्ष्मणः सध्र्यङ् अभूत् सहायीभूतः सहाञ्चतीति क्विन् अनुषङ्गलोपः उगिदचामिति नुम् हलन्त्यादिसंयोगान्तलोपौ क्विन्प्रत्ययस्येति कुत्वं नकारस्य ङकारः सहस्य सध्रिरिति सध्र्यादेशः पुण्यवनाय पुण्यहेतुत्वात्पुण्यं वनं गत्यर्थात्कर्म्मणि चतुर्थी जिष्णोः जयशीलस्य ग्लाजिस्थश्चेतिग्स्नुः रोचिष्णु रोचनशीलं मुखं यस्य रामस्य पितुराज्ञया तुष्टत्वात् अलङ्कृञित्यादिना इष्णुच् धृष्णुः शत्रुविध्वंसने प्रगल्भः। त्रसिगृधीत्यादिना क्नुः त्रैमातुरः तिसृणां मातृणामपत्यमिति तद्धितार्थविषये समासः पश्चान्मातुरुत्संख्यादित्यादिना अण् उत्वं च द्विगोर्लुगनपत्यइति लुङ् न भवति सद्धि पिण्डद्वयप्राशनात्ताभ्यां च जनितः अस्त्रञ्च शस्त्रञ्चेतिद्वन्द्वः। कृत्स्नं समग्रं जितमधिगतमस्त्रं शस्त्रं येनेतिविग्रहः रतः श्रेयसि कल्याणे प्रकृत्यैकाच् प्रशस्यस्य श्रः लक्ष्मीरित्यौणादिकः लक्षेर्मुट् ईप्रत्ययश्च सा यस्य विद्यत इति लक्ष्मणः। लोमादिषु लक्ष्म्या अश्चेति अच् न प्रत्ययः अत्त्वश्च ॥ २५ ॥

भ० प्रयास्यतइत्यादि॥ रामस्य श्रेयसि कल्याणे रतो लक्ष्मणः सध्र्यङ् सहचरोऽभूत्। सह अञ्चति गच्छतीति क्विप् सहसन्तिरःसध्रिसमितिरीति सहशब्दस्य सध्र्यादेशः किम्भूतस्य पुण्यहेतुत्वात् पुण्यं पवित्रं वा यद्वनं तस्मै प्रयास्यतो गमिष्यतः

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



गत्यर्थमन्यढेइति कर्म्मणि चतुर्थी जयतीति जिष्णुः ग्स्नुक् भूजेरिति ग्स्नुक्। यन्नरचार्थे गमनानन्दात् रोचिष्णु दीप्यमानं मुखमस्य भ्राजेति इष्णुः किम्भूतः धृष्णुः प्रगल्भः त्रिपत्रसगृधधृषः क्नुरिति क्नुः शीलार्थे ग्स्नुक् इष्णुक्नुप्रत्यया इत्येके तिसृणां मातॄणामपत्यं त्रैमातुरः संख्यासंभद्रान्मातुर्डुर्ष्यो इति डुर्। कृत्स्नं समस्तं जितमस्त्रंशस्त्रं च येन स तथा रतः रमधातोः क्तप्रत्यये वनतनाद्यनिमामिति मलोपः ॥ २५ ॥

इषुमति रघुसिंहे दन्दशूकान् जिघांसौ धनुररिभिरसह्यं मुष्टिपीडं दधाने। व्रजति पुरतरुण्यो बद्धचित्राङ्गुलित्रे कथमपि गुरुशोकान्मा रुदन्माङ्गलिक्यः ॥ २६ ॥

इषुमति ॥ रघुसिंहे रामे रघुषु रघुवंशभवेषु सिंह इव शौर्य्यादियोगात् व्रजति सति इषुमति सनिषंगे प्रशंसायां मतुप्। दन्दशूकान् हिंस्रान् दंशेः लुपसदेत्यादिना यङ् जपजभेत्यादिना अभ्यासस्य नुक्। तदन्ताद्यजजपेत्यादिना ऊकः। अतो लोपः यस्यहलः जिघांसौ हन्तुमिच्छौ अज्झनेतिदीर्घः। अभ्यासाच्चेति कुत्वं सना शंसेति उः न लोकेति षष्ठीप्रतिषेधात् द्वितीयैव। धनुर्दधाने विभ्राणे अरिभिरसह्यं सोढुमशक्यम् शकिसहोश्चेति यत् मुष्टिपीडं मुष्टिना पीडयित्वा मुष्टिशब्दे तृतीयान्ते उपपदे सप्तम्यां सोपपीडेति णमुल्तत्र चकारेण तृतीयानुकर्षणात्। बद्धं चित्रमङ्गुलित्रं येन अङ्गुलिं त्रायत इति कः पुरे

ज॰म॰



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



तरुण्यः पुरतरुण्यः नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसङ्ख्यानमि ति ङीप्। यदि तदन्तोऽर्थवत् नो चेद्गौरादिपाठात्ङीष्। रामो गत इति गुरुः शोको यासां ताः। कथमपि मारुदन् न रुदित वत्यः। रुदेरिरितीवेति ह्वरङ् यतो माङ्गलिक्यः मङ्गलप्रयो जनाः। तदस्य प्रयोजनमिति ठञ् टिड्ढाणञित्यादिना ङीप् ॥२६॥

भ॰ इषुमतीत्यादि॥ रघुसिंहे रघुश्रेष्ठे रामे व्रजति सति तद्विच्छे दात् गुरुशोकात् पुरतरुण्यः कथमपि महाकष्टेन मा रुदन् लघिररुदरोदे यतो माङ्गलिक्यः मङ्गलाय हिताः मङ्गलप्रयो जना वा विकारसंघेति ष्णिकः ष्क्रिञ्चाहेति ईप् नदादित्वात् तरुणशब्दादीप् वयस्यचरमे इति क्रमदीश्वरादयः। रामे की दृशे इषुमति मतुरस्त्यर्थे प्रशंसायां। दन्दशूकान् जिघांसौ दंशौ दंशने इत्यस्मात् जागृयङन्तेति ऊकः यङोलुग्वेति यङ्लुक् दंशेनलोपोवेति न लोपः दन्दशूकान् दंशनशीलानिति धातु चन्द्रादयः दन्दशूकश्च पुंलिङ्गो राचसे च सरीसृपे इति मेदिनी हन्तुमिच्छुर्जिघांसुः सन्निच्छायामिति सन् अन्तुमिच्छति जि घत्सतीत्युक्तेस्तुमर्थाद्धातोः सन्निति बोध्यं अन्यथाऽन्तुमिच्छ तीत्युक्तेर्वैयर्थ्यं स्यात् सन्यङन्तो द्विरिति द्विः खेराद्यचो लोप्य इति खेर्लोपः झभखघेति हस्य जः स्यसेत्सनीति इः खेर्हो घो ञ्णि ति चेति हस्य घः घोञ्झनिङ्गमामिति दीर्घः अरिभिरसह्यं धनु र्दधाने किम्भूतं तत् मुष्टिपीडं मुष्टिना पीडा यस्य तत्तया एतेन मुष्टेर्दार्ढ्यं सूचितं अन्ये तु प्रमाणशक्तोस्तृतीयासप्तमीभ्यां क्षा चणम् समासो वेत्याहुः। तन्मते मुष्टिना पीडयित्वा इत्यर्थः।

CC-0. In Public Domain. Funding by IKS-MoE

मुष्टिं पीडयतीति पचादित्वादन् मुष्टिपीडमिति विशेषणेन धनुषो ऽतिदार्ढ्यं सूचितमिति केचित्। केचित्तु मुष्टिं मोषणं पीडयति खण्डयति इत्यनेन चौर्य्योपसारणमपि कविभिर्वर्ण्यते श्रुतौ तस्करता स्थितेति कालिदास इत्याह मुष्टिं हि सामर्थ्यात् शत्रूणां पीडयतीति केचित् धारणक्रियाविशेषणमिति। केचित् विचित्रं अङ्गुलित्रं बद्धं येन अङ्गुलिं त्रायते रक्षतीति हनजनादिति डः॥ २६॥

अथ जगदुरनीचैराशिषस्तस्य विप्रास्तुमुलकलनिनादं तूर्य्यमाजघ्नुरन्ये। अभिमतफलशंसी चारु पुस्फोर बाहुस्तरुषु चुकुवुरुच्चैः पक्षिणश्चानुकूलाः॥ २७॥

इतिभट्टिकाव्ये रामोत्पत्तिर्नाम प्रथमः सर्गः॥

अथ॥ तस्य रामस्य व्रजतः विप्राः अनीचैः महता ध्वनिना आशिषः इष्टवचनानि जगदुः गदितवन्तः अन्ये वादकाः तूर्य्यं कांस्यतालपटहादिसमूहं आजघ्नुः ताडितवन्तः आङो यमहनइति आत्मनेपदं न भवति। अकर्म्मकादित्यनुवर्त्तते तुमुलो महान् कलो मधुरो निनादो ध्वनिर्यस्येति अभिमतं इष्टं फलं शंसितुं शीलं यस्य बाहोः स च पुस्फोर सुतरां स्फुरितवान्। अत्र दक्षिणो बाहुः सामर्थ्याद्गम्यते लाङ्गलात् अनेन सीताप्राप्तिबीजमुपन्यस्तं स्फुरतेरभ्यासस्य शर्पूर्वाः खय इति खयः शेषः चत्वं। पक्षिणश्च तरुषु स्थिताः अनुकूलाः सन्तः उच्चैः सुष्ठु चुकवुः कूजितवन्तः। कु शब्द इत्यस्य लिटः क्त्वादुवङादेशः॥ २७॥

Digitized by eGangotri and Sarayu Trust.



इति भट्टिकाव्यटीकायां जयमङ्गलाख्यायां प्रकीर्णकाण्डे रामसम्भवः प्रथमः सर्गः ॥

भ॰ अथेत्यादि। अनन्तरं विप्रास्तस्य रामस्य अनीचैरुच्चैराशिषो जगदुः उक्तवन्तः अन्ये तूर्य्यवाद्यं आजघ्नुः वादितवन्तः कीदृशं तुमुलो महान् कलो मधुरास्फुटो निनादो ध्वनिर्य्यस्य। तूर्य्यो ऽस्त्री वाद्यनिर्घोषे वादित्रं वादनञ्च तदिति कोषः तस्य रामस्य वाङ्गस्पारु यथा स्यात्तथा पुस्फोर किम्भूतः अभिमतं फलं शंसति कथयतीत्यर्थात् दक्षिणबाहुस्पन्दनं कान्तालिङ्गनसूचकमिति वृद्धाः। ग्रहादित्वान्निन् अन्ये तु शीलार्थे णिन् इत्याहुः। अनुकूलाः पक्षिण उच्चैसुकुवुः शब्दं चक्रुः कुङ्शब्दे एतेन गमनमङ्गलमुक्तं। यदुक्तं वामे मधुरवाक् पक्षी वृक्षः पल्लवितो ऽग्रतः। अनुकूलो वहन् वायुः प्रयाणे शुभशंसिन इति ॥२७॥

इति श्रीभरतसेनकृतायां भट्टिटीकायां मुग्धबोधिन्यां प्रकीर्णकाण्डे श्रीरामसम्भवो नाम प्रथमः सर्गः॥

**वनस्पतीनां सरसां नदीनां तेजस्विनां कान्तिभृतां दिशाञ्च। निर्याय तस्याः स पुरः समन्ताच्छ्रियं दधानां शरदं ददर्श॥ १॥**

म॰ इदानीं विजिगीषूणां कण्टकान् समुद्धर्त्तुं शरत्काले समुद्योग इति तमेव वर्णयन्नाह वनस्पतीनामित्यादि। स रामः तस्याः पुरः अयोध्यायाः निर्याय निर्गत्य समन्तात्सर्वतः शरदं ददर्श दृष्टवान् कालस्याप्रत्यक्षत्वात् कार्य्याणां दर्शनात्तद्दर्शनमिति

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



मन्यति श्रियन्दधानां धारयन्तीं केषां वनस्पतीनां पारस्करादि दर्शनात्सुट्। अत्र लोकप्रतीत्या वृक्षा द्रष्टव्याः नतु पारिभाषिकाः। तथा सरसां तडागानां नदीनां गङ्गादीनां तेजस्विनाञ्चन्द्रतारादीनां कान्तिं नैर्म्मल्यं बिभ्रतां दिशां च तदा हि निर्म्मला दिशो भवन्ति। वनस्पत्यादीनां श्रियं दधानां शरदं ददर्श तां रामव्यापारं विना सामान्येन वर्णयन्नाह॥ १॥

वनस्पतीनामित्यादि॥ स रामस्तस्याः पुरोऽयोध्याया निर्गत्य समन्तात्सर्व्वतः शरदं ददर्श। यद्यपि कालस्य प्रत्यक्षता नास्ति तथापि तद्व्यञ्जकदर्शनात्तथा व्यपदेशः किम्भूतां वनस्पत्यादीनां श्रियं दधानां वनस्पतयो वृक्षाः परस्परं व्यतिलुनन्तीति ज्ञापकात् क्वचिदभिधानात् सकारागम इति बोध्यं। वानस्पत्येतरङ्गे स्याद् द्रुमात्रेऽपि वनस्पतिरितिरभसः तेजो विद्यते येषां ते तेजस्विनश्चन्द्रादयः स्रङ्मेधास्मायादिति विन् एषां कान्तिभृतामिति सम्बन्धः कान्तिं बिभ्रतीति क्विप् ह्रस्वस्य तन् पितीति तन्। वनस्पतीनां पुष्पसम्बन्धात् सरसां विकसितपद्मादिमत्त्वात् नदीदिक् तेजस्विनां अन्यत्कान्तिभृत्त्वं॥ १॥ भ०

तरङ्गसङ्गाच्चपलैः पलाशैर्ज्वालाश्रियं सातिशयान्दधन्ति। सधूमदीप्ताग्निरुचीनि रेजुस्ताम्रोत्पलान्याकुलषट्पदानि॥२॥

तरङ्ग। तरङ्गसङ्गात् सलिलोर्म्मिसम्पर्काच्चपलैः चञ्चलैः पलाशैः पत्रैः ज्वालाश्रियं सातिशयां दधन्ति सधूमदीप्ताग्निरुचीनि सधूमदीप्ताग्नेरिव रुचिर्येषां रक्तोत्पलानां तानि रेजुः दीप्यन्तेस्म ज०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



राजेर्लिटि फणांचसप्तानामिति एत्वाभ्यासलोपौ। आकुलाः इतस्ततोयायिनः षट्पदा येष्विति चलितपत्राणामग्निशिखातुल्यत्वात् षट्पदानाञ्च धूमतुल्यत्वात् सधूमदीप्ताग्निरुचीनीत्युक्तं ॥२॥

भ॰ तरङ्गेत्यादि। ताम्रोत्पलानि रक्तोत्पलानि रेजुः राजृ्ङ्‌ण दीप्तौ फणादित्वात् तॄफलभजत्रपेति अतएत्वं खिलोपश्च। कीदृशानि तरङ्गसङ्गाच्चपलैश्चलैः पलाशैः पत्रैः सातिशयां ज्वालाश्रियं दधन्ति धारयन्ति धूमेन सह वर्त्तमानस्य दीप्ताग्नेरुचिरिव रुचिर्येषां। आकुलाश्चञ्चलाः षट्पदा भ्रमरा यत्र रक्तोत्पलदलानां वह्निज्वालासादृश्यं भ्रमरस्य धूमसादृश्यमितिभावः॥२॥

बिम्बागतैस्तीरवनैस्समृद्धिं निजां विलोक्यापहृतां पयोभिः। कूलानि सामर्षतयेव तेनुः सरोजलक्ष्मीं स्थलपद्महासैः॥३॥

म॰ बिम्बा। बिम्बं प्रतिबिम्बं तेनागतैर्निपतितैरिति। तृतीयेति योगविभागात्समासः। तीरवनैः कुसुमितैरित्यर्थात् तैः करणभूतैः पयोभिः कर्तृभिः समृद्धिं विभूतिं निजामात्मीयां अपहृतां विलोक्य कूलानि कर्तृभूतानि सामर्षतयेव साक्षमतयेव सरोजलक्ष्मीं कमलशोभां पयःसम्बन्धिनीं तेनुः विस्तारितवन्ति। अत एकहल्मध्यइत्यादिना एत्वाभ्यासलोपौ। कूले सरोजासम्भव इति चेदाह स्थलपद्महासैरिति स्थलकमलविकाशैरित्यर्थः ॥३॥

भ॰ बिम्बेत्यादि। प्रतिबिम्बेनागतैस्तीरवनैः करणभूतैः पयोभिः

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कर्तृभिरात्मीयां समृद्धिं सम्पत्तिं अपहृतां विलोक्य नद्यादीनां कूलानि सामर्षतया सक्रोधतया स्थलपद्महासैः स्थलकमलविकाशैः पयःसम्बन्धिनीं सरोजलक्ष्मीं पद्मशोभां तेनुः तनदुञ् विस्तारे इवीत्प्रेचायां॥३॥

निशातुषारैर्नयनाम्बुकल्पैः पत्रान्तपर्य्यागलदच्छबिन्दुः। उपारुरोदेव नदत्पतङ्गः कुमुद्वतीं तीरतरुर्दिनादौ॥ ४॥

निशा॥ निशायां तुषारैः हिमैः नयनाम्बुकल्पैः अश्रुतुल्यैःनयनानुकारिषु पत्रेषु स्थितत्वात्। तैर्हेतुभूतैः पत्रान्तपर्यागलदच्छबिन्दुः पत्रान्तात्पर्यागलन्तः अच्छास्तुषारबिन्दवो यस्य तीरतरोः। स दिनादौ दिनारम्भे कुमुद्वतीमुपारुरोदेव आक्रन्दितवानिव भाति शशिवियोगादीदृशी त्वं भूतासीति रोदनक्रियया आक्रन्दनविशिष्टया कुमुद्वत्या ईप्सिततमत्वात् रुदिः सकर्मकः। तदाक्रन्दनं योजयन्नाह नदत्पतङ्ग इति कूजत्पक्षीत्यर्थः पतेरंगत्पक्षिणीत्यौणादिकः। कुमुद्वती कुमुदनडेत्यादिना डमतुप्। झपदूतिवलम् उगित्वात् ङीप्॥ ४॥ जं०म०

निशेत्यादि॥ रात्रिसम्बन्धिहिमैर्नयनतुल्यैर्हेतुभिः पर्णान्तपर्य्यागलदच्छबिन्दुः सन् दिनादौ प्रातःकाले तीरस्थितो वृक्षः कुमुद्वतीं उपारुरोद इव चन्द्रस्य विरहात् त्वमीदृशी जातेति क्रन्दितवानिव पर्णान्तेभ्यः समन्तात् गलन्तो निर्मला हिमानां बिन्दवो यस्य एतेन नयनाम्बुतुल्यत्वं सूचितं। नदन्तः कूजन्तः पतङ्गाः पक्षिणो यत्र एतेन पतङ्गशब्दैरेव रोदनं सूचितं। भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



आक्रानविशिष्टाया रोदनक्रियायाः सकर्म्मकत्वं केवलायाश्च कर्म्मकत्वमिति वृद्धाः वतौ कुमुदस्यातो लोपो निपातनात् ॥ ४ ॥

वनानि तोयानि च नेत्रकल्पैः पुष्पैः सरोजैश्च निलीनभृङ्गैः। परस्परां विस्मयवन्ति लक्ष्मीमालोकयाञ्चक्रुरिवादरेण ॥ ५ ॥

ज०म० वनानि ॥ वनानि पुष्पैर्निलीनभृङ्गैः स्थितभ्रमरैः लीयतेः खादय आदित इति निष्ठा नत्वं नेत्रकल्पैः नेत्रतुल्यैः। तोयानि च सरोजैः निलीनभृङ्गैर्नेत्रकल्पैः विस्मयवन्ति जातविस्मयानि परस्परामन्योन्यस्य लक्ष्मीं शोभां आलोकयाञ्चक्रुरिव। आदरेण तात्पर्य्येण ॥ ५ ॥

भ० वनानीत्यादि॥ नेत्रसदृशः पुष्पैर्वनानि सरोजैस्तोयानि च परस्परां अन्योन्यस्य लक्ष्मीं शोभां आदरेण आलोकयाञ्चक्रुरिव शोभातिशयात् विस्मययुक्तानि परस्परामिति क्रियाव्यतीहारे निपातः परस्परमितिपाठेऽपि तथा क्रियाविशेषणं वा नेत्रसादृश्ये हेतुगर्भविशेषणमाह निलीना आश्लिष्टा भृङ्गा येषु ॥५॥

प्रभातवाताहतिकम्पिताकृतिः कुमुद्वतीरेणुपिशङ्गविग्रहं। निरास भृङ्गं कुपितेव पद्मिनी न मानिनी संसहतेऽन्यसङ्गमं ॥ ६ ॥

ज०म० प्रभात। प्रभाते यो वातस्तस्याघातेन कम्पिता चलिता आकृति

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



राकारो यस्याः पद्मिन्याः सा भृङ्गं निरास निरस्तवती। कुमुद्वती रेणुना पिशङ्गः कपिशः विग्रहो यस्य भृङ्गस्य कुपितेव। यथा अन्यया स्त्रिया सहोषितं तदङ्गसंक्रान्तपरिमलकण्ठमालमात्मदयितं काचित् कुपिता निरस्यति तद्वत्। सा किमिति निरस्यति यतो मानिनी मानवती अन्यसङ्गमं अन्यया सह सङ्गमं न सहते आत्मसङ्गादन्यसङ्गमं न संसहते न क्षमते॥६॥

प्रभातेत्यादि। पद्मिनी कुपितेव भृङ्गं निरस्यति स्म। कीदृशं कुमुद्वत्या रेणुभिः पिशङ्गः कपिलो विग्रहः शरीरं यस्य। कीदृशी प्रातःकालसम्बन्धिवाताभिघातेन कम्पिता आकृतिर्यस्याः सा यथा कुपिता स्त्री अन्ययोषिता सह गमितरात्रिं पतिं तदङ्गलग्नचन्दनचिह्नेन निर्णीय क्रोधात्कम्पितवती निरस्यति तथेयमपीति भावः यतः प्रशस्तमानवती स्त्री अन्ययोषित्सङ्गमं ईदृशं पतिं न सहते अन्याशब्दस्य पुम्वत्त्वेरिति पुम्वत्। संसहत इति पाठे अर्थात् पत्युरन्यस्त्रीसंसर्गं न सम्यक् सहते॥६॥ भ०

दत्तावधानं मधुलेहिगीतौ प्रशान्तचेष्टं हरिणं जिघांसुः। आकर्णयन्नुत्सुकहंसनादान् लक्ष्ये समाधिं न दधे मृगावित्॥७॥

दत्ता॥ मधुलेहिगीताविति मधु लेढुं शीलमेषामिति णिनिः॥ मधुलेहगीताविति पाठान्तरं तत्र लिहन्तीति लेहाः पचाद्यच् ज०म०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



मधुनो लेहा इति षष्ठीसमासः मधु लिहन्तीति वा कर्म्मण्यण् दत्तावधानं दत्तमानसं हरिणं प्रशान्तचेष्टं जिघांसुः हन्तुमिच्छुरपि मृगावित् व्याधः मृगान्विध्यतीति क्विप्। ग्रहिज्येत्यादिना सम्प्रसारणम् नहिवृतीत्यादिना दीर्घः। लक्ष्ये वध्ये समाधिं चित्तैकाग्रतां न दधे न धारितवान् ञित्त्वात्तङ् लिटः कित्त्वे आतोलोपः उत्सुकानां हंसानां नादानाकर्णयन् शृण्वन् तत्राभिरतचित्तकत्वात्। वर्तमानकालो भूतेनाभिसम्बध्यमानः साधुः। धातुसम्बन्धे प्रत्यया इति च आकर्णयन्निति प्रातिपदिकाद्धात्वर्थे बहुलमिति णिच् लक्षणहेत्वोरिति शतृप्रत्ययः॥ ७॥

भ० दत्तावधानमित्यादि। प्रशान्ता चेष्टा शरीरक्रिया यस्य तादृशम पिहरिणंजिघांसुर्हन्तुमिच्छुर्मृगावित् व्याधः उत्सुकानां हंसानां नादान् आकर्णयन् शृण्वन् लक्ष्ये शरव्ये हरिणे समाधिं अवधानं न दधे न धृतवान् हंसध्वनिश्रवणेन स्वस्योत्कण्ठितत्वात् प्रशान्तचेष्टत्वे हेतुगर्भविशेषणमाह मधुलेहिनां भ्रमराणां गीतौ दत्तमवधानं येन। मधुलेहीति ग्रहादित्वान्निन् मृगं विध्यतीति क्विप् वीरुड्ढोधङ्क्काविति दीर्घनिर्द्देशात् क्वचित् क्विवन्ते पूर्व्वपदस्य दीर्घत्वं स्यादिति सूचितं तेनात्र दीर्घत्वं आङ्पूर्व्वस्य विध्यते रूपं वा व्यधेताडे इत्यस्य दन्त्यवत्वात् न जवत्वं तेन झभान्तस्यादिजवामित्यस्य न विषयः कर्णतृकभिदीत्यस्याङ्पूर्व्वस्य अवणार्थकत्वं। लक्ष्यं लक्षं शरव्यञ्च इष्टार्थोद्युक्त उत्सुक इतिचामरः। शाकटायने तु उन्मनसि उत्सुकः साधितः॥ ७॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



गिरेर्नितम्बे मरुता विभिन्नं तोयावशेषेण हिमाभमभ्रं। सरिन्मुखाभ्युच्चयमादधानं शैलाधिपस्यानुचकार लक्ष्मीं॥८॥

गिरेर्नि। गिरेः कस्यचित् नितम्बे मध्यभागे स्थितमभ्रं कर्तृ मरुता विभिन्नं विकलीकृतं तोयावशेषेण पयसोऽवशिष्टतया हिमाभं हिमसदृशं सरिन्मुखानां गिरिनदीनिर्गमाणामभ्युच्चयं वृद्धिं आदधानं कुर्व्वाणं शैलाधिपस्य हिमवतः लक्ष्मीं शोभामनुचकार अनुकृतवत्॥८॥ ज०म०

गिरेरित्यादि। पर्व्वतस्य नितम्बे शिखरे स्थितं अभ्रं मेघः शैलाधिपस्य हिमालयस्य लक्ष्मीं शोभामनुचकार सदृशीचकार। कीदृशं मरुता वायुना विभिन्नं तोयावशेषेण हिमस्येव आभा यस्य सरिन्मुखस्य गिरिनदीनिर्गमस्थानस्य अभ्युच्चयं वृद्धिं वृथा आदधानं कुर्व्वाणं अभ्रतीति अभ्रं अभ्रगत्यां पचादित्वादन्। यद्वा न भ्रश्यन्ति जलान्यस्मादिति गमादित्वात् हनजनाद्गमादेर्डइति डः। न भ्रश्यन्ति यतस्तेभ्यो जलान्यभ्राणि तान्युत इति निरुक्तिः। आपो भ्रश्यन्त्यस्मादिति वा पूर्व्ववत् डः द्व्यष्टोरित्युक्तेः तेन वकारवानप्यब्भ्रशब्दः। अपो विभर्त्तीत्यब्भ्रमिति केचित् नितम्बो रोधसि स्कन्धे शिखरे च कटीरके इति विश्वः॥८॥ भ०

गर्ज्जन् हरिः साम्भसि शैलकुञ्जे प्रतिध्वनीनात्मकृतान्निशम्य। क्रमं बबन्ध क्रमितुं सकोपः प्रतर्क्कयन्नन्यमृगेन्द्रनादान्॥९॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज॰म॰ गर्जन्॥ हरिः सिंहः गर्जन् शब्दं कुर्व्वन् क्व शैलनिकुञ्जे गिरेर्गहने साम्भसि ससलिले एवंविधे प्रदेशे प्रतिध्वनीन् प्रतिशब्दान् आत्मकृतान् निशम्य श्रुत्वा सरोषः सकोपः क्रमं बबन्ध क्रमितु मुत्पतितुं यत् सामर्थ्यं तच्चकारेत्यर्थः। अनेकार्थत्वाद्धातूनां बधिरत्र करणे वर्त्तते। किमिति प्रतर्कयन्नन्यमृगेन्द्रनादान्। इदानीं रामं व्यापारेण वर्णयन्नाह॥ ९॥

भ॰ गर्ज्जन्नित्यादि। हरिः सिंहः सजले पर्व्वतसम्बन्धिलतादिपिहितस्थाने गर्ज्जन् शब्दं कुर्व्वन् आत्मकृतान् प्रतिनादान् वितर्कयन् सकोपः सन् क्रमितुं उत्पतितुं क्रममुत्पतनानुकूलशरीरक्रियां बबन्ध चकारेत्यर्थः। क्रमःशक्तौ परीपाट्यां क्रमं चरणपङ्कयोरितिविश्वः। तर्कद्दीप्ताविति दीप्त्यर्थोऽपि तर्कधातुर्वितर्कमाह। प्रयोगतोऽन्ये मन्तव्या अनेकार्था हि धातव इत्यभिधानात्॥ ९॥

अदृक्षताम्भांसि नवोत्पलानि रुतानि चाश्रोषत षट्पदानां। आघ्रायि वान् गन्धवहस्सुगन्धस्तेनारविन्दव्यतिषङ्गवांश्च॥ १०॥

ज॰म॰ अदृक्षत॥ नवान्युत्पलानि येष्वम्भस्सु जलेषु तानि रामेणादृक्षत दृष्टानि दृशेः कर्म्मणि लुङ् शलइगुपधा इति प्राप्तस्य क्सादेशस्य न दृश इति प्रतिषेधात् इरितोवेति सिजेव भवति। तेन विकल्पेनाङोविधीयमानत्वात् लिङ्सिचावि

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



त्ति क्ङिति गुणाभावः। षट्पदानां रुतानि अश्रोषत श्रुतानि। शृ णोतेः कर्म्मणि लुङ् वहतीति वहः पचाद्यच् गन्धस्य वह इति क्र द्योगे षष्ठी समस्यते। गन्धवहो वायुराघ्रायि आघ्रातः कर्म्मणि लुङ्। अरविन्देन पद्मेन व्यतिषङ्गः सम्पर्कः सोऽस्ति यस्य वायोः स वातीति वान् वातेः शतृप्रत्ययः सुगन्धः शोभनो गन्धो यस्य सः अरविन्दव्यतिषङ्गवत्त्वात्। गन्धस्येदुत्पूतिसुसुरभिभ्य इती कारः समासान्तो न भवति। गन्धस्येले तदेकान्तग्रहणमिति वचनात् सुगन्ध आपणिक इति यथा॥ १०॥

अदृश्यतेत्यादि। तेन रामेण अम्भांसि अदृश्यत दृष्टानि नवानि उत्पलानि यत्र अम्भांसि नवानि उत्पलानि चादृश्यत इति वा षट् पदानां भ्रमराणां रुतानि शब्दा अश्रोषत श्रुतानि। वहतीति वहः पचादित्वादच् गन्धस्य वहो गन्धवहो वायुराघ्रायि वान् ग च्छन् वाल गमनहिंसयोः अरविन्देन पद्मेन व्यतिषङ्गवान् संसर्ग वान् अतएव सुगन्धः शोभनोगन्धोऽस्य इति स्रत्सुरभिपूतेर्ग न्धादिरिति समवेतस्यैव गन्धस्य ग्रहणं अत्र तु परम्परया गन्ध सम्बन्धान्न इप्रत्ययः। सुगन्धिरितिपाठे विकारसंघेत्यादिना सुगन्धशब्दात् स्वार्थे ष्णिःक्वचित्तु समवायाध्याहारात् सुगन्धिः समीरण इति प्रयोग इति पाणिनीयाः। अगन्धादेर्व्वा इति कालापाः। अदृश्यतादिषु कर्म्मणि टी अदृश्यतेत्यत्र इगुङुर्मढीस्य निम्किदिति क्ङित्वान्न गुः मान्तोऽदनत इत्यन्तस्य अत् आघ्रा यीत्यत्र रतनोर्यगिणाविति इण तलोपःयनृञिणदिति यन्॥१०॥

भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



लतानुपातं कुसुमान्यगृह्णात् स नद्यवस्कंदमुपास्पृशच्च। कुतूहलाच्चारुशिलोपवेशं काकुत्स्थ ईषत्स्मयमान आस्त॥११॥

ज॰म॰ लतेति॥ विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोरिति द्वितीयान्त उपपदे नमुल्विधीयते। तत्र व्याप्यमाने द्रव्यवचनस्य आसेव्यमाने च क्रियावचनस्य नित्यवीप्सयोरिति द्विर्वचनं विधीयते अत्र तु समासेनैवोक्तत्वात् नोपयुज्यत इति स्थितम्। स काकुत्स्थो रामो गच्छन् लता लता अनुपात्य कुसुमान्यगृह्णात् गृहीतवान् लता अनुपात्यानुप्लुत्य च। तृतीयाप्रभृतीन्यन्यतरस्यामिति समासः ग्रहेर्लङ्। आप्रत्ययस्य अपिदितिङित्वे ग्रहिज्यादिना सम्प्रसारणम्। नद्यवस्कन्दमिति नदीं नदीं अवस्कन्द्य सर्वान्नदीम् अवस्कन्द्य ढौकित्वा नदीं वा अवस्कन्द्यावस्कन्द्य उपास्पृशत् आचमनं कृतवान्। कौतूहलादिति सर्वत्र योज्यम् चारुशिलोपवेशमिति चारुशिलाः चारुशिला उपविश्य चारुशिला उपविश्योपविश्य वा आस्त आसितवान्। आसेर्लङि रूपं ईषत्स्मयमानः ईषद्धसन्॥११॥

भ॰ लतानुपातमित्यादि। स काकुत्स्थो रामः लतानुपातं कुसुमानि पुष्पाणि अगृह्णात् गृहीतवान्। लतानां पातस्य पश्चात् लतानुपातमित्यव्ययीभावः लतानां पातमनुक्रम्येति लतानां पतनमनतिक्रम्येति वा अव्ययानामनेकार्थत्वादनुशब्दोऽनतिक्रमेऽपि। नद्यवस्कन्दं उपास्पृशत् स्नातवान् नद्यामवस्कन्दोऽवगाहो यत्र स्नान

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



क्रियायां नदीयमिति बोधो यन्नेति वा उपस्पर्शः स्पर्शमात्रे स्नाना चमनयोरपीतिविश्वः। कुतूहलादिति सर्व्वत्र योज्यं चारुशिलोपवे शमास्त चारुशिलायामुपवेशोवसनं यद्वासनक्रियायां चारुशि लानां रत्नशिलानामुपगता वेशा यस्मादिति वा। एतेन राम स्थित्या रत्नशिलानां सौन्दर्य्यं सूचितं ईषत् स्मयमान ईषद्धस मानः। यद्यपि स्मिङधातोरीषद्धसनमेवार्थस्तथापि ईषत् श ब्देन अत्यन्तानुपलभ्यहास्यत्वेन गाम्भीर्य्यं सूचितं। पातादयो घ ङन्ताः लतानुपातमादयो णमन्ता इति पाणिनीयाः। तन्मते लतां लतामनुपात्य नदीं नदीमवस्कन्द्य गत्वा चारुशिलायां उ पविश्येत्यर्थः। स्वमते चणम् समूलघातमित्यत्र व्याख्यातः अगृह्णा दित्यादिषु घो वृषरूपस्य इन्द्रस्य ककुदि स्थितत्वात् ककुत्स्थ इत्या कुः पृषोदरादित्वाद्दकारलोप इति रायमुकुटादयः। स्वमते मनीषादित्वादिति यथा देवीदासचक्रवर्त्ती कदाचिद्वानरे श्वर इव सुग्रीवो वैदेहीतिब्रुवाणस्यालघुकाकुत्स्थस्यार्थिनः प्रार्थना क्रियतां सफलेति वानरपुङ्गवानादिशदिति नलचम्पूश्लेषः तेन निस्तकारकाकुत्स्थशब्द इति बोध्यं प्राधान्ये राजलिङ्गे च वृषाङ्के ककुदोऽस्त्रियामित्यमरः केचित्तु निपातनात् ककुदशब्दस्यातो लुकि ककुत्स्थशब्दस्तकारवान् इत्याहुः। तैस्तु निपातनात् ककुदस्यातो लुगिति वृथोक्तं दान्तककुद्शब्दस्य विद्यमानत्वात्। तथाहि ककुदोऽस्त्री ककुच्च स्त्री वृषाङ्के राजलक्षणीति भूरिप्रयो गः ककुद्वंशे इत्यागमस्य निस्तकार एव ककुस्थ शब्दइति कश्चित् तन्न तकारवतोऽपि प्रयोगस्य दृश्यमानत्वात्। तथाच राघवपा

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ख्डवीये। सार्द्धं द्विजैः संवृतधाम्नि जिष्णावुपेयुषि ख्यातककुत्स्थवंश्य इति हनजनादितितिष्ठतेर्डः ततोऽपत्येष्णः ॥११॥

तिग्मांशुरश्मिच्छुरितान्यदूरात्प्राञ्चि प्रभाते सलिलान्यपश्यत्। गभस्तिधाराभिरिव द्रुतानि तेजांसि भानोर्भुवि संभृतानि ॥१२॥

ज०म० तिग्मांशु ॥ अदूरात्समीपे सलिलान्यपश्यत्। दृशेर्लङि पाघ्रेति पश्यादेशः तिग्मांशोरादित्यस्य रश्मिभिः छुरितानि रञ्जितानि तुक्। प्राञ्चि पूर्व्वस्यां दिशि अवस्थितानि। प्रपूर्व्वादञ्चतेर्त्त्विगित्यादिना क्विप् अनुषङ्गलोपः शिः नपुंसकस्य नुम्। भानोरिव तेजांसि भुवि सम्भृतानि पिण्डीकृतानि। गभस्तिभिः रश्मिभिः धाराभिरिव द्रुतानि गलितानि धारा प्रपात इतिभिदादिपाठादद्रष्टव्यं॥ १२ ॥

भ० तिग्मांश्वित्यादि। रामोऽदूरात् समीपे सलिलानि अपश्यत् स्थादानपेतिदृशः पश्यादेशः किम्भूतानि प्रभाते तिग्मांशोः सूर्य्यस्य रश्मिभिश्छुरितानि प्राञ्चि पूर्व्वदिगवस्थितानि। अत्रोत्प्रेक्ष्यते भानोस्तेजांसि गभस्तीनां रश्मीनां धाराभिर्द्रुतानि द्रवीभूतानि सन्ति भुवि सम्भृतानि धाराभिरितिधृञ्स्तुलेक्षेत्यादौ निपातः ॥१२॥

दिग्व्यापिनीर्लोचनलोभनीया मृजान्वयाः स्नेहमिव स्रवन्तीः। ऋज्वायताः शस्यविशेषपंक्तीस्तुतोष पश्यन् वितृणान्तरालाः ॥१३॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



दिग्व्यापि। शस्यविशेषाणां शाल्यादीनां पङ्क्तीः पश्यंस्तुतोष तुष्टवान्। दिग्व्यापिनीः सर्व्वदिग्व्यापनशीलाः लोभयन्तीति लोभनीयाः बहुलवचनात्कर्त्तर्य्यनीयर्। लोचनानां लोभनीया इति षष्ठीसमासः। मार्जनम्मृजा शुद्धिः षिद्भिदादिभ्योऽङ् तदा अन्वयो अनुगमो यासाम् शुद्ध्यनुगता इत्यर्थः। ततः स्नेहमिव स्रवन्तीः ऋजवश्च ता आयताश्च वितृणान्तरालाः उत्पाटितानि तृणानि अन्तराले मध्यभागे यासान्ताः॥ १२॥ ज॰म॰

दिग्व्यापिनीरित्यादि। स रामः शस्यविशेषाणां धान्यादीनां पङ्क्तीः पश्यंस्तुतोष। किम्भूताः दिशं व्याप्नुवन्तीति ग्रहादित्वात् णिन् शीलार्थे णिनित्यन्ये। लोचनानां लोभनीया आकांक्षणीयाः तव्यानीयरा इत्यनीयः। यद्वा लोचनानां लोभनीयं लोभो दर्शनेच्छारूपो यत्र पूर्व्वेण भावेऽनीयः लोचनानि लोभयन्तीति कर्त्तर्य्यनीय इति केचित् स्वमतेऽपि नियोक्तुमर्हतीति नियोग्यः प्रभुरिति वाक्यात् क्वचित् कर्त्तर्य्यपि तव्यादयः स्युरिति सूचितं। मृजूष लशुद्धौ षित्त्वात् भीषिचिन्तीत्यादिना ङः स्त्रियामाप् अनुयन्तीति अन्वयाः पचादित्वादन् मृजाया अन्वयाः शुद्ध्यनुगता इत्यर्थः मृजाया अन्वयः सम्बन्धो यत्र इति वा स्नेहं स्निग्धतां अनुरागं वा स्रवन्तीरिव अतिस्निग्धत्वादुत्प्रेक्षा ऋजवः शरलाश्च ता आयता दीर्घाश्चेति उत्पाटिततृणत्वात्तृणरहितं अन्तरालं अभ्यन्तरं यासां॥ १२॥ भ॰



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



वियोगदुःखानुभवानभिज्ञैः काले नृपांशं विहितं ददद्भिः। आहार्य्यशोभारहितैरमायैरैक्षिष्ट पुंभिः प्रचितान्स गोष्ठान्॥१४॥

ज॰म॰ वियोग॥ पुम्भिः गोपैः प्रचितान् व्याप्तान् गोष्ठान् गावस्तिष्ठन्ति येष्विति सुपिस्थ इति कः अम्बाम्बेत्यादिना मूर्द्धन्यः तान्स राम ऐक्षिष्ट दृष्टवान् अनुदात्तेत्त्वात्तङ् इट् वियोगदुःखस्य योऽनु भवः अनुभवनम् तस्यानभिज्ञैः तेषां पुत्रदारैः सहैव सर्व्वत्र गमनात्। एतावता कालेन एतावद्देयमिति विहितं कृतम् दधातेर्हिः नृपांशङ्करं ददद्भिः आहार्य्या कटकादिभिः आह रणीया वा शोभा दीप्तिः तया रहितैः अमायैः ऋजुभिः आ हार्य्येति ऋहलोर्ण्यत् शोभयतीति शोभा पचाद्यच्। ण्यासश्र न्थोयुजिति युच् न भवति तस्य स्त्रीलिङ्गे भावे अकर्त्तरि च कार के विधानात्। नन्द्यादिपाठात् ल्युर्न भवति तस्य वासरूपोऽस्त्रिया मिति विकल्पितत्वात् अथवा शोभनं शोभा स्त्रीलिङ्गे भावे घञ्। कृत्यल्युटो बहुलमिति बहुलवचनादन्ये ऽपि कृतः प्राप्तमपि स्वाभिधेयं व्यभिचरन्ति॥१४॥

भ॰ वियोग इत्यादि। स रामो गोष्ठान् गोस्थानानि ऐक्षिष्ट दृष्टवान् ईक्षङ्दर्शने। किम्भूतान् पुंभिः पुरुषैः प्रचितान् व्याप्तान् किम्भूतैः अवासित्वात् वियोगेन स्त्रीपुत्रादिविच्छेदेन यो दुखानुभवस्तत्रा नभिज्ञैः एतावति काले एतावद्देयमिति विहितं नृपस्यांशं करं ददद्भिः। आहार्य्या लङ्कारादिभिराहरणीया कृत्रिमा या शो भा तया हीनैः आहार्य्येति ऋहल्योर्ण्यदिति घ्यण् शुभेर्घञन्तस्य

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



स्त्रीलिङ्गत्वं क्वचिदभिधानात् नास्ति माया येषां गवावादेरिति ख:। गोष्ठशब्दोऽपि पुंलिङ्गोऽस्तीति प्राञ्चः गावस्तिष्ठन्ति यत्रेत्याद न्ताद्धनजनादिति डः क्वद्धोरित्युक्तेर्गोभूमिद्विचीत्यादिना रामानन्दसूत्रेण षत्वं मनीषादित्वाद्वा गोष्ठान् गोष्ठसहितान् प्रदेशानिति केचित् ॥१४॥

स्त्रीभूषणं चेष्टितमप्रगल्भं चारूण्यवक्राण्यपि वीक्षितानि। ऋजूंश्च विश्वासकृतः स्वभावान् गोपाङ्गनानां मुमुदे विलोक्य ॥१५॥

स्त्रीभूषणं॥ गोपाङ्गनानां चेष्टितम् गमनागमनादि अप्रगल्भं लज्जावत् तच्च स्त्रीविभूषणं स्त्रीणामलङ्कारस्तथा वीक्षितानि विलोकितानि अवक्राण्यपि कटाक्षादिरहितान्यपि चारूणि शोभनानि स्वभावान् स्वाभिप्रायान् ऋजून् अकुटिलान् विश्वासकृतो विश्वासस्य जनकान् विलोक्य मुमुदे हृष्टवान् स रामः लिटोऽपित्वात्कित्त्वे गुणाभावः। कार्य्याणां दर्शनात् स्वभावानां दर्शनमित्युक्तम्॥१५॥ ज०म०

स्त्रीभूषणमित्यादि। रामो गोपस्त्रीणामेतानि विलोक्य दृष्ट्वा मुमुदे ऽमुदऽहर्षे तानि कानीत्याह स्त्रीभूषणं मेखलाकङ्कणादिकं चेष्टितं गमनादिकं स्त्रीणां भूषणमिव यतोऽप्रगल्भं सलज्जं तथा अवक्राणि कटाक्षादिरहितान्यपि चारूणि वीक्षितानि विलोकितानि तथा विश्वासजनकान् ऋजून् कपटरहितान् स्वभावान् तत्कार्य्यविलोकनादेव तद्विलोकनव्यपदेशः गोपाङ्गनानां भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



विलासवत्त्वाभावेऽपि स्वभावसिद्धचरितान्येव हर्षजनकानि भवन्ति। तथाहि विलासा नागरस्त्रीणां न तथा रमयन्ति नः। यथा स्वभावसिद्धानि वृत्तानि वनयोषितामिति कौमुदी। अन्येनाप्युक्तं सर्व्वः प्रियः खलु भवेदनुरूपचेष्ट इति॥१५॥

विवृत्तपार्श्वं रुचिराङ्गहारं समुद्वहच्चारुनितम्बरम्यम्। आमन्द्रमन्थध्वनिदत्ततालं गोपाङ्गनानृत्यमनन्दयत्तं॥१६॥

ज॰म॰ विवृत्तेति। गोपाङ्गनानान्दधिमन्थनाय यत् स्थानं कृतन्तत्। नृत्यमिवेति गोपाङ्गनानृत्यं कर्तृ तं रामं अनन्दयत् सन्तोषितवत् नन्देर्ण्यन्तस्य लङि रूपम् विवृत्ते तिर्य्यक्चलिते पार्श्वे यत्र नृत्ये। रुचिरः शोभनो ऽङ्गहारो अङ्गविक्षेपो यत्र समुद्वहता तिर्य्यक् समुद्धता चारुनितम्बेन कटिभागेन रम्यम् मनोहरम्। आमन्द्र ईषद्गम्भीरो यो मन्थकृतो ध्वनिः तेन दत्तस्तालो यत्र॥१६॥

भ॰ विवृत्तपार्श्वमित्यादि। दधिविलोडनावसरे गोपाङ्गनानां गात्रविक्षेपो नृत्यत्वेन वर्ण्यते गोपस्त्रीणां नृत्यमिव नृत्यं कर्तृ तं राममनन्दयत् अतोषयत्। कीदृशं विवृत्तं तिर्य्यक् चलितं पार्श्वं यत्र रुचिरो मनोहरो ऽङ्गहारो ऽङ्गविक्षेपो यत्र। समुद्वहता तिर्य्यगूर्द्ध्वमधश्चलता चारुणा नितम्बेन रम्यं आमन्द्रेण ईषद्गम्भीरेण दधिमन्थनदण्डध्वनिना दत्तस्तालो यत्र एतेन नृत्यसादृश्यं व्यज्यते॥१६॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



विचित्रमुच्चैः प्लवमानमारात्कुतूहलं त्रस्नु ततान तस्य। मेघात्ययोपात्तवनोपशोभं कदम्बकं वातमजं मृगाणां॥ १७॥

विचित्रम्। मृगाणां कदम्बकम्वृन्दन्तस्य रामस्य कौतूहलन्ततान विस्तृतवत् विचित्रम् कृष्णश्वेतत्वात् उच्चैः प्लवमानम् ऊर्ध्वं जिहानम् आरात्समीपे त्रस्नु त्रसनशीलम् त्रसि गृधीत्यादिना क्नुः। मेघात्ययेन मेघापगमेन उपात्तवनोपशोभम् उपात्तं गृहीतम्वनम् उपशोभा च येनेति व्यधिकरण बहुव्रीहिः वातमजति वातमजम्वाताभिमुखङ्गच्छतीत्यर्थः वातशुनीति लशर्धेष्विति खश्। अरुर्द्विषदिति मुम्॥ १७॥ ज०म०

विचित्रमित्यादि। मृगाणां कदम्बकं समूहस्तस्य रामस्य कुतूहलं ततान विस्तारितवत् कीदृशं विचित्रं नानावर्णं उच्चैः प्लवमानं प्लुङ सर्पणे विचित्रं यथा स्यात्तथा उच्चैः प्लवमानं वा आरात् समीपे त्रस्यतीति त्रस्नुक्षिपत्रसेति कर्त्तरि क्नुः। शीलार्थे क्नुरित्यन्ये मेघात्ययेन शरत्कालेन मेघापगमेन वा प्राप्तं वनं उपशोभा च येन प्राप्तेन वनेन उपशोभते इति वा वातमजं वायोरनुगामि अभिमुखधायि वा तृभृवृट्जीत्यादिना खः परन्तपवत्॥ १७॥ भ०

सितारविन्दप्रचयेषु लीनाः संसक्तफेणेषु च सैकतेषु। कुन्दावदाताः कलहंसमालाः प्रतीयिरे श्रोत्रसुखैर्निनादैः॥ १८॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज॰म॰ सितेति। सिताऽरविन्दानाम्प्रचयेषु समूहेषु एरच् सञ्चे चानौत्तराधर्य्ये इति घञ् कौ न भवतः प्राणिषु सङ्घशब्दस्य रूढत्वात् लीनाः कलहंसमालाः तथा संसक्तफेणेषु च सैकतेषु पुलिनेषु लीनाः सिकता येषु विद्यन्त इति देशे लुविलचौ चेति चकारादण् कुन्दावदाताः कुन्दमिवावदाताः शुक्लाः उपमानानीत्यादिना समासः। प्रतीयिरे ज्ञाताः तेन रामेणेति विभक्तिविपरिणामेण सम्बन्धः। कर्म्मणि लिट् इणो यण् द्विर्व्वचनेऽचीति स्थानिवद्भावाद् द्विर्व्वचनम्। श्रोत्रसुखैर्मधुरैर्निनादैः करणभूतैः नौगदेत्यादिना घञ्। शरद्वर्णनमुपसंहरन्नाह॥१८॥

म॰ सितारविन्देत्यादि। अर्थाद्रामेण कर्त्रा श्रवणसुखकारिभिर्निनादैः कलहंसमालाः प्रतीयिरे ज्ञाताः कर्म्मणि ठी यिणोऽच्यपाविति इणो यादेशः निनादश्रुतिव्यतिरेकेणाप्रत्यये हेतुगर्भविशेषणमाह शुक्लपद्मसमूहेषु फेणयुक्तेषु सैकतेषु च लीना गुप्ताः कुन्दपुष्पवत् शुक्लाः सिकताशब्दात् विकारसंघेत्यादिना इदमर्थे विकारार्थे अस्त्यर्थे वा ष्णः सैकतं वालुकामयस्थानमुच्यते कादम्बे कलहंसः स्याद्राजहंसे च दृश्यते॥१८॥

न तज्जलं यन्न सुचारुपङ्कजं न पङ्कजं तद्यदलीनषट्पदं। न षट्पदोऽसौ न जुगुञ्ज यः कलं न गुञ्जितं तन्न जहार यन्मनः॥१९॥

ज॰म॰ नतज्जलमित्यादि। किम्बहुनोक्तेन सर्व्वथा न तज्जलं यत् सुचारुपङ्कजन्न वभूव पङ्कजमपि यदलीनषट्पदन्तदपि न। असौ षट्पदोऽपि तथाविधो नाभूत्। यः कलमधुरन्न जुगुञ्ज न गुञ्जित

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



वान्। गुजि अव्यक्ते शब्दे इदितोनुम् धातोरिति नुमि लिटि रूपं। गुञ्जितमपि तत् नैवासीत् यन्मनो न जहार न हृतवत् रामस्य लोकस्य वा॥१९॥

न तदित्यादि। शरदि तज्जलं नास्ति यत्र न सुचारूणि पङ्कजानि सन्ति तत् पङ्कजमपि नास्ति यत्र षट्पदा न लीना: अनाश्लिष्टा लीङ्यश्लेषि सृत्यारोरिति क्तस्य नत्वं। असौ षट्पदोऽपि नास्ति यः कलं मधुरास्फुटं न जुगुञ्ज गुजिकूजने तद्गुञ्जितमपि नास्ति यन्मनो न जहार॥१९॥ भ०

तं यायजूकाः सह भिक्षुमुख्यैस्तपःकृशाः शान्त्युदकुंभहस्ताः। यायावराः पुष्पफलेन चान्ये प्रानर्चुरर्च्या जगदर्चनीयं॥२०॥

तं या। यायजूका: अत्यर्थं यजनशीलाः यजजपदशां यङ इत्यूकः अतोलोपः यस्यहल: ते तपोवनस्थितास्तं राममागच्छन्तमानर्चुः सुष्ठु पूजितवन्तः अर्चेर्लिटि द्विर्वचनम् अतआदेरिति दीर्घत्वम्। तस्मान्नुड्द्विहल इति नुट् सह भिक्षुमुख्यैः भिक्षणशीला भिक्षवः परिव्राजकाः सनाशंसभिक्ष उः तेषां ये प्रधानाः तैः सह तपःकृशाः तपसा दुर्बलाः शान्त्यर्थमुदकन्तेन पूर्णः कुम्भः एकहलादावित्यादिना उदकस्य उदभावः स हस्ते येषामिति वज्रीहि: परनिपातश्चात्र वाहिताग्न्यादिदर्शनात् प्रहरणार्थेभ्यश्च इतिवा। शान्त्युदकुम्भस्त्वहितनिवारणसाधर्म्यात् उपचारेण प्रहरणन्ते शिरःसूदकदानेन प्रानर्चुः। अन्ये मुनयो यायावरा एक ज०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



चानियतनिलयाः यातेर्य्यङन्तात् यश्चयङ इति वरच्। अतोलोपा दि पुष्पफलेन आनर्चुः पुष्पाणि च फलानि चेति जातिरप्राणि नामिति एकवद्भावः। अर्च्या अर्चनार्हाः अर्हेकृत्यः अर्चनीय मित्यत्रापि। जगताञ्जगद्भिर्वा अर्चनीयम् कृत्यानां कर्त्तरि वेति पचे षष्ठी। नतु कर्त्तृकर्म्मणोःकृतीति षष्ठी॥२०॥

भ० तमित्यादि। यायजूकाः पुनःपुनरतिशयेन वा यज्ञशीलाः भिक्षूणां परिव्राजकाणां मुख्यैः सह जगतामर्च्चनीयं तं रामं आन र्चुः अर्च्च पूजायां स्यान्तादाट्टदाद्यस्तोरिति खेरान् जागृयङन्ते ति जकः। सनभिक्षेति भिक्षेरुप्रत्ययः कीदृशाः तपोभिः कृशाः शा न्त्यर्थं यदुदकं तस्य कुम्भो हस्ते येषां एतेन शान्तिजलेनार्च्चा प्रती यते। उदकुम्भ इत्यत्र समासे उदकस्यासंयुक्तहलादौ पूर्व्वे इति उदादेशे विकल्पेनेति परे खमते उदशब्दोऽप्यस्ति। अन्ये मुनयः पुष्पफलेन आनर्चुः यायावराः सन्तो नानावनभ्रमणशीलाः याते र्यङन्तात् यायायभासकस्थेति वरः यङलुक गत्यर्थादक्के यङिति केचित् यातिरत्र ज्ञानार्थः सर्व्वे गत्यर्थाः प्राप्त्यर्था ज्ञानार्थाश्चेति न्यायादत्यर्थज्ञानशीला इत्यर्थः। अर्च्चाः स्तुत्यर्च्चाः ऋच्शनुत्यां तेर्व्वाः शक्यार्हर्थेष्वेति घ्यण् सेमकात् न चजोः कगाविति कत्वं ॥२०॥

विद्यामथैनं विजयां जयां च रक्षोगणं क्षिप्नुमविद्द तात्मा। अध्यापिपद्गाधिसुतो यथावन्निघातयिष्यन् युधि यातुधानान्॥२१॥

ज०म० विद्याम्। तपोवनमाप्तः गाधिसुतः एनं रामं द्वितीयाटा वित्येनादेशः। विद्यान्नाम्ना विजयाञ्जयाञ्च यथावत् यथाविधि

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अध्यापिपत् पाठितवान् णौचसंश्चङोरिति गाङभावपक्षे रूपम् अधिपूर्व्वादिङो हेतुमणिचि क्रीङ्जीनां णौ इत्यात्वम् पुगादिविधयः। रक्षोगणम् क्षिप्नुम्प्रेरयितारम् त्रसिगृधीत्यादिना क्नुः नलोकेति षष्ठीप्रतिषेधात् द्वितीयैव। अविक्षतात्मा रागादिभिरनभिभूतचित्तवृत्तिः। तस्य हि विद्या अमोघा भवति युधि संग्रामे यातुधानान् रक्षांसि निघातयिष्यन् मारयिष्यन्। हन्तेर्हेतुमन्णिच् घत्वं लृट् लृटः सदादेशः॥२१॥

विद्यामित्यादि। अथानन्तरं युधि संग्रामे यातुधानान् राक्षसान् रामद्वारा निघातयिष्यन् गाधिसुतो विश्वामित्र एनं रामं नाम्ना विजयां जयाञ्च विद्यां यथावत् यथाविधि अध्यापिपत् पाठयामास। किम्भूतं रक्षोगणं क्षिप्नुं क्षिप प्र ञौ नुदि क्षिपत्रसीति कर्त्तरि क्नुः शीलार्थे क्नुरित्यन्ये। ढषेक्तत्येति सूत्रे उदन्तक्तप्रत्ययवर्ज्जनात् न ढे षी। कीदृशः अविक्षतो बाणादिभिरनुपक्षत आत्मा यस्य। एनमिति इदमसमानार्थकस्य एनशब्दस्य रूपं द्वितीयौसीति सूत्रस्यानूक्तिविषयत्वात्। जहातु नैनं कथमर्थसिद्धिः संशय्य कर्णादिषु तिष्ठते य इति भारविः। अध्यापिपदिति अधीङ्ग्लध्ययने ञिः प्रेरणे इति ञिः क्रीजीङोऽजेत्वा ह्रीत्रीति पन् ञिश्रीत्यङ्नाजन्तादेरिति निषेधात् धुद्विष्यङीति पीत्यस्यैव द्वित्वं ञेर्लोपः निघातयिष्यन्निति पूर्व्ववत् ञिः हनस्तङिति तङ् खेर्होघ इति घः॥२१॥

आयोधने स्थायुकमस्त्रजातममोघमभ्यर्णमहाहवाय। ददौ वधाय क्षणदाचराणां तस्मै मुनिः श्रेयसि जागरूकः॥२२॥

झ

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज॰म॰ आयो। स मुनिः तस्मै रामायास्त्रजातम् अस्त्रसमूहन्ददौ दत्तवान्। ददातेर्लिट् णल् आत औ णलः आयुध्यन्ते अस्मिन्निति आयोधनम् संग्रामः अधिकरणे ल्युट् तत्र स्थायुकं स्थितिकरणशीलम् जयावहत्वात्। लषपतेत्यादिना उकञ् आतो युक् अत एवामोघम् अवन्ध्यम् अवृथामोचत्वात् अभ्यर्णो निकटो महाहवो यस्य तस्मै अभिपूर्व्वाददेः निष्ठायाम् अभेश्चाविदूर्य्ये इतीट् प्रतिषेधः रदाभ्यामिति नत्वम् अभ्यर्णः आहव इति आह्वयन्ते अस्मिन्युद्धायेति ह्वयतेराङ्पूर्वादाङि युद्धे इति सम्प्रसारणम् अप्प्रत्ययः गुणावादेशौ वधाय चणदाचराणामिति चणदा रात्रिः तत्र चरन्तीति चरेष्टः तत्र हि महाहवे रामो राचसान् हनिष्यतीति हनस्य वध इति वधादेशः कृत्प्रयोगे चणदाचराणामिति कर्म्मणि षष्ठी। श्रेयसि जागरूकः तत्कल्याणे सावधानः जागर्त्तेरूकः॥२२॥

भ॰ आयोधनइत्यादि। मुनिः चणदाचराणां राचसानां वधाय हिंसार्थं तस्मै रामाय अस्त्रजातं ददौ कीदृशं आयोधने युद्धे स्थायुकं स्थितिशीलं जयावहत्वात् शृस्थाभूकमिति उकः यनञिणदिति यन् अमोघं अव्यर्थं तस्मै कीदृशाय अभ्यर्णः समीपवर्त्ती महानाहवो युद्धं यस्य अभ्यर्णेति अभिपूर्व्वस्यार्द्दतेः क्तान्तरूपं चुब्धवाढेति निपातः। आह्वयन्ते योद्धारोऽस्मिन् इति आहवः अभिधानात्विः कीदृशो रामस्य साधूनां वा श्रेयसि कल्याणे जागरूकः सावधानः जागृयङन्तेति जागर्त्तेरूकः। आयुध्यन्तेऽस्मिन् योद्धार इत्यायोधनं आधारेऽनट्। हन्तेः कभावेऽमी इत्यनिक्ते हनवधष्टीव्यतीति वधादेशः समूहार्थस्य जातस्य चवर्गादित्वमीरितमिति विश्वः॥२२॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



तं विप्रदर्शं कृतघातयत्ना यान्तं वने रात्रिचरी डुढौके। जिघांसुवेदं धृतभासुरास्त्रस्तां ताडकाख्यां निजघान रामः॥ २३॥

तम्विप्र। विद्यामस्त्रजातञ्चादाय यज्ञकर्म्मणि विप्रोपशमनार्थ ज०म० म्वने यान्त रामम् रात्रिचरी राक्षसी ताडकाभिधाना डुढौके ढौकते स्म। ढौकतेरात्मनेपदिनो लिटि रूपम् ताञ्च रामो निज घान निहतवान् विप्रदर्शं कृतघातयत्ना विप्रान् ब्राह्मणान्दृष्ट्वा कृतमारणाभियोगा रात्रिचरी रामोऽपि जिघांसुवेदन्धृतभासु रास्त्रः जिघांसुं विदित्वा धृतभासुरं भासनशीलम् अस्त्रं येनेति बहुव्रीहिः विप्रदर्शञ्जिघांसुवेदमिति कर्म्मणि दृशिविदोः साकल्य इति णमुल्॥२३॥

तमित्यादि। वने यान्तं गच्छन्तं तं रामं रात्रिचरी डुढौके भ० प्राप्तवती ढौकृङ् गत्यां झभखशेति खेरोकारस्य ह्रस्व उकारः रात्रौ चरतीति पचादित्वादन् ततो नदादित्वादीप् कीदृशी विप्र दर्शं विप्रं दृष्ट्वा कृतो घाते यत्नो यया घात इति हन्तेर्घञन्तस्य रूपं यत्न इति स्वपरच्चेति यतेर्नङ् जिघांसुं विदित्वा धृतं भासुरं दीप्त मस्त्रं येन स रामः तां ताडकानाम्नीं रात्रिचरीं निजघान भासृङ् दीप्तौ भिक्षासभञ्ज इति घुरः विप्रदर्शं जिघांसुवेदमिति चणम्वा भीक्ष्ण इत्यत्र योगविभागाच्चणम् यद्वा विप्राणां दर्शो दर्शनं य स्मात् रामस्य विशेषणं एतेन रक्षोभिया पलायमानानां विप्राणां पूर्वं दर्शनं नासीत् रामागते तु विप्रदर्शनमिति व्यज्यते जिघांसुं वे त्तीति ढात् षण् पचादित्वादन् वा इदमपि रामस्य विशेषणं॥२३॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अथालुलोके हुतधूमकेतुशिखाञ्जनस्निग्धसमृद्धशाखं। तपोवनं प्राध्ययनाभिभूतसमुच्चरच्चारुपतत्त्रिशिञ्जं ॥ २४ ॥

ज॰म॰ अथ। अथासौ रामो राक्षसीं हत्वा तपोवनम् आलुलोके दृष्टवान्। कथम्भूतं हुतधूमकेतुशिखाञ्जनस्निग्धसमृद्धशाखम् हुतश्चासौ धूमकेतुरग्निश्च हुतधूमकेतुः तस्य शिखाञ्जनेन स्निग्धाः समृद्धाश्च फलादिना शाखा यस्य तपोवनस्य। प्राध्ययनेन वेदपाठेन अभिभूता तिरस्कृता समुच्चरन्ती चार्वी शोभना पतत्त्रिणाम्पक्षिणां शिञ्जा ध्वनिर्यत्र शिजि अव्यक्ते शब्दे शिञ्जनं शिञ्जा गुरोश्च हल इत्यकारप्रत्ययः। पतन्तं त्रायन्त इति पतत्राणि पक्षाः आतोऽनुपसर्गे कः तानि येषां सन्तीति पतत्त्रिणः। पतङ्गशिञ्जमिति पाठान्तरम्॥२४॥

भ॰ अथेत्यादि। ताडकावधानन्तरं रामस्तपोवनं आलुलोके लोकृङ्दर्शने कीदृशं हुतस्य धूमकेतोरग्नेः शिखाधो यदञ्जनं तेन स्निग्धा समृद्धा फलपुष्पवती शाखा यत्र तथा धूमकेतुः स्मृतो वह्नावुत्पातग्रहभेदयोरिति विश्वः। प्राध्ययनेन प्रकृष्टाध्ययनेन अभिभूता समुच्चरन्ती उद्गच्छन्ती चारूणां पतत्त्रिणां पक्षिणां शिञ्जा अस्फुटशब्दो यत्र शिजि ल किङ्स्फुटध्वनौ सेमतात् सरोरितिङः स्त्रीत्वञ्च अमरकोषे तु भूषणानान्तु शिञ्जितमित्युपलक्षणं ॥२४॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



क्षुद्रान्न जक्षुर्हरिणान्मृगेन्द्रा विशश्वसे पक्षिगणैस्स मन्तात्। नंनम्यमानाः फलदित्सयेव चकाशिरे तत्र लता विलोलाः॥ २५॥

क्षुद्रान्। तत्र तस्मिंस्तपोवने तपोधनानाम्मित्रभावात्। क्षुद्रानि तरानपि हरिणान्मृगेन्द्राः सिंहाः न जक्षुः न बाधितवन्तः क्षुद्य न्त इति क्षुद्राः स्फायितञ्चीत्यादिना औणादिको रक् लिख्यन्यत रस्यामिति अदेर्घस्ॢ गमहनेत्युपधालोपः खरिचेति चर्त्वम् शा सिवसीत्यादिना षत्वम् पक्षिगणैः समन्तात्सर्व्वत्र विहङ्गैरपि काको लूकादिभिः परस्परम्विशश्वसे विश्वस्तम् भावे लिट् लतास्त्र विलो लाश्चपलाश्चकाशिरे शोभन्ते स्म फलदित्सयेव मुनिभ्यः फलन्दा तुमिच्छयेव नंनम्यमानाः अत्यर्थन्नमन्त्यः दातुमिच्छा दित्सा ददातेः सन् सनिमीमेत्यादिना इस् अत्र लोपो ऽभ्यासस्येति अ भ्यासलोपश्च। सस्येत्यादिना सकारस्य तकारः अप्रत्ययादि त्यकारप्रत्ययः। फलानां दित्सेति कर्म्मणि षष्ठीं विधाय कृद्यो गे समासः। नंनम्यमाना इति नमेर्यङि नुगतो ऽनुनासिकेति नुक् यङन्ताच्छानच् आने मुक्॥२५॥ ज०म०

क्षुद्रानित्यादि। तत्र तपोवने मृगेन्द्राः सिंहाः क्षुद्रान् हरिणान् न जक्षुः अद् लौ भक्षे व्यांवेति घसादेशः हनगमित्युङ्लोपः। झपझसोरिति घस्य कः क्षिलादिति षः पक्षिगणैः समन्तात्सर्व्वतो विशश्वसे तपःप्रभावात्। नित्यविरोधस्याप्यभावाद्भावे ठी विलो लाश्चञ्चला लताश्चकाशिरे काशृङ्द्युतौ फलानि दित्सयेव नंन म्यमाना अतिशयेन नताः नमेर्यङन्तस्य जपजभेति खेर्नुन् भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



फलभारनतानामुत्प्रेचेयं। दातुमिच्छा दित्सा दाञः सनि मि मीमादेतीम् खिलोपस्य सत्वरे इति तः संस्वादः स्त्रियामाप् ॥२५॥

अपूपुजन्विष्टरपाद्यमाल्यैरातिथ्यनिष्णा वनवासिमुख्याः। प्रत्यग्रहीष्टां मधुपर्कमिश्रं तावासनादि क्षितिपालपुत्रौ ॥ २६ ॥

ज॰म॰ अपू। वनवासिमुख्याः महर्षयो विष्टरादिभिः अपूपुजन् पूजितवन्तः तौ क्षितिपालपुत्रावित्यर्थात् द्वितीयान्तेन योज्यम् वनवासीति शयवासेत्यादिना विकल्पेन सप्तम्या अलुक् पूजेः स्वार्थिकण्यन्तस्य णौ चङि ह्रस्वः। दीर्घो लघोरिति अभ्यासस्य दीर्घः विष्टरमासनम् वृक्षासनयोर्विष्टर इति निपातनात्। पाद्यं पादार्थमुदकम् पादार्घाभ्यामिति यत्तदर्थत्वात्यद्भावाभावः माल्यानि कुसुमानि मालायां साधूनि तत्र साधुरिति यत्। आतिथ्यनिष्णाः अतिथ्यर्थम् आतिथ्यम् अतिथेर्न्यः तत्र निष्णाः कुशला निनदीभ्यां स्नातेः कौशल इति षत्वम् तौ च क्षितिपालपुत्रौ रामलक्ष्मणौ तदासनादि प्रत्यग्रहीष्टाम्प्रतिगृहीतवन्तौ प्रतिपूर्व्वात् ग्रहेर्लुङ् तस्य ताम् ग्रहोऽलिटि इति दीर्घः षत्वष्टुत्वे मधुपर्कमिश्रम् मधुपर्केण सहेत्यर्थः ॥ २६॥

भ॰ अपूपुजन्नित्यादि। वनवासिनां मुनीनां मुख्या विष्टरपाद्यमाल्यैरपूपुजन् अर्थात् रामलक्ष्मणौ पूजकपूजेटी णिश्रीत्यङ् ण्यन्तगुडः स इति स्वः खेः सन्वदित्यादिना खेर्घः विष्टर आसनं वेत्रो ना

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ल्लीति रामानन्दसूत्रेण मनीषादित्वात् वा षत्वं। वृचासनयोर्विष्टर इति क्रमदीश्वरः। आसने कुशमुष्टौ च विष्टर इति विश्वः विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनमित्यमरः पादार्थं जलं पाद्यं विकारसंघेति ष्णः पाद्यं पादाय वारिणीत्यमरः मालैव माल्यं स्वार्थे ष्णः मालायां साधूनि माल्यानि कुसुमानि वा किम्भूताः आतिथ्यनिष्णाः अतिथ्यर्थं आतिथ्यं अतिथिशब्दात् तादर्थ्ये ष्णः स्वार्थे ष्ण इति केचित् क्रमादातिथ्यातिथेये ह्यतिथ्यर्थे ऽत्र साधुनीत्यमरः। वस्तुतस्तु आतिथ्यशब्देन अतिथिसेवनमुच्यते तत्र निष्णाः कुशला नदीस्नातिनिस्नात्योर्दाचे इति रामानन्दसूत्रेण मनीषादित्वाद्वा षत्वं। निनदीभ्यांस्नःकौशले इति षत्वविधायकं क्रमदीश्वरसूत्रं। चितिपालस्य पुत्रौ रामलक्ष्मणौ मधुपर्केण सहितं आसनादि प्रत्यग्रहीष्टां ग्यां सिः ग्रहेरिमोर्घोऽयामिति र्घः क्तिलादिति षः ष्टुभिरिति तस्य टः॥ २६॥

दैत्याभिभूतस्य युवामवोढं मग्नस्य दोर्भिर्भुवनस्य भारं। हवींषि संप्रत्यपि रक्षतं तौ तपोधनैरित्यमभाषिषातां॥ २७॥

दैत्या। दितेरपत्यानि दैत्याः दित्यदित्यादित्येत्यादिना ण्यः जःमः तैरभिभूतस्य मग्नस्य शरण्यस्य भुवनस्य भारमितिकर्त्तव्यतालक्षणन्दोर्भिर्भुजैः युवामवोढम् ऊढवन्तौ नरनारायणौ युवामित्युतौ लक्ष लक्षेति एकशेषः अवोढमिति वहेर्लुङ् थसस्तम् हलन्त

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



लक्षणा वृद्धिः सिजलोपः सहिवहोरित्योत्वं ढलष्टत्वढलोपः हो रिति दमेर्डोसित्यौणादिको डोस्। हवींषि होतव्यानि सम्रत्यपि रक्षतम् अर्चिरुचिऊहृपिछादिछदिभ्य इसिरित्यौणादिक इसिः। राक्षसैः उपहन्यमानानि रक्षतं प्रार्थनायां लोट्। अप्ययसस्तम् इत्यमिति इदमस्थमुः अनेनोक्तप्रकारेण तपोधनैस्तप एव धनं येषामिति अभाषिषाताम् अभिहितौ भाषतेः कर्म्मणि लुङ् सिजिटौ॥२७॥

भ० दैत्येत्यादि। तप एव धनं येषां तैस्तपोधनैस्तपस्विभिस्तौ रामलक्ष्मणौ इत्थमभाषिषातां भाषृङ्वाचीति कर्म्मणि टौ इदं प्रकारं इत्थं निपातनात् किं तदित्याह युवां भुवनस्य भारं परिरक्षणं दोर्भिर्भुजैः अवोढं वहेण्यास्तं झसस्थादिति सेर्लुक् हो ढोभाविति हस्य ढः ढभात्तथोरिति तस्य धः ष्टुभिरित्यादिना धस्य ढः सहवहोऽदोढि इत्योत्वं ढ्रोढ्रीति ढस्य लोपः कीदृशस्य दैत्याभिभूतस्य अतएव मग्नस्य नष्टप्रायस्य दितेरपत्यानि दैत्याः वाक्काद्यत इत्यादिना गर्गादित्वात् ष्णः मस्जेरोदित्वात् स्त्वाद्योरित्यादिना क्तस्य नः स्थादेः सलोप इत्यनेन सलोपः। चजोःकगाविति सूत्रे अनिम् यन्नाङ्गयज इति कृते ये अनिम्धातवस्तेषां चजोः कगौ स्यातां इति सर्व्वं सङ्गतं भवति तथापि यतोऽसेम इति कृतं चजोर्घिति क्ते च परे चजोःकगौ भवत इतिसूचनार्थं तेन मग्नरुग्नभुग्नादयः सिध्यन्ति भ्रस्जेः कङ्चेति कङ्विधानं भ्रक्काजेतिं षङ्विधाननिरासार्थं तेन मृजस्तु मृष्ट इत्यत्र षङ्विशेषविधित्वादिति देवीदासचक्रवर्त्तिना व्याख्यातं तेनैव सूत्रेण जस्य गः मनीषादित्वाद्वा सम्रत्यपि हवींषि होतव्यानि राक्षसेभ्यो रक्षतं विधिनिमन्त्रणेति प्रार्थनायां णीः ऊलिहोमेदने चासुसिति इस्॥२७॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



तान् प्रत्यवादीदथ राघवोऽपि यथेप्सितं प्रस्तुत कर्म्म धर्म्यम्। तपोमरुद्भिर्भवतां शराग्निः संधुक्ष्यतां नोऽरिसमिन्धनेषु ॥ २८॥

तान् प्र॥ अथैतस्मिन् प्रस्तावे राघवोऽपि रघुसुतः तान्मुनीन्प्र त्यवादीत् वदव्रजेति वृद्धिः यथेप्सितं यथाभिमतं आप्नोतेः आप् ज्ञपधामीदितीत्वम् अभ्यासलोपस्य सनन्तात्कर्म्मणि निष्ठा। धर्म्मा दनपेतन्धर्म्यं यागादि कर्म्म प्रस्तुत प्रारभध्वम् प्रपूर्व्वस्तौतिः प्रा रम्भे वर्त्तते तस्मान्निमन्त्रणे नियोगकरणे लोट् थस्य तः शपो लुक् तपांसि मरुत इव तपोमरुद्भिः भवतान्तपोमरुद्भिः नोऽस्माकं बहुवचनस्य वस्नसाविति नसादेशः शराग्निः शरोऽग्निरिव संधु क्ष्यतां दीप्यताम् धुक्षधिक्षसन्दीपनक्लेदनजीवनेषु तस्मात्कर्म्मणि लोट् अरिसमिन्धनेषु अरिकाष्ठेषु समिध्यते एभिरिति समिन्धना नि करणे ल्युट् अरयः समिन्धनानीव॥ २८॥ जं०म०

तानित्यादि॥ अथ तद्वचनानन्तरं रघोरपत्यं रामोऽपि तान् प्रत्यवादीत् प्रत्युक्तवान् वदेर्लुङ् सौ व्रजवदेति वृद्धिः यूयं यथेप्सितं धर्म्मादनपेतं कर्म्म प्रस्तुत आरभध्वं विधिनिमन्त्रणेति विधौ लो लु गम्लोऽप इत्यदादित्वात् शपो लुक् आप्लृ व्याप्तौ क्रिव्यापने सनि ज्ञपद्धा पामीर्थ इतीत्खिलोपौ भवतां तपोवायुभिर्नोऽस्माकं शराग्निः अरिसमिन्धनेषु शत्रुकाष्ठेषु संधुक्ष्यतां धुक्षङ्सन्दीपने समर्थना ग्निपोर्गीति आशिषि कर्म्मणि लो तपांसि मरुत इव शरोऽग्निरिव भ०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अरय: समिन्धनानीव इति व्याघ्रादिभिरसमुपमानैस्तुल्यस्येति समास इति क्रमदीश्वरादय: समते इवादेर्द्योतकत्वात् एकार्थताऽस्त्येव अविशेषणस्यास्मदो बहुत्वमेकत्वद्वित्वयोर्विकल्पेनेति पाणिन्यादय: समते कद्रव्यान्येकद्विबहुष्वेकश्च इतिसूत्रे एकद्विबहुत्वं विवक्षया साक्षात्सम्बन्धेन परम्परासम्बन्धेन वेतिव्याख्यानादत्रात्मगुणानां बहुत्वेनैव बहुजनसाध्यकार्य्यकारित्वात् द्वित्वे बहुत्वं॥२८॥

प्रतुष्टुवु: कर्म्म तत: प्रक्लृप्तैस्ते यज्ञियैर्द्रव्यगणैर्यथावत्। दक्षिण्यदिष्टं कृतमार्त्विजीनैस्तद्यातुधानैश्चिचिते प्रसर्पत्॥२९॥

ज°म° प्रतुष्टुवु:॥ ततो रामवचनादनन्तरन्तपोधना: कर्म्म याग क्रियाम्प्रतुष्टुवु: यथावत् यथाविधि आरब्धवन्त: यज्ञियै: यज्ञ कर्म्मार्है: द्रव्यगणै: प्रक्लृप्तै: मिलितै: कृपो रो ल: दक्षिणामर्हन्तीति दक्षिण्या: महामुनय: कडङ्करदक्षिणाच्छचेति चकाराद्यत् तै र्दिष्टमुक्तम् कृतमार्त्विजीनै: ऋत्विक्कर्म्मार्हैरनुष्ठितम् ऋत्विजश्च ब्रह्मादय: षोडश पठिता: तच्च कर्म्म प्रसर्पत् वृद्धिङ्गच्छत् यातुधानै राक्षसै: चिचिते ज्ञातम् चिती संज्ञाने इत्यस्मात् कर्म्मणि लिट्। यज्ञियैरार्त्विजीनैरिति यज्ञर्त्विग्भ्यां घखञाविति तत्कर्म्मार्हतीति॥२९॥

भ° प्रतुष्टुवुरित्यादि। ततो रामवचनानन्तरं ते मुनयो द्रव्यगणै: स्रुवादिभि: करणभूतैर्यथाविधि यागकर्म्म प्रतुष्टुवु: आरब्धवन्त:।

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



किम्भूतैः प्रकृतैर्विरचितैः छप:कृपोऽक्षपादादिति कृपादेशः यज्ञियैः यज्ञैः स्वपरदक्षयतेति नङ् जिनिषेधस्य यज्ञाय साधवो यज्ञिया ढघेकादिति इयः तत्कर्म्म यातुधानैराक्षसैश्चिचिते ज्ञातं चिती संज्ञाने कर्म्मणि ठी। कीदृशं दक्षिणदिष्टं दक्षिणामर्हन्ति ढघेकादिति ष्णः तस्यानित्त्वविवक्षया न त्रिः दक्षिणा ब्रह्मलेनारोपिता मुनयः तैर्दिष्टं आर्त्त्विजीनैः ऋत्विक्कर्म्मार्हैः कृतं। ऋतौ यजतीति क्विप् यहस्वपेति जिः ऋत्विजः कर्म्म आर्त्विजं कर्म्मार्थे विकारसंघेत्यादिना ष्णः तदर्हतीति ढघेकादित्यादिना णीनः ऋत्विक् शब्दात् स्वार्थे णीनो वा प्रसर्पद्वृद्धिं गच्छत्॥२९॥

आपिङ्गरुक्षोर्द्ध्वशिरस्यवालैः शिरालजङ्घैर्गिरिकूटदघ्नैः। ततः क्षपाटैः पृथुपिङ्गलाक्षैः खं प्रावृषेण्यैरिव चानशेऽब्दैः॥३०॥

आपिङ्ग। ततः कर्म्मप्रवर्त्तनादनन्तरम् क्षपाटैः निशाचरैः जःमः अटन्तीत्यटाः पचाद्यच् क्षपायामटा इति सप्तमीति योगविभागात्समासः खमाकाशमानशे व्याप्तम् अश्नोतेः कर्म्मणि लिट् अश्नोतेश्चेति नुट्। शिरसि जाताः शिरस्या शरीरावयवाद्यत् आपिङ्गा आ समन्तात् पिङ्गा विद्युदिव रुक्षाः रूक्षाः ऊर्द्ध्वशिरस्या वाला येषां तैः। अन्योऽपि शिरस्यो भवति इति वालग्रहणम् अमङ्गल वाला इत्यर्थः। शिराः सन्ति यासामिति प्राणिस्थादातो लजन्यतरस्यामिति लच् शिराला जङ्घा येषान्तैः गिरिकूटदघ्नै

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



गिरिकूटप्रमाणैः प्रमाणे द्वयसजिति दघ्नच्। पृथूनि विस्तीर्णानि पिङ्गलानि चाक्षीणि येषान्तैः। बहुव्रीहौ सक्थ्यक्ष्णोरिति षच्। प्रावृषेण्यैरिवेति प्रावृष एण्यः अब्दैर्मेघैः कृष्णसाधर्म्यात्। अपो ददतीति अब्दाः चकारः पादपूरणार्थः॥ ३०॥

भ० आपिङ्गेत्यादि। ततस्तज्ज्ञानानन्तरं क्षपाटैराक्षसैः खं आकाशं आनशे व्याप्तं अशूङ्व्याप्तिसंहत्योः कर्म्मणि ठौ स्वान्तादिति खेरान्। कीदृशैः आपिङ्गा ईषत्कपिला रूक्षा ऊर्द्धाः शिरस्याः शिरसि भवाः केशा येषां शिरस्यग्रहणं श्रवणकुण्डलादिवत् तदा रूढिप्रतिपत्त्यर्थं शिरस्यवालैरिति क्वचित् पाठः शिरा नाडी तया व्याप्ता .जङ्घा येषां शिराशब्दात् गीतृणमेघेत्यादिना चूडादिलाक्षः। गिरिकूटदघ्नैः गिरिशृङ्गप्रमाणैः दघ्न मात्रद्वयसन्मात्रे इति दघ्नः पृथूनि पिङ्गलानि च अक्षीणि येषां सक्थ्यक्ष्णः सः स्वाङ्गे इति बहुव्रीहौ षः प्रावृषेण्यैर्वर्षाकालीनैः अब्दैर्मेघैरिव प्रावृष एण्यो भवार्थे अभिधानात् अपो ददातीत्यब्दः आदन्तात् हनजनादिति डः न केवलं चिचिते चानशे च इति चार्थः। पादपूरणे चेति केचित्॥३०॥

अधिज्यचापः स्थिरबाहुमुष्टिरुदञ्चिताक्षो ऽञ्चितदक्षिणोरुः। तान् लक्ष्मणः संनतवामजङ्घो जघान शुद्धेषुरमन्दकर्षी॥ ३१॥

ज०म० अधि। तान् क्षपाटान् गगणस्थान् लक्ष्मणो जघान हतवान्

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कीदृशः अधिज्यचापः अध्यारूढा उत्कलिता ज्या गुणो यस्य चापस्य तदधिज्यम् प्रादिभ्यो धातुजस्येति समासः अधिज्यं चापो यस्य लक्ष्मणस्य। स्थिरो निश्चलो बाहुर्मुष्टिश्च यस्य। उदञ्चिते उत्क्षिप्ते अक्षिणी येन स उदञ्चिताक्षः। आकाशस्थापित दृष्टिरित्यर्थः। अञ्चितः सङ्कोचितो दक्षिणोरुर्येन सोऽञ्चित दक्षिणोरुः अञ्चेःपूजायामितीटोऽनुत्पन्नत्वात् ण्यन्तस्य रूपम् न चात्र पूजा गम्यते किन्तु गतिविशेष एव अनुषङ्गलोपोऽपि न भवति णिलोपस्य स्थानिवद्भावात्। समन्तात् नता वामजङ्घा यस्य स सन्नतवामजङ्घः। शुद्धेषुः निशितवाणः अमन्दमत्यन्तं क्रष्टुं शीलमस्यासावमन्दकर्षी कर्णान्ताकृष्टचाप इत्यर्थः॥२१॥

अधिज्येत्यादि। लक्ष्मणस्तान् राक्षसान् जघान। कीदृशः अधिरूढा ज्या गुणो यत्र तादृशश्चापो यस्य। स्थिरो निश्चलो दृढो वा बाहुमुष्टिर्यस्य स लक्ष्मणः दर्शनार्थं उदञ्चिते ऊर्द्ध्वमुखार्पिते अक्षिणी येन आकाशक्षिप्तदृष्टिरित्यर्थः। अञ्चितः सङ्कुचितो दक्षिणोरुर्येन अर्लोपेऽपि स्थानिवद्भावात् नाञ्चेर्न लोपः सन्नता वामजङ्घा यस्य शुद्धो निशित इषुर्यस्य अमन्दं यथास्यात्तथा धनुः कर्षतीति ग्रहादित्वान्णिन् क्रष्टुं शीलमस्येति परे॥२१॥ भ०

**गाधेयदिष्टं विरसं रसन्तं रामोऽपि मायाचणमस्त्रचुञ्चुः। स्थाणुं रणे स्मेरमुखो जगाद मारीचमुच्चैर्व्वचनं महार्थं॥३२॥**

गाधेय। गाधेरपत्यङ्गाधेयो विश्वामित्रः इञ्च इत्यनुवर्त्तमाने इतश्चानिञ इति ढक् तेन दिष्टङ्कथितं मारीचं नाम जं०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



राक्षसं रामो जगाद गदितवान् रसन्तम्वदन्तम् विरसमश्राव्यमि
ति क्रियाविशेषणम् मायाचणमायया वित्तम् अस्त्रचुञ्चुः अस्त्रैः
प्रतीतो रामः तेन वित्तश्चुञ्चुचणपाविति। स्थास्नुं रणे स्थिति
शीलम् तस्य सेनापतित्वात् स्मेरमुखः चित्तस्याक्षोभादीषद्धस
नशीलवदनः नमिकम्पीत्यादिना रः। उच्चैस्तराञ्जगादेति
क्रियाविशेषणम् वचनं वक्ष्यमाणन्महार्थमप्रधानं ब्रुविशासीत्यत्र
ब्रुवीत्यर्थग्रहणात् द्विकर्म्मकता मारीचं वचनञ्च॥ ३२॥

भ॰ गाधेयेत्यादि॥ रामः अपिशब्दात् लक्ष्मणोऽपि महार्थमुच्चैर्व्व
चनं मारीचं जगाद। याञ्चार्थदुहेति सूत्रे ब्रुवीत्यर्थस्य ग्रहणं
तेन द्विकर्म्मकत्वं पचादित्वाद्वा। कीदृशं मारीचं गाधेयेन विश्वा
मित्रेण दिष्टं कथितं गाधेरपत्यार्थे वाक्काद्यत इत्यनेन अत्यादि
त्वात् ष्णेयः। विरसं कठोरं यथास्यात्तथा रसन्तं शब्दायमानं
मायया ख्यातं मायाचणं वित्तेचुञ्चुचणाविति चणः। रणे स्थास्नुं
स्थितिशीलं ग्लास्नास्थादिति स्नुः। रामः कीदृशः अस्त्रचुञ्चुः
अस्त्रेण ख्यातः स्मेरमीषद्धसनशीलं मुखमस्य हिंसदीपकम्पेति रः
॥३२॥

आत्मम्भरिस्त्वं पिशितैर्न्नराणां फलेग्रहीन् हंसि
वनस्पतीनां। शौवस्तिकत्वं विभवा न येषां व्रजन्ति
तेषां दयसे न कस्मात्॥३३॥

ज॰म॰ आत्मम्। नराणाम्पिशितैर्मांसैः आत्मानम् बिभर्षि पुष्णासि
नान्यदपि शरीरस्थितिहेतुर्भवतीति भावः। स त्वमात्मम्भरिः
आत्मभरणाय फलानि गृह्णन्ति ये वनस्पतीनान्तान् फलेग्रहीन्

७९ पृ: ३० नाभिरेष्यति।

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



फलाशिनो मुनीन् हंसि मारयसि शयो लुक् फलेग्रहिरात्मम्भरि श्चेति निपातितौ। श्वोभवितारः शौवस्तिकाः श्वसस्तुट्चेति ठञ् तुडागमश्च। द्वारादित्वादैजागमः शौवस्तिकत्वन्तद्येषां विभवा न व्रजन्ति तेषामश्वस्तनिकवृत्तीनाङ्कस्मान्न दयसे न रक्षसि अधी गर्थदयेशामिति कर्म्मणि षष्ठी॥३३॥

आत्मम्भरिरित्यादि। त्वं वनस्पतीनां फलेग्रहीन् मुनीन् हंसि फलानि गृह्णन्ति तन्मात्रभोजित्वेन स्वीकुर्व्वन्तीति सङ्गत्स्तम्भादित्यादिना इप्रत्ययः। फले इति सूत्रे निर्द्देशादेत्वं वनस्पतीनां मध्ये फलेग्रहीन् मुनीन् हंसि उन्मूलयसीति केचित्। त्वं कीदृशः नराणां पिशितैर्म्मांसैरात्मम्भरिः आत्मानमेव बिभर्त्तीति कुक्ष्यात्मोदराङ्कः खिरिति खिः खित्यव्याजेति मन् येषां विभवाः सम्पदः शौवस्तिकत्वं भाविदिनस्थितत्वं न व्रजन्ति तेषां कस्मान्न दयसे समार्थेनेति कर्म्मणि षी श्वोभवः शौवस्तिकः श्वसोभवार्थेति कस्य भिधानात् कणि मनीषादित्वात् त्यागमः द्वारस्मरेति उम् णित्ते त्रिरिति त्रिः तत्त्वौभावे इति त्वं देवीदासचक्रवर्त्ती तु श्वस्तेकते श्वस्तिकः तिङ्क्ष्गत्यां इजुङत्वात् कृगृङ्घाभीति कः ततः स्वार्थे ष्णः अन्यत् पूर्व्ववदित्याह॥३३॥

अङ्गो द्विजान् देवयजीन्निहन्मः कुर्म्मः पुरं प्रेतनराधिवासं। धर्म्मो ह्ययं दाशरथे निजो नो नैवाध्यकारिष्महि वेदवृत्ते॥३४॥

अङ्ग॥ राक्षसः प्राह द्विजान् ब्राह्मणक्षत्रियवैश्यान् अङ्गो

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भक्षयामः देवयजीन् देवान् यजन्ति आराधयन्ति ये तान्निहन्मः अचइरित्यनुवर्त्तमाने खनीत्यादिषूह्यमानेष्वौणादिकेषु सूत्रेषु यद्यपि यजिर्न पठितस्तथापि नायजेरिः प्रकृतेश्च तदूह्यमिति वचनात्। जासिनिप्रहणेत्यत्र सङ्घातविगृहीतविपर्य्यस्तग्रहणात् षष्ठी प्राप्तापि न भवति कर्म्मणः शेषत्वेनाविवक्षितत्वात् पुरन्नगरञ्चेतनराणाम्मृतनराणाम् अधिवासमवस्थानञ्चक्रुर्म्मः नित्यहननेन श्मशानतुल्यम् इत्यर्थः। कस्मादेवमित्याह धर्म्म इति दशरथस्यापत्यं दाशरथिः अत इञ् हे दाशरथे हि यस्मादयँ वर्त्तते यस्मादयं धर्म्मः आचारः निजो नित्यः न इत्यस्माकम् वेदविरुद्ध इति चेत् नैवाध्यकारिष्महि वेदवृत्ते वेदविहितं वृत्तमिति मध्यमपदलोपी समासः। यद्ब्राह्मणानाम् उक्तमनुष्ठानन्तत्र वयं नैवाधिकृता इत्यर्थः। अधिपूर्व्वात्करोतेः कर्म्मणि लुङ् स्यसिजित्यादिना चिण्वदिट्॥ ३४॥

भ० अद्म इत्यादि। पूर्व्वापरपरामर्षान्मारीचप्रत्युत्तरमिदं वयं द्विजान् अद्मः भक्षयामः देवयजीन् देवपूजकान् निहन्मः। यहेरिमौ वाऽस्यां त्रजेर्वदेरित्यादिनिर्द्देशात् सर्व्वधातुभ्य इप्रत्ययः स्यादिति सूचितं तेन यजिरिति सिद्धं वातप्रमीवत् दीर्घान्तोऽयमित्येके। पुर मृतमनुष्याधिवासं श्मशानतुल्यं कुर्म्मः कुरुलोपोम इति कृञ उपो लोपः कृञोऽद्दनौरे इत्युकारः हे दाशरथे हि यस्मात् अयमेव अस्माकं निजो नित्यो धर्म्मः स्वभाव आचारो वा। धर्म्माः पुण्ययमन्यायस्वभावाचारसोमपा इत्यमरः वेदवृत्ते वेदविहिते कर्म्मणि नैव अध्यकारिष्महि वयं नाधिकृताः विधात्रा इत्यर्थः। कर्म्मणि टी हनग्रहदृशश्च इतिमिण्॥ ३४॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



धर्म्मोऽस्ति सत्यं तव राक्षसायमन्यो व्यतिस्ते तु ममापि धर्म्मः। ब्रह्मद्विषस्ते प्रणिहन्मि येन राजन्यवृत्ति धृतकार्म्मुकेषुः ॥३५॥

जं०म० धर्म्मो। रामः प्राह हे राक्षस रक्ष एव राक्षसः प्रज्ञादित्वादण् स्वार्थिका अतिवर्त्तन्त इति पुंलिङ्गता तवायम्पूर्व्वोक्तः पराभिद्रोहलक्षणो धर्म्मोऽस्तीति सत्यमेतत् किन्तु ममापि रामस्य अन्यो धर्म्मोऽशिष्टनिग्रहलक्षणो व्यतिस्ते व्यतिभवते इदमुक्तम्भवति यद्यप्येवम्प्रकारस्त्वद्धर्म्मो भविष्यति तथापीदानीमेव या त्वद्धर्म्मेण विद्यमानतया निष्पाद्या सा अस्मद्धर्म्मेणैव निष्पादकत्वेन व्यतिस्ते। ततश्चान्यसम्बन्धिनीं क्रियामन्यः करोति इतरसम्बन्धिनीमितर इति कर्म्मव्यतीहारसम्भवात् अस्तेः कर्म्मव्यतीहारे तङ्। तथा हि यो यदवसरे यां काञ्चित् क्रियाङ्करोति स तत्क्रियाकारीत्युपचारात् लोक उच्यते। येन धर्म्मेण हेतुना ब्रह्मद्विषस्ते प्रणिहन्मि मारयामि स व्यतिस्ते इति योज्यम् नेर्गदेत्यादिना णत्वम् जासिनीत्यादिना कर्म्मणि षष्ठी। तथा कथन्तव धर्म्म इति चेदाह राजन्यवृत्तिरिति क्षत्रियवृत्तिः ततो राज्ञोऽपत्यम् राजश्वशुराद्यत् ये चेति प्रकृतिभावः। धृतङ्कार्म्मुकम् इषवश्च येन सः यतः अहं राजन्यवृत्तिः ततोऽहन्धृतकार्म्मुकेषुरिति धृतकार्मुकेष्विति पाठान्तरम् क राजन्यवृत्तिः सायुधेष्वित्यर्थः ॥ ३५ ॥

भ० धर्म्म इत्यादि। रामवाक्यमिदं हे राक्षस तव अयं धर्म्मोऽस्तीति सत्यं रक्षःशब्दात् विकारसंघेत्यादिना स्वार्थे ष्णः त्रैलोक्यमि



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



त्युदाहरणेन स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्तेऽपीति सूचितं तेन पुंस्त्वं किन्तु ममापि अन्यो धर्म्मो व्यतिते अस्तेर्व्यतीहारे गतिहिंसेति मं लोपोऽस्त्यसोरित्यकारलोपः यथा तव हिंसारूपो धर्म्मोऽस्ति तथा मम हिंसकहिंसाकारित्वरूपो धर्म्मोऽस्ति इत्यर्थः धर्म्मं प्रकाशयति येन धर्म्मेण हेतुना ब्रह्मद्विषस्ते तवं प्रणिहन्मि कर्म्मणि षी शाखन्नोण इति णत्वं। कुतस्तेऽयं धर्म्म इत्याह यतो राजन्यानां वृत्तिः धृतं कार्म्मुकमिषुश्च यत्र तथा भवति क्षत्रियाणां धनुर्बाणधारित्वं हिंसनाशार्थमेव राजन्येति मन्वर्ज्जानित्यादिना नलोपनिषेधः॥२५॥

इत्थंप्रवादं युधि संप्रहारं प्रचक्रतूरामनिशाविहारौ। तृणाय मत्वा रघुनन्दनोऽथ वाणेन रक्षः प्रधनान्निरास्थत्॥२६॥

ज॰म॰ इत्थम्। इत्थं अनेन प्रकारेण प्रवादो अन्योन्याभिघातो यत्र सम्प्रहारे तं सम्प्रहारम्परस्पराभिभवलक्षणम्प्रकृतवन्तौ युधि रणभूमौ युध्यन्ते अस्यामिति सम्पदादित्वादधिकरणे क्विप् रामनिशाविहारौ रामो निशाविहारी निशाचरो मारीचस्येत्यर्थः निशायाम्विहारो यस्येति समासः अथानन्तरं रघुनन्दनो रघुवंशस्य नन्दयिता रामो मारीचम्बाणेन तत्सम्बन्धिनि सत्यपि तृणाय मत्वा तृणमपि नावमत्य मन्यकर्म्मण्यनादर इति चतुर्थी तत्र प्रकृष्टकुत्सितग्रहणङ्कर्त्तव्यम् इह माभूत् तृणन्त्वेति प्रधनात्संग्रामात् निरास्थत् अपनीतवान्॥२६।

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



इत्थमित्यादि। उक्तप्रकारं प्रवादं तदनन्तरं युधि युद्धे संप्रहारं रामनिशाविहारौ प्रचक्रतुः निशायां विहारोऽस्येति निशाविहारो मारीचः सम्यक् प्रहारो यस्मात् इति संप्रहारं प्रवादविशेषणमित्येके अथ रघुनन्दनो राक्षसं मारीचं तृणाय मत्वा बाणेन प्रधनात् युद्धात् निरास्थत् गत्यर्थमन्यद्व इति चो तृणाप मानेनैवावज्ञा गम्यते तेन तृणादेव चतुर्थी॥ ३६॥ भ॰

जग्मुः प्रसादं द्विजमानसानि द्यौर्व्वर्षुका पुष्पचयं बभूव। निर्व्याजमिज्या ववृते वचश्च भूयो बभाषे मुनिना कुमारः॥३७॥

जग्मुः। यागविघ्नकारिषु निरस्तेषु द्विजानां मानसानि मनांस्येव मानसानि प्रज्ञादित्वादण् प्रसादं अव्याकुलत्वं जग्मुः गतानि गमहनेत्युपधालोपः द्यौः पुष्पचयं वर्षुका वर्षणशीला बभूव भवति स्म लषपतपदेत्यादिना उकञ् नलोकेति षष्ठीप्रतिषेधः। निर्व्याजन्निर्व्विघ्नं इज्या यागः व्रजयजोर्भावे क्यप् ववृते वृत्तः लिट् भूयः पुनरपि मुनिना गाधेयेन कुमारः रामः अकृतदारकर्म्मत्वात् वचो वक्ष्यमाणम्भाषे कर्म्मणि लिट् ब्रुवीत्यर्थग्रहणात् द्विकर्म्मकता वचः कुमारस्य॥ ३७॥ ज॰म॰

जग्मुरित्यादि। शत्रुवधात् द्विजानां मानसानि प्रसादं अव्याकुलत्वं जग्मुः हनगमित्युङ्लोपः द्यौः स्वर्गः पुष्पस्य चयं समूहं वर्षुका बभूव वर्षतीति वर्षुका वृषेः शृलाभूकमगमेति उकः ढचेक लीति सूत्रे उकवर्ज्जनात् न कर्म्मणि षष्ठी। निर्व्याजं निर्व्विघ्नं यथा भ॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



स्यात्तथा मुनीनां इज्या यज्ञो ववृते निष्पन्ना यजेः शीञ्जेति क्यप् स्त्रियां मुनिना विश्वामित्रेण कुमारो रामः भूयः पुनरपि बभाषे ब्रुवीत्यर्थात् द्विकर्म्मकत्वं कुमारतक्कलौ पचादित्वादन् कुमारो बालके स्कन्दे युवराजेऽश्ववारके इति विश्वः॥३७॥

महीय्यमाना भवतातिमात्रं सुराध्वरे घस्मरजित्वरेण। दिवोऽपि वज्रायुधभूषणाया ह्रिणीयते वीरवती न भूमिः॥३८॥

ज०म० महो। भवता भूमिः पृथिवी महीय्यमाना पूज्यमाना अतिमात्रं सुष्ठु सम्यक् पालनाद्दिवो ऽपि स्वर्गस्य न ह्रिणीयते न लज्जते किन्तु प्रतिस्पर्द्धत इति भावः ह्रिणी महीङिति कण्ड्वादिपाठाद्यक् ङित्वात्तङ् अवयवे कृतं लिङ्गं समुदायस्य विशेषकम्भवतीति महीयशब्दात्कर्म्मणि लकारः शानच् यक् अतोलोपः मुक् महीय्यमानेति रूपं सुराध्वरे सुरानुद्दिश्य योऽध्वरो यज्ञः क्रियते तत्र ये घस्मराः अदनशीलाः राक्षसाः सृघस्यदः क्मरच् तेषाञ्जित्वरेण जयशीलेन भवता इण्नशजीत्यादिना क्वरप् वज्रायुधभूषणायाः शक्र एवालङ्कारो यस्याः दिवः वीरवती त्वद्विधो वीरो यस्या भूमाविति॥३८॥

भ० महीय्येत्यादि। भूमिर्दिवोऽपि स्वर्गादपि न ह्रिणीयते न लज्जते तामपि स्पर्द्धत इत्यर्थः यतो भवतातिमात्रं अतिशयेन वीरवती प्रशस्तवीरान्विता अतएव लोकैर्महीय्यमाना पूज्यमाना महीङ् वृद्धिपूजनयोः ह्रिणीङ् लज्जायां आभ्यां कण्ड्वादित्वात् नमस्तपोव

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



रिव इत्यादिना क्यः कीदृशेन भवता सुराध्वरे देवानां यज्ञे घस्मराणां वज्रभक्षणशीलानां राक्षसानां जित्वरेण लघसेभक्षे इत्यस्मात् घसखदःक्मर इति क्मरः त्वरपृहजीनेति जेः त्वरप् स्वस्तनपितीत्यनेन तन् दिवः कीदृश्याः वज्रमायुधमस्येति वज्रायुध इन्द्रः स एव भूषणं यस्याः इन्द्रो यथा दिवः परिपालकस्तथा त्वं भूमेरितिभावः। आयुध्यतेऽनेनेति आयुधं इगुङ्कात् कॄगॄज्ञाप्रीजुङ इति कर्त्तरि विहितप्रत्ययः करणेऽपि बोध्यः। क्तद्वोःकभावे इत्युक्तेरन्यत्रापि प्रयोगत इत्युक्तेः॥३८॥

बलिर्बबन्धे जलधिर्म्ममन्थे जह्रेऽमृतं दैत्यकुलं विजिग्ये। कल्पान्तदुःस्था वसुधा तथोहे येनैष भारोऽतिगुरुर्न तस्य॥३९॥

बलिर्ब संक्षेपेण स्तुतिमाह। येन भवता बलिर्बबन्धे बद्धः जलधिर्ममन्थे मथितः मन्दरं दोर्भिर्गृहीत्वा मन्थविलोडन इत्यस्य रूपम् संयोगान्तत्वात्लिटोऽकित्त्वे अनुनासिकलोपो न भवति जह्रेऽमृतम् हृतम् स्त्रीरूपधारिणा दैत्यबलम्विजिग्ये विजितमनेकधा संलिटोर्जेरिति कुलम् एरनेकाच इति यणादेशः तथा कल्पान्ते प्रलये दुःस्था दुस्थाना वसुधा पृथिवी ऊहे उद्धृता वराहरूपिणा वहेर्यजादित्वात्सम्प्रसारणम् तस्य भवत एष भारो मुनिजनरक्षणम् अतिगुरुर्न भवति सर्व्वत्र कर्म्मणि लिट्॥३९॥ ज०म०

बलिरित्यादि। येन भवता वामनावस्थायां बलिनामासुरो भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



बबन्धे बद्धः जलधिः समुद्रो ममन्थे मथितः मन्थेः स्यात्यपित् क्ङिदेति किद्भावपक्षे उङो लोपाभावः स्त्रीरूपेण असुरगृहीतममृतं जह्रे हृतं दैत्यवंशो विजिग्ये विजितः जेर्गिः सन्लिटोः स्रुध्वोरणचीति यलं कल्पान्ते प्रलयकाले दुःस्था जलप्लाविता वसुधा पृथिवी वराहरूपेण ऊहे उद्धृता सर्व्वत्र कर्म्मणि ठो वहेर्यजादित्वात् व्ययग्रहेति खेर्जिः ग्रहखपाद्योरिति प्रकृतेर्ज्जिः दुःखेन तिष्ठतीति दुस्था हनजनादिति डः खस्युक्तशसिविसर्गस्य वा लोपो मनीषादित्वात् तस्य भवत एष भारो मुनिरक्षणरूपो नातिगुरुर्भवति ॥३९॥

इति ब्रुवाणो मधुरं हितञ्च तमाञ्जिहन्मैथिलयज्ञभूमिं। रामं मुनिः प्रीतमना मखान्ते यशांसि राज्ञां निजिघृक्षयिष्यन् ॥४०॥

ज०म० इति ब्रु। इति यथोक्तप्रकारेण मधुरं श्रोत्रसुखं हितं च ब्रुवाणो अभिदधानः लक्षणहेत्वोरिति शानच् मुनिः प्रीतमनाः मखान्ते यज्ञावसाने तं राममैथिलस्य यज्ञभूमिं आञ्जिहत् गमितवान् मिथिलानां राजेति जनपदशब्दात् क्षत्रियादञित्यञ तस्य राजन्यपत्यवदित्यतिदेशादञ् अहिगतौ इदितो नुम् प्रयोजकव्यापारे णिच् लुङ् आट् चङि णिलोपः द्विर्व्वचनेऽचीति स्थानिवद्भावादजादेर्द्वितीयस्येति हिशब्दस्य द्विर्व्वचनम् नन्द्रा इति नकारस्य प्रतिषेधः अभ्यासकार्य्यम् आञ्जिहदिति रूपम्। राज्ञां यशांसि निजिघृक्षयिष्यन् निग्रहीतुमभिभवितुमेषयिष्यन् ग्रहेः सन् स

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



नि ग्रहगुहोश्चेति इट्प्रतिषेधः द्विर्वचनादिः रुदविदेत्यादिना सनः कित्त्वम् ग्रहिज्येत्यादिना सम्प्रसारणम् ढलभष्भावौ गकारस्य घकारः कलषले पश्चाणिच् तदन्ताङ्गविषयत्वसामान्यविवक्षायां लृट् तेन भविष्यदनद्यतने लुङ् न भवति ॥४०॥

इतीत्यादि। उक्तप्रकारेण मधुरं हितं ब्रुवाणो मुनिः प्रीतमना मखस्य यज्ञस्यान्ते तं रामं मैथिलस्य जनकस्य यज्ञभूमिं आञ्जिहत् प्रापयामास राज्ञां यज्ञियाञ्चि निग्रहीतुं अभिभवितुं इच्छां कारयिष्यन् अर्थात् राम एव प्रयोज्यकर्त्ता मिथिलाया राजा मैथिलः विकारसंघेति ण्णः अहिङ्गतौ इदितो नुण् ञिः प्रेरणे ञिश्रीत्यङ् नाजन्तादेरिति स्यादौ नवद्धोऽये इति निषेधात् हिम्बुद्धस्य द्वित्वं खेर्झभखयेति हस्य जः ञेर्लोपः ग्रहेः सनि नेमुगुह इतीम् निषेधः ग्रहखपेति जिः होढः झभान्तस्यादिजवामिति घः षढोः कः से इति ढस्य कः किलादिति षः सनयङन्तोद्विः खेराद्यचो लोप्यः झभखयेति खेर्घस्य जत्वं हकारस्य अत्वञ्च ख्यखेत्वनि ततो ञिः ततः स्तृः ॥४०॥

इतः स्म मित्रावरुणौ किमेतौ किमश्विनौ सोमरसं पिपासू। जनं समस्तं जनकाश्रमस्थं रूपेण तावौजिहतां नृसिंहौ ॥४१॥

इतः। एतौ तत्रागतौ नृसिंहौ नरौ सिंहाविव जनकाश्रमस्थं जनं रूपेण स्वरूपतया औजिहतामितर्कङ्कारितवन्तौ ऊहवितर्के इत्यस्माद्धातोः ण्यन्तात् कर्त्तुः क्रियाफलाविवक्षायां णिचश्चेति तङ् न भवति चङि णिलोपस्य स्थानिवद्भावात् अजादेर्द्वितीयस्ये

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ति द्विर्व्वचनम्। ऊहमाह मित्रावरुणौ आदित्यवरुणौ देवता द्वन्द्वे इत्यानङ् तयोर्म्महानुभावत्वात् सोमरसन्निपाय पातुमिच्छू न लोकेति षष्ठीप्रतिषेधः एतावागतौ आङ्पूर्व्वस्येणो निष्ठायां रूपं किमश्विनौ अश्विनीकुमारौ सोमरसन्निपाय एताविति एव ञ्जनम् औजिहतां सुशब्द इति पाठे एतौ सुमित्रे तिपाठः एतौ स्म मित्रेति स्मशब्दो निपातः पादपूरणार्थः॥ ४१॥

भ० इत इत्यादि। तौ नृसिंहौ मनुष्यश्रेष्ठौ रामलक्ष्मणौ रूपेण सौन्दर्य्येण समस्तं जनकाश्रमस्थं जनं औजिहतां वितर्कं कारितवन्तौ ऊहङ्वितर्के ञिःप्रेरणे ञिश्रीत्यङ् नाजन्तादेरिति निषेधात् हेर्द्दित्वं घोञ्जौञ्जेरिति ज्ञानार्थत्वात् कर्त्तुः कर्म्मत्वं। वितर्कमाह किमेतौ मित्रावरुणौ सूर्य्यावरुणौ सोमरसं पातुमिच्छावन्तौ इतः स्म अमुं देशं प्राप्तवन्तौ इण्गतौ क्तो सोनातीते इति क्तो किम्वा एतौ अश्विनौ अश्विनीकुमारौ नासत्यदस्रौ नासत्यश्चैव दस्रश्च स्मृतौ तौ नामतोऽश्विनाविति मार्कण्डेयपुराणं। केचित्तु स्मशब्दः पादपूरणे इतोऽस्मिन् देशे एतौ आगतौ आङ्पूर्व्वादिणः क्त इत्याहुः। मित्रस्य वरुणस्येति द्वन्द्वे सहचरितदेवताद्वन्द्वे पूर्व्वपदस्यादन्ततानिपातनात् देवीदासचक्रवर्त्ती तु एकादश इत्युदाहरता विश्वराजो ऽदेत्यस्य योगविभागात् क्वचित् समासे पूर्व्वपदस्य दीर्घत्वं सूचितमित्याह॥ ४१॥

अजिग्रहत्तं जनको धनुस्तत् येनार्द्दिदद्दैत्यपुरं पिनाकी। जिज्ञासमानो बलमस्य बाह्वोर्हसन्नभांक्षी द्रघुनन्दनस्तत्॥ ४२॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अजिग्र। येन धनुषा दैत्यपुरं पिनाकी महादेव आर्द्दिदत् जं०म० हिंसितवान् अर्द्दः स्वार्थिकण्यन्तात् चङि अजादेर्द्वितीयस्येति दि शब्दो द्विरुच्यते रेफस्य प्रतिषेधः तद्धनुः तं रामञ्जनकः अजिग्र हत् बोधितवान् अनेन धनुषा त्रिपुरन्दग्धमिति ग्रहेर्हेतुमण्ण्यन्ता च्चङि णिलोपः णौ चङि ह्रस्वः सन्वल्लघुनीत्यादिलम् ग्रहेश्च बुद्ध्यर्थत्वात् गतिबुद्धीत्यादिना रामस्य कर्म्मसंज्ञा। अस्य रामस्य बाह्वोर्भुजयो र्बलञ्जिज्ञासमानो जनकः एवम्भूतन्धनुःहसन् स्मयमानो रघुन न्दनो रामः अभाङ्क्षीत् भग्नवान् भञ्जेर्लुङि सिचि हलन्तलक्षणा वृद्धिः तत्र हि हल्ग्रहणं समुदायप्रतिपत्त्यर्थमित्युक्तम्॥ ४२॥

अजिग्रहदित्यादि। जनको राजा तं रामं तद्धनुरजिग्रहत् भ० ग्राहयामास धातूनामनेकार्थत्वात् ग्रहिरत्र ज्ञानार्थ इत्यन्ये गत्यर्थेरिति प्रयोज्यकर्त्तुः कर्म्मत्वं ण्यन्ताल्लुङः स्ब इति ह्रस्वः स्वः सन्व दिति सन्वत् येन धनुषा पिनाकी शिवो दैत्यानां पुरं त्रिपुरं आर्द्दिदत् हतवान् अर्द्द्कवधे स्यादौ नवङ्गोऽर्थे इति निषेधात् दे द्वित्वं केचित्तु धनुषा प्रयोज्यकर्त्रा घातयामास इत्यर्थमाहुः जनकः कीदृशः अस्य रामस्य बाह्वोर्बलं जिज्ञासमानः ज्ञातुमि च्छन् स्मृदृशनुज्ञेति सनन्तज्ञो मं हसन् लीलयैव तद्धनुरभा ङ्क्षीत् भन्जोधौ मोटने व्यासिः अनिमत्वात् व्रजवदेति त्रिः चङि ति लुङ्॥ ४२॥

ततो नदीष्णान् पथिकान् गिरिज्ञानाह्वायकान्
भूमिपतेरयोध्यां। दिक्षुः सुतां योधहरैस्तुरङ्गैर्व्यस
र्ज्जयन्मैथिलमर्त्यमुख्यः॥ ४३॥



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज॰म॰ ततो। धनुर्भङ्गादनन्तरमाह्वानयमिति ज्ञात्वा जनकः सुतान्दुहितरन्दित्सुः दातुमिच्छुः ददातेः सनिमीमेत्यादिना अच इस् द्विर्व्वचनम् अत्रलोप इत्यभ्यासलोपः सस्येति तत्वम् सनाशंसभिच्छ उः भूमिपतेर्दशरथस्य आह्वायकान् आह्वयन्ति आकारयन्तीति कर्त्तरि ण्वुल् आतो युक् कृत्प्रयोगे भूमिपतौ कर्म्मणि षष्ठी तान् अयोध्यां व्यसर्जयत् विसर्ज्जितवान् विपूर्व्वस्य सृजेर्हेतुमण्ण्यन्तस्य लुङि रूपं गत्यर्थत्वात् द्विकर्म्मकता। नद्यां स्नान्तीति नदीष्णाः सुपिस्थ इति योगविभागात्कः आतोलोपः निनदीभ्यां स्नातेरिति षत्वम् नदीन्तरीतुङ्कुशलान् इत्यर्थः। पथिकान् पथि कुशलान् तत्रकुशलःपथ इति ठक् गिरिज्ञान् यथाप्रदेशङ्गिरिज्ञान् इगुपधेत्यादिना कः तुरङ्गैः अश्वैः करणभूतैः युध्यन्त इति योधाः पचाद्यच् तानाहर्त्तुं क्षमैः वयसि चेत्यच्। हसिमृग्रिण्वामिदमिलूपूधूर्व्विभ्यस्तन्नित्यौणादिकस्तन्। म्रियन्ते प्राणिनोऽस्मिन्निति मर्त्यो भूर्लोकः तत्र भवा मर्त्या मनुष्या दिगादेराकृतिगणत्वात् यत् आकृतिगणत्वस्य लिङ्गं देवमनुष्यपुरुषपुरुमर्त्येभ्य इति निर्द्देशः मुखमेव मुख्यः प्रधानम् शाखादिभ्यो यः। मर्त्यानामुख्यो मर्त्यमुख्यः मैथिलश्चासौ मर्त्यमुख्यश्चेति विशेषणसमासः जनक इत्यर्थः ॥ ४३॥

भ॰ तत इत्यादि। धनुर्भङ्गानन्तरं मिथिलासम्बन्धिमनुष्यश्रेष्ठो जनकः रामाय सुतां दित्सुर्दातुमिच्छुः सन् भूमिपतेर्दशरथस्य आह्वायकान् दूतान् तुरङ्गैरयोध्यां व्यसर्ज्जयत् प्रेरयामास तुरङ्गैः कीदृशैः योधहरैः योधान् हर्तुं क्षमैः हृञःपचादित्वादच् वयोबोधकवचनार्थेऽनिति क्रमदीश्वरादयः एतेन शीघ्रगमनं दर्शितं

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



शर्द्धंजइत्यादिना तुरङ्गो निपातितः किम्भूतान् नदीष्णान् नदीस न्तरणकुशलान् नदीस्नातिनिस्नात्योर्दाच्ये इतिरामानन्दसूत्रेण मनीषादित्वात् वा षत्वं नदीष्णो नदीज्ञ इति पुरुषोत्तमः। प न्थानं गच्छति वेत्ति वा इति निपातनादकः ष्णान्तात् स्वार्थे को वा पथि कुशलः पथक इति केचित् गिरिं जानन्तीति गिरिज्ञा हनजनादिति डः ॥४३॥

क्षिप्रं ततोऽध्वन्यतुरङ्गयायी यविष्ठवद्वृद्धतमोऽपि राजा। आख्यायकेभ्यः श्रुतसूनुवृत्तिरग्लानयानो मिथिलामगच्छत् ॥४४॥

क्षिप्रम्। आख्यान्ति कथयन्ति ये ते आख्यायकास्तेभ्यः श्रुता सूनुवृत्तिर्येन स राजा दशरथः सूयत इति सूनुः पुत्रः दाभाभ्या नुरितिवर्त्तमाने सुवःकिच्चेत्यौणादिको नुप्रत्ययः। ततोऽनन्त रमेव क्षिप्रं शीघ्रं स्फायितञ्चीत्यादिना रक् क्रियाविशेषणञ्चैतत् मिथिलामगच्छत् भरतशत्रुघ्नाभ्यां सहेत्यर्थादनुषक्तव्यं गमेर्ल ङि इषुगमियमाञ्छः अध्वानम् अलङ्गामिनो ये तुरङ्गा अश्वाः ते अध्वन्याः अलङ्गामीत्यस्मिन्नर्थे अध्वनोयत्खाविति यत् येचा भावकर्म्मणोरिति प्रकृतिभावः तैः साधु यातीति साधुकारिणि णिनिः अध्वन्यतुरङ्गयायी एवञ्च कृत्वा अग्लानयानः न विद्यते ग्लानं ग्लानिर्यस्मिन्याने तत् अग्लानं अग्लानं यानं यस्य तादृ शैस्तुरङ्गैः सुखयानः ग्लानेति भावे निष्ठा संयोगादेरात इति

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



नत्वम्। वृद्धतमोऽपि यविष्ठवत् युवतम इव युवशब्दस्येष्ठनि स्थूलदूरेत्यादिना यणादिपरलोपः पूर्वस्य च गुणः पश्चात्तेन तुल्यम् इति वतिः ॥४४॥

भ० क्षिप्रमित्यादि। ततोऽनन्तरं आख्यायकेभ्यः श्रुता सूनोः पुत्रस्य वृत्तिर्व्यवहारो येन स राजा दशरथः मिथिलां जनकपुरीं शीघ्रमगच्छत् कीदृशः अध्वन्यैस्तुरङ्गैर्यातीति ग्रहादित्वाणिन् शीलार्थे णिनित्येके आवश्यके णिन् इति केचित् अध्वानमलयर्थं गच्छतीति ख्यः अनित्वविवक्षया न त्रिः मन्वर्ज्ञानवर्मेति नलोपाभावः अध्वनि कुशलोऽध्वन्यो वा वृद्धतम इति अयमेषामतिशयेन वृद्धोऽपि यविष्ठवत् प्रकृष्टयुववत् गुणादेष्ठेयस्य इतीष्ठः वाढान्तिकेति यूनो यवादेशः औमंस्यडिन्नैकाच इति डित्वात् टेर्लोपः। अम्लानमक्लिष्टं यानं यस्य ग्लैकान्तिसंचये क्तः यलयुक्तादन्तत्वात् स्ब्व्यावोरिति कस्य नत्वं ॥४४॥

वृन्दिष्ठमार्चीद्वसुधाधिपानां तं प्रेष्ठमेतं गुरुवद्गरिष्ठं। सदृङ्महान्तं सुकृताधिवासं वंहिष्ठकीर्त्तिर्यशसा वरिष्ठं॥४५॥

ज०म० वृन्दिष्ठम्। तं राजानमेतमायातञ्जनक आर्चीत् पूजितवान् अर्चेर्लुङि रूपम् वृन्दिष्ठं वृन्दारकतममप्रशस्ततममित्यर्थः केषाम्वसुधाधिपानाम्पृथ्वीपतीनाम् प्रेष्ठम्प्रियतमम् गुरुवत् गुरुणा तुल्यम्वर्त्तमानङ्गरिष्ठम् गुरुतमम् सदृक् समानान्ययोश्चेत्युपसंख्यानाद्दृशेः क्विप् रूढिशब्दश्चायम् नात्र दर्शनक्रिया विद्यते।

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अभिजनादिभिस्तुल्यो जनक इत्यर्थः महान्तम् महानुभावमहृ आशयं महान्तं सुकृताधिवासं सुकृतनिलयम् अधिवसत्यस्मि न्निति अधिकरणे घञ् वंहिष्ठा बहुलतमा कीर्त्तिर्यस्य स वंहिष्ठ कीर्त्तिः यशसा वरिष्ठमुरुतमम् अत्र वृन्दारकप्रियगुरुबहुलो रूणामिष्ठनि यथासङ्ख्यमित्यस्मिरेत्यादिना वृन्दप्रगरवंहवर इ त्येते आदेशा भवन्ति॥ ४५॥

वृन्दिष्ठमित्यादि। अर्थात् जनकस्समागतं दशरथं आर्चीत् पूजितवान् किम्भूतं वसुधाधिपानां राज्ञां मध्येवृन्दिष्ठं प्रशस्ततमं प्रेष्ठं प्रियतमं गुरुवत् उपदेष्टृवत् पितृवद्वा गरिष्ठं गुरुतमं महा न्तं महाशयं सुकृतानि पुण्यानि अधिवसन्त्यस्मिन्निति आधारे घञ् यशसा वरिष्ठं उरुतमं वृहत्तममित्यर्थः। जनकः कीदृशः सदृक् अर्थात् दशरथस्य समान इव दृश्यते योऽसाविति तदादिभवत् समानेति क्विप् समानेदमिति सादेशः सदृशानां महान्तमित्यन्ये वंहिष्ठा बहुतमा कीर्त्तिर्यस्य स तथा वृन्दिष्ठादौ गुणादिष्ठेयस्त्र इतीष्ठः वाढान्तिकेत्यादिना वृन्दारकप्रियगुरुबहुलोरूणां वृन्द प्रगरवंहवरादेशः ओमंस्थेति डित्त्वात् टेर्लोपः प्रेष्ठमित्यत्र एका चत्वान्न डित्त्वं॥ ४५॥

त्रिवर्गपारीणमसौ भवन्तमध्यासयन्नासनमेक मिन्द्रः। विवेकदृश्वत्वमगात्सुराणां तं मैथिलोवाक्य मिदं बभाषे॥ ४६॥

त्रिवर्ग। तन्दशरथम्मैथिलो जनकः वाक्यमिदम्बभाषे ब्रुवीत्यर्थ

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ग्रहणात् द्विकर्म्मकता किन्तद्वाक्यमित्याह असाविन्द्रो भवन्तम् एकासनमध्यासयन् आरोपयन् विवेकदृश्वत्वमगादिति सम्बन्धः आसनस्याधिशीङित्यादिना अधिकरणे कर्म्मसंज्ञा भवन्तमिति गतिबुद्धीत्यादिना आरोहणक्रियावस्थायामकर्म्मकत्वात्। पारङ्गामीत्यस्मिन्वाक्ये अवारपारेत्यादिना पारशब्दात् खः तत्र विगृहीतविपर्य्यस्तग्रहणात् त्रिवर्गस्य धर्म्मार्थकामस्य पारीणमिति षष्ठीसमासः त्रिवर्गपारीणम्भवन्तं सुराणाम्मध्ये स एवैको विवेकदृश्वत्वं विवेकज्ञतामगात् इणोगा लुङि गातिस्थेत्यादिना सिचो लुक् विवेकन्दृष्टवानिति दृशेः क्वनिप्॥ ४६॥

भ० त्रिवर्गेत्यादि। मैथिलो जनकः तं दशरथं इदं वाक्यं बभाषे ब्रुवीत्यर्थत्वात् द्विकर्म्मकता किन्तदित्याह भवन्तमेकमासनमध्यासयन्नुपवेशयन् इन्द्रः सुराणां विवेकदृश्वत्वं सदसद्भेदज्ञत्वं अगात् प्राप्तवान् कीदृशं त्रिवर्गस्य पारं गच्छतीति ढघेकादिति णीनः त्रिवर्गो धर्म्मकामार्थैरित्यमरः। असाविति बुद्धिस्थनिदर्शनं विवेकं दृष्टवानिति त्वासुसिति क्वनिप् भवन्तमिति अध्यासेः प्रागविवक्षितकर्म्मत्वादकर्म्मकत्वेन प्रयोज्यकर्त्तुः कर्म्मत्वं आसनमिति कर्म्मक्रियेत्यादिना आधारस्य कर्म्मत्वं॥ ४६॥

हिरण्मयी शाललतेव जङ्गमा च्युता दिवः स्थास्नुरिवाचिरप्रभा। शशाङ्ककान्तेरधिदेवताकृतिः सुता ददे तस्य सुताय मैथिली॥ ४७॥

जं०म० हिर॥ तस्य दशरथस्य सुताय रामाय सूयत इति सुतः

Digitized by eGangotri and Sarayu Trust.



सुप्रसवश्वर्य्ययोरित्यस्मात् कर्म्मणि निष्ठा सुता मैथिली सीता द दे जनकेनेत्यर्थात् कर्म्मणि लिट् मैथिलस्यापत्यं अतइञ् तद न्तादितो मनुष्यजातेरिति ङीष्। रामस्य ज्येष्ठत्वात्तस्यैव कवि ना परिणय उक्तः न शेषाणाम् तेन अन्या अपि तदैव दुहित रो दत्ताः हिरण्मयी सुवर्णनिर्मितेव सालवता वृक्षलता सुवर्ण छवित्वात् तस्याः हिरण्यविकार इति मयटि दाण्डिनायनेत्या दिना यलोपनिपातनम्। जङ्गमा सञ्चारिणी नतु स्थावरा अ त्यर्थङ्गच्छतीति यङि नुगत इति नुक् यङन्तात्पचाद्यचि यङो ऽचिचेति यङो लुक् च्युता दिवः आकाशात्पतिता अचिरप्रभेव विद्युदिव तेजस्वित्वात् तन्वीत्वाच्च किन्तु स्थास्नुरचञ्चला सा तु च ञ्चलेति व्यतिरेकः ऊङुत इति ऊङ् न भवति क्रियाशब्दत्वात् तत्र मनुष्यजातेरिति वर्त्तते शशाङ्ककान्तेर्य्याधिदेवता अधि ष्ठात्री देवता तस्या आकृतिर्य्यस्याः सौम्यत्वात् आक्रियते अनये त्याकृतिः संस्थानम् अकर्त्तरिकारकेति स्त्रियां क्तिन्॥ ४७॥

हिरण्मयीत्यादि। अर्थात् जनकेन तस्य दशरथस्य सुताय मैथि ली सुता ददे मैथिलस्यापत्यं स्त्रीति ष्णः यद्वा मिथिलायां नगर्य्यां अर्थात् मिथिलाख्यभूभागे जाता अयोनिसम्भवत्वात् पार्थिवीत्य र्थः अयोनिसम्भवत्वेन दिव्यत्वाल्लक्ष्मीत्वं सूचितं रामसमीपे सीता कीदृशी हिरण्मयी स्वर्णमयी सालवृक्षसम्बन्धिनी लतेव एतेन रा मस्य सालवृक्षतुल्यत्वं सूचितं मयटि हिरण्यस्य यलोपो निपात नात् जङ्गमा सञ्चारिणी अन्या लता स्थिरेति विशेषः यद्यपि गत्यर्थाद्व्यक्तायां यङ्स्यात्तथापि जङ्गमशब्दोऽयं रूढः दिव श्च्युता अचिरप्रभा विद्युदिव स्थास्नुः स्थितिशीला विद्युच्चञ्चला

भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



इति विग्रहः स्त्रास्वेति खुः अतिसौम्यत्वात् चन्द्रकान्तेरधिदेव तायाः अधिष्ठातृदेवताया इवाकृतिर्यस्याः ॥४७॥

लब्धां ततो विश्वजनीनवृत्तिस्तामात्मनीनामुदवो ढ रामः । सङ्गलमुक्ताफलभर्म्मभूषां संवंहयन्तीं रघु वंशलक्ष्मीं ॥४८॥

ज॰म॰ लब्धाम्। ततो दानानन्तरम् लब्धान्तामात्मनीनाम् आत्मनेहि तां आत्मविश्वेति खः रामः उदवोढ वहेः स्वरितेत्त्वात्कर्त्तुः क्रिया फलविवक्षया तङ् विश्वजनीना विश्वजनाय हिता वृत्तिः प्रवृत्ति र्यस्य रामस्य स पूर्व्ववत्खः सती उत्कृष्टा रत्नादिशोभा यस्याः तैरलङ्कृतत्वात् तां सङ्गलमुक्ताफलभर्म्मशोभाम्भर्म्म स्वर्णं सर्व्व धातुभ्योमनिन् भर्म्मभूषामिति पाठान्तरम् सङ्गलादिभूषा अल ङ्कारो यस्या इति योज्यम् गुरोश्चहल इत्यकारः संवंहयन्तीं सम्यऊलामतिस्थिराङ्कुर्व्वाणाम् वऊलशब्दात्तत्करोतीति णिचि इष्ठवद्भावात् प्रियस्थिरेत्यादिना वंहादेशः पश्चात्तदन्तस्य सम्य र्व्वस्य साधनेन योगः कामित्याह रघुवर्ग्यलक्ष्मीमिति रघुवर्गे भवाम्विभूतिम्वर्गान्ताच्चेत्यनुवृत्तौ अशब्दे यत्खावन्यत रस्यामिति यत् ॥४८॥

भ॰ लब्धामित्यादि । ततोऽनन्तरं आत्मने हितां लब्धां तां सीतां राम उदवोढ उत्पूर्व्ववहः परिणये सहवहोऽरोढोति अत ओत्वं दन्त्यवत्वात् भलाभावः विश्वेषां जनानां हिता वृत्तिर्व्वर्त्तनं

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



हारी यस्य विकारस्वंघेत्यादिना हितार्थे इनः मन्वर्ज्जेत्यादिना आत्मनो नलोपाभावः। सद्रत्नानि मुक्ताफलानि भर्म्माणि भूषा अलङ्कारोयस्याः शोभामिति पाठे तैः शोभते पचादित्वादन् सती वर्त्तमाना रत्नादीनां शोभा यस्येति वा। हेम स्वर्णं जातरूपं सुवर्णं भर्म्म हाटकं शातकुम्भमिति हलायुधः रघुवंश्यलक्ष्मीं संवंहयन्तीं सम्यक् वङ्गलीकुर्व्वतीं लोःकृत्याख्यानेञ्जिः वांढान्ति केति वंहादेशः॥४८॥

सुप्रातमासादितसम्मदं तद्वन्दारुभिः संस्तुतमभ्ययोध्यं। अश्वीयराजन्यकहास्तिकाढ्यमगात्सराजं बलमध्वनीनं॥४९॥

सुप्रातेति। विवाहं निर्व्वर्त्य प्रभाते अयोध्याभिमुखन्तद्बलन्दशरथस्यागात् गतवत्। सुप्रातन्निरुपद्रवत्वात् शोभनम्प्रातर्द्दिनमुखं यस्य बलस्य। सुप्रातसुश्वेत्यादिना समासान्तष्टिलोपश्च निपात्यते। आसादितसम्मदमाप्तहर्षं प्रमदसम्मदौ हर्ष इतिनिपातनम्। वन्दारुभिः संस्तुतं कृतस्तवम् अभ्ययोध्यम् अयोध्याभिमुखम् अभिप्रतीआभिमुख्य इति अव्ययीभावः। अश्वानां समूहो अश्वीयं केशाश्वाभ्यांयञ्छाविति छः राजन्यानां क्षत्रियाणां समूहो राजन्यकम्। गोत्रोक्षेत्यादिना वुञ् प्रकृत्याकेराजन्यमनुष्ययुवान इति प्रकृतिभावादपत्ययकारलोपो न भवति। हस्तिनां समूहो हास्तिकम् अचित्तहस्तीति ठक्। एषां सेनाङ्गत्वात् द्वन्द्वएकवद्भावः तेनाढ्यमुपचितमिति तृतीयेति योगविभागात्समासः। सह राज्ञेति विगृह्य साकल्यवचने यौगपद्ये वाव्ययी

ज०म०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भावः। अव्ययीभावेचाकाल इति सभावः अनश्चेति टच् समासान्तः। अध्वनीनमध्वानमलङ्गामीत्यध्वनोयखौ आत्माध्वानौ ख इति प्रकृतिभावः॥४९॥

भ० सुप्रातमित्यादि। तद्बलं दशरथसैन्यं अभ्ययोध्यं अयोध्यामभिमुखीकृत्य अगात् इणोगाद्यां शोभनं प्रातर्यस्य तत् सुप्रातं निश्चिन्तलात् निपातनेन स्वार्थे ष्णेन वा साध्यं। आसादितः प्राप्तः सम्मदो हर्षो येन वन्दारुभिः स्तुतिपाठकैः संस्तुतं वदिङ्नुत्यभिवादयोः श्ट्वन्द आरुः अश्वराजन्यहस्तिनां समूहेन आढ्यं प्रभूतं विकारसंघेत्यादिना समूहार्थे अश्वादीयः राजन्यहस्तिभ्यां कण् राज्ञा सह विद्यमानं सराजं राजसहितं अनवशिष्टं युगपद्वा इत्यर्थः। वःकसामीप्येति साकल्ये यौगपद्ये वा अव्ययीभावः अनइत्यनेनाप्रत्ययः। सहः सोऽकाले इति सः अध्वानमनुगच्छति ढघेकादिति ईनः मन्वर्ज्जानित्यादिना नलोपाभावः॥४९॥

विशङ्कटो वक्षसि वाणपाणिः सम्पन्नतालद्वयसः पुरस्तात्। भीष्मोधनुष्मानुपजान्वरत्निरैति स्म रामं पथि जामदग्न्यः॥५०॥

ज०म० विशेति॥ एवमस्य गच्छतः पथि मार्गे सप्तम्यां भस्य टेर्लोपः पुरस्तादयतः अस्तातीचेति पूर्व्वस्य पुरादेशः। रामोजामदग्न्यः जमदग्नेरपत्यं रामोऽयम् गर्गादिपाठाद्यञ् स ऐति स्म आगतवान् आङ्पूर्वादिणो लट् एत्येधत्यूट्खितिवृद्धिः। विशङ्कटो वक्षसि विशाल उरसि वेः शालच्छंकटचाविति शङ्कटच्।

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



वाण: पाणावस्येति वाणपाणि: प्रहरणार्थेभ्य इत्यादिना सप्तम्य न्तस्य परनिपात:। सम्पन्नोनिष्पन्नोयस्तालवृक्ष: स प्रमाणं यस्य स तथोक्त: प्रमाणे द्वयसच्। भीयते अस्मादिति भीष्म: भियः षुग्वेति औणादिको मक्प्रत्ययः वा षुगागमस्य। भीमादयो ऽपादान इत्यपादाने साधु:। धनुष्मान् धनुषा युक्त: संसर्गे मतुप्। जानुनो: समीपमुपजानु सामीप्येऽव्ययीभाव: उपजानु अरत्निर्यस्य स तथोक्त: प्रलम्बबाहुरित्यर्थ: ॥५०॥

विशङ्कट इत्यादि। अथ जामदग्न्य: परशुराम: पुरस्तात् पूर्व्वस्यां दिशि अग्रतो वा पथि रामं ऐति स्म आगत: जमदग्नेरपत्य मिति गर्गादित्वात् यञ्: पुरस्तादिति दिक्शब्दाद्दिग्देशकालेस्ता दिति स्तात्-पूर्व्वाधरावराणामिति पुरादेश:। वक्षसि विशङ्कटो विशाल: वाण: पाणौ यस्य वाणयुत: पाणिर्यस्येति वा। सम्पन्नो विशालोयस्तालवृक्ष: स परिमाणं यस्य दघ्नमात्रद्वयसच्प्रमाणे इति द्वयस: विभेत्यस्मात् भीष्मो निपातनात्। धनुष्मान् प्रशस्तधनुर्युक्त: मतुरस्त्यर्थे जानुनो: समीपमुपजानु तत्रारत्निर्यस्य दीर्घबाहुत्वात् अरत्निस्तु निष्कनिष्ठेन मुष्टिना इत्यमर:। रत्न्यरत्नी स्त्रियौ हस्तौ बद्धमुष्टिततांङ्गुली इत्यमरमाला ॥५०॥

उच्चैरसौ राघवमाक्रतेदं धनु: सवाणं कुरु मातियासी:। पराक्रमज्ञ: प्रियसन्ततिस्तं नम्र: क्षितीन्द्रो ऽनुनिनीषुरूचे ॥५१॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० उच्चैः॥ उच्चैर्महता ध्वनिना राघवन्दाशरथिं एवम्भूतम्ब्रा ह्मणमाकृत आहूतवान् स्पर्द्धायामाङ इत्यात्मनेपदम् आत्मने पदेष्वन्यतरस्यामिति क्लेरङ्। धनुः सवाणङ्कुरु धनुषि वाणमा रोप्य युद्धाय सज्जीभवेत्यर्थः मातियासीः मातिक्रम्य गमनङ्का र्षीः यातेर्माङि लुङ् अडभावः यमरमनमातांसक्चेति इट् इट ईटीति सिचो लोपः। अथ क्षितीन्द्रो दशरथः तमूचे ब्रुवो वचिः आदेशस्य स्थानिवद्भावेन कर्त्तुः क्रियाफलविवक्षायान्तङ् न वचेः परस्मैपदित्वात् वच्यादिना सम्प्रसारणम्। पराक्रमज्ञः यत स्तस्य पराक्रमञ्जानाति राजा प्रियसन्ततिः प्रिया सन्ततिर्यस्य रामे व्यापादिते माभूत्सन्तानविच्छेद इति नम्रः प्रणतो भूत्वा अनु निनीषुः अनुनेतुमिच्छुः तदनुनयमाह ॥५१॥

भ० उच्चैरित्यादि। असौ परशुरामः उच्चैर्महाशब्देन राघवं राममाकृत स्पर्द्धयामास आह्वानं कृतवान् स्पर्द्धायामाङः इति ह्वेञो संवत्सरस्यान्यात्मनेपदेति ङः। इदं मदीयं धनुः सवाणं कुरु अत्रै व बलं ज्ञात्वा युद्धं करिष्यामि एतावतैवापराजितोऽहमितिभा वः। अन्ये तु इदं त्वदीयं धनुः सवाणं कुरु धनुषि वाणमारोप्य यु द्धाय सज्जीभवेत्यर्थ इत्याहुः इदमिति हस्तनिर्द्दिष्टत्वादुक्तं माति यासीः मातिक्रम्य गच्छ मेत्यव्ययं निषेधे तद्योगेऽमनिषेधः यमर मनमेति इमसनौ। अथ क्षितीन्द्रो दशरथस्तं जामदग्न्यमूचे वचो ऽरे इति ब्रुञो वचादेशः स्थानिवद्भावात् कर्त्तुः क्रियाफलवत्त्वविवं क्षायां मं व्यग्रहेति खेर्ञ्जिः ग्रहस्वपाद्योरिति प्रकृतेर्ञ्जिः स किम्भू तः पराक्रमज्ञः परशुरामस्य पराक्रमं जानाति प्रिया सन्ततिः सन्तानो यस्य प्रियसन्तानः अतएव नम्रः प्रणतः सन् अनुनिनीषुः अनुनेतुमिच्छुः ॥५१॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अनेकशो निर्जितराजकस्त्वं पितॄनतार्प्सीर्नृपरक्ततोयैः। संक्षिप्य संरम्भमसद्विपक्षं कास्थार्भकेऽस्मिंस्तव राम रामे ॥५२॥

अनेति। संरम्भं क्रोधं संक्षिप्य उपसंहर क्षिपेः लोटि मध्यमैकवचने रूपम् शस् एकमेकमिति विगृह्य सङ्ख्यैकवचनाच्चेति शस् पश्चान्नञ्समासः। अनेकशोऽनेकप्रकारमिति क्रियाविशेषणमेतत् निर्जितम्पराजितं राजकं राज्ञां समूहो येन स निर्जितराजकः गोत्रोक्षेत्यादिना वुञ्। त्वं पुनः पितॄनतार्प्सीः प्रीणितवानसि कैः नृपरक्ततोयैः तृपप्रीणन इत्यस्माल्लुङ् सिच् हलन्तलक्षणा वृद्धिः। असद्विपक्षम् असन्नविद्यमानो विपक्षो यस्मिन् संरम्भे निर्जितराजकत्वात् रामो विपक्ष इति चेदाह कास्थार्भकेऽस्मिंस्तव राम रामे हे परशुराम अर्भके बालके रामे तव का आस्था क आदरोऽस्ति नैवेत्यभिप्रायः ॥५२॥ ज०म०

अनेकश इत्यादि। हे राम हे परशुराम संरम्भं क्रोधं संक्षिप्य संहर क्षिप्यैनुदि अनेकवारं निर्ज्जितं राजकं येन तथाभूतस्त्वं अतः क्रोधो न युक्तः नृपाणां रक्तानि रुधिराण्येव तोयानि तैस्त्वं पितॄन् अतार्प्सीः प्रीणितवान् एकविंशतिवारान् निःक्षत्रीकृत्य तद्रक्तैः पितृतर्पणकरणं तस्य प्रसिद्धं ञित्वतृपप्रीणने कृषमृषस्पृशेति विकल्पात् सिः वेमूदितिरधादित्वादिकल्पेमभावपक्षे व्रजवदेति त्रिः। संरम्भं कीदृशं असन्नवर्त्तमानो विपक्षो यत्र तादृशं निर्ज्जितराजकत्वात् रामो विपक्ष इति चेदाह अस्मिन् मत्पुत्रे रामे अर्भके भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



वालके तव का आस्था आदरो यत्नो वा न कापीतिभावः। आस्थाचालम्बनास्थानयत्नापेचासु कथ्यते इति विश्वः। रामपदद्वये ननामरूपाद्पि क्रोधो नोचित इति व्यज्यते। अनेकश एकमेकं इति विगृह्य संख्यैकार्थाद्वीप्सायामिति चशस् पश्चान्नञ्समः अनेकस्यापि संख्यावाचित्वात् तत एव चशस् इत्येके राजकमिति विकार संघेति राज्ञः समूहार्थे कण् ॥५२॥

अजीगणद्दाशरथं न वाक्यं यदा स दर्पेण तदा कुमारः। धनुर्व्यकार्षीद्गुरुवाणगर्भं लोकानलावीद्विजितांश्च तस्य ॥५३॥

ज०म० अजीग। दाशरथन्दशरथस्येदन्दाशरथन्तस्येदमित्यण् वाक्यम्वचनं यदा स्वदर्पेण स्वमदेन हेतुना जामदग्न्यः नाजीगणत् न गणितवान् गणसङ्ख्यान इत्यस्मादन्तवान्न वृद्धिः चङि चेति द्विर्वचनम् ईचगणइति अभ्यासस्येकारः तदा कुमारो रामो धनुर्व्यकार्षीत् आकृष्टवान् कृष आकर्षणे स्पृशमृशेत्यादिनोपसङ्ख्यानेन सिचि पत्ते रूपम् हलन्तलक्षणावृद्धिः षढोःकस्सीति कत्वम् कृतदारकर्मापि पुत्रः पितरि जीवति कुमार इति व्यपदिश्यते। गर्भयतीति गर्भः गुर्वाणोगर्भोयस्य धनुषः लोकांश्च स्वप्रभावाद्विजितान् तस्य परशुरामस्य अलावीत् छिन्नवान् लुनातेर्लुङि सिचि वृद्धौ रूपम्। समुच्छिद्यन्तामस्य लोका इति अमोघमस्त्रं मुक्तवानित्यर्थः ततःप्रभृति तस्य सर्वं तेजोऽपहृतम् ॥५३॥

भ० अजीगणदित्यादि। यदा स जामदग्न्यः दाशरथं वाक्यं दर्पेण

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



दर्पात् न अजीगणत् न गणितवान् दशरथस्येदमिति विकार संघेत्यादिना ष्णः। गणत्कसंख्याने वेङ्गणकथः खेर्न्यङीति खे रीङ् तदा कुमारो युवराजो वालको रामो धनुर्व्यकार्षीत् आकृ ष्टवान् कृषोलाकृषि कृषमृषेति सिः अजवदेति त्रिः षढोः कःसे इति कः क्रिलादिति षः। कीदृशं धनुर्गुरु महत् वाणो गर्भ इव मध्यव र्त्ती यत्र वाणो गर्भे यस्येति वा गुर्व्विति वाणविशेषणम्वा। ततस्तस्य जामदग्न्यस्य विजितान् वशीकृतान् लोकान् स्वर्गानलावीत् छिन्न वान् तत्र गमनं निषिद्धवानित्यर्थः लुञ्गिक्किदि टी॥५३॥

जिते नृपारौ सुमनीभवन्ति शब्दायमानान्यशनैर शङ्कं। वृद्धस्य राज्ञोऽनुमते बलानि जगाहिरेऽनेकमु खानि मार्गान्॥५४॥

जितेइति। जिते नृपारौ परशुरामे बलानि सैन्यानि मार्गान् पथः जगाहिरे अवष्टब्धवन्ति। वृद्धस्य राज्ञोदशरथस्यानुमते सति गच्छतेति। जामजग्न्यसंरम्भादसुमनांसि सुमनांसि सन्ति सुमनीभवन्ति बलानि अरुर्मनइत्यादिना च्चावन्त्यस्य लोपे अस्य च्चावितीत्वे रूपम्। शब्दायमानानि अशनैः सुष्ठु शब्दं कुर्वा णानि एवञ्जितस्तथा जितो नृपारिरिति शब्दवैरेत्यादिना क्यङ् अशङ्कन्निर्भयञ्जगाहिर इति क्रियाविशेषणम्। अनेकमुखानि पृ थग्भूतानि पूर्व्वभयेन वङ्कलीभूतत्वादनीकानाम्बङ्कत्वाद्वङ्कवचन मिति॥५४॥ जं॰म॰

जित इत्यादि। नृपाणां अरौ परशुरामे रामेण जिते सति वृद्ध म॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



स्य राज्ञोदशरथस्यानुमते अनुमतौ सत्यां बलानि सैन्यानि अशङ्कं यथा स्यात्तथा मार्गान् पथो जगाहिरे आक्रान्तवन्ति गाहङ्‌विलोडे। कीदृशानि पूर्व्वं जामदग्न्यभयात् असुमनांसि सुमनांसि भवन्ति च्विःक्षभ्वस्त्वभूततद्भावे इति च्विः। मनस्चुरिति सलोपे अकारस्य ईः अशनैरुच्चैः शब्दायमानानि जयशब्दं कुर्व्वाणानि शब्दसुखकष्टादेरिति ङ्यः घोज्यरे इति दीर्घः। अनेकमुखानि पूर्व्वं भयात् वर्त्तुलीभूय सम्प्रति पृथग्भूतानि॥५४॥

अथ पुरुजवयोगान्नेदयद्दूरसंस्थं दवयदतिरयेण प्राप्तमुर्व्वीविभागं। क्रमरहितमचेतन्नीरजीकारितक्ष्मां बलमुपहितशोभां तूर्णमायादयोध्यां॥५५॥

इति भट्टिकाव्ये प्रकीर्णकाण्डे सीतापरिणयोनाम द्वितीयः सर्गः॥

ज०म० अथ। अथेत्यानन्तर्य्ये बलन्दाशरथम् तूर्णं शीघ्रम् ञित्वरत्वरेत्यादिना पक्षे इडभावः। ज्वरत्वरेति वकारोपधयोरूट् रदाभ्यामिति नत्वम्। अयोध्यामायात् आगतम् आङ्पूर्व्वाद्यातेर्लङि रूपम्। पुरुर्महान्वेगोजवः तेन योगात् पूर्य्यते वर्द्धते इति पुरुः कुर्भ्रश्चेत्यधिकृत्य पृभिदिव्यधीत्यादिना कुप्रत्ययः। दूरसंस्थन्दूरे सन्तिष्ठत इति कः। उर्व्वीविभागन्नेदयत् अन्तिकङ्कुर्व्वत् अन्तिकशब्दात् समीपवाचिनः तत्करोतीति णिच् इष्टवद्भावादन्तिक

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



वाढयोर्नेदसाधाविति नेदादेशः पश्चाल्लट् शतरि शप् अयादेशः प्राप्तं विषयीकृतं चोर्व्वीविभागं भूविभागम् अतिरयेण अतिवेगेन दवयत् दूरीकुर्व्वत् पश्चाद्भागेन दूरशब्दात् पूर्व्वणिचि इष्ठवद्भावे च स्थूलदूरेत्यादिना यणादिपरलोपः पूर्व्वस्य च गुणः पश्चात्तथा एव लडादयः। क्लमरहितम् अपगतश्रमम् अचेतत् कियद्दूरमागतो ऽहमित्यबुध्यमानम् चितीसंज्ञान इत्येतस्य शतरि रूपम्। अनीरजा नीरजाः कारितेति अरुर्मन इत्यादिना च्वावन्त्यलोपः। अस्यच्वावितीत्वम् नीरजीकारिता क्ष्मा भूमिर्यस्यामयोध्यायाम् तां सिक्तसम्मृष्टभूतलामित्यर्थः। उपहितशोभाङ्कध्वजपताकाभिरारोपितशोभाम्॥५५॥

इति भट्टिकाव्यटीकायाञ्जयमङ्गलाख्यायाम्प्रकीर्णकाण्डे सीतापरिणयोद्वितीयः सर्गः॥

अथेत्यादि॥ अथानन्तरं बलं दशरथसैन्यं तूर्णं शीघ्रं अयोध्यां आयात् आङ्पूर्व्वाद्यातेर्लङ्। त्वरतेः क्ते श्विवावमवज्वरेति ऊठा सह वस्य ऊट् सूत्वा वेदिदिति तस्य नत्वं। कीदृशं पुरुजवयोगात् प्रचुरजवयोगात् दूरसंस्थं नेदयदन्तिकं कुर्व्वत् णिः कृत्याख्याने णिः वाढान्तिकेति नेदादेशः अतिरयेण अतिवेगेन प्राप्तं उर्व्वीविभागं दवयत् दूरं कुर्व्वत् णिः दवादेशः। क्लमरहितं अतिहर्षात् अपगतश्रमं अतएव अचेतत् कियद्दूरमागतमित्यजानत् चितीसंज्ञाने शतृः। कीदृशीमयोध्यां अनीरजा नीरजाः कारिता निर्धूलीकारिता क्ष्मा भूमिर्यस्यां सिक्तसंमृष्टभूतलामित्यर्थः मनश्चचुरिति चौ सलोपः उपहितशोभां ध्वजपताकादिभिः प्रापितदीप्तिं॥५५॥ भ०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



इति भरतसेनकृतायां मुग्धबोधिन्यां भट्टिटीकायां श्रीराम परिणयो नाम द्वितीयः सर्गः॥

वधेन संख्ये पिशिताशनानां क्षत्रान्तकस्याभिभवेन चैव। आढ्यम्भविष्णुर्यशसा कुमारः प्रियम्भविष्णुर्न स यस्य नासीत्॥१॥

ज॰म॰ वधेनेत्यादि। सङ्ख्ये संग्रामे पिशिताशनानां राक्षसानाम्पिशित मांसम् अशनं येषामिति तेषां वधेन हननेन हनश्चवध इति अप् प्रत्यये वधादेशः क्तप्रयोगे कर्म्मणि षष्ठी क्षत्रान्तकस्य परशुरामस्य अभिभवेन पराजयेन च ऋदोरप् चैवशब्दो निपातसमुदायः समुच्चये तेन हेतुभूतेन यशसा आढ्यम्भविष्णुः अनाढ्य आढ्यो भूतः कर्त्तरिभुव इति खिष्णुच् अरुर्द्विषदितिमुम् कुमारो यस्य न प्रियम्भविष्णुः यस्यापि प्राक् प्रियो न जातः पश्चादपि तथैव न प्रियोभूतः स नासीत् न बभूव॥१॥

भ॰ वधेनेत्यादि। संख्ये युद्धे पिशिताशनानां राक्षसानां वधेन क्षत्रियाणामन्तकस्य परशुरामस्य अभिभवेन च हेतुना यशसा आढ्यम्भविष्णुः समृद्धोभवन् कुमारो रामो यस्य न प्रियम्भविष्णुः स नासीदेव सर्व्वस्यैव प्रिय इत्यर्थः एवशब्दो नासीदित्यचान्वितः चैव शब्दः समुच्चये वा। अनाढ्य आढ्यो भवति इति प्रागप्रियोऽपि भूत्वा पश्चात् प्रियो भवति भुवोघेखिष्णुखुकञाविति घे खिष्णुः खित्यव्याजरुष इति मन् अरुर्द्विषा हदाद्यसीति ईम्॥१॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ततः सुचेतीकृतपौरभृत्यो राज्येऽभिषेक्ष्ये सुतमित्य नीचैः। आघोषयन् भूमिपतिः समस्तं भूयोऽपि लोकं सुमनीचकार ॥२॥

ततः। ततः प्रियम्भविष्णुताया अनन्तरम्भूमिपतिर्दशरथो लोकं सुमनीचकार किमयं सम्यक् पालयिष्यति नवेति असुचेतसः पौरा भृत्याश्च जाताः ते सम्यक् पालनात्सुचेतसः कृता येन स सुचेतीकृतपौरभृत्यः भूयोऽपि पुनरपि लोकं समस्तं सुमनीचकार कथमित्याह राज्ये राजकर्म्मणि पालने रक्षणे सुतं रामं अभिषेक्ष्ये तदभिषेकङ्करिष्यामीति सिचेरभयपदित्वात्तङ् अनीचैर्महता ध्वनिना आघोषयन् घोषणाङ्कारयन् सुचेतीसुमनीशब्दौ अरुर्मन इत्यादिना साधू ॥२॥ ज॰म॰

तत इत्यादि। ततोऽनन्तरं अहं राज्ये राजकर्म्मणि सुतमभिषेक्ष्ये अभिषिक्तं करिष्ये इति अनीचैरुच्चैराघोषयन् भूमिपतिर्दशरथः समस्तं लोकं भूयः पुनरपि सुमनीचकार असुमनसं सुमनसं कृतवान्। कीदृशः असुचेतसः सुचेतसः कृताः पौरा भृत्याश्च येन स तथा अभिषेककाले किमयं सम्यक् परिपालयिष्यति नवेत्याशङ्कया पौरभृत्यानामसुचेतस्त्वमासीत् सम्यक् पालनात् तेषां सुचेतस्त्वं कृतं रामस्य प्रियम्भविष्णुतया तदभिषेकमदृष्ट्वा पुनः पुनरसुमना लोक आसीत् रामाभिषेकाघोषणया पुनः पुनः सुमनसं चकार सुचेतीसुमनीशब्दौ पूर्व्ववत् मनश्चक्षुरित्यादिना सिद्धौ सिच्पशोरुभ् चरणे स्वङिति कङ्॥२॥ भ॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



आदिच्चदादीप्तकृशानुकल्पं सिंहासनं तस्य सपादपीठं। सन्तप्तचामीकरवल्गुवज्रं विभागविन्यस्तमहार्घरत्नं ॥३॥

ज०म० आदिच्चत्। तस्य रामस्य सिंहासनमादिच्चत् आदिष्टवान् एवंविधं कारयेति। दिशेः स्वरितेतो लुङि शलइगुपधादित्यादिना च्लेः क्सः अकर्त्तृगामिक्रियाफलत्वात्तिप् आदीप्तकृशानुकल्पञ्ज्वलिताग्नितुल्यं तस्य कारणमाह सन्तप्तचामीकरवर्णानि उत्तप्तसुवर्णवर्णानि वज्राणि यस्मिन् तथा विभागेषु विन्यस्तानि अतिमहार्घाणि रत्नानि पद्मरागादीनि यत्र सपादपीठं सह पादपीठेन ॥३॥

भ० आदिच्चदित्यादि। दशरथस्तस्य रामस्य सिंहासनं आदिच्चत् आदिष्टवान् दिशोऽतिसर्ज्जने टौ हशसोऽनिमिजुङ इति शक् शक्काजेति षङ् षढोःकःसि इति कः कीदृशं सम्यक् ज्वलिताग्नितुल्यं त्यादेशैाने इति कल्पः पादपीठेन सहितं अग्नितुल्यस्वर्णशोभितहीरकं विशिष्टदेशार्पितमहामूल्यपद्मरागादिकं ॥३॥

प्रास्थापयत्पूगकृतान् स्वपोषं पुष्टान् प्रयत्नाहृढगात्रबन्धान्। स्वभर्म्मकुम्भान् पुरुषान् समन्तात्पत्काषिणस्तीर्थजलार्थमाशु ॥४॥

ज०म० प्रास्था। तीर्थजलार्थम्पुरुषान्प्रयत्नात् आदरेण समन्तात्

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



र्व्वासु दिक्षु आशु शीघ्रमाख्यापयत् प्राहिणोत्। प्रपूर्वस्तिष्ठ तिर्गमने वर्त्तते तस्य हेतुमण्यन्तस्य लङि रूपं पूगकृतान् अपूगाः पूगाः कृता इति श्रेण्यादिषु च्व्यर्थवचनमिति समासः सङ्घीकृतानित्यर्थः स्वपोषम्पुष्टान् स्वेपुष इति णमुल् अमैवाव्ययेनेति समासः यथाविध्यनुप्रयोगश्च। दृढो गात्रबन्धो येषान्तान् संयतकायान् महाभारोद्वहनक्षमत्वात् सहेमकुम्भान् ससुवर्णकलसान् पत्काषिणः पादौ कषितुं हिंसितुं शीलं येषामिति सुप्यजातौ णिनिः हिमकाषिहतिषु चेति पदादेशः पदातीनित्यर्थः। आख्येति ख्यापाजीत्यादिना उण्॥४॥

प्राख्यापयदित्यादि। दशरथस्तीर्थजलार्थं समन्तात् सर्व्वासु दिक्षु आशु शीघ्रं पुरुषान् प्रयत्नात् आदरात् प्राख्यापयत् प्रपूर्वख्याधातुर्गत्यर्थः घो ञ्निःप्रेरणे ह्रीक्लीति पन् पूगकृतान् अभिधानात् अपूगाः पूगाः कृता इति च्व्यर्थे समासः संघीकृतानित्यर्थः स्वपोषं यथास्यात्तथा पुष्टान् स्वानां ज्ञातीनां पोषो यत्र पोषणक्रियायां पोषो घञन्तः गतार्थात् पुषोणम् तदनुप्रयोगश्चेति पाणिनीयादयः तन्मते स्वेन धनेन पुष्टानित्यर्थः दृढोगात्राणां बन्धो येषां भारोद्वहनक्षमत्वात् स्वर्णकलससहितान् पादकषणशीलान् कषवधे ग्रहादित्वाणिन् पादचारिण इत्यर्थः। अत्र पादस्य पदादेश इति पाणिनीयादयः स्वमते पद्शब्दोऽस्ति पदंघ्रिश्चरणोऽस्त्रियामित्यमरः केन उभ्यते पूर्य्यते इति कुम्भो निपातनात् ॥४॥

उच्चांश्चक्रुर्नगरस्य मार्गान् ध्वजान् बबन्धुर्मुमुचुः सधूपान्। दिशश्च पुष्पैश्चकर्व्विचित्रैरर्थेषु राज्ञा निपुणा नियुक्ताः॥५॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० उच्चान्। ये निपुणा अर्थेषु कार्य्येषु राज्ञा दशरथेन नियुक्ताः अधिकृतास्ते नगरस्य मार्गान् पथः उच्चान् सेकवतः प्रचक्रुः। उ उच्चणमुच्चा गुरोश्च हल इत्यकारः सा विद्यते येषामित्यर्श आदिभ्यो ऽच् इजादेश्च गुरुमत इत्यादिना आम्प्रत्यये प्रचक्रुरित्यनुप्रयोगो न घटते कृञ्चानुप्रयुज्यते इत्यनुशब्दस्य व्यवहितनिवृत्त्यर्थत्वात् ध्वजान्ववन्धुः उच्छ्रायितवन्तः मुमुचुः खधूपान् आकाशे घटिकादिभिर्धूपान्मुमुचुः प्रमुक्तवन्तः। दिशश्च पुष्पैश्चकरुः छादितवन्तः कृविक्षेप इत्यस्य लिटि ऋच्छत्यृतामिति गणः विचित्रैः नानाप्रकारैः ॥५॥

भ० उच्चामित्यादि। अर्थेषु प्रयोजनेषु राज्ञा नियुक्ता निपुणाः कर्म्मकुशला जना नगरस्य मार्गान् उच्चाम्प्रचक्रुः सिक्तवन्तः उच्च सेचने वीजादित्याम् भस्त्रन्चाम इतिसूत्रेणाम् इति पञ्चम्यैवेष्टसिद्धौ अनुग्रहणं उपसर्गक्रियाविशेषणव्यवधानेऽपि तदनुप्रयोगज्ञापपनार्थं इति रामानन्दाचार्य्येण व्याख्यातं तेनाच तेनैव सोपसर्गस्य कृञोऽनुप्रयोगः। क्रमदीश्वरेण तु सम्प्रादिकृभ्वस्तिभिश्चेति सूत्रं कृत्वा अयमेव श्लोको निदर्शितः। केचित्तु नगरस्य उच्चां सेकं प्रचक्रुः भग्नान् मार्गान् ध्वजांश्च ववन्धुरित्याहुः। जयमङ्गलादिस्तु उच्चानिति पठित्वा उच्चणमुच्चा सास्त्येषामिति अर्शआदित्वाद इति व्याख्यातं। ध्वजान् ववन्धुः उत्थापितवन्तः खे आकाशे धूपान् मुमुचुः त्यक्तवन्तः पुष्पैर्दिशश्चकरुच्छादितवन्तः कृशविक्षेपे ऋतो णुः कित्यामिति णुः ॥५॥

मातामहावासमुपेयिवांसं मोहादपृष्ट्वा भरतं तदानीं। तत्कैकयी सोढुमशक्नुवाना ववार रामस्य वनप्रयाणं ॥६॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



माता। तत्पूर्व्वोक्तमभिषेकसंविधानं सोढुमशक्नुवाना असहमाना कैकयी रामस्य वनप्रयाणम्ववार प्रार्थितवती राज्ञ इत्यर्थात्। सहेः शक्नोतावुपपदे शकधृषेत्यादिना तुमुन् तच नञाशक्त्यर्थस्य प्रतिषेधेऽपि न दोषः प्रतिषेधस्य वहिरङ्गत्वात् शक्नोतेः परस्मैपदित्वात् शानज् नास्ति ताच्छील्यवयोवचनेत्यादिना चानश् स्यादित्वाच्छ्नुः अचिश्नुधात्वित्यादिना उवङ् किं कृत्वेत्याह तदानीम्प्रार्थनाकाले देशान्तरावस्थितत्वात् किमेवंक्रियते न वेति न भरतम्पृष्टवती। देशान्तरावस्थितिन्दर्शयन्नाह मातामहावासमिति मातुः पिता मातामहः पितृव्यमातुलेत्यादिना निपातनात् डामहच्। आवासः निलयम् आवसत्यस्मिन्निति अधिकरणे घञ्। उपेयिवांसम् उपेयिवान् नाश्वाननूचानश्च इत्यादिना निपातितः मोहादज्ञानात् दूतप्रेषणेनापृष्ट्वा रामस्येति कर्त्तरि षष्ठी वनाय प्रयाणङ्गमनमिति चतुर्थीति योगविभागात्समासः। गत्यर्थकर्म्मणीत्यादिना चतुर्थी परत्वात्कृद्लक्षणया षष्ठ्या भवितव्यमिति चेत् न पुनर्द्वितीयाग्रहणात्परामपि षष्ठीम्बाधित्वा द्वितीयैव यथा स्यादिति। यद्येवन्द्वितीयैव स्यात् न चतुर्थी नैष दोषः द्वितीयाग्रहणस्योपलक्षणार्थत्वात् तथा च वृत्तावुभयमुक्तं ग्रामङ्गन्ता ग्रामाय गन्तेति॥ ६॥ ज०म०

मातामहेत्यादि। तदानीं तस्मिन् समये तत्पूर्व्वोक्तमभिषेकविधानं सोढुमशक्नुवाना असमर्था कैकयी मोहादज्ञानात भरतं अपृष्ट्वा रामस्य वनप्रयाणंववार राजानं प्रार्थितवती। भरतं किम्भूतं मातामहावासमुपेयिवांसं उपगतं अपृष्ट्वेत्यत्र हेतुरयं एतेन भरतदोषपरिहारः कृतः मातृपितृभ्यां तत्पितरि डामहट् निपातनात् आवसन्त्यस्मिन् आवासो गृहं अधिकरणे घञ् भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



उपपूर्व्वाद्दिनः कसुः वसोर्धस्वेकाजितीम् खेःकितिर्घ इति र्घः यि नाऽच्यणाविति यादेशः सहेस्तुमि होढोभाविति हस्य ढः ढभा त्तयोरिति तस्य धः ष्टुभिरिति धस्य ढः। सहवहोरोढीति अत ओत्वं ढ्रोढ्रीति ढलोपः शकृनिरश्नौ शक्तिवयस्ताच्छील्ये इति शतुः शानः वनाय वनस्य वा प्रयाणं वनप्रयाणं गत्यर्थमन्यढ इति चतु र्थी ढघेक्तीति क्तप्रयोगात् ढे षी अनयोर्व्विवचाधीनत्वात् चतु र्थ्या षष्ठ्या वा विग्रहः॥६॥

कर्णेजपैराहितराज्यलोभा स्त्रैणेन नीता विकृतिं लघिम्ना। रामप्रवासे व्यमृशन्न दोषं जनापवादं सन रेन्द्रमृत्युं॥७॥

ज०म० कर्णे। कर्णे जपन्ति कर्णेजपाः सूचकाः मन्थरादयः स्तम्बकर्ण योरित्यच् तत्पुरुषे कृतिवहुलमिति सप्तम्या अलुक् तैराहितः आनायितो राज्यलोभो यस्याः सैवं स्त्रैणेन स्त्रिया अयं स्त्रीपुंसा भ्यान्नञ्स्नञाविति नञ् लघोर्भावो लघिमा पृथ्वादित्वादिमनिच् टिलोपः तेन विकृतिमन्यथात्वन्नीता कैकयी रामप्रवासे सति दोष न व्यमृशत् नालोचितवती मृश आमर्शन इति तौदादिकस्य ल ङि रूपम् किंस्वरूपन्दोषम् जनापवादं लोकवैमुख्यं राज्यार्हो ज्येष्ठः पुत्रोऽनया प्रव्राजित इति। नरेन्द्रस्य दशरथस्य मृत्युना सह वर्त्तमानम्॥७॥

भ० कर्णेजपैरित्यादि॥ कैकयी रामप्रवासे जनापवादरूपं दोषं न व्यमृशत् नालोचितवती मृशक्षि मृशि राजार्होज्येष्ठोऽनया नि ष्कासित इति लोकापवादः किम्भूतं नरेन्द्रस्य दशरथस्य मृत्य

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ना सहितं दोषानालोचने हेतुगर्भविशेषणमाह कर्णेजपैः पिशुनै र्मन्थरादिभिराहित आरोपितो राज्यस्य लोभो यस्याः कर्णे जपन्ति इति पचादित्वादन् अभिधानात् सप्तम्या अलुक्। परकीयबुद्ध्या दोषकर्तृत्वे हेतुमाह स्त्रैणेन स्त्रीसम्बन्धिना लघिम्ना लघुत्वेन विकृतिं प्रकृतेरन्यथात्वं नीता प्रापिता स्त्रिया अयं स्त्रैणः पुंस्त्रियोरिति नण् लघोर्भावो लघिमा गुणादिमन्भावे इति इमन् औसंस्यड्डि दिति ङित्वे टेर्लोपः ॥७॥

वसूनि देशांश्च निवर्त्तयिष्यन्रामं नृपः संगिरमाण एव। तयावजज्ञे भरताभिषेको विषादशङ्कुश्च मतौ निचख्ने ॥ ८ ॥

वसूनि। रामं निवर्त्तयिष्यन् रामं निवर्त्तयितुं वसूनि द्रव्याणि देशांश्च सङ्गिरमाण एव प्रतिजानान एव दास्यामीति नृपो राजा कैकेय्या तदनङ्गीकरणादवजज्ञे अवज्ञातः ज्ञा इत्ययमातुरव पूर्वोऽवज्ञाने वर्त्तते तस्मात्कर्मणि लिट् गमहनेत्युपधालोपः तत्र वृतेर्हेतुमण्यन्तात्क्रियार्थोपपदे लट्। सङ्गिरणञ्च क्रिया गिरे स्तौदादिकादवाङ्ग इति अधिकृत्य समःप्रतिज्ञान इति तङ् शानच् ऋत इत् आनेमुक्। इदञ्चापरमनुष्ठितन्तया भरतो राज्येऽभिषिच्यतामिति भरताभिषेको मतौ मनसि निचख्ने निखातः कर्मणि लिट् गमहनेत्यादिना उपधालोपः तथा विषादः शङ्कुरिव शल्यमिव निचख्ने ज्येष्ठत्वात् नायं सम्भिषिच्यत इति वि

ज०म०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



षाद:। संग्रामात्किल परिश्रान्तमागतन्दशरथङ्कैकेयी परिचचार तेन परितुष्टेनोक्तङ्किन्ते दास्यामीति स प्राह यदार्थयिष्यते तदा यूयन्दास्यथेति स तदवसरम्बुद्धा वरद्वयमार्थितवती एको रामस्य वनगमनं द्वितीयो राज्ये भरतो ऽभिषिच्यतामिति ॥ ८॥

भ० वसूनीत्यादि। रामं निवर्त्तयिष्यन् निवारयितुं कैकय्यै वसूनि धनानि देशांश्च संगिरमाण: रामस्तिष्ठतु सर्व्वं दास्यामीति प्रतिजानान एव नृपोदशरथस्तया कैकय्या तदनङ्गीकारात् अवजज्ञे अनादृत: पूर्व्वप्रतिज्ञातस्य तदभिमतप्रदानस्यानिर्व्वाहात् ज्ञाअवबोधने अवपूर्व्वोऽयमनादरे वर्त्तते कर्म्मणि ठी वृतेः प्रेरणे ण्यन्तात् ग्रतृ: गिरतेस्तौदादिकात् समःप्रतिज्ञायामिति मं भरताभिषेकस्तत्संशयितेन विषादरूपशङ्कुस्य मतो मनसि निचख्ने चिन्तित:। यद्वा दशरथस्य नृपस्य मनसि भरताभिषेको निचख्ने आरोपित: तत्प्रार्थनाया: पूर्व्वं प्रतिज्ञाभयेन तत्स्वीकारात् शङ्कुरिव यो विषाद: सोऽपि निचख्ने तत्प्रभृति विषादावतारात् खने: कर्म्मणि ठी हनगमजनेत्युङ्लोप:। पुरा परितुष्टेन राज्ञा कैकय्यै वरद्वयं देयमिति प्रतिश्रुतं तच्चेदानीमेकं रामस्य प्रवाससमपरं पुत्रस्य राज्यं कैकयी प्रार्थयामासेति प्रसिद्धि: ॥ ८॥

ततः प्रविव्राजयिषुः कुमारमादिष्टवदस्याभिगमं वनाय। सौमित्रिसीतानुचरस्य राजा सुमन्त्रनेत्रेण रथेन शोचन् ॥९॥

ज°म० ततः। कैकेयीप्रार्थनानन्तरं राजा कुमारं रामं प्रविव्राज

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



यिषुः प्रव्रजन्तमेनमस्राजयितुमिच्छुः व्रजेर्हेतुमण्णन्तात्सन् अस्य कुमारस्य रथेन वनायाभिगमसभिगमनम्। ग्रहवृद्दनिश्चिगम स्चेत्यप् आदिचत् आदिष्टवान् अस्येति कर्त्तरि षष्ठी वनायेति गत्यर्थकर्म्मणोति चतुर्थी सौमित्रिसीतानुचरस्य लक्ष्मणसीतास हायस्य सुमित्राया अपत्यम् वाह्वादित्वादिञ् सहचरत्वेनाभ्यर्हि तत्वात् पूर्व्वनिपातः अनु पश्चाच्चरतीति अनुचरः भिक्षासेनादा येषुचेति चकारस्यानुक्तसमुच्चयार्थत्वात् टः अनुचरश्चानुचरी च पुमान् स्त्रियां तावनुचरौ सौमित्रिसीते अनुचरौ सहायौ यस्य। कालापिकास्ततोऽन्यत्रापि पठन्ति अनधिकरणोपपदे चरेष्टः इ त्यर्थः। नीयतेऽनेनेति नेत्रं लोचनं दाम्नीत्यादिना ष्ट्रन् सुम न्त्रनामा रथवाहको नेत्रमिव यस्य रथस्य तद्वशात्तस्य प्रवृत्तेः शोचन् परिदेवयमानो राजा॥ ८॥

तत इत्यादि। कैकयीप्रार्थनानन्तरं राजा शोचन् कुमारं रामं प्रव्रज्यां कारयितुमिच्छुः अस्य रामस्य रथेन वनाभिगमनं आदि ष्टवान् हृशसइत्यादिना सक्। व्रजेः प्रेरणे ण्यन्तात् वनायेति गत्यर्थमन्यढे इति कर्म्मणि चतुर्थी श्रीपतिदत्तादयस्तु नित्यं कर्म्म णि तुम्प्रयोगिनश्चतुर्थीत्याहुः वनं गन्तुमित्यर्थः कीदृशस्य राम स्य सीतालक्ष्मणसहायस्य सुमित्राया अपत्यं इति वाह्वादित्वात् षणः अनुचरतीति अनुचरः कर्म्मप्रतिरूपकोऽयमनुशब्दः तेन हन चरगष्टक् इति टक्। रेफेकैकौच परे इति निर्दिशता स्त्रीपुंसयो स्तन्मात्रकृतभेदयोरेकशेषः पुमान् भवतीति सूचितं तेन अनुचरश्च अनुचरी च अनुचरौ सौमित्रिसीते अनुचरौ यस्य स तथा। यद्वा सौमित्रिसीताभ्यामनुचर्य्यते यः स तथा घञलनटोघे इति कर्म्मणि

भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अत्र प्राग्भावस्य विवक्षाधीनत्वात् सौमित्रेः प्राग्भावः अभ्यर्हितस्य प्राग्भाव इति ये वदन्ति तन्मते सदा सहचरत्वेन सौमित्रेरभ्यर्हितत्वं कीदृशेन रथेन सुमन्त्रोनाम कश्चित् स नेत्रो नायको यस्येति तेन नेत्रं रथे च नाथाच्च नेत्रो नेतरि मेद्यवदिति विश्वः। सुमन्त्रो नेत्रं चक्षुरिव यस्येति केचित् नीञः त्रासुविति त्रः ॥ ९ ॥

केचिन्निनिन्दुर्नृपमप्रशान्तं विचुक्रुशुः केचन सास्र मुच्चैः। ऊचुस्तथान्ये भरतस्य मायां धिक्कैकयीमित्यप रोजगाद ॥१०॥

ज०म० केचित्॥ राज्ञा वनगमने समादिष्टे सति केचिज्जना नृपन्निनिन्दुः कुत्सितवन्तः णिदिकुत्सायाम् अप्रशान्तं वृद्धभावेऽपि स्त्रीवश्यम्। केचन केचित्सास्रं सवास्पमुच्चैः सुष्ठु विचुक्रुशुः सुतरामाक्रन्दितवन्तः तथान्ये भरतस्य मायां शाठ्यमूचुः उक्तवन्तः। तत्कृतोऽयं प्रयोगो येनात्मस्मरणार्थं मातामहनिवासे स्थित इति। अपरो धिक्कैकयीं ययैवमनुष्ठितमिति जगाद गदितवान् धिगुपर्य्यादिषु त्रिष्विति धिग्योगे द्वितीया॥ १०॥

भ० केचिदित्यादि। राज्ञि रामस्य वनगमनमादिष्टवति सति केचिज्जना नृपं निनिन्दुः णिदिकुत्सने कीदृशं अप्रशान्तं वार्द्धकेऽपि स्त्रीवशीभूतत्वात् शान्तिरहित केचन सास्रं सवास्पं उच्चैर्महाध्वनिना विचुक्रुशुः क्रन्दितवन्तः केचित् केचन इत्यत्र किमः क्त्यन्ताच्चिचणाविति विद्यानिवासस्त्रेण चिचणौ किम्वा असाकल्येतुचिचणाविति

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कोषात् विभक्त्यन्तक्रिमः परमनयोः प्रयोगः अन्ये भरतस्य मायां शायं जचुः मातरमेवं राज्यलोभाय नियुज्य स्वदोषहरणार्थं मातामहगृहं गतवानिति मायार्थः। अपरः कश्चित् केकयीं धिगिति जगाद धिक्समयेति द्वितीया धिगिति निन्दायां अपर इत्यत्र एकवचनात् अल्प एव लोकः केकयीं निन्दति बहवस्तु राजानं केकय्याः स्त्रीलेन स्वभावतोमन्दबुद्धित्वं नृपस्य तु तथाविधस्यापि स्त्रीवचनान्मतिभ्रंश इति महान् दोष इति व्यज्यते तेन प्रक्रमभङ्गोऽत्र न दोषावहः॥१०॥

गतो वनं श्वोभवितेति रामः शोकेन देहे जनतातिमात्रं। धीरास्तु तत्र च्युतमन्यवोऽन्ये दधुः कुमारानुगमे मनांसि॥११॥

गतो॥ श्व आगामिनि दिवसे वनङ्गतो रामो भवितेति तास्जनता जनसमूहः ग्रामजनबन्धुइत्यादिना ताल् देहे दग्धा कर्म्मणि लिट् अतएकहलित्येलाभ्यासलोपौ गत इति भूतकालः श्वोभवितेति भविष्यत्कालेन सम्बध्यमानः साधुः धातुसम्बन्धे प्रत्यया इति। ये तु तत्र धीराः ते च्युतमन्यवो विगतशोकाः सन्तः कुमारानुगमे कुमारस्य पश्चाद्गमननिमित्तं मनांसि दधुः कृतवन्तः राममनुव्रजाम इति निमित्तात्कर्म्मसंयोगे सप्तमीति। मनांसीति कर्म्मणा योगात्॥११॥ जं०स०

गत इत्यादि। रामः श्वो भाविदिने वनं गतो भविता इति हेतोः शोकेन जनता जनसमूहोऽत्यर्थं देहे दग्धा दहेः कर्म्मणि ठौ तृफ भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



त्वेति अतएवं खिलोपश्च। जनखलादित्वाज्जनात्तः संधे स्त्रीत्वम भिधानात् भवितेति भवद्भूतभव्ये इति भविष्यति डी श्वःप्रभृति भ विष्यत्कालमाचे अभिधानात् श्वइति न व्यर्थं तत्सम्बन्धात् गत इति धातुसम्बन्धे प्रत्यया इतिवचनात् भविष्यत्कालेऽपि साधुः अ न्ये तु तत्र ये धीरास्ते च्युतमन्यवो विगतशोकाः सन्तः कुमारस्य रा मस्य पश्चाद्गमने मनांसि दधुः धृतवन्तः धाञष्व्यारूपं अनुगम इति ढेनार्घादिति सप्तमो विषयसप्तमो वा ॥ ११ ॥

प्रस्थास्यमानावुपसेदुषस्तौ शोशुच्यमानानिदमूच तुस्तान्। किं शोचतेहाभ्युदये वतास्मान् नियोगलाभे न पितुः कृतार्थान् ॥ १२ ॥

ज॰म॰ प्रस्था। तौ रामलक्ष्मणौ प्रस्थास्यमानौ गमिष्यन्तौ समव प्रविभ्यःस्थ इति तङ् जनान् इदं वक्ष्यमाणमूचतुः उक्तवन्तौ ब्रु वीत्यर्थग्रहणात् वचेर्द्विकर्मकता उपसेदुषस्तौ ढौकितवतः ज नान् भाषायांसदवसेत्यादिना क्वसुः। शोशुच्यमानान् अत्यर्थं शोकङ्कुर्व्वतः भृशार्थे यङ् किमूचतुरित्याह किं शोचतेति हे जनाः कस्मादस्मान् शोचत परिदेवयध्वम् विधावपूर्व्वार्थप्रकाशने लोट् इहाभ्युदये वतशब्दो विस्मये तस्मिन् आश्चर्य्यभूते अभ्युदये वृद्धौ सत्याम्। कुत इत्याह पितुर्न्नियोगलाभेन वनगमना ज्ञालाभेन कृतार्थान् लब्धप्रयोजनान् कृतार्थत्वादशोच्या वय मित्यर्थः ॥ १२ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



प्रस्थास्यमानावित्यादि। प्रस्थास्यमानौ गमिष्यन्तौ तौ रामल क्ष्मणौ उपसेदुषः उपसन्नान् जनानिदं वक्ष्यमाणं ऊचतुः। किम्भू तान् शोशुच्यमान् पुनःपुनरतिशयेन शोचतः सूचसूचेत्यादिना यङ् खेर्नः प्रस्थास्यमानाविति प्रतिज्ञानिर्णयेत्यादिना संपूर्व्वात् तिष्ठतेर्भ्रं स्यमानः। उपसेदुष इति उपपूर्व्वात् सदेर्छीपमवदिति क सुः वसोर्घसे इतीस् तृफलेति अतएत्वं खिलोपस्य वसोर्भ्वःसेमपी ति उः किमूचतुरित्याह इहाभ्युदये वृद्धौ सत्यां किमस्मान् यूयं शोचत विधिनिमन्त्रणेत्यचादिशब्दात् विधावपूर्व्वप्रकाशने गी व तेति खेदानुकम्पासन्तोषविस्मयामन्त्रितेस्वपीति वर्द्धमानः अभ्युद यः कुत इत्याह पितुर्नियोगस्य लाभेन वनगमनाज्ञालाभेन कृता र्थान् लब्धप्रयोजनान् अस्मानिति द्वयोरप्यसदोवङ्गत्वमिति परः स्मते वाह्याध्यात्मिकभाववङ्गत्वविवचया सीतान्वितत्वाद्वा ॥१२॥ भ°

अस्रष्ट योयस्य भयेष्वरचीद्यः सर्व्वदासानपुषत्स्वपो षं। महोपकारस्य किमस्ति तस्य तुच्छेन दानेन वन स्य मोक्षः ॥१३॥

अस्रष्ट यः। अस्रष्ट जनितवान् सृजेर्दैवादिकस्यात्मनेपदित्वात् लुङि रूपम् न तौदादिकस्य परस्मैपदित्वात् सृजिदृशोरित्यम् यश्च भयेषु सत्सु अरचीत् पालितवान् रचपालन इत्यस्य लुङि रूपम् यः सर्व्वदा सर्व्वकालं सर्व्वैकान्येत्यादिना दाप्रत्ययः य स्मापुषत् स्वपोषन्धनेनापुषत् पुष्टवान् पुषेर्लङि रूपम् पुषादित्वा दवाङ् स्वपुष इति णमुल् अमैवाव्ययेनेति समासः यथाविध्यनु ज°भ°

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



प्रयोगस्य तस्य पितुः सम्बन्धिनोमहोपकारस्य किमस्ति मोचः प्र त्युपकारो नैवेतिभावः केनेत्याह तुच्छेन असारेण वनस्य यानेन यातेर्भावे ल्युट् वनस्येति शेषसामान्ये षष्ठी कृल्लक्षणायास्तु षष्ठ्या गत्यर्थकर्म्मणि चतुर्थी बाध्यमानत्वात्॥ १३॥

भ० असृष्टेत्यादि। योऽस्मान् असृष्ट जनितवान् सृजेश्वविसर्गे य श्च भयेषु अरक्षीत् रक्षेस्मां रूपं यः सर्व्वदा सर्व्वकालं अस्मान् स्व पोषं अपुषत् स्वेन धनेन पुष्टवान् स्वपोषमिति चणम्वाशीचण्येइत्यत्र वाशब्दस्य व्यवस्थावाचित्वाच्चणम् तदनुप्रयोगस्त्वभिधानात् अपुष दिति शासलिद्युदिति ङः सर्व्वदा इति सर्व्वैकात्काले दाच् तस्य पितुः सम्बन्धिनो महोपकारस्य तुच्छेन लघीयसा वनस्य गमनेन किं मोचः प्रत्युपकारोऽस्ति नास्त्येवेतिभावः वनस्येति ढघे कृतीति कर्म्मणि षष्ठी॥१३॥

विद्युत्प्रणाशं स वरं प्रनष्टो यद्दोर्द्धशोषं तृणवद्विमु क्तः। अर्थे दुरापे किमुत प्रवासे न शासने ऽवास्थित यो गुरूणां॥ १४॥

ज०म० विद्युत्॥ अर्थे कार्य्यविशेषे दुरापेऽपि कृच्छ्राप्येऽपि ईषद्दुस्स्वित्यादिना खल गुरूणां यच्छासनमादेशः तस्मिन् योनावा स्थित नावस्थितवान् अवपूर्व्वात्तिष्ठतेर्लुङ् समवेत्यादिना तङ् स्थाघोरिच्चेति कित्त्वमित्वञ्चा ह्रस्वादङ्गादिति सिचोलोपः स वरं विद्युत्प्रणाशं प्रनष्टः विद्युदिवोत्पत्त्यनन्तरमेव विनाशङ्गतः उ पमाने कर्म्मणि चेति चकारात् कर्त्तोर्जीवपुरुषयोरित्यतः

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कर्त्तृग्रहणानुवृत्तौ कर्त्तृवाचिनि विद्युच्छब्द उपपदे णमुल् उप सर्गादसमास इत्यादिना णलम् यद्वेत्यथवा स ऊर्द्ध्वशोषन्तृण वदिशष्कः ऊर्द्ध्वशुषीत्यादिना णमुल् उभयत्रामैवेत्यादिना समासः यथा विध्यनुप्रयोगश्च किमु प्रवासे किम्पुनः प्रवासविषये यच्छासनन्तच्च तावदनवस्थितस्य सुतरामेव पूर्व्वोक्तं प्रयुज्यते ॥१४॥

विद्युदित्यादि। दुरापे दुःखेन प्राप्येऽर्थे प्रयोजने गुरूणां शासने आज्ञायां यो न अवास्थित न तस्थौ स वरं विद्युत्प्रणाशं प्रनष्टो विद्युदिव उत्पत्त्यनन्तरमेव नष्टः चणश्चेत्यच वाशब्दस्य व्यवस्थावाचित्वात् कर्त्तुरुपमानात् नशोगतार्थाच्चणम् तदनुप्रयोगस्याभिधानात् प्राग्वन्नोण इति शान्तनशोणलं दुराप इति ईषद्दुःसोः खल्भावढे इति खल् अवास्थितेति अवपूर्व्वात्तिष्ठतेः प्रतिज्ञानिर्णय इति मं थ्यांसिः स्थादोर्डिश्छीमिनणुरिति ङित्वस्य गुणाभावः झस् स्यादिति सेर्लोपः। शासनं राजदत्तोर्व्वीलेखाज्ञाशास्त्रशास्तिष्विति विश्वः। वरं मनागिष्टे देवकल्पितजामाचोर्व्वरः श्रेष्ठे पुनस्त्रिषु। मनागिष्टे भवेत् क्लीवमन्ये त्वाऊस्तदव्ययमिति रन्तिदेवः यद्वा अथवार्थे तृणवदूर्द्ध्वशोषं विशुष्क ऊर्द्ध्वशुष्क इत्यर्थः ऊर्द्ध्वाच्छषेर्गतार्थाच्च तदनुप्रयोगस्याभिधानात् किमु सुप्रवासे सुकरप्रवासविषये यत् शासनं तच्च योनावास्थित स किं पुनः सुतरामेव पूर्व्वोक्तं युक्तं किमुतेति क्वचित् पाठः॥१४॥

पौरा निवर्त्तध्वमिति न्यगादीत्तातस्य शोकापनुदा भवेत। मा दर्शतान्यं भरतञ्च मत्तो निवर्त्तयेत्यादरयं स्म हतं॥१५॥

त

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज°म° पौराः॥ हे पौराः यथागतन्निवर्त्तध्वम् विधा लोट् इति तान्व्यगादीत् उक्तवान् रामः गदेरतोहलादेरिति वृद्धिः इट इटीति सिचोलोपः तातस्य पितुः शोकापनुदाः शोकस्यापह र्त्तारो भवेत तुन्दशोकयोरित्यादिना कः भवतेर्विधौ प्रार्थनायां वा लिङ् मध्यमपुरुषवहुवचनम् भरतश्च मत्तो मत्तः सकाशात् अस्मदः पञ्चम्यास्तसिल् प्रत्ययोत्तरपदयोश्चेति मदादेशः अन्यं भरतम्मा दर्शत मा द्रष्टारः स्थः अपि तु योऽहं सएव भरतः स च प्रतिष्ठितः राज्यम्पालयिष्यतीत्येव न्यगादीत् दृशेर्माङि लुङ् इरि तोवेत्यङ् ऋदृशोऽङि गुणः निवर्त्तय रथमिति सूतञ्च सुमन्त्रमा हस्म लट् स्म इति लट् ब्रुवः पञ्चानामित्याहादेशः तिपोणल् ॥ १५ ॥

भ° पौरा इत्यादि। हे पौराः पुरवासिनो यूयं निवर्त्तध्वं निवृत्ता भवत विधिनिमन्त्रणेति विधौ गी। तातस्यास्मत्पितुः शोकापह र्त्तारो यूयं भवेत विधिनिमन्त्रणेति विधौ प्रार्थनायां खी ख्याया युस्यामामिति याशब्दस्य इत्वं शोकापनुदा इति क्षगृह्या इति इजुङ्लात् नुदेः कः मत्तोऽन्यं भरतं यूयं मा दर्शत अहमिव सोऽपि पालयिष्यतीति ध्वनिः। दृशिरौप्रेक्षणे मा योगे टी इरनुबन्धात् शासुलिद्यदिति विकल्पितोङः दृशोर्णुरिति गुणः मत्त इति अ न्यारभ्येति पञ्चमी तसक्तेरिति तस् वाञ्छ्यात् त्यदांटेरक्काविति न टेरदइत्युक्तं रामो न्यगादीत् उक्तवान् हसादेः सेम इतिवृद्धिः त्वं रथं निवर्त्तयेति सूतं सारथिं सुमन्त्रमाहस्म की स्मेनातीत इति स्मेन योगेऽतीते की पञ्चतिप्पञ्चणव्याहस्येति तिपोणप् ब्रुव आ हादेशः ॥१५॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज्ञात्वेङ्गितैर्गत्वरतां जनानामेकां शयित्वा रजनीं सपौरः। रक्षन् वने वासकृताद्भयात्तान् प्रातश्छलेनापजगाम रामः॥१६॥

ज्ञात्वा। निवर्त्तध्वमित्युक्ते ये तत्रानिवृत्ताः तेषां जनानां रामो गत्वरतां गमनशीलतां ज्ञात्वा गत्वरश्चेति निपातितः तैरिङ्गितैरभिप्रायसूचकैश्चेष्टितैः इङ्गतेर्भावे निष्ठा वनेवास इति सप्तमीति योगविभागात् समासः शयवासवासिष्विति विभाषा सप्तम्या अलुक् तेन कृतात्सिंहादिभयात् रक्षन् पालयन् तान् पौरान् सपौरः पौरैः सह एकां रजनीं शयित्वा कालाध्वनोरिति द्वितीया शयित्वेति नक्त्वासेडिति कित्त्वप्रतिषेधात् गुणो भवति प्रातः प्रातः काले छलेन सन्ध्यावन्दनादिव्याजेन अपजगाम गतवान्॥१६॥ ज०म०

ज्ञात्वेत्यादि॥ निवर्त्तध्वमित्युक्तेऽपि तत्रानिवृत्तानामिङ्गितैरभिप्रायबोधकैश्चेष्टितैर्गत्वरतां गमनशीलतां ज्ञात्वा रामः सपौरः पौरैः सह एकां रात्रिं शयित्वा तान् जनान् वने वासकृताद्भयात् रक्षन् प्रातश्छलेन सन्ध्यावन्दनादिव्याजेन अपजगाम इङ्गितैरिति इगिगत्यां भावे क्तः गत्वरतामिति त्वरप् मस्य तस्य रजनीमिति देशाध्वकालेति कर्म्मसंज्ञा शयित्वेति सेमचुधेत्यादिना किन्निषेधात् पुगन्तलघूपधस्येति गुणः वनेवास इति अकालवाचिनः शयवासवासिष्विति सप्तम्या अलुगिति परः। स्वमते सरसिजमित्युदाहरता क्वचित् समासे विभक्तेरलुगिति सूचितं॥१६॥ भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अस्राक्षुरस्रं करुणं रुदन्तो मुहुर्मुहुर्न्यश्वसिषुः कवोष्णं। हा राम हा कष्टमिति ब्रुवन्तः पराङ्मुखैस्ते न्यवृतन्मनोभिः॥ १७॥

ज०म० अस्राक्षुः॥ ते पौरा राममपश्यन्तः करुणं रुदन्तो विलपन्तः रुशब्द इत्यस्य शतरि रूपम् अस्रम् अश्रु अस्राक्षुः मुक्तवन्तः सृजे स्तौदादिकस्य परस्मैपदिनः सिचि सृजिदृशोरित्यम् हलन्तलक्षणा वृद्धिः चोःकुःखरि चेति चर्त्वम् मुहुर्मुहुः भूयो भूयः कवोष्णमीषदुष्णमन्तःसन्तापात् कवञ्चोष्णे इति कोः कवादेशः न्यश्वसिषुः श्वसेर्लुङ् ह्म्यन्तेत्यादिना श्वसेर्वृद्धिप्रतिषेधः अतो हलादेर्लघोरिति विकल्पस्य प्राप्तत्वात् हा राम हा कष्टं कृच्छ्रमिति ब्रुवन्तः पराङ्मुखैः येन गतो रामस्तेन गतैर्मनोभिरित्थम्भूतैः न्यवृतन् निवृत्तवन्तः द्युद्भ्यो लुङीति परस्मैपदविकल्पात् द्युतादित्वादङ्॥ १७॥

भ० अस्राक्षुरित्यादि। ते पौरा राममपश्यन्तः करुणं रुदन्तो विलपन्तः अस्रं नेत्रजजलं अस्राक्षुरुत्सृष्टवन्तः रुदन्त इति रुदरोदे शतृः अस्राक्षुरिति सृजौश विसर्गे च्लेः सिः वद्धोऽकिदिति ऋकारस्य रः व्रजवदेति अनिट्त्वात् वृद्धिः व्रश्चभ्राजेति षङ् षढोःकःसि इति कः किलादिति षः अनुस्विदेरिति अनडस् कवोष्णं ईषदुष्णं अन्तःसन्तापात् कत्कवौ चाम्युष्णे इति ईषदर्थे कवादेशः मुहुर्मुहुर्वारं वारं न्यश्वसिषुः निःश्वसितवन्तः हसादेःसेम इत्यादौ श्वसवर्जनात् श्वसेर्न वृद्धिः हा राम हा कष्टमिति ब्रुवन्तः ते पौराः पराङ्मुखैरामदिगनुसारिभिरपूर्णकामत्वात् परिभूतैर्वा मनोभिरुपलक्षिताः सन्तो निवृत्ताः वृतेर्द्युतादित्वात् शासुलिद्युदिति ङः तेनैव खोपाऽ

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



नोऽदे चोरित्यकारलोपः। साधनहेतुविशेषणेति विशेषणे तृतीया हा रामेति हाशब्दयोगे षष्ठ्यर्थे द्वितीया अत्र तु तदभाव इति श्रीपतिः सामान्येन हाशब्दं प्रयुज्य रामः सम्बुध्यते इति दौर्गाः न सम्बुद्धाविति हादियोगे द्वितीयानिषेधार्थं क्रमदीश्वरसूत्रं सम्मते हाशब्दवाच्येन कष्टेन नात्र रामस्य योगोविवक्षितः किन्तु पौराणामेव तद्योगाभावान्न द्वितीया॥१७॥

सूतोऽपि गङ्गासलिलैः पवित्वा सहाश्वमात्मानमनल्पमन्युः। ससीतयोराघवयोरधीयन् श्वसन् कदुष्णं पुरमाविवेश॥१८॥

सूतो। सूतोऽपि सुमन्त्रः सहाश्वमश्वैः सह अनल्पमन्युः प्रवृद्धशोकः राघवयोः रामलक्ष्मणयोः सरूपाणामित्येकशेषः ससीतयोः सीतासहितयोः अधीयन् स्मरन् इकुस्मरण इत्यस्य शतरि रूपं यणादेशः अधीगर्थेति कर्म्मणि षष्ठी श्वसन् कदुष्णम् ईषदुष्णाक्षवञ्चोष्ण इति चकारात् कदादेशः गङ्गातटात्प्रतिनिवृत्य पुरमयोध्यामाजगाम आगतवान् गङ्गासलिलैः आत्मनो वाह्यमाभ्यन्तरञ्च पवित्वा पवित्रीकृत्य पूङश्चेति विकल्पेनेट् पूङः क्त्वाचेति कित्त्वप्रतिषेधात् गुणः॥१८॥ जं०म०

सूत इत्यादि। सूतः सारथिः सुमन्त्रोऽपि गङ्गाजलैः सहाश्वं आत्मानं पवित्वा पवित्रीकृत्य सीतासहितयोरामलक्ष्मणयोरधीयन् स्मरन् कदुष्णं श्वसन् पुरमयोध्यां आविवेश प्रविष्टवान् अनल्पमन्युः प्रवृद्धशोकः गङ्गासलिलैः पवित्वा इत्यनेन गङ्गापर्य्यन्तं तद्‌ भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



मनं ध्वन्यते पूङ्क्षिशुदितइम् इति विभाषित इम् सेमचुधेत्यादिना क्त्विनिषेधात् एुर्घूङ इति गुणः ससीतयोरिति सहःसोवेति वक्र ब्रीहौ सादेशः। राघवयोरिति समार्थैनेत्यादिना कर्म्मणि षष्ठी अधीयन्निति अधीकलस्मृत्यां इणवदिकइति वाक्यात् यिणोऽच्य णाविति यादेशः क्वचिन्न स्यात् आतिदेशिककार्य्यमनित्यमितिन्या यात् तेनाच श्रुध्वोरन्वचीति इयादेशः कदुष्णमिति कत्कवौचेति कोः कदादेशः॥१८॥

प्रतीयुषा पूर्ददृशे जनेन द्यौर्भानुशीतांशुनिराकृतेव। राजन्यनक्षत्रसमन्वितापि शोकान्धकारक्षतसर्व्वचेष्टा॥१९॥

ज०म० प्रती। जनेन रामानुयायिना प्रतीय प्रतिनिवृत्य पूरयोध्या ददृशे दृष्टा कर्म्मणि लिट् प्रतीय इति ईङ्गताविल्यस्य रूपन्न पुनरिणः तस्य हि तुकि प्रतीत्येति स्यात्। षत्वतुकोरसिद्ध इत्येकादेशस्यासिद्धत्वात् प्रतीयुषा सा ददृशे इति पाठान्तरम् प्रतिनिवृत्तेन सा पूर्ददृशे दृष्टेत्यर्थः। अस्मिन् पाठे तु उपेयिवानित्यादिना इणः क्वसौ रूपन्द्रष्टव्यमत्रोपसर्गस्यातन्त्रत्वात्। शोकोऽन्धकार इव शोकान्धकारः तेन क्षता नीतानुष्ठेयकर्म्मणि चेष्टा परिस्पन्दो यस्यां पुरि सा तथोक्ता राज्ञोऽपत्यानि राजश्वशुराद्यत् राजन्याः क्षत्रियाः येचाभावकर्म्मणोरिति प्रकृतिभावः राजन्या नक्षत्राणीव तैः समन्वितापि द्यौः भानुशीतांशुविनाकृतेव द्यौराकाशः यथा नक्षत्रसमन्वितापि रात्रौ भानुचन्द्राभ्यां विनाकृता रहिता अन्धकारच्युतसर्व्वचेष्टा तद्वत्सापि भानुचन्द्रस्थानीययोः राघवयोर्विरहात्॥१९॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



प्रतीत्यादि। जनेन रामानुयायिना प्रतीय प्रतिनिवृत्य सा पू रयोध्या ददृशे कर्म्मणि ठी प्रतीयेति इयङ्गत्यामित्यस्य रूपं न लिणस्तनागमप्रसङ्गात् प्रतीयुषेति पाठे प्रतिपूर्व्वादिणः क्वसुः प्र तीयिवःशब्दस्य वसोर्व्वः सेमपीति सेमवस्तोत्वं प्रतीयुषा प्रतिनिवृ त्तेन जनेनपूर्ददृशे इतियोजना कीदृशी पूः शोकोऽन्धकार इव तेन घता नाशिता सर्व्वेषां चेष्टा सर्व्वा वा चेष्टा यस्यां सा तथा। राज न्याःक्षत्रिया नक्षत्राणीव तैः समन्वितापि पूः सूर्य्यचन्द्राभ्यां रहिता द्यौराकाशमिव यथा नक्षत्रसमन्वितापि द्यौः सूर्य्यचन्द्राभ्यां निरा कृता अन्धकारहतसर्व्वचेष्टा तद्वत् सापि सूर्य्यचन्द्रतुल्ययोराघव योरभावादितिभावः। राजन्य इति राज्ञां समूह इति गर्गादि त्वात् ष्यञः मन्वर्ज्जानित्यादिना नलोपनिषेधः॥१९॥

विलोक्य रामेण विना सुमन्त्रमच्योष्ट सत्वान्नृपति श्च्युताशः। मधूनि नैषीद्व्यलिपन्न गन्धैर्मनोरमे न व्य वसिष्ट वस्त्रे॥२०॥

विलोक्य। रामेण विना सुमन्त्रं विलोक्य दृष्ट्वा नृपतिर्दशरथः सत्वात् स्वभावादच्योष्ट च्युतः च्यवतेरकर्म्मकाल्लुङ् गतोऽपि मद्व चनमतिक्रम्य आगच्छेद्राम इति अस्य या आशा सा च्युता यस्य स च्युताशः सत्त्वात् च्युतस्य मधूनि पातुन्नैषीत् नेष्टवान् नेटीति सिचि वृद्धिप्रतिषेधः। गन्धैश्चन्दनादिभिर्नालिपत् लिपेर्लिपि सिचिह्वस्येत्यङ् मनोरमे चेतोहारिणी वस्त्रेन व्यवसिष्ट न परिहि तवान् वस आच्छादने इत्यस्मात् लुङ् अनुदात्तेत्वात्तङ्॥२०॥

विलोक्येत्यादि। रामेण विना सुमन्त्रं विलोक्य नृपतिर्दशरथः

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



सत्वात् स्वभावात् व्यवसायाद्वा अच्योष्ट च्युतः च्युतोऽकर्म्मकात् टी गतोऽपि रामः कदाचित् पौराणामनुरोधान्मद्वचनमतिक्रम्य आगच्छेदित्याशा च्युता यस्य स तथा मधूनि नैषीत् इषुइच्छायां टी गन्धैश्चन्दनादिभिर्न्न व्यलिपत् वक्ष्यस्व्यालिपेति ङः मनोरमं वस्त्रद्वयं न व्यवसिष्ट न परिहितवान् वसलङ् आच्छादने सत्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः। आत्मनि व्यवसाये च चित्ते प्राणिषु जन्तुषु इति विश्वः॥२०॥

आसिष्ट नैकत्र शुचा व्यरंसीत् कृताकृतेभ्यः क्षिति पालभाग्भ्यः। स चन्दनोशीरमृणालदिग्धः शोकाग्नि नागाद्युनिवासभूयं॥२१॥

ज॰म॰ आसिष्ट। एकत्र स्थाने शुचा शोकेन नासिष्ट नोपविष्टः आसेरात्मनेपदिनो लुङ्। कृतानि चाकृतानि चेति क्तेन नञ् विशिष्टेनानञिति समासः असमापितेभ्य इत्यर्थः क्षितिपालभ्यभजन्ते यानि दूतप्रेषणादीनि तेभ्यः क्षितिपालभाग्भ्यः व्यरंसीत् विरतः विमुखोऽभूदित्यर्थः जुगुप्साविरामप्रमादार्थानामुपसंख्यानमिति अपादानसंज्ञा रमेर्लुङ् व्याङ्परिभ्योरम इति तिप् यमिरमेत्यादिना सगिटौ। स एवम्भूतो राजा चन्दनोशीरमृणालैः शोकाग्निप्रतीकारभूतैर्दिग्ध उपलिप्तोऽपि उद्वेगाग्निनैव द्युनिवासभूयन्देवत्वमगात् गतवान् दिहेर्निष्ठायान्दादेर्धातोर्घ इति घः झषस्तथोर्धोधः झलांजश्झशिति जश्त्वम् दिवि निवासो येषां ते द्युनिवासाः देवाः तेषां भाव इति भुवोभाव इति क्यप् ॥२१॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



आसिष्ट इत्यादि। शुचा शोकेन एकत्र एकस्थाने न आसिष्ट आसलङ् उपवेशे। कृताकृतेभ्यः क्षितिपालभाग्भ्यः राजकर्त्तव्यदूतसम्प्रेषणादिभ्यो व्यरंसीत् विरतवान् घेपं परानुइत्यादिना विपूर्व्वात् रमेः पंयमरमेति इमसगौ कृतावयवसम्बन्धात् कृतं अकृतावयवसम्बन्धाच्चाकृतं इति एकार्थत्वात् कर्म्मधारयः। अनञः क्तान्तस्य तेन सनञेति कर्म्मधारय इति परः क्षितिपालं भजन्ते इति ढाङ्गजवहेति त्विण् स ईदृशो राजा चन्दनोशीरम्टणालैस्तापोपशान्तिसाधनैर्दिग्धो लिप्तोऽपि शोकाग्निनैव हेतुना द्युनिवासभूयं देवत्वमगात् दिवि निवासोयस्य इति विग्रहः निवसन्त्यत्रेति घञि द्यौर्निवासोयस्येति वा उहस्युङिति उङ् तस्य भवनं भूहनः क्यविति भुवोभावे क्यप् दिग्ध इति दिहोऽउपलेपे क्तः दादेर्घः ढभात्तथोरिति तस्य धः झपझसोरिति घस्य गः उशीरं वीरणमूलं॥२१॥ भ०

विचुक्रुशुर्भूमिपतेर्महिष्यः केशान् लुलुञ्चुः स्ववपूंषि जघ्नुः। विभूषणान्युन्मुमुचुः क्षमायां पेतुर्बभञ्जुर्वलयानि चैव॥२२॥

विचु॥ भूमिपतेराज्ञो महिष्यः पत्न्यः अविमह्याष्टिषच् इत्याणादिकः ष्टिषच् विचुक्रुशुः रुदितवत्य इत्यर्थः हा स्वामिन्निति तथा केशान् लुलुञ्चुः उत्पाटितवत्यः स्ववपूंषि शरीराणि जघ्नुस्ताडितवत्यः विभूषणानि हारादीनि उन्मुमुचुर्मुक्तवत्यः क्षमायाम्भुवि पेतुः वलयानि अवैधव्यचिह्नानि बभञ्जुः चूर्णितवत्यः एते लिडन्ताः पेतुरेत्वाभ्यासलोपौ॥२२॥ ज०म०

थ

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ॰ विचुक्रुशुरित्यादि ॥ भूमिपतेर्दशरथस्य महिष्यः विचुक्रुशुः क्रन्दितवत्यः हाहा स्वामिन्निति नृपमाहूतवत्यो वा यद्यपि कृताभिषेका महिषीत्यमरः सा चैकैव तथाप्युपचारात् पत्नीमात्रेऽपि तिसृणामेव कृताभिषेकत्वमिति केचित् केशान् लुलुञ्चुः उत्पाटितवत्यः स्यात्यपित्किद्वेति अकित्पक्षे उङ्नलोपाभावः स्ववपूंषि जघ्नुः ताडितवत्यः विभूषणानि हारादीनि उन्मुमुचुः त्यक्तवत्यः क्षमायां भुवि पेतुः तॄफलेति पतेरतएत्वं खिलोपस्य वलयानि अवैधव्यलक्षणानि वभञ्जुः सर्व्वत्र या उस् ॥ २२ ॥

ताः सान्त्वयन्ती भरतप्रतीक्षा तं बन्धुता न्यक्षिपदाशु तैले। दूतांश्च राजात्मजमानिनीषून् प्रास्थापयन्मन्त्रिमतेन यूनः ॥२३॥

ज॰म॰ ताः सां ॥ बन्धुता बन्धुसमूहः ग्रामजनबन्धुसहायेभ्यस्तल् ता महिषीः सान्त्वयन्ती संस्थापयन्ती सान्त्वङ्करोतीति णिच्। तं दशरथं मृतं तैले न्यक्षिपत् निक्षिप्तवती आशु शीघ्रं माभूत्पूतिरिति क्षिपेर्लुङ् पुषादित्वादङ् कस्मान्न्यक्षिपदित्याह भरतप्रतीक्षा तेन संस्कारः कर्त्तव्य इति सा भरतमतीक्षते ईक्षिक्षमिभ्यां चेत्युपसङ्ख्यानाण्ः दूतान् प्रास्थापयत् प्रहितवती राजात्मजम्भरतमानिनीषून् आनेतुमिच्छून् अन्यथा कैकेयीवैमुख्याङ्करतेऽपि वैमुख्यात् दूता अपि नानेतुमिच्छन्ति तत्रापि मन्त्रिमतेन न स्वमतेन यूनः तेषाङ्गन्तुं समर्थत्वात् ॥ २३ ॥

भ॰ तादृत्यादि ॥ बन्धता बन्धुसमूहः ता महिषीः सान्त्वयन्ती

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



आश्वासयन्ती तं मृतं दशरथं शीघ्रं पूतिगन्धाशङ्कया तैले न्यचि पत् चिपस्तुदादित्वात् कुतो न्यचिपदित्याह भरतप्रतीक्षा भरतं प्रतीक्षते इति पचादित्वादच् भरते प्रतीक्षा यस्या इति वा दूतांश्च मन्त्रिणां मतेन बुद्ध्या केकयीं प्रति क्रोधेन भरते वैमुख्यान्न तु स्वेच्छया प्रास्थापयत् प्रहितवती राजात्मजं भरतं आनिनीषून् आनेतुमिच्छून् ये स्वतएव भरतमानेतुमिच्छन्ति तत्प्रस्थापनं यु क्तमिति भावः यूनस्तरुणान् शीघ्रगमनसामर्थ्यात् बन्धुतेति जन स्वलेति समूहार्थे तः सान्त्वयन्तीति सान्त्वल्क सान्त्वने शतृ॥२३॥

सुप्तो नभस्तः पतितं निरीक्षाञ्चक्रे विवस्वन्तमधः स्फुरन्तं। आख्यदसन्मातृकुले सखिभ्यः पश्यन् प्रमा दं भरतोऽपि राज्ञः॥२४॥

सुप्तो। भरतोऽपि मातृकुले वसन् सखिभ्यो मित्रेभ्यः आख्यत् कथितवान् ख्यातेर्लुङ् अस्यतिवक्तीत्यादिनाऽङ् क्रियाग्रहणङ्क र्त्तव्यमिति सम्प्रदानसंज्ञायाञ्चतुर्थी। किमाख्यदित्याह अहं सुप्तः सन् नभस्तो नभस्त्वात् आकाशात्पतितं विवस्वन्तमादित्यं स्फुरन्तञ्चलन्तन्निरीक्षांचक्रे निरीक्षितवान् ईक्षेरिजादेरित्याम्। उत्तमविषये सुप्तप्रमत्तावस्थायां चित्तव्याक्षेपात् परोक्षे लिट् पश्यन् विलोकयन् राज्ञो दशरथस्य प्रमादमनिष्टम्॥ २४॥ ज०म०

सुप्त इत्यादि॥ भरतोऽपि मातृकुले वसन् सन् राज्ञो दशर थस्य प्रमादं अनिष्टं पश्यन् वितर्कयन् सखिभ्यो मित्रेभ्य आख्यत् भ०

CC-0. In Public Domain. Funding by IKS-MoE.

Digitized by eGangotri and Sarayu Trust.



कथितवान् वक्ष्यस्येति ङः तादर्थ्ये चतुर्थी यदभिप्रेत्य धात्वर्थस्तत्र चतुर्थीति परः किमाख्यदित्याह सुप्तोऽहं नभस्त आकाशात् पतितं अधः स्फुरन्तं विवस्वन्तं सूर्य्यं निरीक्षाञ्चक्रे दृष्टवानस्मि अस्मदि चित्तस्य विक्षेपे ठीति परः स्मरते नियमाभावात् भवत्येव सुप्तस्य तादृशसूर्य्यदर्शनेन चित्तविक्षेपार्थो ऽपि गम्यत एव ईक्षङ् दर्शने विजादीत्याम्॥२४॥

अशिश्रवन्नात्ययिकं तमेत्य दूता यदार्थं प्रयियासयन्तः। अजिहिष जाताञ्जिहिषस्तदासावुत्कण्ठमानो भरतो गुरूणां॥२५॥

ज०म० अशि। दूताएत्य आगत्य भरतमातृकुलमित्यर्थः। आङ् पूर्व्वादिणः क्त्वाप्रत्ययस्य ल्यपि तुकि च रूपम्। यदा तं भरतमर्थं वचनमशिश्रवन् श्रावितवन्तः अर्थ्यतेऽनेनेति णिच् घञ् च श्रुणोतेर्ण्यन्ताल्लुङि चङि द्विर्व्वचनम् स्रवतिशृणोतीत्यभ्यासस्येत्वम्। आत्ययिकम् अत्ययो विनाशः स प्रयोजनमस्येति तदस्य प्रयोजनमिति ठञ् पिता ते स्नानस्त्वान्द्रष्टुमिच्छतीति आत्ययिकं वचनं तमिति गतिबुद्धीत्यादिना कर्म्मसंज्ञा श्रुणोतेः शब्दकर्म्मत्वात् अर्थमिति कर्त्तुरीप्सिततममित्यनेन प्रयियासयन्तः प्रयातुमिच्छन्तम्भरतम्प्रयोजितवन्तः सनन्तण्यन्तोऽयं तदा असौ भरतोजाताञ्जिहिषः जाता अञ्जिहिषा गमनेच्छा यस्य सः अहि गतौ इदितोनुम् तस्मादंहितुमिच्छतीति सन् इट् अजादेर्द्वितीयस्येति हिशब्दो द्विरुच्यते नकारस्य नन्द्रा इति प्रतिषेधः अभ्यास

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कार्य्यम् अनुस्वारपरसवर्णौ अःप्रत्ययादित्यकारप्रत्ययः टाप् आं हिष्ट गतवान् तस्मादेवात्मनेपदिनो लुङ् उत्कण्ठमानः स्मरन् मठिकठिशोक इत्यस्मादात्मनेपदिनो रूपम् अनेकार्थत्वाद्धातू नाम्। गुरूणाम्पितामहादीनां अधीगर्थेति कर्म्मणि षष्ठी ॥ २५ ॥

अशिश्रवन्नित्यादि। दूता एत्य आगत्य अर्थात् भरतमातृकुलं तं भरतं अत्ययरूपं अर्थं वस्तु यदा न अशिश्रवन् आवितवन्तः प्रयियासयन्तः भरतं गमनेच्छां कारयन्तः तदा असौ भरतः जाता अञ्जिहिषा गमनेच्छा यस्य तादृशः सन् गुरूणां पित्रादी नां उत्कण्ठमानः स्मरन् आंहिष्ट गतवान् अशिश्रवन्निति श्रु श्रव णे ञि: प्रेरणे इति ञिः ञिश्रीत्यङ् धुर्द्विश्चङीति द्विः खेः सन्वत् स्रुश्रु स्रुद्रु प्रुप्लुच्यङाम्वेति खेरुकारस्य इत्वं ञिणत्यन्तेजुङतोरिति ञिः यलायवायाव इति आव् ञ्यञ्जुङः स्वःञेर्लोपः घोऽञोञेरिति प्र योज्यस्य कर्त्तुः कर्म्मत्वं आत्ययिकमिति अत्ययो विनाशः विकारसं घेति ष्णिकः। अर्थोऽभिधेये शब्दानां घनकारणवस्तुषु। प्रयोजने नि वृत्तौ च विषये च प्रयुज्यते। केचित्तु अर्थयते अनेनेत्यर्थं वचनं आत्ययिकं अनर्थसम्बन्धीत्यर्थः अर्थमित्यत्र अमुमिति पाठे अमुं भरतं प्रयियासयन्तः आत्ययिकं राज्ञोमरणं। एत्येति व्यादनञ इति आङ्पूर्व्वादिणः क्वायप् स्वस्तनपितीति तन् प्रयियासयन्त इति यातेः सनन्तात् ञिः शतृः आंहिष्टेति अहिङ्गतौ इदित्वान्नुन् जाताञ्जिहिषःइति अंहेः सन इम् नाजन्तादेरादिर्द्विरिति स्यादौ नवद्रोये इति च निषेधात् आदिनकारस्य न द्वित्वं संस्याद इति अः कठिङ् आध्याने इष्टानवाप्तौ तदवाप्तयेऽभिलाष उत्कण्ठे त्यन्ये। गुरूणामिति समार्थैनेत्यादिना कर्म्मणि षष्ठी ॥२५॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



बन्धूनशङ्किष्ट समाकुलत्वादासेदुषः स्नेहवशादपायं। गोमायुशारङ्गगणाश्च सम्यङ्नायासिषुर्भीममरासिषुश्च॥२६॥

ज०म० बन्धू। दुःखप्रदर्शनेन अकस्माच्च पितृदूतागमनेन स्नेहवशात् चेतसि समाकुलत्वाद्भरतो बन्धूनशङ्किष्ट शङ्कितवान् उत्प्रेक्षितवानित्यर्थः शङ्कतेरात्मनेपदिनो लुङि रूपम् कीदृशान् आसेदुषः अपायं विनाशं गतवतः भाषायां सदवसेत्यादिना क्वसुः अतएकहलित्येत्वाभ्यासलोपौ। अस्मद्बन्धुः कश्चित् व्यसनमापन्नोऽभूदिति गच्छतस्तस्य गोमायुशारङ्गगणाः शृगालमृगगणाश्च सम्यगनुकूलन्नायासिषुः नागताः यातेर्लुङि यमरमेति सगिटौ शृगालाः प्रदक्षिणङ्गताः मृगाश्च सव्यमित्यर्थः। भीममुद्वेगकरमरासिषः रसिताः रसेः परस्मैपदिनो लुङ् अतोहलादेरिति वृद्धौ रूपम् न रासेः तस्यात्मनेपदित्वात्॥२६॥

भ० बन्धूनित्यादि। दुःखप्रदर्शनात् अकस्मात् पितृदूतागमनाच्च स्नेहवशात् चेतसि समाकुलत्वात् गच्छन् भरतोबन्धून् अपायं विनाशं आसेदुषः प्राप्तान् अशङ्किष्ट शङ्कितवान् शकिङ्चासशङ्कयोः गच्छतस्तस्य गोमायुसारङ्गगणाः शृगालहरिणसमूहाः सम्यगनुकूलं नायासिषुः नागतवन्तः शृगालाः प्रदक्षिणं गता इत्यर्थः। यातेश्चा यमरमेतीम्सनौ अनुस्विदेरिति अन् उस् भीमं भयानकं यथास्यात्तथा अरासिषुः शब्दं कृतवन्तः रसशब्दे हसादेः सेम इति त्रिः अन्उस्। चातके हरिणे पुंसि सारङ्गः शवले त्रिष्वि

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ति दन्त्यादौ रभसः। भृणोतेर्ण्यन्तादङ्गः औणादिक इति ताल व्यादिं केचिदाहुः ॥२६॥

स प्रोषिवानेत्य पुरं प्रवेक्ष्यन् शुश्राव घोषं न जनौघजन्यं। आकर्णयामास न वेदनादान्न चोपलेभे वणिजां पणायाः ॥२७॥

सप्रो। स भरतः प्रोषिवान् मातामहकुलात् प्रोषितः सन् भाषा यामित्यादिना क्वसुः यजादित्वात्सम्प्रसारणन्द्विर्व्वचनम् वस्वेकाजाद्घसामिति इट् पुरमयोध्यामेत्य आगत्य प्रवेक्ष्यन् गृहमित्यर्थात् पुरम्प्रविष्टः घोषं शब्दन्न शुश्राव न श्रुतवान् जनौघजन्यञ्जनसमूहेन जन्यमुत्पाद्यं तकिशसिचतियतीति जनेर्य्यत् तथा वेदध्वनीन्नाकर्णयामास न श्रुतवान् प्रातिपदिकाद्धात्वर्थ इति णिच् तदन्तात् लिड्वामि अपामन्त्येत्ययादेशः न चोपलेभे नोपलब्धवान् वणिजां पण्यजीविनाम्पणायान् पणलाभान् कथञ्चिद्रूपव्यवहारस्योच्छिन्नत्वात् पणन्ते इति वणिजः पणेरिजादेश्चव इत्यौणादिकः पण्यन्त इति पणाः नित्यम्पणः परिमाण इत्यप् व्यवहर्त्तव्याः। ईयन्ते प्राप्यन्ते वणिग्भिरित्ययाः लाभा एरजिति इणः कर्म्मणि अच् पणानामयाः पणायाः तान्। पणायामिति पाठान्तरं वणिजां वस्तूनि संव्यवहारविषयाणि नोपलेभे संव्यवहारकुशलाः साधव इति गुपादिषु स्तुत्यर्थपनिना साहचर्य्यात् पणेरपि तदर्थादेवायप्रत्ययः अःप्रत्ययादित्यकारः टाप् वणिजां प्रलापानिति तृतीयः पाठः वणिक्प्रसार कलहानित्यर्थः ॥ २७ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० सइत्यादि। स भरतः प्रोषिवान् मातामहकुले कृतप्रवासस्ततए त्यागत्य पुरमयोध्यां प्रवेक्ष्यन् प्रवेशं करिष्यन् जनसमूहजन्यं घोषं शब्दं न शुश्राव। प्रोषिवानिति प्रपूर्व्वाद्वसैर्निवासे इत्यस्मात् क्वसुः ग्रहस्वपाद्योरिति जिः द्वित्वं वसोर्घसेकाजितीम् प्रवेक्ष्यन्निति विशशी प्रवेशे स्यतृ: जन्यमिति कर्तृकभाव इत्युक्तेः कर्त्तरि घ्यण् जनौघा ज्जातमित्यर्थः किम्वा तव्यानीयया इति न्यन्ताज्जनेः कर्म्मणि यः वेदध्वनिं न आकर्णयामास न श्रुतवान् कर्णतक्भिदि वणिजां पणो पजीविनां पण्यायाः क्रयविक्रयव्यवहारान् न च उपलेभे ददर्श प णङ्व्यवहारेस्तुतौ कमक्तेत्यादिना आयः संस्याद इति अः स्त्री त्वञ्च पण्यायानिति पाठे पणते इति पणः घञलनटोघे इत्यल् आयोलाभः इमान् व्यवहर्त्तव्यलाभानित्यर्थः वणिगापण्यानि ति पाठे वणिजामापणो निषद्या तत्रायानित्यर्थः आपणस्तु निषद्या यामित्यमरः॥२७॥

चक्रन्दुरुच्चैर्नृपतिं समेत्य तं मातरोऽभ्यर्णमुपाग तास्ताः। पुरोहितामात्यमुखाश्च योधा विवृद्धमन्युप्रति पुर्णमन्याः॥२८॥

ज०म० चक्रन्दुः। तं भरतं गृहगतमभ्यर्णं समीपीभूतं समेत्य ढौकि त्वा मातरः कौशल्याद्याः नृपतिमुच्चैरत्यर्थं चक्रन्दुः क्रन्दित वत्यः हा स्वामिन् हा राजन् क्व गतोऽसीति उपागतस्याप्तमस्तम श्रुजलं याभिस्ताः एवंविधाः युध्यन्त इति योधाः पचादित्वादच्। ते च तं समेत्य नृपतिञ्चक्रन्दुः पुरोधीयत इति पुरोहितः निष्ठा

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



इधातेर्हिः। अमाशब्दः सहार्थे सह राज्ञा कार्य्येषु भवतीत्यमात्यः अमेहक्कतसित्रेभ्य इति निपातात् पुरोहितामात्यौ मुखम्प्रधानं येषां योधानान्ते पुरोहितामात्यमुखाः अमात्यस्याजाद्यदन्तत्वेऽपि पुरोहितस्याभ्यर्हितत्वात्पूर्व्वनिपातः विवृद्धमन्युना शोकेन प्रतिपूर्णे मन्ये गलशिरे येषामिति ॥ २८ ॥

चक्रन्दुरित्यादि। तं भरतं अभ्यर्णं समीपवर्त्तिनं समेत्य प्राप्य मातरः कौशल्यादयो नृपतिं चक्रन्दुः तमुद्दिश्य सशब्दं रुरुदुरित्यर्थः उपागतं अस्रं नेत्रजलं यासां तास्तथा अभ्यर्णमित्यभिपूर्व्वस्यार्द्दधातोः क्तान्तस्य रूपं क्षुब्धस्वान्तेत्यादिना निपातितं युध्यन्ते इति योधाः पचादित्वादन् तेऽपि तं समेत्य चक्रन्दुः पुरोऽग्रे धीयते स्थाप्यते इति पुरोहितः धाञोहिः अमाशब्दः सहार्थे सह राज्ञा कार्य्येषु भवति अमात्यः त्यचाव्ययेति त्यः पुरोहितामात्यौ मुखं प्रधानं येषां योधानां ते तथा ते जना योधाश्चेति वा विवृद्धेन मन्युना शोकेन प्रतिपूर्णा मन्या येषां यासां वा दान्तशान्तपूर्णेति निपात्यते पश्चाद्ग्रीवा शिरा मन्या इत्यमरः ॥ २८ ॥

दिदृक्षमाणः परितः ससीतं रामं यदा नैक्षत लक्ष्मणञ्च। रोरुद्यमानः स तदाभ्यपृच्छद्यथावदाख्यन्नथ वृत्तमस्मै ॥ २९ ॥

दिदृक्ष। स भरतो यदा ससीतं रामं लक्ष्मणञ्च परितः सर्व्वतो दिदृक्षमाणः द्रष्टुमिच्छन् ज्ञाश्रुस्मृदृशांसन इति तङ् हलन्ता



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



क्षेति सनः कित्त्वे दृजिदृशोरित्यम् न भवति नैक्षत न दृष्टवान् तदा रोरुद्यमानः अत्यर्थं रुदन् यङि रूपम् अभ्यपृच्छत् पृष्ट वान् ऐक्षताभ्यपृच्छदिति भूतसामान्यविवक्षया लङ् अन्यथा कवेः परोक्षत्वात् लिट् स्यात् अथैतस्मिन् प्रस्तावे यथावत् यादृशं वृत्त भूतन्तथावत् आख्यन् कथितवन्तः पुरोहितामात्यमुखा अस्मै भरताय। ख्यातेरस्यतीत्यादिना च्लेरङ् आतोलोपः॥ २९॥

भ० दिदृक्षमाण इत्यादि। स भरतः ससीतं रामं लक्ष्मणञ्च परितः सर्व्वतः दिदृक्षमाणः द्रष्टुमिच्छन् यदा न ऐक्षत तदा रोरुद्यमा नो भृशं रुदन् अभ्यपृच्छत् पृष्टवान् अथानन्तरं यादृशं वृत्तं ता दृशं तस्मै भरताय आख्यन् कथितवन्तः अर्थात् पुरोहितामात्य मुखा योधाश्च दिदृक्षमाण इति दृशेः सन् ण्नोनिमीति गुणनि षेधः सृदृशनुज्ञा इति मं ईक्षङ्दर्शने घो रुदेर्मूत्तस्य चेत्यादि ना यङ् प्रच्छोश्ज्ञीसे घो ग्रहखपाद्योरिति जिः ख्यातेर्वक्त्यखेति ङः तादर्थ्ये चतुर्थी यदभिप्रेत्य धात्वर्थ इति चतुर्थीति परः॥२९॥

आबद्धभीमभ्रुकुटीविभङ्गः शोश्वीयमानारुणरौद्र नेत्रः। उच्चैरुपालब्ध स केकयीञ्च शोके मुहुश्चावि रतं न्यमाङ्क्षीत्॥३०॥

ज०म० आबद्ध। स भरत उच्चैर्महता ध्वनिना केकयीञ्च मुहुर्मुहु र्भूयो भूय उपालब्ध उपालब्धवान् उपाङ्पूर्व्वोलभिरुपालम्भे वर्त्तते तस्मादात्मनेपदिनो झलोझलीति सिज्लोपे धलजश्

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ले रूपम् शोके च मन्यौ अविरतमजस्रं न्यमाङ्क्षीत् निमग्नः मस्जे र्लुङि मस्जिनशोर्झलीति नुम् तत्रापि मस्जेरन्त्यादिनियमात् नुम् संयोगादिलोपः हलन्तलक्षणा वृद्धिः हल्ग्रहणं समुदायप्रति पत्त्यर्थमित्युक्तम् कीदृशः आबद्धभीमभ्रुकुटीविभङ्गः भ्रमेस्डुरि त्यौणादिकोडुः कुटेस्त्रीलिङ्गे भावे कृषादिभ्य इतीः तदन्तात् कृदि कारादिति ङीष् भ्रुवोः कुटी कौटिल्यं भ्रुकुटी इको ह्रस्वोऽङ्योगा लवस्येति ह्रस्वः तस्या विभङ्गो विरचनम् आबद्धः कृतः प्रय त्नेनायासप्रवृत्तेन भीमोभयानको भ्रुकुटीविभङ्गो येन यस्य वेति शोश्वीयमाने अत्यर्थं शूयमाने अरुणे लोहिते रौद्रे भयानके नेत्रे यस्य सः श्वयतेर्यङि विभाषाश्वेरिति वा सम्प्रसारणम् तमुपाल म्भमाह ॥ ३० ॥

आबद्धेत्यादि। स भरतः उच्चैर्यथा स्यात्तथा मुहुर्वारं वारं के कयीं उपालभ्य निर्भर्त्सितवान् शोकेऽविरतं न्यमाङ्क्षीत् निममज्ज कीदृशः आबद्धः कृतोभयङ्करोभ्रुकुटीविभङ्गोयेन स तथा पुनः किम्भूतः शोश्वीयमानेअत्यर्थविवृद्धे अरुणे रक्ते रौद्रे भयानके ने त्रे यस्य स तथा भ्रुवोः कुटीकौटिल्यं वेक्स्वसार्णेऽसे इत्यत्र व्यव स्थितविभाषार्थो वाशब्दस्तेन सन्ध्यतिरिक्तस्थाने क्वचित् समासे ह्रस्वः स्यादिति देवीदासचक्रवर्त्तिना व्याख्यातं तेनात्र पाक्षिकोभ्रु वो ह्रस्वः मनीषादित्वाद्वा टुओश्विगतिवृद्ध्योः सूचसूत्रेति यङ् श्वेर्णुः घोऽज्य्यरे उपाङ्पूर्वाल्लभेर्गर्हायां टी तन् झसस्थाञ्झसी ति सेर्लोपः टुमस्जोशशुद्धौ व्यांसिः अनिम्लात् व्रजवदेति त्रिः स्यादेः सोलोपः चङिति कङ् झिलादिति षः नुण्रध इति नुण् स्रोर्नुरित्यनुस्वारः जपेजन्नोरिति ङः ॥ ३० ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



नृपात्मजौ चिक्लिशतः ससीतौ ममार राजा विधवा भवत्यः। शोच्या वयं भूरनृपा लघुत्वं कैकय्युपज्ञं वत वक्तनर्थं॥३१॥

ज०म० नृप। नृपात्मजौ रामलक्ष्मणौ ससीतौ सीतया सह चिक्लिशतुः क्लिष्टौ ममार मृतो राजा म्रियतेर्लुङ्लिङोश्चेति नियमात्तङो भावः विधवाः धवो भर्त्ता तेन विना भवत्यो जाताः शोच्याः शोचनीया वयम् अयशोभाजनत्वात् चुहलोर्ण्यत् शङ्क्या इति पाठान्तरम् शङ्कनीया वयम् एतत्कृतोऽयमप्रयोग इति भूश्चानृपा न विद्यते नृपोयस्यामिति नञोऽस्त्यर्थानामिति बहुब्रीहिः लघुत्वं राज्यप्रार्थनालचणङ्कैकय्युपज्ञम् कैकय्याः प्रथमतो ज्ञातम् नान्यस्य कस्यचित्पूर्व्वं ज्ञातम् उपज्ञायत इत्युपज्ञम् आतश्चोपसर्ग इति स्त्रियामङ् कत्तृचणा षष्ठी कैकय्या उपज्ञेति समासः। उपज्ञोपक्रममिति नपुंसकता वत कष्टमक्तनर्थमकृदोषं क्लेशमरणाद्यनिष्टानां सम्भवात् भरतकृत एवायमप्रयोग इत्येतत्परिहरन्नाह॥३१॥

भ० नृपात्मजावित्यादि। सीतासहितौ नृपात्मजौ रामलक्ष्मणौ चिक्लिशतुः दुःखितौ क्लिशुङ्उपतापे राजा ममार मृङश्चीडौ इति नियमात् पं धवो भर्त्ता तेन विहीना भवत्यो जाताः मातृगणं सम्बोध्योक्तं कैकय्युपालम्भोऽयं वयं शोच्याः अयशोभाजनत्वात् शोकार्हाः तेल्याःशक्यार्हे इति अर्ह्यार्थे घ्यण् इमन्तत्वात् चजोः कगाविति सेमक्तवर्ज्जनात्न कत्वं किम्वा आवश्यकत्वविवचया नावश्यके इति निषेधः शङ्क्या इति पाठे एतत्कृतोऽयं प्रमाद इति लोकैः

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



शङ्का वितर्कणीया भूरनृपा राजशून्या लघुत्वं राज्यप्रार्थनरूपं नीचकर्म्म कैकय्युपज्ञं कैकय्याः सकाशात् प्रथमत उपलब्धं नान्यतः केनापि दृष्टमित्यर्थः उपज्ञायत इत्युपज्ञा क्विप्। उपज्ञोपक्रमान्तस्य तदादित्वप्रकाशने इत्यमरवचनात् नपुंसकत्वं लिङ्गस्य लोकाश्रयत्वात् वकनर्थं बहवोऽनर्था दोषा यत्र तत्तथा वत इति खेदे ॥२१॥

नैतन्मतं मत्कमिति ब्रुवाणः सहस्रशोऽसौ शपथानशप्यत्। उद्वाश्यमानः पितरं सरामं लुठन् सशोको भुवि रोरुदावान् ॥२२॥

नैतत्। यदेतत्कैकय्यनुष्ठितं मतमभिप्रायः न मत्कृतन्तत् नाहमस्य ग्रामणीर्न प्रभुरिति अस्मच्छब्दात् एषां ग्रामणीरिति कन् प्रत्ययोत्तरपदयोश्चेति मपर्य्यन्तस्य मादेशः नास्मन्मतादनुष्ठितमनयेत्यर्थः इत्येवं ब्रुवाणः सहस्रशो बहुवारानसौ भरतः शपथान् सम्प्रत्ययकारणवचनानि अशप्यत् कृतवान् अनेकार्थत्वाद्धातूनां शपेर्दैवादिकस्य उभयपदिनो लुङि रूपम् उद्वाश्यमानः आक्रयन् वाशृशब्दे दैवादिकः अनुदात्तेत् पितरं सरामं हा तात हा रामेति लुठन् भुवि लुठन् लुटविलोडने दैवादिकः परस्मैपदी सशोक इति शाख्यपरिहारार्थम् रोरुदावान् अत्यर्थं रोदनं कुर्व्वन् यङन्तात् अःप्रत्ययादित्यकारः अतो लोपः यस्य हलः स्त्रियामतष्टाप् सा विद्यते यस्येति मतुप् ॥ २२ ॥

स्वदोषं परिहरन्नाह। नैतदित्यादि। यदेतत् कैकय्या कृतं

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



तन्न मत्कं मत्स्वामिकं मत्कर्तृकं मतं अहमस्य प्रभुरित्यर्थे विकार संघेत्यादिना कः इति ब्रुवाणोऽसौ भरतः सहस्रशो बहुवारान् शपथान् प्रत्ययकारणानि अशप्यत् उक्तवान् शपथैश्च आक्रोशे आक्रोशोभाषणं धातूनामनेकार्थत्वात् शपिरत्र करोत्यर्थो वा सरामं पितरं उद्दाश्यमानः हा राम हा तातेति आक्रयन् ङ्वा ध्वस्वशब्दे भुवि लुठन् लुटविलोडने रोरुदावान् अत्यर्थरोदन युक्तः रुदेर्यङन्तात् संख्याद इति अप्रत्ययः ततोवतुः हेतुमाह सशोक इति सहस्रशब्दात् सङ्ख्यैकार्थादिति चशस् ॥ ३२ ॥

तं सुस्थयन्तः सचिवा नरेन्द्रं दिधक्षयन्तः समुदूह्
रारात्। अन्त्याहुतिं हावयितुं सविप्राश्चिचीषयन्तो
ऽध्वरपात्रजातं ॥ ३३ ॥

ज०म० तं सु। सचिवा अमात्याः कार्य्येषु सचन्ते समवयन्तीति सचे रिवन्नित्यौणादिक इवन् तम्भरतं सुस्थयन्तः सुस्थङ्कुर्व्वाणाः त त्करोतीति णिच् नरेन्द्रन्दशरथं समुदूह्यः उद्वाहितवन्तः शिवि कायामारोप्य वहिरन्तर्भावितण्यर्थो ऽत्र द्रष्टव्यः यजादित्वात्सम्प्र सारणम् आरात् नातिदूरे दिधक्षयन्तः दग्धुमिच्छन्तं भरतं प्रयोजितवन्तः दहेः सनि दादेर्द्धातोर्घः भषभावश्चत्वे प्रयोजक व्यापारे णिच् अन्ते विनाशे भवा या आहुतिः दिगादित्वाद्यत् ता मन्त्याहुतिं हावयितुमग्नौ प्रक्षेपयितुं सविप्राः ब्राह्मणैः सहिताः सचिवाश्चिचीषयन्तः चेतुन्निधातुमिच्छन्तः प्रयोजितवन्तः किन्तत् अध्वरपात्रजातं यज्ञोपयोगिपात्राणां स्रुवादीनां समूहम् ॥ ३३ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



तमित्यादि। विप्रसहिताः सचिवाः अमात्यास्तं भरतं सुख भ० यन्तः सुखं कुर्व्वन्तः नरेन्द्रं दशरथं समुदूहुः वहेरन्तर्भावितण्य र्थात् शिविकायामारोप्य उद्वाहितवन्त इत्यर्थः विप्राणां वहना नौचित्यात् वहेर्नौप्रापणे ठौ व्यथग्रहेति जिः ग्रहस्वपाद्योरिति प्रह्व तेर्जिः सुखयन्त इति लेःक्तत्याख्याने णिरिति सुखशब्दात् णिः आ रात् समीपे दिधच्चयन्तोदग्धुमिच्छां कारयन्तः दहेः सनन्तात् णिः शतृ अन्त्याहुतिं हावयितुं अग्नौ प्रचेपयितुं अध्वरपात्रजातं यज्ञोपयोगिस्रुवादिसमूहं चिचीषयन्तः चेतुमिच्छां कारयन्तः अन्तकाले भवोऽन्त्यः ढघेकादिति ण्यः सचिः सेवा विद्यतेऽस्य सचि वः गोतृणेत्यादिना केशादित्वाद्वः सचन्ति कार्य्येषु समवयन्तीत्यर्थे सचिवा निपातनाद्वा ॥ ३३ ॥

उदक्षिपन् पट्टदुकूलकेतूनवादयन् वेणुमृदङ्गकां स्यं। कम्बूंश्च तारानधमन् समन्तात्तथानयन् कुङ्कुम चन्दनानि ॥ ३४ ॥

उद। पट्टदुकूलविरचितान् केतून् ध्वजानुदक्षिपन् उच्छ्रितव ज०म० न्तः ये नियुक्ताः क्षिपेस्तौदादिकस्य ग्रहणम् वेणुमृदङ्गकांस्यं वंश मुरजकांस्यतालमवादयन् वादितवन्तः वदेर्णन्तस्यैव प्रयोगः जातिरप्राणिनामित्येकवद्भावः न पुनस्तूर्य्याङ्गत्वात् तत्र हि प्राणि नान्तूर्य्याङ्गानां द्वन्द्वैकवद्भावः यथा मार्दङ्गिकपाणविकमिति वृतृवदिहनिकमिकषिभ्यःसः इत्यौणादिकः कंसशब्दः तदर्थाय हितं कंसीयं त्रपुणा हुढद्रव्यं प्रकृतिविकारभावे छः तस्य विकार

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



इति कंसीयपरशव्ययोर्य्यञञौ लुक्चेति छस्य लुक् यञ् च प्रत्ययः कम्बून् शङ्खान् तारान् उच्चैस्तरध्वनीन् अधमन् शब्दितवन्तः पाघ्रेत्यादिना धमादेशः तथा कुङ्कुमचन्दनानि आनयन् आनीतवन्तः सर्व्वत्र लङि रूपं अन्त्येष्टिं दर्शयन्नाह॥ ३४॥

भ॰ उदक्षिपन्नित्यादि। अर्थात् तत्र नियुक्तास्ते जनाः पट्टदुकूलरचितान् केतून् ध्वजान् उदक्षिपन् उक्षितवन्तः क्षिपक्षौदादिकः। कार्पासं वादरं प्रोक्तं दुकूलाद्यञ्च वाल्कलं। कौषेयं क्रमिजञ्चापि राङ्कवं मृगरोमजमित्यमरमाला। वेणुमृदङ्गकांस्यं अवादयन् वादितवन्तः अप्राणिजातित्वात् समाहार इति कालापाः तूर्य्याङ्गत्वात् इति वासवताः। सर्व्वो द्वन्द्वः समाहार इति प्राञ्चः। स्वमते इतरेतरयोगे च समाहारे च चो द्विधेति सामान्येन द्विविधो द्वन्द्व उक्तः तत्र क्वचिदितरेतरः क्वचित् समाहारः अभिधानात् बोद्धव्यः यदुक्तं कृत्तद्धितसमासानामभिधानं नियामकमिति कम्बून् शङ्खान् तारान् उच्चतरध्वनीन् अधमन् शब्दायितवन्तः स्थादानपाञ्चेति धाधम तथा कुङ्कुमचन्दनानि आनयन् सर्व्वत्र धी॥ ३४॥

श्रोत्राक्षिनासावदनं सरुक्मं कृत्वा जिने प्राक्शिरसं निधाय। सञ्चित्य पात्राणि यथाविधानमृत्विग्जुहाव ज्वलितं चिताग्निं॥ ३५॥

ज॰म॰ श्रोत्रा॥ अजिने कृष्णसारचर्म्मणि प्राक् पूर्व्वं शिरोमूर्द्धा यस्येति तं प्राक्शिरसं शवन्निधाय स्थापयित्वा पश्चात् श्रोत्राक्षिनासावदनं प्राण्यङ्गत्वादेकवद्भावः द्वन्द्ववदीत्यादिसूत्र

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



स्थानन्तरं नयतेराचेति प्रकृतेराकारे नासेत्यौणादिकं रूपम् सरुक्मं ससुवर्णं कृत्वा सञ्चित्य विन्यस्य अङ्गप्रत्यङ्गेषु पात्राणि स्रुगादीनि यथाविधानं यादृशं विधानमुक्तं गृह्यशास्त्रे। ऋत्विग्याजकः ऋतौ यजतीति ऋत्विग्दधृगित्यादिना निपातितः ज्वलितश्चिताग्निं चयनं चितं तदर्थमग्निं जुहाव जुहोतिस्म॥ ३५॥

आचेत्यादि। प्राक् पूर्व्वस्यां दिशि शिरो यस्य तादृशं शरीरं अजिने कृष्णसारचर्म्मणि निधाय संस्थाप्य आचाद्दिनासावदनं सरुक्मं सुवर्णयुक्तं कृत्वा यथाविधानं विधानमनतिक्रम्य पात्राणि स्रुवादीनि सञ्चित्य अङ्गेषु निधाय ऋत्विक् याजकः ज्वलितं चिताग्निं जुहाव एतेनान्त्येष्टिरुक्ता ऋतौ यजतीति ऋत्विक् त्रासुसिति क्विप् घङिति कङ् आचेत्यादिप्राण्यङ्गत्वात् द्वन्द्वैकत्वं क्लीवत्वञ्च नित्यं भजते इति परः। स्वमतेऽत्र वेणुमृदङ्गकांस्यमितिवत् समाहारो द्वन्द्व इतरेतरोऽपि दुर्निवारः। यथा ग्रीवाकुचिललाटेषु नित्यं स्वेदः प्रशस्यते। गण्डे चुम्बं ललाटाचिकचोरुभगमूर्द्धसु इत्यादिदर्शनात् परमतं हेयं॥ ३५॥ भ०

कृतेषु पिण्डोदकसञ्चयेषु हित्वाभिषेकं प्रकृतं प्रजाभिः। प्रत्यानिनीषुर्विनयेन रामं प्रायादरण्यं भरतः सपौरः॥ ३६॥

कृते। पिण्डोदकदानास्थिसञ्चयेष्वनुष्ठितेषु प्रजाभिः प्रकृतं प्रस्तुतमभिषेकमादिकर्म्मणि क्तः हित्वा त्यक्त्वा जहातेस्क्त्वीति ज०म०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



हिरादेशः रामन्प्रत्यानिनीषुः प्रत्यानेतुमिच्छुः विनयेन प्रसादनया न भयादरण्यं वनम्प्रायात् गतवान् भरतः सह पौरैः अयोध्याभवैर्जनैः मयैकेन प्रसाद्यमानः कदाचिन्नागमिष्यतीति॥ ३६॥

भ॰ कृतेष्वित्यादि। पिण्डोदकदानास्थिसञ्चयनेषु कृतेषु पश्चात् प्रजाभिः प्रकृतं प्रस्तुतमभिषेकं हित्वा विनयेन रामं प्रत्यानिनीषुः प्रत्यानेतुमिच्छुर्भरतः पौरैः सह अरण्यं प्रायात् जगाम याते र्ण्यी रूपं प्रकृतमिति आरम्भे क्तः हित्वेति हाकोहिः आत्मनोविनयज्ञापनार्थं मयैकेन प्रसाद्यमानः कदाचित् नागच्छेदित्याशङ्कया पौरैःसह गमनं पिण्डोदकपदेन दाने लक्षणा सञ्चयोऽस्थिसञ्चयनं पिण्डोदकानां सञ्चया इति केचित्॥ ३६॥

शीघ्रायमाणैः ककुभोऽश्नुवानैर्जनैरपन्थानमुपेत्य दृप्तैः। शोकादभूषैरपि भूश्चकासाञ्चकार नागेन्द्ररथाश्वमिश्रैः॥ ३७॥

ज॰म॰ शीघ्रा। जनैर्हेतुभूतैर्भूश्चकासाञ्चकार शोभतेस्म कर्त्तुः क्रियाफलयोगेऽपि नात्मनेपदम् आम्प्रत्ययवदित्यत्र पूर्व्वग्रहणानुवृत्तेः चकासेश्च परस्मैपदित्वादिति विधिनियमौ स्थितौ शीघ्रायमाणैः अशीघ्रैः शीघ्रैर्भवद्भिर्झटिति गच्छद्भिरित्यर्थः भृशादित्वात् क्यङ् ङित्वात्तङ् ककुभोऽश्नुवानैः दिशोव्याप्नुवद्भिः अश्नोतेः स्वादिकस्य आत्मनेपदिनो रूपम्। अपंथानमुपेत्य दृप्तैः वङ्कत्वा दमार्गमपि गत्वा गतैः ऋक्पूरित्यादिना समासान्तः प्राप्तोनञ्स्

CC-0. In Public Domain. Funding by IKS-MoE

स्युहषादिति प्रतिषिद्धः सन् पथोविभाषेति विकल्पितः शोकाद्धेतो रभूषैरनलंकारैरपि चकासाञ्चकार भूः भूमिः भूषेति गुरोश्च हल् इत्यकारप्रत्ययः चकासृदीप्तावित्यस्मात् कास्यनेकाज् ग्रहणञ्चुलुम्पाद्यर्थमित्याम् नागेन्द्ररथाश्वमिति द्वन्द्वे एकवद्भावः अल्पाच्तरस्य न पूर्व्वनिपातः बहुष्वनियम इति वचनात् तेन सेनाङ्गत्वात् एतकवद्भावेन मिश्रैर्युक्तैः पूर्व्वसदृशेत्यादिना तृतीया समासः ॥ ३७ ॥

शीघ्रायमाणैरित्यादि। शोकाद्भूषारहितैरपि जनैर्भूश्चकासाञ्चकार चकासृदीप्तौ विजादिदयेत्यादिनाम् भस्कृन्चामः भूषेति सेम्तात् सरोरिति अः किम्भूतैः शीघ्रायमाणैः अशीघ्रैः शीघ्रैर्भवद्भिः कार्य्यवशात् द्रुतं गच्छद्भिरित्यर्थः भृशादेश्च्व्यर्थे इति क्यः घौऽज्यरे इति घः छित्त्वाश्वं ककुभोदिशः अश्नुवानैर्व्याप्नुवद्भिः अशूङ्ण्व्याप्तिसंहत्योः बहुलात् अपन्थानमपि व्याप्य इत्तैर्गतैः विकल्पितमप्रत्ययान्तं नागेन्द्रा हस्तिश्रेष्ठा रथा अश्वाश्चेति परमते सेनाङ्गत्वात् समाहारद्वन्द्व एव स्वमते इतरेतरद्वन्द्वोऽपि लभ्यते मिश्रैर्युक्तैः ॥३७॥

उच्चिक्यिरे पुष्पफलं वनानि सस्नुः पितॄन् पिप्रियुरापगासु। आरेमुरित्वा पुलिनान्यशङ्कं च्छायां समाश्रित्य विशश्रमुश्च ॥३८॥

उच्चि। ते जनाः गच्छन्तः पुष्पफलं पुष्पाणि फलानि चेति जातिरप्राणिनामित्येकवद्भावः उच्चिक्यिरे उच्चितवन्तः ञित्वात्तङ्

Digitized by eGangotri and Sarayu Trust.



कर्त्तुः क्रियाफलयोगात् विभाषा चेरिति धातोः कुलमेरनेकाच इति यणादेशः उचिच्यिर इति पाठान्तरं युक्तम् वनानीति हेतुत्वेनाकथितङ्कर्म्म वनानि विघट्टयन्तः फलानि जगृहुरित्यर्थः ततः सस्नुः स्नातवन्तः स्नातेर्लिटि उस्यपदान्तादिपररूपम् पितॄन् पिप्रियुः उदकाञ्जलिना तर्पितवन्तः प्रीणातेर्लिटि इयङादेशः आपगासु नदीषु एतत्कृत्वा पुलिनानि सैकतानि इत्वा आरेटुः आरटिताः आरेमुरिति पाठान्तरं शोकापनोदनार्थं कियन्तमपि कालमारमन्तिस्म व्याङ्परिभ्योरम इति परस्मैपदम् अशङ्कं विस्रब्धं छायां समाश्रित्य विशश्रमुः विश्रान्ताः ॥३८॥

भ० उचिक्यिर इत्यादि। ते जना वनानि पुष्पाणि फलानि च उचिक्यिरे चिञ्चयने ठौ याञ्चार्थदुहचिप्रच्छीति द्विकर्मकत्वं चेःकिर्व्वेति किः अुश्नोरिति यत्वं वनानि विघट्टयन्तः पुष्पफलं जगृहुरित्यर्थः परमते अप्राणिजातित्वात् समाहारद्वन्द्वः स्वमतं तृदङ्गकांस्यमित्यत्रोक्तं आपगासु नदीषु सस्नुः स्नातवन्तः पितॄन् पिप्रियुः तर्पितवन्तः प्रीञ्तर्पणे अुश्नोरितीयादेशः पुलिनानि सैकतानि इत्वा गत्वा आरेमुः शोकापनोदार्थं क्रीडन्तिस्म घे पमित्यादिना पं आरेटुरिति पाठे शोकात् शब्दं चक्रुरित्यर्थः। रटपरिभाषणे तॄफलेति अत एत्वं खिलोपश्च अशङ्कं निःशङ्कं यथा स्यात्तथा छायां समाश्रित्य विशश्रमुः ॥३८॥

संप्राप्य तीरं तमसापगाया गङ्गाम्बुसम्पर्कविशुद्धिभाजः। विगाहितुं यामुनमम्बु पुण्यं ययुर्निरुद्धश्रमवृत्तयस्ते ॥३९॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



संप्रा। तमसापगायाः तमसाख्याया आपगायाः नद्याः अत्यविचमितमिनमिरभिलभितपिपतिजनिपणिमहिभ्योऽसच् यस्याः स्मरणात्पापं ताम्यति सा तमसा तरसा इति पाठान्तरं तत्र तरसा वेगेन आपगाया अर्थात्तमसाया नद्या गङ्गाम्बुसम्पर्कात् विशुद्धिं पवित्रतां भजति या तस्यास्तीरं कूलं सम्प्राप्य गत्वा ते जना निरुद्धश्रमवृत्तयः ययुः गताः गच्छन्ति गन्‌गम्यद्योरित्यौणादिको गन् विगाहितुं विगाहिष्यामह इति कृत्वा यामुनमम्बु यमुनाया इदं यमुनासम्बन्धि जलं पुण्यम्पुण्यहेतुत्वात् पुण्ययुक्तत्वाद्वा॥ ३९॥ ज॰म॰

संप्राप्येत्यादि। ते जनास्तमसापगायास्तमसानामनद्यास्तीरं कूलं संप्राप्य निरुद्धश्रमवृत्तयः सन्तः यामुनं यमुनासम्बन्धि पुण्यं पावनं अम्बु जलं विगाहितुं ययुः तरसेति पाठे वेगेनेत्यर्थः यमुनाशब्दात् विकारसंघेत्यादिना इदमर्थेऽण्‌ः पित्तेत्रिरिति त्रिः तमसापगायाः कीदृश्याः गङ्गाजलसम्पर्कात् अतिशयितशुद्धिं भजते या तस्याः ढाङ्जसहवहेति विण्॥ ३९॥ भ॰

ईयुर्भरद्वाजमुनेर्निकेतं यस्मिन् विशश्राम समेत्य रामः। च्युताशनायः फलवद्विभूत्या व्यस्यन्नुदन्यां शिशिरैः पयोभिः॥ ४०॥

ईयुः। भरद्वाजमुनेर्निकेतं आश्रममीयुः गताः इणोयणिति यत्वम् अभ्यासस्य दीर्घइणःकितीति दीर्घत्वं यस्मिन्निकेते रामो विशश्राम विश्रान्तः समेत्य मिलित्वा तमीयुर्जना इति योज्यम् फलवद्विभूत्या फलवतां वृक्षाणां समृद्ध्या हेतुभूतया च्युताश ज॰म॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



नायोऽपगतवुभुक्षः अशनायेत्यादिना निपातितः व्यस्यन् उदन्यां वारयन् असेर्दैवादिकस्य रूपम् उदन्यां पिपासां शिशिरैः शीतलैः पयोभिः ॥ ४० ॥

भ० ईयुरित्यादि। ते भरद्वाजमुनेर्निकेतमीयुर्गता इत्यर्थः इण गतौ ठी यिणोऽच्यणाविति यादेशः खेःक्तिर्घ इति दीर्घः य स्मिन् निकेते रामः समेत्य संगत्य विशश्राम विश्रान्तः कीदृशः स फलवतां वृक्षाणां विभूत्या समृद्ध्या च्युताशनायः व्यपगतवुभुक्षः अशनशब्दात् कोम्भ्यादिति क्यः धनोदकाशन इत्यादिना अन्नार्थेङ्ग ततः संस्याद इत्यः स्त्रीलश्च च्युता अशनाया यस्य स तथा शिशिरैः शीतलैः पयोभिर्ज्जलैरुदन्यां पिपासां व्यस्यन् अपनयन् अस्युदूर्चेपे शतृः उदकस्य उनङ् पानार्थे पूर्व्ववत् पयोभिरिति पीङ्यपाने चासुसिति अस् ॥ ४० ॥

वाचंयमान् स्थण्डिलशायिनश्च युयुक्षमाणाननिशं मुमुक्षून्। अध्यापयन्तं विनयात् प्रणेमुः पद्गा भरद्वाजमुनिं सशिष्यं ॥४१॥

ज०म० वाचं। ते भरद्वाजमुनिं सशिष्यं शिष्यैः सह वर्त्तमानम्प्रणेमुः प्रणमन्तिस्म विनयात् विनयेन अतएव पद्गाः पदातयः पादाभ्यां गच्छन्तीति अन्येष्वपि दृश्यत इति डः हिमकाषिहतिषुचेति चकारस्य अनुक्तसमुच्चयार्थत्वात् गमोत्तरपदे पदादेशः प दिति योगविभागाद्वा कीदृशम् अध्यापयन्तम्पाठयन्तम् कान्

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



वाचंयमान् मौनव्रतान् वाचियमो व्रत इति खच् वाचंयमपुरन्द रौचेति निपातनात्पूर्व्वपदस्य अमन्तता स्थण्डिलशायिनः भूशा यिनः. स्थण्डिलाच्छयितरि व्रत इति णिनिः युयुक्षमाणान् योक्तु मिच्छतः योगाभ्यासनिष्ठानित्यर्थः अनिशमविच्छेदेन मुमुक्षून्मोक्षा भिलाषिण इत्यर्थः अतएव योगाभ्यासमिच्छून्॥ ४१॥

वाचंयमानित्यादि। ते जनाः स्वशिष्यं भरद्वाजमुनिं प्रणेमुः नमो शब्दनत्योः तृफलेति अतएत्वं खिलोपश्च शाम्वनोण इति णत्वं ना दित्वात् विनयात् विनयं विधाय ल्यबर्थे पञ्चमी हेतौ वा कीदृशाः पद्गाः एतेन यानस्था अपि ये तेऽपि विनयात् पद्गाः पद्भ्यां गच्छ न्तीति हनजनादिति डः पादसमानार्थोऽयं पच्छब्दः अध्यापय न्तं पाठयन्तं क्रीजीङोऽजेतीङ आद्धीह्रीरीत्यादिना पन् कानि त्याह वाचंयमान् मौनव्रतिनः तृभृवृहजीत्यादिना आवन्तवाचा शब्दात् यमः खः खित्यव्याजेति मन् खश्च परे तु वाक्शब्दोपपदेन साधयन्ति स्थण्डिलशायिनः तृणाच्छादितभूमिशायिनः ग्रहादि त्वाणिन् व्रतेणिन्निति परः युयुक्षमाणान् योक्तुमिच्छून् योगाभिला षिण इत्यर्थः युज्यौङ्समाधौ सन् शानः शानेऽतोमन् अनिशं निरन्तरं मुमुक्षून् मोक्षाभिलाषिणः मुचृशपञ्जमोक्षे सन् सनभि क्षाशंसडःट्टभृजुषस्त्विणिति शास्तेः क्यप् शासुङिति इत् क्विलादि ति षः॥४१॥

आतिथ्यमेभ्यः परिनिर्व्विवप्सोः कल्पद्रुमा योगब लेन फेलुः। धामप्रथिम्नो म्रदिमान्वितानि वासांसि च द्राघिमवन्त्युदूहुः॥४२॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० आति। अतिथ्यर्थमातिथ्यमन्नपानादि अतिथेर्ण्यः एभ्यो भरतादिजनेभ्य इति सम्प्रदाने चतुर्थी परिनिर्व्विवप्सो' निर्व्वप्तुमिच्छो र्दातुमिच्छोरित्यर्थः निपूर्वो वपिर्दाने वर्त्तते धामप्रथिम्नः धाम्ना तेजसा प्रथिमा पृथुत्वं यस्य तेजसोवहिर्निर्गतत्वात् शरीरस्य पृथुत्वं जायते तस्य भरद्वाजमुनेर्योगबलेन समाधिबलेन युजसमाधावित्यस्य रूपम् कल्पद्रुमाः फेलुः फलिताः भक्ष्यान्नपानादिकमित्यर्थः तॄफलभजत्रपश्चेत्येत्वमभ्यासलोपश्च वासांसि च वस्त्राणि उदूहुः उद्वहन्तिस्म यजादित्वात्सम्प्रसारणं म्रदिमान्वितानि मृदुत्वमुपगतानि द्राघिमवन्ति दैर्घ्ययुक्तानि पृथुमृदुदीर्घशब्देभ्यस्तस्य भाव इत्यर्थे पृथ्वादिभ्य इमनिच् पृथुमृदुशब्दयो ऋतोहलादेरिति रादेशः दीर्घशब्दस्य प्रियस्थिरेत्यादिना द्राघादेशः पश्चान्मतुप् ॥ ४२ ॥

भ० आतिथ्यमित्यादि। आतिथ्यं अतिथ्यर्थमन्नपादिकं एभ्यो भरतादिभ्यः परिसर्व्वतोनिर्व्वप्तुं दातुमिच्छोर्मुनेर्योगबलेन समाधिबलेन कल्पवृक्षाः फेलुः अर्थात् अन्नपानादिकं तॄफलेति अतएत्वं खिलोपश्च विकारसंघेत्यादिना तादर्थ्ये अतिथेः ण्यः निःपूर्वो वपिर्दाने वर्त्तते युज्यौङ्समाधौ घञि चजोःकगाविति जस्य गत्वं तस्य मुनेर्धामप्रथिम्नो हेतोस्तेजोवाहुल्यात् ते कल्पद्रुमा वासांसि उदूहुः उद्वहन्तिस्म चकारः समुच्चये वहैञ्प्रापणे व्ययग्रहेति जिः कीदृशानि म्रदिमान्वितानि मृदुत्वेन युतानि द्राघिमा दैर्घ्यं विद्यते येषान्तानि गुणादिमन्भावे इति पृथुमृदुदीर्घशब्देभ्य इमन् पृथुमृदुकृशेति पृथुमृदुशब्दयोः ऋकारस्य रः बाढान्तिकेति दीर्घस्य द्राघादेशः ञीमंशडिदिति डित्त्वे टेर्लोपः

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



द्राघिमशब्दात् सोऽस्मिन्नस्तीत्यर्थे मतुः तेजसां प्रथिमा यस्य इति मुनिविशेषणं केचिदाहुः ॥४२॥

आज्ञां प्रतीषुर्व्विनयादुपास्थुर्ज्जगुः सरागं ननृतुः सहावं। सविभ्रमं नेमुरुदारमूचुस्तिलोत्तमाद्या वनितास्तु तस्मिन् ॥४३॥

आज्ञां। तस्मिंस्तपोवने तिलोत्तमाद्या दिव्यस्त्रिय आगता आज्ञामादेशं मुनेः प्रतीषुः प्रतीष्टवत्यः चेटीभवत्य इत्यर्थः प्रतिपूर्व्व इषिर्ग्रहणे वर्त्तते तस्य लिटि रूपम् विनयादुपास्थुः उपस्थिताः पादप्रक्षालनादिदाने, उपस्थान कृतवत्यः उपपूर्व्वात्तिष्ठते र्लुङि सिच् गातिस्थेति सिचोलुक् सिजभ्यस्तविदिभ्यश्चेति झेर्जुस् उस्यपदान्तादिति पररूपम् जगुः सरागं सरक्तं गीतवत्यः ननृतुः सहावं सशृङ्गारचेष्टं नर्तितवत्यः सविभ्रमन्नेमुः सविलासप्रणताः उदारमूचुः अग्राम्यमुक्तवत्यः ॥ ४३ ॥ ज॰म॰

आज्ञामित्यादि। धामप्रथिम्नः किमित्याह तस्मिन् वने तिलोत्तमाद्या वनिता अप्सरस आगत्य मुनेराज्ञां प्रतीषुर्गृहीतवत्यः प्रतिपूर्व्व इषिर्ग्रहणे थ्यां रूपं विनयात् उपास्थुः भरतादीनां उपासनां चक्रुः उपपूर्व्वात्तिष्ठतेर्थ्यां रूपं भूस्थापिवेति सेर्लुक अनुसिद्धेरिति अन् उस् उस्येचीत्यालोपः सरागं मालवादिरागयुक्तं यथास्यात्तथा जगुः गीतवत्यः गैगाने ठी सहावं शृङ्गारचेष्टायुक्तं ननृतुः नृत्यञ्चक्रुः हावाः क्रिया: शृङ्गारभावजा इत्यमरः। भ॰



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



सविभ्रमं नेमुः प्रणामं चक्रुः। विभ्रमस्त्वरया काले भूषास्थानविपर्य्ययः। चित्तवृत्त्यनवस्थानं शृङ्गाराद्विभ्रमोऽथवा। विलास इत्यन्ये उदारमग्राम्यमूचुः वनिताः। जनितात्यर्थानुरागायाञ्च योषितीति कोषः चकारः पूर्व्वापेक्षया॥ ४३॥

वस्त्रान्नपानं शयनञ्च नाना कृत्वावकाशे रुचिसंप्रकॢप्तं। तान् प्रीतिमानाह मुनिस्ततः स्म निवद्ध्वमाद्ध्वं पिवताक्त शेध्वं॥४४॥

ज०म० वस्त्रा। ततोवनितोपस्थानानन्तरमवकाशे प्रदेशे यथाभिमते वस्त्रान्नपानं सर्व्वोद्वन्दोविभाषैकवद्भवतीत्येकवद्भावः शयनमित्यधिकरणे ल्युट् नाना कृत्वा पृथक् कृत्वा रुचिसम्प्रकॢप्तं यस्य यावदभिरुचितन्तत्तथैव सम्पादितम् कृपोरोलः प्रीतिमान्मुनिस्तान् भरतादीनाह स्म उक्तवान् किमाह निवद्ध्वं परिधत्त वस्त्राणि वस आच्छदन इत्यस्य विधौ लोट् झलाञ्जश्झशीति सकारस्य दकारः आद्ध्वं उपविशत आसेः पूर्व्ववत् दादेशः अत्त खादत अन्नादिकं अदभक्षणे इत्यस्मात् लोट् पानादिकम्पिवत पिवतेः पाघ्रादिसूत्रेण पिवादेशः शेध्वम् स्वपत शयने सर्व्वत्र विधौ लोट्॥ ४४॥

भ० वस्त्रान्नपानमित्यादि। ततोवनितोपस्थानानन्तरं धामप्रथिम्नो हेतोर्व्वा अवकाशे यथायोग्यस्थाने वस्त्रं अन्नं पानं शयनञ्च रुचिसंप्रकॢप्तं यस्य यथारुचिस्तथैव सम्पादितं अतएव नानाविधं कृत्वा प्रीतिमान् मुनिस्तान् भरतादीन् आह स्म उवाच किन्तदित्याह निवद्ध्वं वस्त्राणि परिधत्त वुसङ्कल्लस्तृतौ स्तृतिराच्छादनं ञपञ्चसो

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



रिति सस्य दत्वं निर्देकारपाठे घेसलोपेवेति पाक्षिकः सलोपः सर्व्वत्र विधौ गौ आध्वं उपविशत त्रिलासङ्उपवेशे पूर्व्ववत् पिवत पयःप्रभृतिकमर्थात् पापाने स्यादानेति पिवादेशकरणान्न गुणः किम्वा पिवादेशोऽयमदन्तः तेन णुर्घूङ इत्यस्य न विषयः लोपो ऽतोदेचोरित्यकारलोपः अत्त भचयत अद्लोभचणे शेध्वं श यनं कुरुत शीङोरेणुः वस्त्रमिति वसेस्त्रासुसिति त्रः अन्नमिति णीक इति सूत्रे अन्नव्यवस्थनेति ज्ञापकात् न जग्धादेशः अदोज ग्धिरनोदने इति परसूत्रं पानमिति कर्म्मणि आधारे वा अनट् शयनमित्याधारेऽनट् ॥ ४४ ॥

ते भुक्तवन्तः सुसुखं वसित्वा वासांस्युषित्वा रजनीं प्रभाते। द्रुतं समध्वा रथवाजिनागैर्म्मन्दाकिनीं रम्य वनां समीयुः ॥ ४५ ॥

ते भुक्त। ते भरतादयः सुसुखमिति क्रियाविशेषणम् भुक्तवन्तः जं०म० सन्तो वासांसि वसित्वा परिधाय रजनीमुषित्वा रजनीं रात्रीं वसतिक्षुधोरिट् कालाध्वनोरिति द्वितीया द्रुतं शीघ्रं प्रभाते मन्दाकिनीन्नदीं समीयुः सम्भूय गताः समध्वा अविच्छिन्नाध्वानः सङ्गता अध्वन इति प्रादिसमासः उपसर्गादध्वन इति समासा न्तष्टच् रथवाजीति द्वन्द्वैकवद्भावः तेन सहिता नागा इति शाक पार्थिवादित्वात्समासः अन्यथा सेनाङ्गत्वात्समुदायस्यैकवद्भावः स्यात् रम्यवनां रमणीयकाननां रमणीयजलाम् वा ॥ ४५ ॥

तइत्यादि। सुसुखं यथास्यात्तथा भुक्तवन्तः कृतभोजना भर भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



तादर्थ्ये वासांसि वस्त्राणि वसित्वा परिधाय रजनीं उषित्वा स्थित्वा प्रभाते समध्वा अध्वानं सङ्गताः सन्तः रथवाजिनागैर्द्रुतं शीघ्रं रम्यवनां मन्दाकिनीं समीयुः सङ्गतवन्तः इणश्छ्यां रूप मन्दाकिनी चित्रकूटवर्त्मनि नदीविशेषोनर्म्मदेति प्रसिद्धा गङ्गामात्रे मन्दाकिनीति केचित् रम्याणि वनानि यत्र वनं काननमीरयोरिति विश्वः दसित्वेति वसङ्लस्तृतावित्यस्य रूपं उषित्वेति ऐवसौनिवासे त्तुधवसपूजार्थाश्चेति इम् ग्रहस्वपाद्योरिति जिः रजनीमिति देशाध्वकालेति कर्म्मत्वं समध्वा इति गेरध्वन इत्यः न्वोर्लोपैतौते इति नस्य लोपः यचोर्लोप इत्यकारलोपः रथाश्च वाजिनोऽश्वाश्च नागा हस्तिनश्चेतीतरेतरद्वन्द्वः परे तु सेनाङ्गानां वहुत्वे समाहार इति रथश्च वाजी च नागश्चेत्येकवचनेन विग्रहं वदन्ति समाहारविधेरनित्यत्वमित्यन्ये आदौ रथवाजिशब्दाभ्यां समाहारस्ततो रथवाजिना सहिता नागाः रथवाजिनागाः शाकपार्थिवादित्वादिति केचित् ॥ ४५ ॥

वैखानसेभ्यः श्रुतरामवार्त्तास्ततोविशिङ्क्षानपतत्त्रिसंघं। अभ्रंलिहाग्रं रविमार्गभङ्गमानंहिरेऽद्रिं प्रति चित्रकूटं ॥ ४६ ॥

ज॰म॰ वद्मा। ततो मन्दाकिनीगमनानन्तरं वैखानसेभ्यस्तृतीयाश्रमिभ्यः चित्रकूटे रामोस्तीति श्रुतरामवार्त्ताः चित्रकूटनामानमद्रिं पर्व्वतं प्रति लक्षणेत्थम्भूताख्यानेत्यादिना कर्म्मप्रवचनीयसंज्ञा कर्म्मप्रवचनीययुक्त इति द्वितीया तं लक्ष्यीकृत्य आनं

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



हिरे जग्मुः अंहतेर्लिटि द्विर्वचनं हलादिःशेषः अत आदेरिति दीर्घः तस्मान्नुट् द्विहल इति नुट् विशिञ्जानपतत्रिसंघं कूजत्प त्रिगणं अभ्रंलिहाग्रं अभ्रस्पृक्शिखरम् वहाभ्रेलिह इति खश् अरुर्द्विषदित्यादिना मुम् रविमार्गभङ्गं उच्चैस्तरत्वात् रवेर्मार्ग भङ्गो यस्मिन्नद्राविति ॥४६॥

वैखानसेभ्यइत्यादि। ततो मन्दाकिनीगमनानन्तरं वैखानसे भ्यो वाणप्रस्थेभ्यः श्रुता रामवार्त्ता यैस्तादृशा भरतादयश्चित्रकू टमद्रिं प्रति लक्षीकृत्य आनंहिरे गतवन्तः अहिङ्गतौ ठी इदि त्त्वान्नुण् द्वित्वं स्यान्तादादावृदाद्यश्चोरिति खेरान् नोर्नुरित्यनुस्वा रः होझस इति हस्य झसत्वात् धिक्समयेति प्रतियोगे द्वितीया। वैखानसो वनेवासी वाणप्रस्थश्च तापस इति वैजयन्ती अद्रिं किं भूतं विशिञ्जानः पतत्त्रिणां पक्षिणां संघः समूहो यत्र एतादृशं शिञ्जिकिङ्स्फुटध्वनौ अभ्रंलिहाग्रं अभ्रस्पृक्शिखरं परन्तपवत् खः वाक्त्वाद्गुणाभावः उच्चैस्तरत्वाद्रवेर्मार्गभङ्गो वर्त्मविघातो य स्मिन् ॥४६॥

दृष्ट्वोर्णुवानान् ककुभो बलौघान् वितत्य शार्ङ्गं कव चं पिनह्य। तस्थौ सिसंग्रामयिषुः शितेषुः सौमित्रिर त्रिभुवमुज्जिहानः ॥४७॥

दृष्ट्वा। बलौघान् दृष्ट्वा सौमित्रिस्तस्थौ स्थितः अभ्यासस्य शर्पर्वाः खय इति खः शेषः कीदृशः ककुभो दिश ऊर्णुवानान् आच्छादयतः ऊर्णोतेरादादिकस्योभयपदिनः शानचि उवङ्

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



दृष्टे च रूपम् शार्ङ्गं शृङ्गस्य विकारं धनुर्वितत्य आरोपितगुणं
कृत्वा वात्यपीत्यनुनासिकलोपः कवचं पिनह्य बद्ध्वा नहबन्धन
इत्यस्य ल्यपि अपिशब्दाकारलोपस्तु। वष्टि भागुरिरल्लोप
मवाप्योरुपसर्गयोः। धाञ्कृञोस्तनिनह्योश्च वक्तव्येन शौनकि
रिति। सिसंग्रामयिषुः संग्रामयितुमिच्छुः संग्रामयुद्ध इति चौ
रादिकोणिच् तदन्तस्य सनि प्रथमस्यैकाचोद्विर्वचनम् शिते
षुः तीक्ष्णशरः अक्षिणी च भ्रुवौ च अक्षिभ्रुवम् अचतुरेत्यच नि
पातितः उज्जिहानः ऊर्ध्वन्नयन् ओहाङ् गतावित्यस्य जुहोत्या
दिकस्य भृञामितीत्त्वम् ॥४७॥

भ० दृष्ट्वेत्यादि। ककुभोदिश ऊर्णुवानान् आच्छादयतोबलौघान्
सैन्यसमूहान् दृष्ट्वा सौमित्रिर्लक्ष्मणः कवचं पिनह्य बद्ध्वा शृङ्गविका
रं शार्ङ्गं धनुर्वितत्य सज्यं कृत्वा आकर्षणेन विस्तार्य्य वा अक्षिभ्रु
वमुज्जिहान उत्क्षिपन् सिसंग्रामयिषुः युद्धेच्छुः सन् तस्थौ णवातो
डौः किम्भूतः शितस्तीक्ष्ण इषुः शरोयस्य स तथा शोयनिशाने
च्छाशोर्व्वेति ङि: ऊर्णुवानानिति ऊर्णुञ्अआच्छादने शानः श्नु
भ्वोरित्युव वितत्येति तनदुञ्विस्तृतौ वनतनाद्यनिमामिति नस्य
लोपः स्यतन्पिति पिनह्येति अपिपूर्व्वीणह्यञोबन्धे वातोऽवाप्यो
रित्यपेरलुक् सिसंग्रामयिषुरिति संग्रामङ्तकयुद्धे सन् उः अक्षि
भ्रुवमिति अक्षिणी च भ्रुवौ च अक्षिभ्रुवमिति निपातनात् उज्जि
हान इति ओहाङ्लिगतौ शानः क्रादीरेढिः पृश्नादेरिति खे
ङिः ॥४७॥

शुक्लोत्तरासङ्गभृतोविशस्त्रान् पादैः शनैरापततः
समन्यून्। औदिष्ट तान् वीतविरुद्धबुद्धीन् विवन्दि
षून् दाशरथिः स्ववर्ग्यान् ॥४८॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



शुक्लो। दाशरथिस्तान् स्ववर्ग्यान् स्ववर्गे भवान् अशङ्केयत् ज०म० स्वाविति यत् आत्मीया अपि कदाचित् दुष्टबुद्धयो भवन्तीत्या ह वीतविरुद्धबुद्धीन् औहिष्ट ऊहितवान् ऊहतेरात्मनेपदिनो लुङि आट वृद्धिः तदेवाविरुद्धबुद्धित्वन्दर्शयन्नाह शुक्लोत्तराश ङ्गभृतः शुक्लो य उत्तरासङ्ग उत्तरीयं तं विभ्रतीति क्विप् विश स्तान् निरायुधान् पादैरापतत आगच्छतो मुक्तवाहनत्वात् शनैर्न त्वरया समन्यून् सक्रुष्टशोकान् आगतशोकान् वा विवन्दिषून् वन्दितुमिच्छून् ॥ ४८ ॥

शुक्लेत्यादि। दाशरथिस्तान् स्ववर्ग्यान् वीतविरुद्धबुद्धीन् विगत भ० दुष्टमतीन् औहिष्ट ज्ञातवान् ऊहङ् वितर्के वर्गात् भवार्थे यत्। कदाचिदात्मीया अपि दुष्टचेतसः स्युरतउक्तं वीतेति दूषः क्तः वीतविरुद्धबुद्धित्वं कुतो ज्ञातमित्याह शुक्लेति शुक्लोय उत्तरासङ्ग उत्तरीयं तं विभ्रति इति क्विप् युद्धे शुक्लोत्तरासङ्गोनिषिद्धः विश स्तान् निरायुधान् शनैर्मन्दं यथास्यात्तथा पादैरापतत आग च्छतस्त्यक्तवाहनत्वात् समन्यून् सशोकान् विवन्दिषून् वन्दितु मिच्छून् ॥ ४८ ॥

समूलकाषं चकषूरुदन्तोरामान्तिकं वृंहितमन्युवे गाः। आवेदयन्तः क्षितिपालमुच्चैःकारं मृतं रामवि योगशोकात् ॥ ४९ ॥

समू। ते रामान्तिकं रामसमीपमागताश्चकषुः पिष्टवन्तः ज०म० समूलकाषं समूलङ्कषित्वा भूमेरधोभागमुत्खत्य निमूलसमूल

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



योः कष इति कषेर्णमुल् कषादिषु यथाविध्यनुप्रयोगः रुदन्तः रोदनं कुर्व्वन्तो बृंहितमन्युवेगा विवृद्धशोकवेगा वृहिवृद्धावित्य स्य रूपम् रामवियोगशोकात् कारणात् क्षितिपालन्दशरथमुच्चैः कारं कृत्वा मृतं निधनं गतं आवेदयन्तः कथयन्तः अव्यये यथा भिप्रेताख्यान इति कृञोणमुल् एतद्यथाभिप्रेताख्यानमिति नो च्चैराख्यातुमभिप्रेतत्वात् उच्चैरावेदयन्ति ॥ ४९ ॥

भ० समूलकाषमित्यादि। ते रुदन्तो रामान्तिकं रामसमीपदेशं स मूलकाषं यथास्यात्तथा चकषुः पिष्टवन्तः भूमौ स्वशरीराघा तात् समूलस्य साधोभागस्य रामसमीपदेशस्य काषः पेषणं यस्मा दिति कषणक्रियाविशेषणं काषोघञन्तः समूलघातवत् चणम्वा। केचित्तु समूलं भूमेरधोभागमपि कषित्वा पिष्ट्वा पुनः पिष्टवन्त इति व्याख्याय चणमन्तस्य पूर्व्वकालत्वमाहुः अन्येतु णमन्तस्यात्र पृथगर्थाभावमाहुः तेन समूलकाषञ्चकषुः समूलं चकषुरित्यर्थः। कषवधे वा रूपं समूलमिति साकल्येऽव्ययीभावः मूलसहितमित्य र्थोवा किम्भूतास्ते बृंहितमन्युवेगा विवृद्धशोकवेगा वृहिवृद्धौ रामवियोगहेतुकात् शोकान्मृतं क्षितिपालं उच्चैःकृत्वा आवेदय न्तो ज्ञापयन्तः उच्चैःकारमिति अव्ययात् कृञोऽनिष्टकथने चणम् कारं विज्ञं किम्वा उच्चैर्यथास्यात्तथावेदयन्तः किम्भूतं क्षितिपाल कारं रामवियोगे प्राणवियोगकारित्वेनैव विज्ञत्वं कृकङ्विज्ञाने इत्यस्मात् कभावेऽस्मी इति वचनात् कर्त्तरि घञ् ॥ ४९ ॥

चिरं रुदित्वा करुणं सशब्दं गोत्राभिधायं सरितं समेत्य। मध्येजलाद्राघवलक्ष्मणाभ्यां प्रत्तं जलं द्युज्ज लमन्तिकेऽपां ॥ ५० ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



चिरं। चिरं महान्तं कालं करुणं समन्यु सशब्दं प्रतिक्रुत्य रु दित्वा रलोव्युपधाद्धलादेरिति क्त्वे विकल्पिते रुदविदेत्यादि ना कित्त्वम् सरितं समेत्य नदीं सम्भूय गत्वा मध्येजलात् जलस्य मध्यात् तस्माद्वा उत्थाय अवतीर्य्य ल्यब्लोपे पञ्चमी पारेमध्ये षष्ठ्यावेत्यव्ययीभावः अपञ्चम्याइति प्रतिषेधात् अत्र भवति नाव्य यीभावादिति लुक्प्रतिषेधस्य राघवलक्ष्मणाभ्यां अपामन्तिके स मीपे जलं प्रत्तम् दत्तं अचउपसर्गात्तः गोत्राभिधायं नामाभि धायं द्वितीयायाञ्चेति णमुल् द्व्यञ्जलमिति अञ्जलिपरिछिन्नं जलमञ्जली द्वौ विगृह्य तद्धितार्थे समासः द्वित्रिभ्यामञ्जलेरि ति टच् ताभ्यामत्येकमञ्जलिप्रदानात् द्वावञ्जली प्रमाणमस्ये त्यस्मिन्वाक्ये प्रमाणप्रत्ययस्य प्रमाणे लुक् द्विगोर्नित्यमिति लुक् ततः समासान्तो न प्राप्नोति अतद्धितलुकीत्यधिकारात्॥ ५०॥ ज०म०

चिरमित्यादि। चिरकालं करुणं सशोकं सफूत्कारं रुदित्वा क्रन्दित्वा सरितं नदीं समेत्य सम्भूय गत्वा मध्ये अवतीर्य्य जल मध्यादाकृष्य वा रामलक्ष्मणाभ्यां अपां अन्तिके जलसमीपे तटे द्व्यञ्जलं अञ्जलिद्वयपरिछिन्नं जलं गोत्राभिधायं यथास्यात्तथा प्रत्तं प्रदत्तं डुदाञ्दाने क्तः ग्यचस्तवेति पचे तादेशः मध्येजला दिति मध्ये इत्यव्ययं हस्तेपाणौप्राध्वमित्यादौ तद्ग्रहणात् जलस्य मध्ये मध्येजलमित्यव्ययीभावः यवर्थे पञ्चमी अन्यारभ्येत्यादि ना सामान्यतोयवर्थे पञ्चम्युक्ता तेन सर्व्वस्मात् कारकाकार कात् यवर्थे पञ्चमी दुर्निवारा परैस्तु कर्म्माधाराभ्यां यवर्थे पञ्च मी भूरिप्रयोगार्थमुक्ता क्वचिदन्यत्रापीति तैरुक्तत्वात् वोपदेवेना पि सामान्यतोयवर्थे पञ्चमीमुक्ता आनन्दादीश्वरः शैलादासना भ०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



दीव्यतेऽलकामित्यत्र शैलमारुह्य आसने उपविश्य इत्यर्थ इति व्याख्यातं तेन कर्म्माधाराभ्यां यवर्थे पञ्चम्या भूरिप्रयोगोज्ञापितः वात्कर्षौऽतोप्यादिति पीवर्ज्जनात् न मः मध्ये समेत्य जलादुत्थाय जलं प्रत्तमिति केचित् द्व्यञ्जलमिति द्वयोरञ्जल्योःसमाहारइति द्वित्रिभ्यामञ्जलेर इत्यप्रत्ययः यघोर्लोपइतीकारलोपः तत्परिच्छिन्नत्वादभेदोपचारात् जलमपि द्व्यञ्जलमुक्तं ताभ्यामेकैकाञ्जलिदानादञ्जलिद्वयं जलं दत्तमित्यर्थः केचित्तु अतद्धितार्थे द्विगौ द्वित्रिभ्यामञ्जलेर इत्युक्ता द्वावञ्जली प्रमाणमस्येति वाक्यं दूषयन्ति प्रमाणार्थस्य तद्धितवाच्यत्वात् गोत्राभिधायमिति गोत्रस्य नाम्नोऽभिधायोऽभिधानं यत्र दानक्रियाविशेषणं अभिपूर्व्वात् धाञोघञि यन्ञिणदिति यन् किम्वा गोत्रमभिधाय गोत्राभिधायं द्वितीयान्तात् धातोस्णमभिधानात् केचित्तु आत्मीयैर्धृताभ्यां नीताभ्यां रामलक्ष्मणाभ्यां अपामन्तिके चिरं रुदित्वा तदनु मध्ये मध्यभागसमीपे सरितं समेत्य नाभिपर्य्यन्तं जलं गत्वेत्यर्थः जलं प्रत्तं कीदृशं जलं जलात् अदेःकर्म्मणि क्विप् जलस्य जडस्य अदनीयं भावे क्विपि जडस्य अदनीयं भोजनं यस्मादिति वा लोकान्तरं प्राप्तस्यापि दशरथस्य जडत्वं त्यक्तरामत्वात् प्रेतत्वादा मनीषादित्वात् डस्य पाक्षिकं लत्वं गोत्राभिधायमित्यस्य रुदित्वेत्यनेन वा सम्बन्ध इत्याज्ञः ॥५०॥

अरण्ययाने सुकरे पिता मां प्रायुङ्क्त राज्ये वत दुष्करे त्वां। मागाः शुचं वीर भरं वहामुमाभाषि रामेण वचः कनीयान् ॥ ५१ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अर। अरण्याय यानं अरण्ययानं तस्मिन् सुकरे सुखसाध्ये पिता मां प्रायुङ्क्त नियुक्तवान् युजेरौधादिकस्य लङि रूपम् कर्त्रभिप्राये प्रोपाभ्यां युजेरित्यात्मनेपदं राज्ये दुष्करे दुःखसाध्ये त्वां प्रायुङ्क्त एवञ्च सति हे वीर शुचं शोकस्मागाः माकार्षीरित्यर्थः इणोगा लुङि गातिस्थेति सिचोलुक् वत इति खेदे किन्तु भरमम् पितुर्नियोगं भृभरण इत्यस्मात् ऋदोरप् वह सम्पादय विधौ लोट् एवं वचः रामेण कनीयान् अनुजो भ्राता भरतः आभाषि भाषितः कर्म्मणि लुङ् ब्रुवीत्यर्थग्रहणात् द्विकर्म्मकता अल्पशब्दादीयसुनि युवाल्पयोरित्यादिना कनादेशः॥ ५१॥ ज० म०

अरण्ययानइत्यादि। रामेण कनीयान् भरतोवच आभाषि कथितः ब्रुवेरर्थग्रहणात् याज्ञार्थदुहचीत्यनेन द्विकर्म्मकत्वं गौणे याचादय इति गौणकर्म्मोक्तं अल्पशब्दाद्गुणादिष्ठेयस्स इति ईयसुः युवाल्पोकन्वेति कनादेशः किं तदच इत्याह पिता सुकरे सुखसाध्ये अरण्ययाने वनगमने मां प्रायुङ्क्त दुष्करे दुःखसाध्ये राज्ये राजकर्म्मणि त्वां प्रायुङ्क्त नियुक्तवान् युजेर्ध्या रुधादित्वात् श्नम् युजिरउक्तश्च इति मं नणोश्नेऽणाविति नादेशः चङिति कङ् अपेञ्ज्ञेः ईषद्दुःसोःखलिति ज्ञः खल् विकारसंघेत्यादिना राज्ञः कर्म्मार्थे ज्ञः मन्वर्ज्जानित्यादिना भावकर्म्मयवर्ज्जनात् न्वोर्लोपौ ताविति राज्ञोनस्य लोपः वत खेदे एवं सति हे वीर शुचं शोकं मागाः न लभस्व इणोगाय्यां भूस्थापिवेति सेर्लुक् अमुं भरं पितृनियोगरूपं त्वं वह सम्पादय विधौ गौ भरोऽतिशय भारयोरिति कोषः॥ ५१॥ भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कृती श्रुती वृद्धमतेषु धीमांस्त्वं पैतृकं चेद्वचनं न कुर्य्याः। विच्छिद्यमानेऽपि कुले परस्य पुंसः कथं स्यादिह पुत्रकाम्या॥५२॥

ज०म० कृती। वृद्धानां पण्डितानां मतेषु श्रुतानि कृतानि चानुष्ठितानि येनेति श्राद्धमनेनेत्यधिकृत्य इष्टादिभ्यश्चेति इनिः क्तस्येन्विषयस्येति कर्म्मणि सप्तमी स्वमते भावक्तान्तादस्त्यर्थे इन् स त्वमेवंविधः धीमान् पैतृकं पितुरागतं पितुर्य्यच्चेति चकाराद्दतष्ठञि ईसुसुक्तान्तात्कः चेद्यदि वचनं न कुर्य्याः मध्यमपुरुषैकवचने लिङि रूपम् तदा विच्छिद्यमाने कुले वंशे परस्यापि अन्यस्यापि पुंसः अपिशब्दोभिन्नक्रमः कथं स्यादिह लोके पुत्रकाम्या आत्मनः पुत्रेच्छा नैवेत्यर्थः पुत्रशब्दात्काम्यच्चेति काम्यच् तदन्तादप्रत्ययः टाप्॥५२॥

भ० कृतीत्यादि। कृती त्वं पैतृकं पितुरागतं चेद्यदि न कुर्य्याः न करिष्यसि तदा कुले वंशे विच्छिद्यमानेऽपि परस्य उत्तरकालीनस्य श्रेष्ठस्य अन्यस्य वा पुंसः कथं इह लोके पुत्रकाम्या आत्मनः पुत्रेच्छा स्यात् भवन्तं दृष्ट्वा अग्रिमस्य लोकस्य वचनाकरणेन पुत्रेष्वश्रद्धाप्रसङ्गात् त्वं कथम्भूतः वृद्धमतेषु पण्डितमतेषु कृती श्रुती च वृद्धमतानि कृतानि येन स वृद्धमतेषु कृती वृद्धमतानि श्रुतानि येन स वृद्धमतेषु श्रुती क्तेनाढे इति कर्म्मणि सप्तमी क्तेनाढे इति ज्ञापकात् क्तान्तात् कर्त्तरीन्प्रत्ययोबोध्यः किम्वा कृतं करणं अनुष्ठानं श्रुतं श्रवणं कृश्रुभ्यां भावे क्तः ततोऽस्त्यर्थे ऐकाजादितीन् वृद्धमतेष्विति विषयसप्तमी धीमान् प्रशस्तबुद्धियुक्तः पैतृकमिति पितृशब्दादागतार्थे ढघेकादिति कण् कुर्य्या इति भव्ये वा फलहेत्वोरिति खी कुरुलोपोऽव्ये इत्युपोलोपः पुत्रकाम्येति स्वेःकाम्यक् स्वेच्छायामिति काम्यक् संस्वादः॥५२॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अस्माकमुक्तं बहु मन्यसे चेद्यदीशिषे त्वं न मयि स्थिते च। जिह्रेष्यतिष्ठन् यदि तातवाक्ये जहीहि शङ्कां व्रज शाधि पृथ्वीं ॥ ५३ ॥

अस्मा। अस्माकमुक्तं अस्मत्सम्बन्धिवचनं यदि बहु मन्यसे आद्रियसे पितृतुल्योभ्राता अस्यानुमतः कथमेवं न कुर्य्यामिति यदि च मयि स्थिते नेशिषे न प्रभुत्वङ्करोषि प्रभुत्वमहं त्वदाज्ञाकर इति ईशेरादादिकस्य ईशःस ईतीडागमः गुरुवचनमनतिक्रमणीयं विशेषतस्तातवाक्यं तस्मिन्नतिष्ठन् वचनमकुर्व्वाणः यदि जिह्रेषि लज्जसे स्लौ द्विर्व्वचनं एतन्निमित्त्याह जहीहि शङ्कां त्यज विकल्पम् व्रज गच्छ अयोध्यां शाधि पालय पृथ्वीं जहातेश्चेति इत्वे विकल्पिते ईहल्यघोरितीत्वम् शासः शाहाविति शाभावः तस्याभीयत्वेनासिद्धत्वात् ऊझल्भ्योहेर्द्धिः ॥ ५३ ॥ ज० म०

अस्माकमित्यादि। अस्माकमुक्तं वचनं चेद्यदि बहु मन्यसे आद्रियसे यदि वा मयिस्थिते त्वं न ईशिषे प्रभुत्वं न करोषि तातस्य वाक्ये अतिष्ठन् पितृवचनमकुर्व्वाणो यदि जिह्रेषि लज्जसे तदा पृथ्वीं शाधि पालय एवंसति मम पितुश्च वचनं कृतंस्यात् अतोव्रज गच्छ अयोध्यां शङ्कां स्वायशोभयं जहीहि त्यज अस्माकमिति स्वभाव कृतेति कर्त्तरि षष्ठी सम्बन्धे इत्यन्ये गौरवं बहुत्वमभिधानात् अहमपि तव पितृतुल्य इति बहुत्वेन बोध्यते उक्तमिति भावे क्तः मन्यौङ्बोधे ईशलङ्ऐश्वर्य्ये सध्वारसेमिति इम् ह्रीलिलज्जे श्लो हाक्लित्यागे विधौ गौ श्नाद्योरित्यादिना ङी शासुच्लुशासने जह्योधिशाधीति शाधि ॥ ५३॥ भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



वृद्धौरसां राज्यधुरां प्रवोढुं कथं कनीयानहमुत्सहेय। मा मां प्रयुंक्थाः कुलकीर्त्तिलोपे प्राह स्म रामं भरतोऽपि धर्म्यं ॥ ५४ ॥

ज०म० वृद्धौ। भरतः प्राह धूर्व्वहनशीला धूर्नयनशीलाइत्यर्थः अनेकार्थत्वाद्धातूनां भ्राजभासेति क्विप् राल्लोप इति वलोपः राज्यस्य सप्ताङ्गस्य धूर्धात्री प्रकृतिरिति विगृह्य ऋक्पूरित्यकारप्रत्ययःपरवल्लिङ्गमिति धूरिति स्त्रीलिङ्गम् ततष्टाप् कीदृशीं वृद्धौरसां वृद्धोज्येष्ठः औरसः पुत्रोयस्यां उरसा निर्म्मित इति छन्दसो निर्म्मित इत्यनुवृत्तौ उरसोऽण्चेत्यण् तां तिष्ठति रामे प्रवोढुं कथमुत्सहेय कनीयान् सन् नैवेत्यर्थः शकधृषेत्यादिना वहेः सहावुपपदे तुमुन् गर्हायां लडपिजात्वोरित्यनुवृत्तौ विभाषाकथमि लिङ्चेति लिङ् षहेरत्पूर्व्वस्य आत्मनेपदित्वात् सीयुट् इटोत् लिङः सलोपोनन्त्यस्य अतोमा मां प्रयुंक्थाः मा नियोजय माङि लुङ् झलोझलीति सिचोलोपः कुलकीर्त्तिलोपे लोपयतीति लोपः पचाद्यच् रघुवंशस्य या कीर्त्तिः तस्या लोप इति समासः पूर्व्वैरनाचरितत्वात् एवञ्च धर्म्यं धर्मादनपेतं भरतोऽपि प्राहस्म उक्तवान् पुनश्चाह ॥ ५४ ॥

भ० वृद्धौरसामित्यादि। रामस्य धर्म्यवचनानन्तरं भरतोऽपि धर्म्यं धर्मादनपेतं वचो रामं प्राहस्म प्रोवाच विकारसंघेत्यादिना अनपेतार्थे धर्मात् यः किं प्राहस्म इत्याह कनीयानहं अनुजोऽहं राज्यधुरां प्रवोढुं कथं उत्सहेय उत्साहं करिष्यामि कथमाशीचवेति पचे षी राज्ञोधूः राजधुरा धुरोऽनचस्यादिति अः

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



स्त्रियामतश्चाप्। धूश्च स्यात् भारचिन्तयोरिति कोषः। कीदृशीं वृद्धोऽज्येष्ठ औरसः पुत्रो यस्यां तां उरसा निर्म्मित इति ढवेकादि तिष्णः ज्येष्ठपुत्रसम्बन्धिनीं राज्यधुरामित्यर्थः वहेस्त्वमि स्वहव होदोढीत्योत्वं अतएव कुलकीर्त्तिलोपे धूर्व्वहे मां मा प्रयुंक्था न नियोजय लोपयतीति लोपः पचादित्वादच् यद्वा लोपो नाशः युजेर्माटीवेति टौ युजिरउदृग्रच इति मं झसस्वाज्झसीति सेर्लुक् माङ्योगेऽम्‌निषेधः ५४॥

ऊर्ज्जस्वलं हस्तितुरङ्गमेतदमूनि रत्नानि च राजभाञ्जि। राजन्यकं चैतदहं क्षितीन्द्रस्त्वयि स्थिते स्यामिति शान्तमेतत्॥५५॥

ऊर्ज। एतद्धस्तितुरङ्गं सेनाङ्गत्वादेकवद्भावः ऊर्जस्वलं बलवत् ऊर्जनमूर्क् सम्पदादित्वात् क्विप् सा विद्यते यस्येति ज्योत्स्नातमिस्रेत्यादिना वलच् असुगागमश्च अमूनि च रत्नानि राजभाञ्जि राजगृह्याणि एतच्च राजन्यकं क्षत्रियसमूहः क्षितीन्द्रो राजा अहं त्वयि स्थिते स्यामिति भवामीति शान्तमेतत् अलीकमेतत् स्यामिति निमन्त्रणे नियोगकरणे लिङ्॥५५॥ ज०म०

ऊर्ज्जस्वलमित्यादि। एतदूर्ज्जस्वलं बलवद्धस्तितुरङ्गं अमूनि राजयोग्यानि रत्नानि एतच्च राजन्यकं क्षत्रियसमूहः एवं सर्व्वं निवेद्यात्मानं निराकरोति त्वयि स्थिते अहं क्षितीन्द्रः स्यां भवेयं इत्येतत् वचनं शान्तं अलीकं अनुचितमित्यर्थः अस्तेर्निमन्त्रणे नियोगकरणे प्रार्थने वा स्त्री ऊर्ज्जक्जीवने बले चास्त्विति अस ऊर्ज्जो विद्यतेऽस्य इति गोतृणमेधेत्यादिना रजआदित्वादलः भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



हस्तिनश्च तुरङ्गाश्च इति समाहारद्वन्द्वः राजन्यशब्दात् विकारसं घत्यादिना संघार्थे कण्॥ ५५ ॥

इति निगदितवन्तं राघवस्तं जगाद व्रज भरत गृहीत्वा पादुके त्वं मदीये। च्युतनिखिलविशङ्कः पूज्यमानोजनौघैः सकलभुवनराज्यं कारयास्मन्मतेन॥ ५६॥

इतिभट्टिकाव्ये प्रकीर्णकाण्डे श्रीरामप्रवासोनाम तृतीयः सर्गः ॥

ज०म० इति। इति एवं निगदितवन्तं उक्तवन्तं तं भरतं राघवोरामो जगाद उक्तवान् किमित्याह हे भरत मदीये पादुके उपानहौ गृहीत्वा त्वं व्रज गच्छ विधौ लोट् अस्मदस्मदादित्वे त्यदादीनिचेति वृद्धिसंज्ञायां तस्येदमर्थे वृद्धाच्छः प्रत्ययोत्तरपदयोश्चेति मदादेशः ततश्च पूज्यमानोजनौघैर्जनसमूहैः च्युतनिखिलविशङ्कः अपगताशेषविकल्पः सकलभुवनराज्यं सर्व्वत्र भूमंडले राज्यङ्कारय अनुष्ठापय पादुके इति योज्यं अस्मन्मतेन अस्माकमभिप्रायेण अत्र मदादेशो न भवति अस्मदोवङ्गवचनान्तस्य विवचितत्वात् तत्र ह्येकवचन इति वर्त्तते ननु कथं मदीय इत्यत्र मदादेशः वङ्गवचनान्तत्वादिति विरोधः पादुके रामस्यैव तर्ह्यस्मन्मतेन इत्यत्रापि एकवचनं आवयोरामलक्ष्मणयोर्म्मतेनेति षष्टीसमासेन दोषः॥ ५६ ॥

इति भट्टिकाव्य टीकायाञ्जयमङ्गलायाम्प्रकीर्णकाण्डे रामप्रवासो नाम तृतीयः सर्गः।

भ० इतीत्यादि। इत्येवं निगदितवन्तं भरतं राघवोरामोजगाद किं जगादेत्याह हे भरत मदीये पादुके गृहीत्वा त्वं व्रज गच्छ

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अयोध्यामित्यर्थात् विधौ गौ विकारसंघेति इदमर्थे ईयः युष्म दस्मदोस्त्वाहावित्यादिनास्मदोमदादेशः च्युतनिखिलविशङ्कः अपगताशेषविशङ्कः जनौघैर्जनसमूहैः पूज्यमानस्त्वं सकलभुवन राज्यं अस्मन्मतेन कारय पादुके इत्यर्थात् किम्वा अस्मन्मतेन प्रयोज्यकर्त्रा राज्यं कारय यो ऽञौञेरिति प्रयोज्यकर्त्तुः पाक्षिक कर्म्मत्वं अत्र साधनहेत्विति तृतीया अस्मन्मतमेव राज्यं करोतु त्वक्रियमाणरक्षणेनेतिभावः किम्वा रामो राज्यमकारयदिति वत् स्वार्थे ञिः चुर्ण्योञिरित्यत्र योगविभागात् किम्वा हे अस्मन्मते अस्मत्सदृशबुद्धे राज्यं न कारय न घातय शत्रुभिरित्यर्थः शीघ्रं गत्वा राज्यं रक्षेति भावः कृञगिहिंसे इत्यस्मात् ञिः प्रेरणे आव योरामलक्ष्मणयोरिव मतिर्यस्य तस्य सम्बोधनं एतेन राज्यरक्ष णे राममतितुल्यमतित्वं दर्शितं किम्वा अस्मन्मतेन राज्यं कारय ज्ञापय लोकानित्यर्थात् स्वयं अहं राज्यं न करोमि किन्तु रामा ज्ञया करोमीति पादुकाग्रहणविनयेन लोकान् ज्ञापय इति भावः कृकङ्विज्ञाने इत्यस्मात् प्रेरणे ञिः राज्ञोभावः कर्म्म वा राज्यं अस्माकं मतं अस्मन्मतं तेन सीतालक्ष्मणसहितत्वेन वहुत्व विवक्षया न मदादेशः॥ ५६॥

इति भरतसेनकृतायां मुग्धबोधिन्यां प्रकीर्णकाण्डे रामप्रवा सो नाम तृतीयः सर्गः।

**निवृत्ते भरते धीमानत्रेरामस्तपोवनं। प्रपेदे पूजि तस्तस्मिन् दण्डकारण्यमीयिवान्॥ १॥**

निवृत्तइत्यादि। धीमान् बुद्धिमान् अत्र स्थिते मयि कदा ज०म० चिद्भरतः पुनरेष्यतीत्येवम्बुद्धिमान्रामः अत्रेर्महर्षेस्तपोवनं प्रपेदे



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



गतः तस्मिंश्च तपोवने अर्घ्यपाद्यादिभिः पूजितः दण्डकोनाम ऋषिर्भार्गवकन्यामहरत् तच्छापात्पांशुवर्षेणाक्रान्तः सबन्धुराष्ट्र विनाशोयस्मिन् स्थाने तत्तोपलक्षितं अरण्यमभूत् तदीयिवान् गतवान् उपेयिवानित्यत्र उपसर्गस्यातन्त्रत्वात्केवलादपीणः क्वसुः ॥१॥

भ० निवृत्तेइत्यादि। भरते निवृत्ते सति रामोऽत्रेर्महर्षेस्तपोवनं प्रपेदे गतवान् तत्र वने मुनिभिः पूजितः सन् दण्डकारण्यमीयिवान् गतः इणः क्वसुः वसोर्घसेकाजितोम् खेःक्किति र्घः यिणोऽच्यणौ दण्डकनाम्नः कस्यचिद्राज्ञोऽपराधेन ब्रह्मशापात् तद्देशे अरण्योत्पत्त्या दण्डकारण्यमिति प्रसिद्धिः ॥१॥

अटाट्यमानोऽरण्यानीं ससीतः सहलक्ष्मणः। बलाद्बुभुक्षुणोत्क्षिप्य जह्रे भीमेन रक्षसा॥ २ ॥

ज०म० अटा। महदरण्यमरण्यानी इन्द्रवरुणेत्यादिना हिमारण्ययोर्महत्त्वे ङीषानुकौ तां अटाट्यमानः अत्यर्थमटन् रामः सूचिसूत्रीत्यादिना यङ् ससीतः सहलक्ष्मणः वोपसर्ज्जनस्येति विकल्पेन सभावः बलात् बलवत्तया जह्रे हृतः गृहीत इत्यर्थः कर्म्मणि लिट् उत्क्षिप्य उत्थाप्य हस्ताभ्यां केनापि रक्षसा वैश्रवणशापात् तुम्बुरुनाम्ना गन्धर्व्वेण राक्षसीभूतेन विराधाख्येन बुभुक्षुणा भोक्तुमिच्छुना भीमेन भयानकेन भियः षुक् इत्यौणादिकषुगभावपक्षे रूपम्॥२॥

भ० अटाट्यमानइत्यादि। बुभुक्षुणा भोक्तुमिच्छुना भीमेन भयानकेन रक्षसा राक्षसेन उत्क्षिप्य हस्ताभ्यामुत्थाप्य रामोजह्रे गृहीत

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



इत्यर्थः कर्म्मणि ठो किम्भूतः सीतया लक्ष्मणेन च सहितो रामः अरण्यानीं महारण्यं अटाट्यमानः पुनःपुनरतिशयेन वा अटन् गच्छन् सूत्रसूचेति यङ् केचित्तु गत्यर्थाङ्लुपेति नियमात् अत्रापि वक्रताविवक्षेत्याहुः तन्मते पथोऽभावात् वृक्षसंयोगेन वक्रं गच्छन्नित्यर्थः महदरण्यं अरण्यानी नारीसखीत्यादिना निपातः सहःसोवेति सहशब्दस्य विकल्पेन सादेशः॥२॥

अवाक्शिरसमुत्पादं कृतान्तेनापि दुर्द्दमं। भंक्त्वा भुजौ विराधाख्यं तं तौ भुवि निचख्नतुः॥३॥

अवाक्। तं विराधाख्यं राक्षसं कृतान्तेनापि यमेनापि दुर्द्दमं दुःखेन दम्यत इति खल् तौ रामलक्ष्मणौ भुवि निचख्नतुर्निखातवन्तौ कीदृशम् अवाक्शिरसं अधोमस्तकं अवाक् शिरो यस्येति ऊर्द्ध्वपादो यस्येति उत्पादम् भुजौ भंक्त्वा मोटयित्वा जान्तनशांविभाषेत्यनुनासिकलोपाभावपक्षे रूपम्॥३॥ ज०म०

अवाक्शिरसमित्यादि। तौ रामलक्ष्मणौ तं विराधाख्यं राक्षसं भुजौ भंक्त्वा भुवि निचख्नतुः निखातवन्तौ हनगमित्युङ्लोपः किम्भूतं अवाक्शिरसं अधोमस्तकं ऊर्द्ध्वपादं ऊर्द्ध्वौपादावस्येति वहुव्रीहिः कृतान्तेन यमेनापि दुर्द्दमं दुःखेन दमनीयं ईषद्दुःसारिति खल् भंक्त्वेति भन्जोऽनिम् इति विभाषितकित्त्वात् पक्षे नलोपाभावः॥३॥ भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



आंहिषातां रघुव्याघ्रौ शरभङ्गाश्रमं ततः। अध्यासितं श्रिया ब्राह्म्या शरण्यं शरणैषिणां॥ ४॥

ज०म० आंहि। ततोविराधवधानन्तरं रघुव्याघ्रौ शरभङ्गनाम्नो मुनेराश्रमं आंहिषातां गतवन्तौ अंहेर्लुङि रूपं अध्यासितं आश्रयीकृतं श्रिया लक्ष्म्या ब्राह्म्या ब्रह्मसम्बन्धिन्या ब्रह्मण इयमित्यण् ब्राह्मोजाताविति निपातनात् टिलोपः टिड्ढाणञित्यादिना ङीप् शरणे अवस्थाने साधु अनुकूलं शरण्यं तत्र साधुरिति यत् शरणैषिणां शरणन्त्राणमेषितुं शीलं येषाम्॥ ४॥

भ० आंहिषातामित्यादि। ततोविराधवधानन्तरं रघुव्याघ्रौ रघुवंशश्रेष्ठौ शरभङ्गनाम्नोमुनेराश्रमं आंहिषातां अंहिगतौ टौ ब्राह्म्या ब्रह्मसम्बन्धिन्या श्रिया लक्ष्म्या अध्यासितं आश्रयीकृतं ब्रह्मणो देवस्य विप्रस्य तपसोवा इयमिति ष्णः शरणं त्राणं एषितुं शीलं येषां तेषां शरण्यं शरणेऽवस्थाने त्राणे वा साधु अनुकूलं विकारसंघेति साध्वर्थे यः शरणं वधरक्षित्रोः शरणं रक्षणे गृहे इति विश्वः॥ ४॥

पुरो रामस्य जुहवाञ्चकार ज्वलने वपुः। शरभङ्गः प्रदिश्यारात् सुतीक्ष्णमुनिकेतनं॥ ५॥

ज०म० पुरो। शरभङ्गो रामस्य पुरः अग्रतः वपुः शरीरं ज्वलने अग्नौ जुहवाञ्चकार कुटिलात्तस्य भीह्रीभृहुवामिति आम् आमि

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



त्सुभावे द्विर्व्वचनम् किं कृत्वेत्याह प्रदिश्य कथयित्वा किं आरात्स
मीपे सुतीक्ष्णनाम्नो मुनेः केतनं आश्रमम् तत्र वासमुपकल्पये
ति तव किमर्थमत्रावस्थानमिति चेदाह ॥ ५ ॥

पुरइत्यादि। शरभङ्ग आरात् समीपे सुतीक्ष्णनाम्नोमुनेः के भ०
तनं आश्रमं प्रदिश्य तत्र वासं कल्पयेति कथयित्वा रामस्य पुरो
ऽग्रतः ज्वलनेऽग्नौ वपुः शरीरं जुहवाञ्चकार कृतवान् पशाम्वा
भीह्नीति पशाम् शिलाङ्गले क्वादीरेङ्किः भ्वस्त्रन्वामः प्रक्षेपमात्र
स्य धात्वर्थस्य विवक्षितत्वात् ज्वलनइत्यस्य होमलभ्यत्वात् वैयर्थ्यं
न वाच्यं ॥ ५ ॥

यूयं समैष्यथेत्यस्मिन्नासिष्महि वयं वने। दृष्टास्थ
स्वस्ति वोयामः स्वपुण्यविजितां गतिं ॥ ६ ॥

यूयम्। अपि नाम यूयं समैष्यथ आगमिष्यथ आङ्पूर्व्व ज०म०
इण् आगमने वर्त्तते एत्येधत्यूट्स्विति वृद्धिः इत्यस्मात्कारणात्
अस्मिन्वने वयमासिष्महि स्थिताः आसेर्लुङि रूपम् अस्मदोद्वयो
श्चेति चकारस्यानुक्तसमुच्चयत्वादेकत्वे बहुवचनम् अस्मदागम
ने किन्ते फलमिति चेदाह दृष्टास्थ अधुना दृष्टा भवथ अस्तं
र्मध्यमपुरुषबहुवचने श्नसोरल्लोप इत्यकारलोपः। स्वस्ति
कल्याणं वः युष्मभ्यम् नमःस्वस्तीत्यादिना चतुर्थी बहुवचनस्य
वस्त्रसौ स्वपुण्येन विजितां लब्धां गतिञ्जन्म यामः व्रजामः राम
रूपेण विष्णुरवतीर्णः तं दृष्ट्वा यास्याम इत्यत्र वयं स्थिता इति
॥ ६ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० यूयमित्यादि। न केवलं सुतीक्ष्णमुनिकेतनं प्रदिश्य एतदपि प्रदिश्येति योज्यं यूयं समैष्यथ समागमिष्यथ इतिहेतोरस्मिन् वने वयमासिष्महि आङ्पूर्व्व इण् आगमने वर्त्तते आसेर्थ्यासिः वयमिति एकत्वेऽपि बहुत्वविवक्षा परे तु एकत्वे वा बहुत्वमस्मदो ऽविशेषण इत्याहुः यूयं इष्टाः स्य लोपोऽस्त्यसोरित्यकारलापः स्वस्ति वः कल्याणं युष्मभ्यं शक्तार्थवषडित्यादिना चतुर्थी द्वीचीषी णामित्यादिना वसादेशः वयं त्वत्पुण्येन विजितां लब्धां गतिं यासोगच्छामः विष्णुरूपे त्वयि दृष्टे शोभना गतिर्भविष्यतीत्याशया एतावन्तं कालं तिष्ठाम इति भावः॥६॥

तस्मिन् कृशानुसाद्भूते सुतीक्ष्णमुनिसन्निधौ। उवास पर्णशालायां भ्रमन्ननिशमाश्रमान्॥७॥

ज०म० तस्मिन्। तस्मिन् शरभङ्गे कृशानुसाद्भूते कार्त्स्न्येनाग्नीभूते विभाषा सातिकार्त्स्न्ये इति सातिः रामः सुतीक्ष्णस्य मुनेः सन्निधौ समीपे पर्णशालायाम्पर्णकुट्यामुवास उषितवान् तत्र कृताधिवासस्य वृत्तिमाह भ्रमन्ननिशमाश्रमान् पर्य्यटन् सदा तपोवनानि मुनीनुपासितम्॥७॥

भ० तस्मिन्नित्यादि। तस्मिन् शरभङ्गे कृशानुसाद्भूते कार्त्स्नानाग्नीभूते सति रामः सुतीक्ष्णमुनेः सन्निधौ समीपे पर्णशालायां पर्णकुट्यां उवास वसैश्चानिवासे ठौ व्ययग्रहेति जिः कार्त्स्न्यायत्त्योरिति चसात् क्षिवादित्यादौ सादर्शनात् न षत्वं अनिशं निरन्तरं आश्रमान् भ्रमन् पर्य्यटन् अर्थान्मुनीनुपासितुं॥७॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



वनेषु वास्ततेयेषु निवसन् पर्णसंस्तरः। शय्योत्थायं मृगान् विध्यन्नातिथेयो विचक्रमे॥ ८॥

वनेषु। वास्ततेयेषु वसतौ साधुषु पथ्यतिथीत्यादिना ढञ् नि वसन् शयानः संस्तीर्य्यत इति संस्तर ऋदोरप् पर्णानि संस्तरो यस्येति पर्णसंस्तरः शय्योत्थायं शय्याया उत्थाय उत्पूर्व्वा त्तिष्ठतेरपादाने परीप्सायामिति णमुल् शय्यते अस्यामिति शय्या संज्ञायामित्यादिना क्यप्। त्वरया मुखधावनादीन्यपि न कृत्वा मृगान्विध्यन् ताडयन् ग्रहिज्यादिना सम्प्रसारणम् तत्रापि नात्मार्थं लुब्ध इत्याह आतिथेयः अतिथौ साधुः पूर्व्ववत् ढञ् विचक्रमे विहरतिस्म वेः पादविहरण इति तङ्॥ ८॥ ज०म०

वनेष्वित्यादि। वास्ततेयेषु वसतौ निवासे रात्रौ वा साधुषु वनेषु निवसन् वासं कुर्व्वन् शयानो वा पर्णसंस्तरः पत्ररचितशय्यः सन् शय्योत्थायं शय्यायास्त्वरया उत्थाय मृगान् विध्यन् ताडयन् विचक्रमे विहरतिस्म तत्रापि नात्मार्थं वध इत्याह आतिथेयः अतिथौ साधुः ढधेकादिति वसत्यतिथिभ्यां साध्वर्थे ष्णेय ययोर्लोप इतीकारलोपः शय्योत्थायमित्यभिधानात् पञ्चम्य न्तात् त्वरायां णम् किम्वा शय्याया उत्थानं यस्मै इति मृगवेध नक्रियाविशेषणं एतेन शयनोचितकालेऽपि मृगताडननिमित्तं शय्योत्थानं गम्यते तेन च सुतरां त्वरापि अस्मिन् पक्षे भावे घञ् यन् ञ्णिदिति यन् उदः स्थास्तम्भोरिति सलोपः शेरतेऽस्यामि ति शय्या शीव्रजयजेति क्यप् शीङोऽङ्य्येऽणो व्यधौ ताडे शतृः ग्रहस्वपादेरिति जिः वेःपद्भिरिति विपूर्व्वात् क्रमोऽमं॥ ८॥ भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ऋग्यजुषमधीयानान् सामन्यांश्च समर्चयन्। बुभुजे देवसात्कृत्वा शूल्यमुख्यञ्च होमवान्॥ ९॥

ज०म० ऋग्य। ऋक् यजुश्च ऋग्यजुषम् अचतुरेत्यादिना निपातितम् द्वन्द्वाच्चुदषहान्तात्समाहारे टच् ऋग्वेदं यजुर्वेदञ्च अधीयानान् पठतः इङोऽधिपूर्व्वस्य लटि शानचि रूपम् नलोकेति षष्ठीप्रतिषेधः सामन्यांश्च सामसु साधून् द्विजान् तत्र साधुरिति यत् येचाभावकर्म्मणोरिति प्रकृतिभावः समर्चयन् पूजयन् शूल्यमुख्यञ्च मांसम्बुभुजे भुक्तवान् शूले उखायाञ्च स्थाल्यां संस्कृतम् शूलोखाद्यत् भुजोऽशन इति तङ् किङ्कृत्वा देवसात्कृत्वा देवेभ्यो दत्वा तदधीनङ्कृत्वा देयेत्राचेति चकारात्सातिश्च होमवान् होमोविद्यते यस्येति कृताग्निकार्य्य इत्यर्थः॥ ९॥

भ० ऋग्यजुषमित्यादि। ऋग्यजुषं ऋग्वेदं यजुर्वेदञ्च अधीयानान् पठतो मुनीन् सामन्यान् सामवेदकुशलांश्च समर्च्चयन् सम्यक् पूजयन् शूल्यं शूलपाचितं उख्यं स्थालीसंस्कृतं च मांसं देवसात्कृत्वा देवाय देयं कृत्वा बुभुजे भुजोऽशने इति मं होमवान् कृताग्निकार्य्यः नित्यं होमोविद्यते ऽस्येति मोङ्मञ्झपादिति वतुः ऋक्च यजुश्चेति चैक्याच्चुदसहोरिति अः अधीङ्ध्ययने शानः अध्वोरितीयः सामशब्दात् ढघेकादिति साध्वर्थे ष्णः मन्वर्ज्जेत्यादिना नलोपाभावः अर्च्चक् पूजे चुरादिञ्यन्तात् शतृः देवशब्दात् देयेत्राचेति चकारात् चवात् ढघेकादिति शूलोखाभ्यां तत्र संस्कृते ऽर्थे यः॥ ९॥

वसानस्तन्त्रकनिभे सर्व्वाङ्गीने तरुत्वचौ। काण्डीरः खाङ्गिकः शार्ङ्गी रचन् विप्रांस्तनुत्रवान्॥ १०॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



वसा। असौ रामो वनेष्वानभ्र भ्रान्तवानिति वक्ष्यमाणेन श्लोके न सम्बन्धः वसानः परिदधानः वसआच्छादने इत्यस्मात् शानच् तरलत्वचौ वल्कले प्रत्यग्रे तन्त्रकः तन्त्रादचिरापहृतइति कन् तन्निभे तत्तुल्ये सर्व्वाङ्गीणे सर्व्वाङ्गाणि व्याप्नुवत्यौ तत्सर्व्वेत्यादिना खः काण्डीरः काण्डोऽस्याऽस्तीति काण्डाण्डादीरन्नीरचौ खङ्गिकः खङ्गोऽस्यास्तीति अतइनि ठनौ खाङ्गिक इतिपाठान्तरम् तत्र खङ्गः प्रहरणमस्येति तदस्यप्रहरणमिति ठक् शार्ङ्गी सधनुः तनुत्रवान् तनुं शरीरन्त्रायतइति तनुत्रम् आतोऽनुपसर्गे कः संसर्गे मतुप् पिनद्धकवचइत्यर्थः स एवम्विधो विप्रान् ब्राह्मणान् रक्षन्॥१०॥ ज॰म॰

वसानइत्यादि। असौ रामो वनेष्वानभ्र इति वक्ष्यमाणश्लोकेनान्वयः कीदृशः तरलत्वचौ वसानः परिदधानः वसत्(ङ्)कृतौ शानः कीदृश्यौ तन्त्रकनिभे नूतनवस्त्रतुल्ये तन्त्रात् पटोपकरणात् अचिरोद्धृतं वस्त्रं तन्त्रकं ढघेकादिति विकारसंघेत्यादिना आदिशब्दात् अचिरोद्धृतार्थे तन्त्रशब्दात् कः तन्त्रकञ्च नवाम्बरे इत्यमरः सर्व्वाङ्गीणे सर्व्वाङ्गं व्याप्नुवत्यौ ढघेकादिति तद्व्याप्नोतीत्यर्थे ईनः काण्डीरः प्रशस्तकाण्डयुक्तः गोतृणमेघेत्यादिना अस्त्यर्थे ईरः खाङ्गिकः खङ्गेन युध्यतेऽसाविति ढघेकादिति ष्णिकः शार्ङ्गी शृङ्गस्य विकारः शार्ङ्गं धनुः विकारसंघेति ष्णः शार्ङ्गविद्यतेऽस्येति नैकाजादिति इन् तनुं शरीरं त्रायते इति तनुत्रं कवचं हनजनादिति डः तद्युक्तः एवम्भूतः सन् विप्रान् रक्षन्॥१०॥ भ॰

छित्वाशितंगवीनानि फलैर्य्येश्वाशितम्भवं। तेष्वसौ दन्दशकारिर्व्वनेष्वानभ्र निर्भयः॥११॥



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० हित्वा। आश्रितास्तृप्ता गावो येषु भवन्ति तृणप्रायत्वात् अषड चादिसूत्रेण खः पूर्व्वपदस्य च मान्तत्वन्निपात्यते तान्यरण्यानि हित्वा येषु वनेषु फलैराश्रितम्भवमाश्रितस्य भवनन्तृप्तिर्व्वर्त्तते आश्रितेभुव इत्यादिना भावे खच् तेष्वानभ्र अभ्रवभ्रेति गत्यर्थो धातुः लिटि अतआदेरिति दीर्घे तस्मान्नुड्द्विहल इति नुट् दन्दशूकारिः व्यालानां हन्ता लुपसदेत्यादिना दंशेर्य्यङ् तद न्ताद्यजजपेत्यादिना ऊकः॥११॥

भ० हित्वेत्यादि। आश्रितङ्गवीनानि वनानि हित्वा त्यक्त्वा तेषु वनेषु असौ आनभ्र भ्रमतिस्म अभ्रगत्यां ठी खान्तादिति खेरान् आश्रि तास्तृप्ता गावो यत्र तदाश्रितगु आङ्पूर्व्वोऽश्नातिस्तृप्त्यर्थः परे तु तृप्त्यर्थे ऽशितस्यादौ दीर्घ इत्याङः ततः स्वार्थे ईनः मकारागमो निपातनात् गोतृप्ता तृणवाङ्क्ष्या त्तत्त्यागः केचित्याह येषु च फलै राशितम्भवं आश्रितेन तृप्तेन भूयते भावघेत्वाशिताद्भुवइति खः दन्दशूकानां व्यालानामरिर्हन्ता निर्भयोभयरहितः॥११॥

युग्मकं।

आतीनव्यालदीप्रास्त्रः सुत्वनः परिपूजयन्। परि षद्वलान्महाब्रह्मैराट नैकटिकाश्रमान्॥१२॥

ज०म० आती। तेषु वनेषु भ्रमन् नैकटिकाश्रमानाट गतवान् अटे रभ्यासस्यातआदेरिति दीर्घत्वं ग्रामस्यान्तिके क्रोशमात्रन्त्यक्त्वा यतयोभिक्षवो ये निवसन्ति ते नैकटिकाः निकटे वसतीति ठक् तेषा माश्रमांस्तपोवनानि कीदृशः आतीनव्यालदीप्रास्त्रः नानाजाती याः अनियतवृत्तयः शरीरमायास्य ये जीवन्ति ते आतास्तेषां य त्कर्म्म तदपि आतन्तेन जीवन्ति इति आतीनाः आतेन जीवतीति

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



खञ् तेषां व्यालाहिंस्राः उपघातकाः तेषु दीप्तास्त्रः ज्वलदायुधः सप्तमीति योगविभागात्सः सुत्वनः सुतवतः परिपूजयन् सोमपायिनइत्यर्थः सुयजोर्ङ्वनिप् तुक् नसंयोगादित्यल्लोपोन पर्षद्वलानिति पर्षस्नेहने अस्मात्पर्षते स्निह्यतीति भ्रष्टभ्यसोदिरित्यत्र पर्षे र्वाऊलकादोणादिकोदिः पर्षत् तत्र यदि रजःकृष्यासुतिपर्षदो वलजिति तदा पर्षत् विद्यते येषां सुत्वनामिति वलच् अत्र परिषीदतीति परिषत् क्विवन्तोयदा परिषद्येषा गुणग्राहिणी तदा परिषद्वलं सहायोयेषामिति बहुब्रीहिः महाब्रह्मैर्महाब्राह्मणैः कुमहद्भ्यामन्यतरस्यामिति टच् तैः सहाट ॥ १२ ॥

व्रातीनेत्यादि। रामोनैकटिकाश्रमान् आट अटगतौ ठी निकटे वसन्ति नैकटिका ढघेकादिति ष्णिकः तेषां मुनीनामाश्रमान् तपोवनानि किम्भूतः नानाजातीया अनियतवृत्तयः शरीरक्लेशेन ये जीवन्ति ते व्रातास्तेषां यत् कर्म्म तदपि व्रातमिति रूढं तेन जीवन्तीति व्रातीनाः पूर्व्ववदीनः तेषां मध्ये ये व्याला उपघातकास्तेषु दीप्राणि अस्त्राणि यस्य स तथा। व्यालोभुजङ्गमे क्रूरे श्वापदे दुष्टदन्तिनीति विश्वः। सुत्वनः सोमपान् परिपूजयन् षुञ्अभिषवे चासुषिति क्वनिप् स्वस्वतनपितीति तन् आश्रमान् कीदृशान् महाब्रह्मैर्महद्भिः ब्रह्मभिर्ब्राह्मणैः परिषद्वलान् सभायुक्तान् देशाद्ब्रह्मणःकुमहद्भ्यांतुवेति षः परिषीदन्त्यचेति क्विप् परिषत् सभागोतृणेत्यादिना रजआदित्वाद्वलः नवाक्षरपादस्यापीष्टत्वात् नचात्र श्लोके छन्दोभङ्गः पर्षद्वलानिति पाठे पर्य्युपसर्गस्य इकारलोपोनिपातनात्। आस्थानं संसदास्थानीपर्षत् परिषदौसमे इतिरभसः। केचित्तु ब्राह्मणवाचके महच्छब्दविशेषणस्य विरुद्धार्थत्वात् महाब्रह्मैर्महातपोभिरुपलक्षितान् सुत्वनः विशेषणे तृती

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



या नच देशाद्ब्राह्मण इति सूत्रे ब्राह्मणवाचकोब्रह्मशब्द इति नियम इत्याहुः॥१२॥

परेद्यव्यद्यपूर्व्वेद्युरन्येद्युश्चापि चिन्तयन्। वृद्धिक्षयौ मुनीन्द्राणां प्रियम्भावुकतामगात्॥१३॥

ज॰म॰ परे। परेद्यवि परस्मिन् आगामिनि दिवसे इत्यर्थः अद्यैतस्मिन्नहनि पूर्व्वेद्युः पूर्व्वस्मिन्नहनि अन्येद्युरन्यस्मिन्नहनि चिरातिक्रान्ते चिरगामिनि दिवसे परेद्यवीत्यादिषु दिवसेषु मुनीन्द्राणां वृद्धिक्षयौ उदयापचयौ चिन्तयन् प्रियम्भावुकताम्पूर्व्वमप्रियाभावनियुक्तत्वादतथाभूतः सन् प्रियोभवतीति प्रियम्भावुकः आढ्यसुभगेत्यधिकृत्य कर्त्तरि भुवः खिष्णुच्खुकञाविति खुकञ् तद्भावः तामगात् गतः अर्थान्मुनीन्द्राणामेव परेद्यव्यद्यादयः शब्दाः सद्यःपरुदित्यादिना निपातिताः॥१३॥

भ॰ परेद्यवीत्यादि॥ परेद्यवि परस्मिन्नहनि पूर्व्वेद्युः पूर्व्वस्मिन्नहनि अन्येद्युः अन्यस्मिन्नहनि च मुनीन्द्राणां वृद्धिक्षयौ धनशरीरादिगतोपचयापचयौ चिन्तयन् स्मरन् रामः प्रियम्भावुकतां अगात् प्राप्तवान् अप्रियोऽपि प्रियोभवतीति भुवोघेखिष्णुखुकञाविति च्व्यर्थे खुकञ् परेद्यवि अद्यचेति कुतःक्वकुह इत्यादिना निपातनात् पूर्व्वान्यान्यतरेति पूर्व्वान्याभ्यां एद्युस्॥१३॥

आतिष्ठद्गु जपन् सन्ध्यां प्रक्रान्तामायतीगवं। प्रातस्तरां पतत्त्रिभ्यः प्रबुद्धः प्रणमन्रविं॥१४॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



आति। जपन्नन्त्रमिति सामर्थ्यलभ्यं सन्ध्याकालोऽधिकरण ज०म०
क्तेनात्यन्तसंयोगे द्वितीया सम्यग्ध्यायन्त्यस्यामिति आतश्चोप
सर्ग इत्यङ् किमवधिं सन्ध्यामित्याह प्रक्रान्तामायतीगवम् आय
त्यः आयन्त्यो भवन्ति यस्मिन् काले गावः अस्मिन्नायतीगवं तिष्ठ
द्गुप्रभृतीनि चेत्यव्ययीभावसमासत्वात्साधुः नाव्ययीभावादिति
यस्मिन् काले सप्तम्या अभावः आङ्पूर्व्वादिणः शतरि इणो
यणिति यणि ङीपि च रूपं आयतीति गावोऽपि गोचरात् गोष्ठ
मायान्ति दिवसस्यार्द्धनाडिकावशेषे सन्ध्यापि तदेव प्रवर्त्तते
कियन्तमेव जपन्नित्याह आतिष्ठद्गु इति तिष्ठन्ति गावोयस्मिन्
काले दोहाय गावोहि रात्रिप्रथमयामस्य नाडिकायामतो
तायां विश्रान्ताः सत्यः उत्थाप्य दुह्यन्ते आतिष्ठदित्याङ्मर्य्या
दाभिविध्योरित्यव्ययीभावः तिष्ठद्गुप्रभृतीनि चेति चकारस्या
नुक्तसमुच्चयार्थत्वादव्ययीभाव एव पुनः समासान्तरन्न भवति प्रा
तस्तरामिति प्रातरित्यव्ययम्प्रभातवाचि प्रकर्षविवक्षायान्तरप्
तदन्तात्किमेत्तीत्यादिना आम् अतिप्रभाते पतत्त्रिभ्यः कुक्कुटा
दिभ्यः प्रथमम्प्रबुद्ध उत्थितः पञ्चमीविभक्तेइति पञ्चमी रवि
मादित्यम्प्रणमन् यदा चरति तदा प्रियम्भावुकतामगादिति
पूर्व्वेण योज्यम्॥ १४॥

आतिष्ठदित्यादि। प्रियम्भावुकतां अगादिति पूर्व्वेणान्वयः भ०
तिष्ठन्ति स्थिरीभवन्ति गावोयस्मिन् स तिष्ठद्गु कालः रात्रेः प्रथ
मनाडिका तत्र हि विश्रान्ता गावः पश्चादुत्थाप्य दुह्यन्ते आयन्ति
गोष्ठं गावोयस्मिन् काले स आयतीगवकालः अर्द्धास्तमितभा
स्करः प्रायशस्तत्रैव गवानयनात् आङ्पूर्व्वादिणः शतृ तिष्ठद्गवा

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



यतीगवशब्दौ कालेऽव्ययीभावे निपातितौ आयतीगवकाले प्रक्रान्तां आरब्धां सन्ध्यां व्याप्य तिष्ठद्गुकालं यावत् जपन् अर्था न्मन्त्रं अन्यारभ्येत्यादिना आङ्योगे पञ्चमी लुक्पराद्दित्या दिना पञ्चमीलुक् सन्ध्यामिति कालाध्वादीति द्वितीया आयती गवमिति चौष्योर्व्वेति सप्तम्यामः प्रातस्तरामिति प्रभाते पतत्रि भ्यः कुक्कुटादिभ्योऽपि प्रबुद्धोऽधिकप्रबोधवान् तेभ्योऽपि प्रागु त्थितः सन् रविं प्रणमन् अधिकभावविवक्षायां पञ्चमी अभिधा नात् पक्षिशब्देभ्यः प्रबुद्ध इत्यन्ये किमेत्याचेति चतरां ॥ १४ ॥

युग्मकं।

ददृशे पर्णशालायां राक्षस्याभीकयाथ सः। भार्य्योढं तमवज्ञाय तस्थे सौमित्रयेऽसकौ ॥ १५ ॥

ज०म० ददृशे। पर्णानां शालायां स्थितः स रामः राक्षस्या ददृशे दृष्टः कीदृश्या अभीकया कामुक्या अनुकाभिकेत्यादिना निपातितः दृ शेः कर्म्मणि लिट् अथ दर्शनानन्तरम्भार्य्योढं ऊढभार्य्यमूढा भा र्य्या यस्येति आहिताग्न्यादिषु दर्शनात् निष्ठान्तस्य परनिपातः अवज्ञाय अनादृत्य सद्भार्य्यत्वात् असकौ राक्षसी पापासौ कुत्सा यामव्ययसर्व्वनाम्नामकच् सौमित्रये लक्ष्मणाय श्लाघन्हुङित्या दिना सम्प्रदानसंज्ञा तस्थे स्वाभिप्रायम्मैथुनायाविष्कृतवती प्रकाशनस्थेयाख्ययोश्चेति प्रकाशने तङ्॥ १५ ॥

भ० ददृश इत्यादि। अभीकया कामुक्या राक्षस्या सूर्पणखया पर्णशालायां स रामोददृशे कर्म्मणि ठी अथ दर्शनानन्तरं

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भार्य्योढं कृतविवाहं तं रामं अवज्ञाय सभार्य्यत्वादनादृत्य असकौ राक्षसी सौमित्रये लक्ष्मणाय तस्मै स्वस्थित्या मैथुनाभिप्रायं प्रकाशयामास इत्यर्थः प्रतिज्ञानिर्णयप्रकाश इति मं यस्मैदित्सेत्यादिना चतुर्थी असकाविति त्यादिव्यासेत्यादिना ऽदसष्टेः पूर्व्वोऽक् परमते अविज्ञाता निन्दिता वा असौ असकौ तथाच। कुपायां निन्दनेऽज्ञाने नीतौ दानेन मानिते। प्रायोऽगन्त्यस्वरात् पूर्व्वः सर्व्वनामतिङव्ययादिति। ऊढा भार्य्या येन स तथा अग्न्याहितादित्वात् पक्षे परनिपातः॥ १५॥

दधाना बलिभं मध्यं कर्णजाहविलोचना। वाक्त्वचेनातिसर्व्वेण चन्द्रलेखेव पक्षतौ॥ १६॥

दधा। सा लक्ष्मार्थयाञ्चक्रइति वक्ष्यमाणेन सम्बन्धः कीदृशी मध्यं स्तनजघनयोरन्तरम्बलिभम्बलयोऽस्मिन् सन्तीति तुन्दिवलिवटेर्भः दधाना धारयन्ती कर्णजाहविलोचना कर्णजाहङ्कर्णमूलसमीपमित्यर्थः तस्य पाकमूलइत्यादिना जाहच् कर्णजाहयोर्विश्रान्ते विलोचने यस्याइति सप्तम्युपमानेत्यादिना उपपदलोपी वहुव्रीहिः वाक्त्वचेन वाक् त्वक्चेति प्राण्यङ्गत्वादेकवद्भावः द्वन्द्वाच्चुदषहान्तादिति टच् अतिसर्व्वेण अतिक्रान्तेन सर्व्वम् अत्यादयइति सः एकविभक्तिचापूर्व्वनिपात इति सर्व्वशब्दस्योपसर्जनत्वेऽपि पूर्व्वनिपातो न भवति अपूर्व्वनिपात इति प्रतिषेधात् वाक्त्वचेन वाङ्मयेन माधुर्य्येण मार्दवेन चासाधारणेनोपलक्षितेनेत्यर्थः इत्थम्भूते तृतीया चन्द्रलेखेव पक्षतौ तनु

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



त्वात् पचोऽर्द्धमासः तस्य मूले प्रतिपदि पचान्तिः ॥ १६ ॥

भ० दधानेत्यादि। सा तं प्रार्थयाञ्चक्रे इति चतुर्थश्लोकेनान्वयः ब लिभं वलियुक्तं मध्यं दधाना गोतृणमेधेत्यादिनेभः कर्णस्य मूलं कर्णजाहः तत्र विलोचनं यस्याः सा तथा कर्णान्तायतनेत्रेत्यर्थः अतिसर्व्वेण माधुर्य्यसौन्दर्याभ्यां सर्व्वमतिक्रान्तेन वाक्लचेन उ पलचिता वाक्व लक्व इति द्वन्द्वे चैक्याचुदषहोऽद्त्यः विशेषणेतृती या पचतौ पचमूले प्रतिपदि चन्द्रलेखेव द्रष्टुं सुष्ठुत्वात् ॥ १६ ॥

सुपाद् द्विरदनासोरूर्मृदुपाणितलाङ्गुलिः। प्रथि मानं दधानेन जघनेन घनेन सा ॥ १७ ॥

ज०म० सुपा। शोभनौ पादौ यस्याः असौ सुपात् सङ्ख्यासुपूर्व्वस्येति पादान्तलोपः पादोऽन्यतरस्यामिति यदा ङीप् नास्ति तदेत्थं रूपम् द्विरदनासोरुर्द्विरदनासे इव करिपोतकराविव ऊरू र्यस्या उपमानपूर्वोवह्रुव्रीहिः ऊरुत्तरपदादौपम्ये इति ऊङ् रद्यते अनेनेति रदः दन्तः पुंसिसंज्ञायाङ्घः करणे द्वौ रदौ य स्येति द्विरदः मृदुपाणितलाङ्गुलिः तलञ्च अङ्गुलिश्चेति द्वन्द्वः तत्र घ्यन्ताल्पाच्तरयोः अल्पाच्तरस्य पूर्व्वनिपातः पाण्योस्तला ङ्गुलिः पाणितलाङ्गुलिः मृदुः पाणितलाङ्गुलिर्यस्या इति योज्यं प्रथिमानम्पृथुतान्दधानेन धारयता घनेन उपचितेन जघनेनो पलचिता सा राचसी ॥ १७ ॥

भ० सुपादित्यादि। शोभनौ पादौ यस्याः सा संख्यासुपमानादिति पादस्य पाद्भावः द्विरदनासेव हस्तिशुण्डेव ऊरुर्यस्याः सा तथा

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



रामलक्ष्मणेत्यादिना जप् मृदु पाणितलञ्चाङ्गुलिश्च यस्याः सा तथा ये तु अल्पाचः पूर्व्वनिपातं तथा प्राण्यङ्गले समाहारं वद न्ति तन्मते प्रथमं तलाङ्गुलिशब्दयोः समाहारद्वन्द्वः तदनु पाणि ना सह षष्ठीसमासः तदनु मृदुना वक्रव्रीहिः प्रथिमानं महत्वं द धानेन निविडेन जघनेनोपलक्षिता। पश्चान्नितम्बः स्त्रीकट्याः क्ली बे तु जघनं पुरइत्यमरः॥१७॥

उन्नसं दधती वक्त्रं शुद्धदल्लोलकुण्डलं। कुर्व्वाणा पश्यतः शंयून् स्रग्विणी सुहसानना॥१८॥

उन्न। उच्यते अनेनेति वक्त्रम् सर्व्वधातुभ्य औणादिकष्टन् तत्र वक्त्रशब्दो मुखैकदेशे वर्त्तमानोऽपि कविभिः समुदाये प्रयु ज्यते वक्त्रमुखमुन्नसन्दधती नाभ्यस्ताच्छतुरिति नुम् न भवति उ न्नता नासिका यस्मिन्निति अञ्नासिकायाःसंज्ञायान्नसञ्चेत्यधि कृत्य उपसर्गाच्चेत्यच् नासिका च नसादेशमापद्यते शुद्धदत् शुद्धाः शुभ्रा दन्ता यस्मिंस्तच्छुद्धदत् अग्रान्तशुद्धेत्यादिना दत्रा देशः लोले चञ्चले कुण्डले यस्मिन् तत् लोलकुण्डलं पश्यतो जनान् शंयून् विद्यमानसुखान् कुर्व्वाणा शं सुखन्तदस्यास्तीति कं शम्भ्यांवभयुस्तितुतयस इति युस् सिलात्यदसंज्ञा अनुस्वारः अप श्यता वा शंयून् कुर्व्वाणा पश्यतान्तु पीडाकरी स्रग्विणी मालाव ती अस्मायेत्यादिना विनिः सुहसानना हसनं हसः सनहसोर्वे त्यप् शोभनहसनमाननं यस्याः सा॥१८॥ जं०म०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० ऊन्नसमित्यादि। ऊर्द्धनासिकं वक्त्रं मुखं दधती उपसर्गान्नासिकाया नसादेशो वक्त्रब्रीहाविति परे खमते नसाशब्दस्य रूपं तथाच रभसः लपनं वदनं तुण्डमाननं नासिका नसा। नसा नासा च नासिकेति कोषान्तरं। उच्यते अनेनेति वक्त्रं चासुसिति चः वक्त्रं कीदृशं शुद्धदत् शुद्धादन्तायस्येति दन्तस्य ददादेश इति परे खमते दत्शब्दोऽस्ति लोले चञ्चले कुण्डले यत्र मुखे तत्तथा सा किम्भूतापश्यतोजनान् शंयून् सुखिनः कुर्व्वाणा शंकंभ्यांयबुततुतिवभा इति अस्त्यर्थे युः स्रग्विणी मालावती स्रग्भिधासमयादिन्वेति अस्त्यर्थे विन् शोभनो हसो यत्र तादृशमाननं यस्याः सा तया॥१८॥

प्राप्य चञ्चूर्य्यमाणासौ पतीयन्ती रघूत्तमं। अनुका प्रार्थयाञ्चक्रे प्रियाकर्त्तुं प्रियम्वदा॥१९॥

ज०भ० प्राप्य टौकिला चञ्चूर्य्यमाणा गर्हितमाचरन्ती प्राणिनो हन्त्व्या इति चरेर्लुपसदेत्यादिना भावगर्हायां यङ् चरफलोश्चेत्य भ्यासस्य लुक् उत्परस्यातइत्युत्वम् हलिचेति दीर्घत्वं पतीयन्ती आत्मनः पतिमिच्छन्ती सुप आत्मनः क्यच् अनुका अभिलाषुका अनुकेत्यादिना निपातितः रघूत्तमं लक्ष्मणम्प्रार्थयाञ्चक्रे प्रार्थितवती प्रियाकर्त्तुमनुलोमयितुं पतिर्मे स्यादिति सुखप्रियादानुलोम्यइति डाच्। प्रार्थनामाह॥१९॥

भ० प्राप्येत्यादि। असौ राक्षसी रघूत्तमं लक्ष्मणं प्राप्य प्रियाकर्त्तुं प्रार्थयाञ्चक्रे प्रार्थितवती किं कुर्व्वती चंचूर्य्यमाणा गर्हितं पुनःपुनश्चरन्ती गत्यर्थात् गृलुपसदचरेति गर्हार्थे यङ् चरफ

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



लोरुषोङोननुरिति खेर्नुन् उङउकारस्य व्यंनचतयीति दीर्घः प तीयन्ती आत्मनः पतिमिच्छन्ती क्योम्व्याद्यस्येति क्यः घोऽज्य्य रे इति दीर्घः किम्भूता सा अनुका कामुकी प्रियम्बदा प्रियं वद तीति प्रियवशाङ्कवेत्यादिना खः खित्यव्याजेति मन् प्रियाकर्त्तु मिति सपत्त्रनिष्पत्त्रेत्यादिना आनुकूल्याय डाच्॥ १९ ॥

कुलकं॥

सौमित्रे मामुपायंस्थाः कम्रामिच्छुर्व्वशम्वदां। सु भोगीनां सहचरीमशङ्कः पुरुषायुषं॥ २०॥

सौमि। हे सौमित्रे इच्छुरेषणशीलः विन्दुरिच्छुरिति निपा तितः अशङ्कः निर्व्विकल्पः सन् किम्भावयिष्यतीति मामुपायंस्थाः परिणय आशंसायाम्भूतवच्चेति लुङ् उपाद्यमःस्वकरणइति तङ् विभाषोपयमनइत्यकित्त्वपक्षे रूपम् कम्राम् नमिकम्पीत्यादिना रः वशंवदां अहन्ते वश्येति वदन्तीम् लङ्गोगीनां लद्धरीराय हितां अवैधव्यादिलक्षणयोगात् आत्मन्विश्वजनेत्यादिना खः स हचरीं सहगामिनीं भिक्षासेनादायेषु चेति चकारस्यानुक्तसमुच्च यार्थत्वात् टप्रत्ययः कियन्तङ्कालं पुरुषायुषम्पुरुषस्यायुर्यावत् अचतुरेत्यादौ निपातितः अत्यन्तसंयोगेद्वितीया चरणक्रियायाः अत्यन्तसंयोगात् यथा मासमुषितइति॥ २०॥

सौमित्रेइत्यादि। एतत् प्रार्थयाञ्चक्रे इति पूर्व्वेणान्वयः हे सौ मित्रे त्वं इच्छुः सन् अशङ्कः सन् मामुपायंस्थाः परिणय अभिधा नात् आशंसायां टौ उपयमोविवाहइति मं यमः सूचनेवाद

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



द्वाहे इति सेर्विभाषितकित्त्वात् पक्षे नमलोपाभावः कीदृशीं मां कम्रां कामयमानां रूपवतीमित्यन्ये हिंसदीपेत्यादिना रः वशम्वदां अहं ते वश्येति वदन्तीं प्रियवशादित्यादिना खः सुभोगीनां सुभोगाय हितां विकारसंघेत्यादिना ईनः भुज्यतेऽनेनास्मिन् वेति भोगः शरीरं मैथुनाद्युपभोग इत्यन्ये पुरुषस्यायुर्जीवितकालः निपातनात् अत् स्वार्थे ष्णो वा पुरुषायुषं कालं व्याप्य सहचरीं सहचरेति हनचरगष्टक् कर्म्मप्रतिरूपकोऽयं सहशब्दः किम्वा पचादित्वादन् नदादित्वादीप् सदाश्वादीति द्वितीया इच्छतीति इच्छुः विन्दिच्छ इति निपातः॥ २० ॥

तामुवाच स गौष्ठीने वने स्त्रीपुंसभीषणे। अस्त्र्यं पश्यरूपा त्वं किमभीरुररार्य्यसे ॥ २१ ॥

ज०म० तामु। राक्षसीं लक्ष्मण उवाच उक्तवान् किमित्याह गौष्ठीने वने गोष्ठं भूतपूर्व्वं यस्मिन्वने इदानीन्नामापि न ज्ञायते गोष्ठात् खञ् भूतपूर्व्वइति खञ् स्त्रीपुंसभीषणे स्त्री च पुमांश्चेति स्त्रीपुंसौ अचतुरेत्यादौ निपातितौ तयोर्भीषणइति षष्ठीसः विभेतेर्णिचि हेतुभयेषुक् तदन्तात् कृत्यल्युटोबहुलमिति कर्त्तरि ल्युट् तस्मिन्नभीरुः सती किमित्यरार्य्यसे अत्यर्थमटसि अर्त्तेः सूचिसूत्रीत्यादिना यङ् यङि चेतिगुणः नन्द्राइति प्रतिषेधस्य प्रतिषेधो यकारपरस्य न द्वित्वनिषेध इति रेफोद्विरुच्यते भयशीला भीरुः भियः क्रुक्लुकनौ क्रियाशब्दत्वादूङुतइति ऊङ् न भवति अमनुष्यत्वाच तथाहि लक्ष्मणेनामानुषीयमिति ज्ञाता तथाच भङ्ग्या द

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



र्थयन्नाह असूर्य्यम्पश्यरूपा अतिगोपनीयतया सूर्य्यमप्यनिषिद्ध दर्शनन्न पश्यतीति असूर्य्यललाटयोरित्यादिना खश् पाघ्रेत्यादिना पश्यादेशः असूर्य्यम्पश्यं रूपं यस्मादिति सः सा न पश्यतीति रूपमपि न पश्यतीत्युक्तम् ॥ २१ ॥

तामित्यादि। तां राक्षसीं लक्ष्मण उवाच किमित्याह त्वं वने किमर्थमभीरुः सती अरार्य्यसे अत्यर्थं भ्रमसि ऋगतौ सूचसूत्रेति यङ् स्याद्यर्त्तृतोणुरिति गुणः नाजन्तादेरादिर्द्विरिति निषेधात् आद्यचरस्य न द्विः स्यादौनवर्ज्जे इति वर्ज्जनात् रेफसहितस्य यस्य द्वित्वं खेराद्यच इति खेर्यलोपः योऽनित इति खेर्दीर्घः वने किम्भूते गोष्ठीने भूतपूर्व्वं गोष्ठं यस्मिन् सम्प्रति गोसञ्चारोऽपि नास्ति अतएव स्त्रीपुंसयोर्भीषणे भयजनके गावस्तिष्ठन्ति अस्मिन्निति गोष्ठं निपातनात् विकारसंघेत्यादिना भूतपूर्व्वेऽर्थे गोष्ठात् नीनः स्त्री च पुमांश्च स्त्रीपुंसौ निपातनात् ण्यन्तभीधातोर्नन्द्यादित्वादनः भीर्भीषवेति भीषादेशः भीषिचिन्तीति सूत्रनिर्द्देशात् भीषधातुरप्यस्तीति केचित् कीदृशी असूर्य्यपश्यरूपा सूर्य्यमपि न पश्यति असूर्य्यपश्यं घटीखारीत्यादिना खश् स्यादानेति ह्रस्वः पश्यादेशः असूर्य्यपश्यं रूपं यस्याः सा तथा दृशिना सम्बद्धस्य नञः सूर्य्येण सह समासो गमकत्वात् नबिभेतीति अभीरुः क्रुक्लुकौभिय इति क्रुः क्रियावचनस्य भीरुशब्दस्य मनुष्यजातित्वाभावात् उतोऽयुङ रज्वादेरिति सूत्रेण ऊप् प्रत्ययः ॥ २१ ॥

मानुषानभिलष्यन्ती रोचिष्णुर्दिव्यधर्म्मिणी। तूमस्मरायमाणेह स्वतन्त्रा कथमञ्चसि ॥ २२ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० मानु। मनोरपत्यानि मानुषाः मनोर्जातावञ्यतौ षुक् तान भिलष्यन्ती कामयन्ती रन्तुमिच्छन्ती वाभ्राशेत्यादिना श्यन् रोचिष्णुः रोचनस्वभावा अलंकृञ्‌इत्यादिना इष्णुच् अतएव दिव्यधर्मिणी दिविभवा दिव्याः देवाः राचसा अपि देवयोनित्वात् तेषान्धर्म्मः स्वभावः सोऽस्या अस्तीति धर्म्मशीलेत्यादिनेनिः अप्सरायमाणा अप्सरादिवाचरन्ती राचसभावङ्गोपतुमिति भावः उपमानादाचारइत्यधिकारे कर्तुः क्यङ् सलोपश्च ओजसोऽप्सरसोनित्यमिति वचनात् इह वने स्वतन्त्रा कथमञ्चसि भ्रमसि स्व आत्मा तन्त्रः प्रधानं यस्याः अपराधीनत्वात् अनयोक्त्या राचसीत्वन्दर्शयति ॥ २२ ॥

भ० मानुषानित्यादि। त्वं स्वतन्त्रा सती इह वने कथमञ्चसि भ्रमसि स्वं तन्त्रं प्रधानं यस्याः सा तथा तन्त्रः कुटुम्बे कृत्ये स्यात् कारणेऽपि परिच्छदे। शास्त्रे प्रधाने सिद्धान्ते तन्त्रवाये गदोत्तम इति विश्वः। मनोरपत्यानि मानुषाः मनोर्जातावञ्यतौ षुक् चेति परसूत्रेणापत्यार्थे षण् स्वमतेऽभिधानात् तानभिलष्यन्ती कामयमाना क्रमत्क्रमेति पचे श्यन् रोचिष्णुर्दीप्ता भ्राजभूसहेति इष्णुः दिविभवानां गन्धर्व्वादीनां योधर्म्मस्तद्युक्ता नैकाचाजादितीम् दिव्येति ढधेकादिति भवार्थे यः उहस्युडिति सूत्रस्य पदान्तविषयत्वं उवर्णे परे वस्य अपदान्तत्वासम्भवात् द्युभ्यामित्यादौ दान्तवत्त्वभीति दान्तत्वादुत्वं नदंतसाविति पदनिषेधात् अत्र न उत्वं अप्सरस इव आचरन्ती घान्ङ्गइति ङ्यः सलोपश्च घोऽज्यरे इति दीर्घः ॥ २२ ॥

उग्रं पश्याकुलेऽरण्ये शालीनत्वविवर्ज्जिता। कामुकप्रार्थनापट्वी पतिवत्नी कथन्न वा ॥ २३ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



उग्रम्। उग्रम्पश्यन्तीत्युग्रम्पश्याः पापाशयत्वात् शवरादयः ज०म०
उग्रम्पश्येत्यादिना खश् निपात्यते तैराकुले व्याप्ते अरण्ये पति
वत्नी जीवत्पतिः कथङ्केन प्रकारेण न वा नैवं भवसीत्यर्थः अन्त
र्व्वत्यतिवतोर्नुगित्यत्र पतिर्व्विद्यते अस्याइति मतुप् सिद्धः जीव
त्पत्यान्मतुपो वत्वन्निपात्यते नुक्सूत्रेणैव विधीयते ङीप्प्रत्यय
स्तूगित्वादेव सिद्धः शालीनत्वविवर्जिता अधृष्टतया वर्जिता शा
लाप्रवेशमर्हतीति शालीनकौपीने इति खञ् निपात्यते अधृष्टे
भिधेये प्रवेशशब्दस्य लोपः तस्य भावः शालीनत्वं कामुकः का
मशीलः लषपतेत्यादिना उकञ् तस्य प्रार्थनायाम्बद्धी चतुरा
वेतोगुणवचनादिति ङीष् ॥ २३ ॥

उग्रंपश्याकुलेइत्यादि। कथं वा त्वं पतिवत्नी सभर्तृका न भव भ०
सि पतिसत्वे ईदृक्स्वातन्त्र्यासम्भवात् नारीसखीत्यादिना पतिश
ब्दात् मतोर्वत्वादेशोनिपातितः शालां प्रवेष्टुमर्हति शालीना अधृ
ष्टा विकारसंघेत्यादिना ईनः शालीनायाभावः शालीनत्वं पुम्वत्
स्युक्तपुंस्कइति पुम्वत् शालीनत्वविवर्ज्जिता धृष्टेति फलितार्थः अ
रण्ये कामुकस्य प्रार्थनायां दत्ता इष्टस्याभूकमगमेति उकः अर
ण्ये किम्भूते उग्रंपश्यन्ति उग्रंपश्याः सिंहव्याघ्रादयः पापाशय
त्वात् शवरादयोवा तैराकुले व्याप्ते घटीखारीत्यादिना उग्रश
ब्दाद्दृशः खश् ॥ २३ ॥

राघवं पर्णशालायामिच्छानुरहसं पतिं। यः स्वा
मी मम कान्तावानौपकर्णिकलोचनः ॥ २४ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० राघवं। रामम्पर्णशालायामवस्थितम्पतिमिच्छ अनुरहसं विवेकप्रान्तमनुगतोरहइति विगृह्य अन्वतप्ताद्रहस इत्यच् योराघवो ममापि स्वामी प्रभुः स्वामिन्नैश्वर्य्यइति निपातितम् कान्तावान् सभार्य्यः प्रवृत्तसम्भोगोऽसौ नाहमिति दर्शयति तमेव रूपशौर्य्याभ्यां वर्णयन्नाह औपकर्णिकलोचनः कर्णयोः समीपमुपकर्णं समीपार्थे अव्ययीभावः तत्र प्रायभव इति उपजानूपकर्णोपनीवेठक् शेषमपि शब्दद्वयमर्थोच्यते औपकर्णिके लोचने यस्य कर्णान्तायतलोचनइत्यर्थः ॥ २४ ॥

भ० राघवमित्यादि। पर्णशालायां स्थितं रामं पतिमिच्छ विधिनिमन्त्रणेति आमन्त्रणे लोट् अनुगतं रहोविजनस्थानं रतं वा यस्य तं तप्तान्ववाद्रहसइति अः योममापि स्वामी ईश्वरः तस्मिन् सति मद्वरणं न युक्तमिति कान्तावान् एतेन स्त्रीसुखाभिज्ञोऽपि अहन्तु तपस्वीति ध्वनिः कर्णयोः समीपं उपकर्णं तत्र भवइति ढधेकादित्यादिना ष्णिकः तादृशे लोचने यस्य स कर्णायतनेत्रइत्यर्थः एतेन रूपवत्वं दर्शितं ॥ २४ ॥

**वपुश्चान्दनिकं यस्य कार्णवेष्टनिकं मुखं। संग्रामे सर्व्वकर्म्मीणौ पाणी यस्यौपजानुकौ ॥ २५ ॥**

ज०म० वपुः। यस्य राघवस्य वपुः शरीरञ्चान्दनिकञ्चन्दनेन सम्पद्यते प्राप्तशोभं भवति मुखञ्च कार्णवेष्टकिकं कर्णवेष्टकाभ्या ङ्कर्णालङ्काराभ्याङ्कार्णवेष्टकिकन्तत् उभयत्र सम्पादिनीति ठञ् पाणीहस्तौ संग्रामे युद्धे सर्व्वकर्म्मीणौ धनुःखड्गादिव्यापार

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कर्माणि व्याप्नुतः तत्सर्व्वादेरिति खः औपजानुकौ आजानुकौ आ आनुलम्बावित्यर्थः अत्र ठक् इसुसुक्तान्तात्कः॥ २५॥

वपुरित्यादि। यस्य रामस्य वपुश्चान्दनिकं चन्दनेन राजितं इति ढघेकादिति ष्णिकः यस्य मुखं कर्णवेष्टनाभ्यां कुण्डलाभ्यां राजितं इति पूर्व्ववत् ष्णिकः एतेन विलासित्वं दर्शितं यस्य पाणी हस्तौ संग्रामे युद्धे सर्व्वस्मिन् कर्म्मणि धनुः खड्गादिव्यापाररूपे कुशलौ विकारसंघेति ईनः सर्व्वादेःपथ्यङ्गकर्म्मपत्रपात्रात्तद्व्याप्नोतीत्यर्थे ईनः इति परः तन्मते सर्व्वकर्म्मणि व्याप्नुतः इत्यर्थः व्यापनमत्र तत्करणद्वारैव एतेन वीरत्वं औपजानुकौ उपजानु जानुसमीपे भवौ तावत्प्रलम्बावित्यर्थः एतेन महापुरुषलक्षणं ढघेकादिति कण् तमिच्छेति योजना॥ २५॥ भ॰

बद्धोदुर्व्वलरक्षार्थमसिर्येनौपनीविकः। यस्यापमाश्मनप्रख्यं सेषुं धत्तेऽन्यदुर्व्वहं॥ २६॥

बद्धो। येन असिः खड्गः औपनीविकः नीवीसमीपे प्रायेण भवतीति स हि नीवीन्प्राप्य वर्त्तमानः पार्श्वयोस्तोर्द्धन्निबद्धः किमर्थं दुर्व्वलरक्षार्थन्दुर्व्वलरक्षायै इदमित्यस्मिन्नर्थे चतुर्थी तदर्थेत्यादिना सः तत्रार्थेन नित्यसमासः सर्व्वलिङ्गता च यस्यापन्धनुर्द्धत्ते धारयति आश्मनप्रख्यं अश्मनो विकार इत्यण् अस्विति प्रकृतिभावे प्राप्ते अश्मनोविकार उपसङ्ख्यानमिति टिलोपः पाक्षिकः विभाषाङिश्योरित्यतो मण्डूकप्लुत्या विभाषाग्रहणान ज॰म॰

म

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



वृत्तिः अन्यत्राश्मन एव भवति आश्मनेन प्रख्या सादृश्यमस्य तदाश्मनप्रख्यमुपघटितमिव येषुं सशरं अन्यदुर्व्वहं दुःखेनोह्यतइति खल् रामादन्येन दुर्व्वहमित्यर्थः ॥ २६ ॥

भ॰ बद्धइत्यादि। येन रामेण असिर्व्वद्ध औपनीविकः नीवीसमीपे भवः वामपार्श्वाधोभागस्थायीत्यर्थः। स्त्रीकटीवस्त्रबन्धेऽपि नीवी मूलधनेऽपिचेत्यत्र स्त्रीपदमुपलक्षणं अत्र वा लक्षणा उपनीविश्च ब्दात् ढघेकादिति ष्णिकः यश्चापं धत्ते अश्मैवाश्मनः प्रस्तरः विकारसंघेत्यादिना स्वार्थे ष्णः मन्वर्ज्जेत्यादिना अविकारष्णेऽनन्तस्य नलोपनिषेधः तत्प्रख्यं तत्सदृशं अश्मनि जातं अश्ममयं इति केचित् येषुं शरयुक्तं अन्यदुर्व्वहं रामादन्येन दुःखेन उह्यतेइति ईषद्दुःसेरिति खल् दुर्व्वलानां रक्षैव अर्थः प्रयोजनं यस्य खड्गबन्धनस्य चापधारणस्य च तत्तया तमिच्छेति योजना ॥ २६ ॥

**जेता यज्ञद्रुहां संख्ये धर्म्मसन्तानसूर्व्वने। प्राप्य दारगवानां यं मुनीनामभयं सदा ॥ २७ ॥**

ज॰म॰ जेता। यज्ञाय द्रुह्यन्तीति यज्ञद्रुहो राक्षसाः सत्सूद्विषेत्यादिना क्विप् तेषां संग्रामे जेता तृजन्तोऽयम् ततश्च कृत्प्रयोगे कर्म्मणि षष्ठी धर्म्मसन्तानसूः पूर्व्ववत् क्विप् धर्म्मरत इत्यर्थः वने वर्त्तमानानाम्मुनीनां वानप्रस्थादीनामित्यर्थः तेषाम्भार्य्याग्निपरिग्रहात् यानि दारगवानि दाराश्च गावश्चेति दारगवानि अचतुरेत्यादि निपातितानि दारयन्तीति दाराः दारजारौ कर्त्तरि णिलुक्चेतिघञ् तेषाञ्च येनाभयं सदा दत्तमिति योज्यम् येषामेव प्राप्तिक्रिया तेषामेवाभयमिति समानकर्तृकत्वम् ॥ २७ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



जेतेत्यादि। यज्ञाय द्रुह्यन्ति यज्ञद्रुहो राक्षसाः सत्सुद्विषेति क्विप् तेषां जेता संख्ये युद्धे धर्म्मसन्तानं सूते इति क्विप् यं प्राप्य वने सम्बन्धिनां दारगवादीनां सदा अभयं भयाभावः दाराश्च गावश्च दारगवानि निपातनात् दारयन्तीति दाराः कभावेऽमीइति कर्त्तरि घञ् पूर्व्वकाले इति सूत्रे व्याख्यानात् विष्णुं नत्वा स्तौति इत्युदाहरता एककर्तृकयोर्धात्वोः प्राक्काले क्त्वा भवतीति लब्धं अत्र च येषां प्राप्तिस्तेषामेव यज्ञयं तदभाव उक्त इति समानकर्तृत्वमस्त्येव ग्रामान्नागच्छतीतिवत् क्रियानिषेधेऽपि अन्तरङ्गस्य क्रियाश्रितकार्य्यस्य निवृत्तेः केचित्तु श्रितानामित्यध्याहरन्ति तमिच्छेति योजना ॥ २७ ॥ भ०

ततोवावृत्त्यमानासौ रामशालां न्यविक्षत। मामुपायंस्त रामेति वदन्ती सादरं वचः ॥ २८ ॥

ततः। ततो लक्ष्मणवचनानन्तरमसौ राक्षसी वावृत्यमाना रामं वृण्वाना वावृतुवरणइति दैवादिकः आत्मनेपदी रामशालां रामस्य पर्णकुटीरं न्यविक्षत प्रविष्टा विशेः शलइगुपधादनिटः क्सः नेर्विशइति तङ् मामुपायंस्त रामेति हे राम अहं प्रार्थये भवान् मामुपायंस्त परिणयत्विति वाक्यभेदेन योज्यम् आशंसायाम्भूतवच्चेति लुङ् उपाद्यमः स्वकरण इति तङ् विभाषोपयमनम इत्यकित्त्वपक्षे रूपम् इत्येवं वचः सादरं वदन्ती ॥ २८ ॥ ज०म०

ततइत्यादि। ततो लक्ष्मणवचनानन्तरं असौ राक्षसी वावृत्य भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



माना रामं वृण्वती रामस्य शालां गृहं न्यविचत विशशामवेशे वि
पराजीति मं तन् हशषोऽनिमिजुङ इति सक् वावृत्यमानेति वा
वृत्युङ् आशंसायां सम्भक्तौवरणेच वावृतधातुः यित्वाद्दैवादिकः
ङित्वादात्मनेपदी हे राम भवान् मां उपायंस्त परिणयतु इति
वचः सादरं वदन्ती उपयमोविवाहे इति मं आशंसायां ष्टो अभि
धानात् मास्मेनघोष्याविति योगविभागात् अन्यत्रापि धीष्याविति
देवोदासचक्रवर्त्ती ॥२८॥

अस्त्रीकोऽसावहं स्त्रीमान् स पुष्यतितरां तव। पति
रित्यब्रवीद्रामस्तमेव व्रज मा मुचः॥ २९ ॥

ज०म० अस्त्री। असौ लक्ष्मणोऽस्त्रीकः न विद्यते अस्य स्त्रीति नद्यृतश्चेति
कप् न कपीति ह्रस्वप्रतिषेधः अहं पुनः स्त्रीमान् सभार्य्यः प्रशंसा
यामतुप् स एव लक्ष्मणः पुष्यतितराम् अतीव पुष्यति लक्ष्मणस्तव
पतिः तिङश्चेति तरप् किमेदित्याम् तस्मात्तमेव लक्ष्मणं व्रज
गच्छ मा मुचः मा त्याक्षीः मुचेर्लुङ् लृदित्वादङ् इति एवमब्रवी
द्रामः उक्तवान् आदादिकस्य ब्रूञोलङि ब्रुवईडिति ईटि रूपम्
॥२९॥

भ० अस्त्रीकइत्यादि। इति रामस्तामब्रवीत् किन्तदित्याह असौ
लक्ष्मणः अस्त्रीकः न विद्यते स्त्री यस्य इति यृतःकः अहं स्त्रीमान्
प्रशस्तस्त्रीयुक्तः अतः स एव तव पतिः पुष्यतितरां त्वामित्यर्थात्
पुष्येत्पुष्टौ किमेत्याचेति उत्कर्षे चतरां भविष्यत्सामीप्ये को अ
भिधानात् किम्वा यावत्पुराभ्यां भव्ये इत्यस्य योगविभागात् तत्र
भव्ये इति सामीप्ये सप्तमी तुष्यतीति क्वचित् पाठः तस्मात्तमेव

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



लक्ष्मणमेव व्रज मा मुचः मा त्याक्षीः मुचॢशपञ्चमोच्चणे लृदि
त्वात् शासुवित्व्युदिति ङः॥ २९॥

लक्ष्मणं सा वृषस्यन्ती महोक्षं गौरिवागमत्। मन्म
थायुधसम्पातव्यथ्यमानमतिः पुनः॥ ३०॥

लक्ष्मण। लक्ष्मणं पुनर्भूयोऽगमत् लक्ष्मणं प्रति गता यथा ज॰म॰
गौर्वृषस्यन्ती मैथुनेच्छावती महोक्षमहावृषं वृषस्यन्तीत्युपमान
विशेषणमेतत् तेन वृषं लब्धुमिच्छन्तीति क्यच् अश्वक्षीरेत्यादिना
असुक् तद्वाश्ववृषयोर्मैथुनेच्छायामिति तद्वदागमनं महोक्षमि
ति अचतुरादिसूत्रेण निपातितम् मन्मथस्यायुधानि शराः
आयुध्यन्ते एभिरित्यायुधानि घजर्थे कविधानमिति कः तेषां
सम्पातः संश्लेषः तस्मात् व्यथ्यमाना पीड्यमाना मतिर्मनो यस्याः
॥ ३०॥

लक्ष्मणमित्यादि। सा राक्षसी लक्ष्मणं पुनरगमत् यथा गौर्म भ॰
होक्षं महावृषभं गच्छति महांश्चासौ उक्षा चेति जातमहद्वृद्धा
दुक्षण इति षः कीदृशी वृषस्यन्ती वृषोऽत्र शुक्रलवचनः मैथुनाय
वृषं शुक्रलपुरुषं इच्छन्ती कामुकीत्यर्थः गोपक्षे वृषं वृषभं इच्छ
न्ती क्योम्वगाद्यश्चेति क्यः धनोदकाशनेत्यादिना सन् क्यविधानं
स्वेच्छायां सनागमस्तु याभार्थे तेन मैथुनविषयस्वेच्छावगम्यते
केचित्तु प्रकृत्यर्थत्यागेन मैथुनेच्छामात्रे वृषस्य अश्वस्येति क्यव
न्तरूपं अतएव विरथहयानश्वस्यन्तीति नैषधप्रयोगः तत्र हि ह
यान् मैथुनायेच्छन्तीत्यवगम्यते प्रकृत्यर्थपुरस्कारे हयशब्दान

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



न्वयापत्तेरित्याहुः अन्ये तु वृषस्याश्वस्यइत्यव्युत्पन्नमेव धातुद्वयं मैथुनेच्छायां वर्त्तत इत्याहुः कुसुमायुधस्य कामस्य सम्पातेन संश्लेषेण व्यथमाना मतिर्म्मनो यस्याः सन्ताप इति पाठे कामेन च: सन्ताप इति व्याख्येयं मन्मथायुधेति क्वचित् पाठः आयुध्यन्ते एभिरिति कृगॄञ्जेतिकरणे कः छङ्घोःकभावइत्युक्तेः मन्यतेऽनयेतिकरणे क्तिः ॥ ३० ॥

तस्याः सासद्यमानाया लोलूयावान्रघूत्तमः। असिं कौक्षेयमुद्यम्य चकारापनसं मुखं ॥ ३१ ॥

ज०म० तस्याः। सासद्यमानायाः समीपे गर्हितं सीदन्त्याः प्रविशन्त्याः लुपसदेत्यादिना यङ् रघूत्तमो लक्ष्मणः मुखमपनसमपगतनासिकञ्चकार उपसर्गाच्चेत्यच् नासिका च नसादेशमापद्यते तत्र संज्ञायामिति नानुवर्त्तते किं कृत्वा कौक्षेयमसिमुद्यम्य उत्क्षिप्य कुक्षौभव इति दृतिकुक्षीत्यादिना ढञ् कौक्षेयः लोलूयावान् अत्यर्थं लवनक्रियायुक्तः लुनाति लोलूया यङन्तादप्रत्ययादित्यकारः सा विद्यते यस्येति मतुप् ॥ ३१ ॥

भ० तस्यादृत्यादि। रघूत्तमो लक्ष्मणः कौक्षेयं कुक्षौ कोषे भवं विद्यमानं तीक्ष्णलोहभवं वा असिं खड्गं उद्यम्य उत्क्षिप्य राक्षस्याः सासद्यमानायाः समीपे गर्हितं सीदन्त्याउपविशन्त्याः मुखं अपनसं अपगतनासिकं चकार लोलूयावान् अतिशयच्छेदनयुक्तः तत् कर्तृत्वात् सूचसूत्रेत्यादिना लूञोयञ् दिलं खेर्नुः संस्यादः मोङ् मज्ञपादतुः गत्यर्थाद्लुपेति सदेर्गर्हार्थे यङ् ढघेकादिति कुक्षेर्भ

Digitized by eGangotri and Sarayu Trust.



वाथ ष्णेयः कुक्षेस्तीक्ष्णलोहार्थाद्विकारे ढेयन्निति केचित् कुक्षिः खड्गपिधाने स्यात् तीक्ष्णलोहे तथोदरे इतिकोषः अपनसं उन्नसमितिवत्॥ ३१॥

अहं शूर्पणखा नाम्ना नूनं नाज्ञायिषि त्वया। दण्डोऽयं चेच्चियो येन मय्यपातीति साब्रवीत्॥ ३२॥

अहम्। सा राक्षसीत्यब्रवीत् अहं शूर्पणखेति नाम्ना नूनमवश्यन्त्वया नाज्ञायिषि न ज्ञातास्मि ज्ञादृत्यस्मात्कर्म्मणि लुङ् स्यसिजित्यादिना अजन्तत्वात् चिण्वदिट् आतोयुगिति युक् स्वाङ्गाच्चेति ङीषि प्राप्ते नखमुखात्संज्ञायामिति प्रतिषेधः पूर्व्वपदात्संज्ञायामिति णत्वम् अज्ञाने कारणमाह येनायन्दण्डो नासाछेदनलक्षणो मय्यपाति पातितः पातेः कर्म्मणि लुङ् चिणादेशः अत उपधाया इति वृद्धिः चिणोलुक् चेच्चियः परक्षेत्रे चिकित्स्यः परक्षेत्रे जन्मान्तरशरीरे यदि शक्यश्चिकित्सितुं तदा नासिकायाः सम्भवात् चेच्चिये च परक्षेत्रे चिकित्स्य इति निपातनम्॥ ३२॥ ज॰म॰

अहमित्यादि। सा राक्षसी इत्यब्रवीत् किं तदित्याह नाम्ना शूर्पणखाहं नूनं निश्चितं त्वया नाज्ञायिषि न ज्ञाता कर्म्मणि टी ष्यांसिः हनग्रहदृशश्च इति सिण् यनञ्णिदिति यन् नाम्नेति भेदके तृतीया शूर्पणखेति नाम्ना उपलक्षितेति केचित् शूर्पवत् नखा यस्याः सा शूर्पणखा पूर्व्वपदस्यात् शुःसंज्ञायां णत्वमिति परे स्वमते शूर्णोदान्ते इत्यादौ वाशब्दस्य व्यवस्थावाचित्वात् नखमुखान्तात् संज्ञायामीपनिषेध इति परे स्वमते पात्शोनादीत्यादिना स्वाङ्गादीप् प्रत्ययोविभाषित ईपोऽभावपक्षे आप् पक्षे तादृशसंज्ञाया भ॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अभावात् न ईप् ईपि सति तु वा का क्षतिः तत्र वाशब्दोऽव्यवस्था वाची वा अज्ञाने हेतुमाह येनायं दण्डोनासाच्छेदनरूपो मयि त्वया अपाति निपातितः ण्यन्तात् पतेः कर्म्मणि टी चेचित्सः जन्मान्तरशरीरे चिकित्स्यः एतज्जन्मनि नासाया अनुत्पत्त्या शरीरान्तर एव तत्सम्भवात् विकारसंघेत्यादिना चेत्रशब्दात् जन्मान्तरशरीरेचिकित्स्येऽर्थे इयः चेत्रादियः परचेत्रेचिकित्स्ये इति परसूत्रं तत्र परचेत्रे जन्मान्तरशरीरे ॥ ३२ ॥

पर्य्यशापीद्दिविष्ठासौ संदर्श्य भयदं वपुः। अपिस्फवच्च बन्धूनां निनङ्क्षुर्विक्रमं मुहुः ॥ ३३ ॥

ज॰म॰ पर्य्य। असौ राक्षसी पर्य्यशापीत् आक्रुष्टवती शपेरनिटः सिचि हलन्तलक्षणा वृद्धिः शपउपालम्भन इति तङ् न भवति उपलम्भनं हि वाचा शरीरस्पर्शनम् दिविष्ठा नभसि वर्त्तमाना तत्पुरुषे कृतिवहुलमिति सप्तम्या अलुक् अम्बाम्बेति षत्वम् भयदं रौद्रंवपुः शरीरं सन्दर्श्य दर्शयित्वा बन्धूनां विक्रमं शौर्य्यं मुहुः पुनः पुनः अपिस्फवत् स्फीतीचकार अर्त्तिह्रीत्यादिना णावित्यनुवृत्तौ स्फायोव इति वकारः स्फायतेश्चङि णिलोपः ह्रस्वदिर्व्वचनादि अभ्यासस्य खयः शेषः चर्त्वमित्वञ्च सन्वद्भावे निनङ्क्षुः नष्टुमिच्छुरित्यर्थः नशेः सनि मस्जिनशोर्झलीति नुम् ॥ ३३ ॥

भ॰ पर्य्यशापीदित्यादि। असौ राक्षसी दिविष्ठा सती नभस्था सती भयदं भयजनकं वपुः सन्दर्श्य पर्य्यशापीत् आक्रुष्टवती बन्धूनां खरादीनां विक्रमं मुहुर्व्वारं वारं अपिस्फवच्च वर्द्धयामास

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



च रामादीनां भयार्थं विवर्द्धं कथयामासेत्यर्थः निनङ्क्षुः अन्तर्द्धातुमिच्छुः नशेः सनि नूणरधामुचामिति णुन् मस्जीजेति षङ् षढोःकःसे मपैाञ्ञाक्रोशे ध्यांसिः अनिसत्वात् व्रजवदेति त्रिः दिवि तिष्ठतीति हनजनादिति डः सप्तम्या अलुक् षत्वञ्चाभि धानात् संपूर्व्वात् द्दशेर्ण्यन्तात् क्तोयप् अपिस्फवदिति स्फायीङ् वृद्धौ ञिःप्रेरणे पातिस्फायोर्लन्वङौञाविति वङ् ञिश्रीत्यङ् द्वित्वं खेःसन्वत् न्यङ्गुडःस्वः अपिस्फुरदिति कचित् पाठः तत्र प्र काशितवतीत्यर्थः अपुस्फुरदिति कचित् पाठः तत्र प्रकाशितव तीत्यर्थः अपुष्फरदिति पाठेऽपि तथा स्फुरशिस्फूर्त्तौ चले क्री जीङोऽजेति पत्ते उकारस्यात्वं ॥ ३३ ॥

खरदूषणयोर्भ्रात्रोः पर्य्यदेविष्ट सा पुरः। विजिग्रा हयिषूरामं दण्डकारण्यवासिनोः ॥ ३४ ॥

खर। खरदूषणयोर्भ्रात्रोर्द्दण्डकारण्यवासिनोः पुरः अग्रतः ज०म० पर्य्यदेविष्ट परिदेवनङ्कृतवतीति देवृदेवनइत्यस्यात्मनेपदि नः सेटो लुङि रूपम् परिदेवने कारणमाह विजिग्राहयिषु रामं विग्राहयितुं योधयितुमिछुः ग्रहेर्ण्यन्तस्य सनन्तस्य रूपम् रोरीति रेफलोपः ढ्रलोप इति दीर्घत्वम् किम्पर्य्यदेविष्टेत्याह ॥ ३४ ॥

खरदूषणयोरित्यादि। रामं विजिग्राहयिषुः विग्राहयितुं ख भ० रादिभिः सह योधयितुमिच्छुः सा राक्षसी खरदूषणयोर्भ्रात्रोः पुरोऽग्रतः पर्य्यदेविष्ट क्रन्दितवती देवृङ्देवने किम्भूतयोः



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



दण्डकारण्यवासिनो: दण्डकनामारण्ये वसत इति ग्रहादित्वा न्निण् वस्तुं शीलमनयोरित्यन्ये ग्रहेर्ण्यन्तत्वात् असनउ.पुर इति पूर्व्वाधरावरा इति पूर्व्वशब्दस्य पुरादेश: अतएव अस् तद्योगे समार्थेनेत्यादिना षष्ठी ॥ ३४ ॥

कृते सौभागिनेयस्य भरतस्य विवासितौ। पित्रा दौर्भागिनेयौ यौ पश्यतं चेष्टितं तयो: ॥ ३५ ॥

ज°भ° कृते। भरतस्य कृते कार्य्यनिमित्तं राज्ये अभिषेक्तव्यमिति सुभगा कैकयी तस्या अपत्यं सौभागिनेय: स्त्रीभ्यो ढक् कल्या ण्यादीनामिनङ् तत्र सुभगादुर्भगा चेति पद्यते हृद्भगेत्युभय पदवृद्धि: पित्रा यौ विवासितौ निष्काशितौ दौर्भागिनेयौ कौश ल्यासुमित्रा च दुर्भगे तयोरपत्ये रामलक्ष्मणौ तयोश्चेष्टितन्ना साच्छेदनम्पश्यतम् विधौ प्रार्थनायां वा लोट् यसस्तम् ॥ ३५ ॥

भ° कृतेइत्यादि। इति पर्य्यदेविष्ट इति पूर्व्वेणान्वय: सौभागिनेय स्य सुभगापुत्रस्य भरतस्य कृते निमित्तं यौ दौर्भागिनेयौ दुर्भ गापुत्रौ रामलक्ष्मणौ पित्रा दशरथेन विवासितौ राज्यान्निराकृ तौ तयोश्चेष्टितं नासाच्छेदनरूपं युवां पश्यतं विधौ गी कृते इत्य व्ययं निमित्तार्थे वर्त्तते क्विबन्तकृत्शब्दात् चतुर्थीत्येके कृतश ब्दात् सप्तमीत्येके वाक्याद्यतोऽव्यावादेरित्यादिना आवन्तत्वात् सुभगादुर्भगाशब्दाभ्यां अपत्यार्थे ण्येय: निन्त्तेश्चिरिति द्विपदे वृद्धि: कल्याणीसुभगेत्यादिना ण्येयस्य इनेयादेश: ययोर्लोप इत्यालोप: ॥ ३५ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



मम रावणनाथाया भगिन्या युवयोः पुनः। अयं तापसकाद्ध्वंसः क्षमध्वं यदि वः क्षमं॥ ३६॥

मम। रावणो नाथः प्रभुर्यस्याः मम विशेषणं युवयोर्भगिन्या अयन्तापसकात् कुतापसात्कुत्साथात्कन् ध्वंसो नासिकाविनाशः यदि वः युष्माकङ्गुरूणाङ्क्षमं युक्तम् क्षन्तुमित्यर्थात् युष्मदि गुरावेकेषामिति बहुवचनन्तयोर्ज्येष्ठत्वात् तर्हि क्षमध्वं उपेक्षध्वं रावण एव ज्ञास्यतीति भावः पुनरप्युत्तेजयितुमाह॥ ३६॥ ज॰म॰

ममेत्यादि। रावणोनाथोयस्यास्तादृश्या मम युवयोर्भगिन्या युवयो रेव पुरोऽग्रतः यूयं तापसकात् क्षुद्रतपस्विनः सकाशात् ध्वंसोनासाच्छेदनरूपोवृत्तः अत्र यदि वोयुष्माकं क्षमं क्षन्तुं योग्यं तदा यूयं क्षमध्वं रावण एव ज्ञास्यतीति भावः विकारसंघेत्यादिनाल्पार्थे कुत्सार्थे वा कः युष्मदोर्द्वित्वे बहुत्वविवक्षा क्षममिति क्षमायोग्यं सामान्यतः प्रयुक्तं। युक्ते योग्ये हिते क्षममिति कोषः क्षममव्ययमित्यन्ये पुनरिति पाठे मम पुनरिति योज्यं॥ ३६॥

असंस्कृत्रिमसंव्यानावनुप्तिमफलाशिनौ। अभृत्रिमपरीवारौ पर्य्यभूतां तथापि मां॥ ३७॥

असम्। संस्कारेण वापेन भरणेन च निर्वृत्तं संस्कृत्रिममुप्तिमम्भृत्रिमञ्च ड्वितः क्त्रिः क्त्रेर्मम्नित्यम् संपर्य्युपेभ्य इति सुट् सम्पूर्व्वस्य क्वचिदभूषणेऽपीष्यते संस्कृत्रिमन्न विद्यते येषामिति न् समासः असंस्कृत्रिमाणि संव्यानानि परिधानानि उत्तरी भ॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



षाणि ययोः वल्कलवाससावित्यर्थः अनुप्तिमाणि फलानि अश नमाहारो ययोः तौ वन्यफलाहारौ न शालिभोजनौ परिव्रि यतेऽनेनेति घञ् उपसर्गस्य घञीति दीर्घः मृगाणाममनुष्य त्वात् अभृत्रिमः परीवारो अनुजीविलोकोययोस्तौ मृगपरि वारौ तथापि माम्पर्य्यभूताम्परिभूतवन्तौ लुङि रूपम् ॥ ३७ ॥

भ॰ असंस्कृत्रिमसंव्यानावित्यादि । तौ असंस्कृत्रिमसंव्यानौ तन्वा दीनां संस्कारेण जातं संस्कृत्रिमं संपरेःसुमितिसुम् न विद्यते संस्कृ त्रिमं संव्यानमुत्तरीयं ययोर्वल्कलमात्रसत्त्वात् वपनेन जातं उप्तिममनुप्तिमं वन्यं तादृशं फलमशनमाहारो ययोः अथवा नन्द्यादित्वात् कर्त्तरि अनः फलाशिनाविति क्वचित् पाठः भरणे न पोषणेन जातोभृत्रिमः परीवारोऽनुजीविजनो ययोः सर्व्वत्र ड्वितस्क्त्रिमक् ग्रहस्रूपायोरिति जिः परिवृणोतीति कर्त्तरि घञ् व्यतीहारे व्रिःपूर्व्व इत्यत्र व्यतीहार इति दीर्घनिर्द्देशात् क्वचित् घञन्ते उपसर्गस्य दीर्घत्वं सूचितं तेनात्र परेरिकारस्य दीर्घत्वं तौ यद्यपि ईदृशौ तथापि मां पर्य्यभूतां परिभूतवन्तौ भूस्येति सेर्लुक् ॥ ३७ ॥

श्वःश्रेयसमवाप्तासि भ्रातृभ्यां प्रत्यभाणि सा । प्राणि वस्तव मानार्थं व्रजाश्वसिहि मा रुदः ॥ ३८ ॥

ज॰भ॰ श्वःश्रे । श्वःशब्दः प्रशंसामाह शोभनं श्रेयइति वाक्ये श्वो वसीयः श्रेयसइत्यच् मयूरव्यंसकादित्वात्सः श्वःश्रेयसङ्कल्याणम वाप्तासि प्राप्स्यसि भविष्यदनद्यतने लुट् मारयावस्तावित्युक्तभव ति ताभ्यां भ्रातृभ्याम्प्रत्यभाणि प्रतिभणिता सा कर्म्मणि लुङ् प्राणि

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



वस्तव मानार्थम् तव मानखण्डनम्माभूदिति जीवावः अस प्राणने अनच् रुदादिभ्यः सार्व्वधातुक इति इट् अनित्तेरिति णत्वं त स्मात्व्रज यथास्थानं गच्छ आश्वसिहि उद्वेगन्त्यज विधौ प्रार्थनायां वा लोट् मा रुदः माङिलुङ् इरितो वेत्यङ् यदा नास्ति तदा मारोदीरिति ॥ ३८ ॥

श्वःश्रेयसमित्यादि। भ्रातृभ्यां खरदूषणाभ्यां सा राक्षसी प्र त्युत्तरं प्रापिता किन्तदित्याह श्वःश्रेयसं कल्याणं अवाप्नासि प्रा प्स्यसि शत्रुवधेनेत्यर्थात् ध्यारूपं श्वोभवं श्रेयः श्वःश्रेयसं श्वोऽवसी यस्श्वःश्रेयसेति निपातितं तव मानार्थं सम्मानार्थं आवां प्राणिवः जीवावः अनश्चप्राणने रुभ्योयइतीम् प्राग्वन्नोण इति पक्षे णत्वं त स्माद्व्रज गच्छ स्वस्थानमित्यर्थात् आश्वसिहि आश्वासं लभस्व उद्वेगं त्यज इत्यर्थः प्रार्थनायां गी रुदादित्वात् पूर्व्ववदिम् त्वं मा रुदः मा रोदीः लघिरुदरोदे इरित्वात् शासुलिङ्कुदिति पक्षे ङः ॥ ३८ ॥

जक्षिमोऽनपराधेऽपि नरान्नक्तन्दिवं वयं। कुत स्त्वं भीरु यत्तेभ्यो द्रुह्यद्भ्योऽपि क्षमामहे ॥ ३९ ॥

जक्षि। वयं अनपराधेऽपि नक्तञ्च दिवा च नक्तन्दिवम् अचतुरेति निपातितम् नरान् जक्षिमोभक्षयामः जक्षभक्षहसन योरिति भक्षार्थस्य रुदादिभ्य इतीट् अस्मदोर्द्वयोश्चेति द्वित्वे वय मिति बहुवचनं यतएवं हे भीरु सम्बुद्धौ गुणोन भवति संज्ञापूर्व्व कोविधिरनित्य इति कुतस्त्वङ्कुतएतदागतम् अव्ययत्वात् त्यप् अमेहकतसित्रेभ्य इति त्यप् तेभ्यो नरेभ्यो द्रुह्यद्भ्योऽपि द्रोह

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कुर्व्वाणेभ्योऽपि चमामहे नैवेत्यर्थः क्रुधद्रुहेति सम्प्रदानत्वम् चमेर्गम्यमानोनञर्थस्तस्याश्रयार्थत्वात् चमध्वं यदि वः चममित्यस्य प्रतिवचनम्॥ ३९॥

भ० जक्षिमइत्यादि। अनपराधे अपराधाभावेऽपि वयं नरान् नक्तं दिवं रात्रौ च दिवा च जक्षिमः भक्षयामः जक्षदलुघभक्षहासयोर्घित्वात् रुदादिः अस्मदोद्वित्वबहुत्वविवक्षा अन्यराक्षसयोगाद्बहुत्वं नक्तन्दिवमिति अचिभ्रुवादित्वान्निपातितं स्वार्थिकष्णान्तेन दिवाशब्देन समाहारोद्वन्द्वोवा हे भीरु द्रुह्यद्भ्योऽपि द्रोहं कुर्व्वद्भ्योऽपि तेभ्यो नरेभ्योवयं चमामहइति यत्तत् कुतस्त्यं कुत आगतं तत्राद्यचिरेत्यादिना त्यः यदभिप्रेत्य धात्वर्थस्तत्र चतुर्थीति परः स्वमते तादर्थ्यविवक्षयैव भीरु इति तस्मादेर्व्वेति पक्षे ऊप् सुभ्रुदीति ह्रस्वः ह्रस्वकरणान्न गुणः॥ ३९॥

तौ चतुर्द्दशसाहस्रवन्तौ निर्ययतुस्ततः। पारश्वधिकधानुष्कशाक्तीकप्रासिकान्वितौ॥४०॥

ज०म० तौच। ततोनिगदनादुत्तरकालन्निर्य्ययतुः निर्गतवन्तौ चतुर्दशसहस्राणि परिमाणमस्य बलस्य प्रतिवचनमित्यस्मिन्विषये शतमानविंशतिकसहस्रवसनादण् शाश्वतेः सङ्ख्यायाः संवत्सरेत्युत्तरपदवृद्धिः चतुर्द्दशसाहस्रम्बलं ययोः तौ यथा पारश्वधिकधानुष्कयाष्टीकप्रासिकान्वितौ परश्वधः प्रहरणमेषामिति परश्वधात् ठञ्चेति ठञ् तथा धनुः प्रहरणमेषां यष्टिः प्रहरणमेषामिति शक्तियष्ट्योरीकक् प्रासः कुन्तः प्रहरणमि

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



त्योत्सर्गिकष्ठक् तत्र धनुषष्ठक् इसुसुक्तान्तात्कः ततः षेनाङ्कृत्वा त्कृतेकवद्भावः तेनान्विताविनुगतौ ॥ ४० ॥

तावित्यादि। ततोवचनानन्तरं तौ खरदूषणौ निर्ययतुः निर्गतौ चतुर्द्दश सहस्राणि परिमाणमस्य चतुर्द्दशसहस्रं विकारसंघेत्यादिना तदस्य परिमाणमित्यर्थे ष्णः सुपञ्चालादित्यरपदे वृद्धिः चतुर्द्दशसाहस्रं बलं ययोः तौ तथा परश्वधैः परशुभिर्युध्यन्ते पारश्वधिकाः धनुर्भिर्युध्यन्ते धानुष्काः शक्तिभिर्युध्यन्ते शाक्तीकाः प्रास्यन्ति तमिति प्राशोलगुडः कर्म्मणि घञ् प्रासैर्युध्यन्ते प्रासिकाः एभिरन्वितौ अनुगतौ ढघेकादिति ष्विकण्ष्णीकाः ॥ ४० ॥

अथ सम्पततोभीमान् विशिखैरामलक्ष्मणौ। वज्रमूर्द्धाद्विमूर्द्धांश्च त्रिमूर्द्धांस्वाहतां मृधे ॥ ४१ ॥

अथा। अथैतस्मिन्प्रस्तावे रामलक्ष्मणौ मृधे संग्रामे विशिखैः शरैरहतां हतवन्तौ हन्तिः परस्मैपदी तस्माल्लङि तसस्ताम् तस्य ङित्वे अनुदात्तेत्यादिना अनुनासिकलोपः कान् राक्षसान् विशेषणोपादानात् विशेष्यप्रतिपत्तिः प्रकृतत्वाद्वा सम्पततोऽभिपततः वज्रमूर्द्धावज्रशिरसः तथा द्विमूर्द्धांस्त्रिमूर्द्धांश्च द्वित्रिभ्यां षमूर्द्धइति समासान्तः षः अतएव भीमान् भयानकान् त्रिमूर्द्धांश्चेत्यत्र नम्छव्यप्रशानिति रुः पूर्व्वस्य त्वनुनासिकः विसर्जनीयस्य सः चुत्वम् ॥ ४१ ॥

अथेत्यादि। निर्गमानन्तरं सम्पततः सङ्गच्छतः संमुखमागच्छतो राक्षसान् अर्थात् रामलक्ष्मणौ मृधे युद्धे विशिखैर्म्बाणैरा

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



हतां वनतनाद्यनिमामिति नस्य लोपः वक्रमूर्द्धावक्रमस्तकान् एवं द्विमूर्द्धान् त्रिमूर्द्धान् द्वित्रिमूर्द्ध्नइति षः न्वोर्लोपोताविति नस्य लोपः वक्रशब्दोविपुलार्थस्चतुष्टादिसंख्यार्थकोवा अतएव भीमान् भयङ्करान्॥ ४१॥

तैर्वृक्णरुग्णसंभुग्नक्षुण्णभिन्नविपन्नकैः। निमग्नोद्विग्नसंह्रीणैः पप्रे दीनैश्च मेदिनी॥ ४२॥

ज०म० तद्वेे। तैः राक्षसैर्मेदिनी पप्रे पूरिता प्रापूरण इत्यस्मात्कर्म्मणि लिट् वृक्णैः छिन्नैः रुग्णैः भग्नहस्तपादैः सम्भुग्नैः वक्रीकृतदेहैः क्षुण्णैः सम्पिष्टशरीरैः भिन्नैः विदारितैः विपन्नकैः नष्टैः अनुकम्पायां कन् निमग्नैः परिभूतैः उद्विग्नैर्भीतैः संह्रीणैर्लज्जितैः वयमपीदृशीन्दशां प्राप्ता इति दीनैः हा मातः हा भ्रातरित्येवम्भाषमाणैः तत्र ओव्रश्चिरुजिभुजिमस्जिविजिभ्योनिष्टायामोदितश्चेति नत्वम् चोःकुरिति कुः क्षुदिभिदिपदिभ्योरदाभ्यामिति दस्य च नः संह्रीणइति नुदविदेत्यादिना ह्रीङ्त्वये इत्यस्य स्वादय ओदित इत्योदितश्चेति नत्वम्॥ ४२॥

भ० तैरित्यादि। तैराक्षसैर्म्मेदिनी पप्रे परिता पूर्त्तिपूर्त्तौ कर्म्मणि ठी कीदृशैः वृक्णैः छिन्नैः वृश्चेःकङ्चेति क्तस्य नत्वं कङ् च चस्य कत्वे तन्निमित्तस्य शस्य सत्वे स्कादेःसोलोपः ग्रहस्वपाद्योरिति जिः रुग्णैर्भग्नहस्तपादैः रुजोभङ्गे ओदित्वात् स्वाद्योरिति क्तस्य नः जस्य गत्वविधानं मग्नस्य दोर्भिर्भुवनस्य भारमित्यत्र व्याख्यातं संभुग्नैर्वक्रीकृतैः भुजोभ्गोवक्रणे पूर्व्ववत् क्षुण्णैः संपिष्टदेहैः क्षुदिरसंपेषणे

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



द्दान्तत्वात् स्वाद्योरिति क्तस्य दस्य च नः पूर्व्वाऽदान्तेत्यादिना पूर्व्वस्य णत्वे ष्टुभिरिति परस्य नस्य णत्वं भिन्नैर्विदारितैः विपन्नकै र्मृतैः विपूर्व्वपदिर्मरणे वर्त्तते स्वार्थे कुत्सार्थी वा कः निमग्नैर्भी त्या गुप्तैः रुधिरप्रवाहे मग्नैर्व्वा उद्विग्नैर्भीतैः ओविजीभयचलन योः संक्षोभैः योद्धुमसामर्थ्यात् लज्जितैः ह्रीलिलज्जायां ह्रीघ्राघ्रो न्देति क्तस्य नः दीनैः सुतादिदुःखान्वितैः ओदीङ्क्षये ॥ ४२ ॥

केचिद्वेपथुमासेदुरन्ये दवथुमुत्तमं । सरक्तं वमथुं केचिद्भ्राजथुं न च केचन ॥ ४३ ॥

केचित् । तेषाम्मध्ये केचित् वेपथुं कम्पम् टुवेपृकम्पने आसेदुः प्राप्ताः अन्ये दवथुमुपतापमुत्तममहान्तं टुदुउपतापे केचिद्वम थुच्छर्दनं सरक्तं सशोणितं टुवमुउद्गिरणे भ्राजथुं शोभां नैव के चन न केचिदपि टुभ्राजृदीप्तौ सर्व्वत्र ट्वितोऽथुच् ॥ ४३ ॥ ज०म०

केचिदित्यादि । तेषां मध्ये केचिद्राक्षसा वेपथुं कम्पं आसेदुः प्रापुः वपट्टृङ्चलने अन्ये दवथुं उपतापं उत्तमं महान्तं आसे दुः टुदुउपतापे केचित् वमथुं रक्तेन सह छर्दिमासेदुः टुवमउ द्गिरणे केचन भ्राजथुं दीप्तिं नासेदुः टुभ्राजृङ्दीप्तौ सर्व्वत्र ट्वितो ऽथुर्भावे इति अथुः ॥ ४३ ॥ भ०

मृगयुमिव मृगोऽथ दक्षिणस्यां दिशमिव दाहवतीं मरावुदन्यन् । रघुतनयमुपाययौ त्रिमूर्द्धा विषभृदिवोग्रमखं पतत्त्रिराजं ॥ ४४ ॥



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० मृग। अथैतस्मिन् राक्षसविध्वंसनप्रस्तावे त्रिमूर्द्धः त्रिशिरानाम राक्षसः रघुतनयमुपाययौ उपागतः मृगयुमिव लुब्धकमिव मृगान् यातीति मृगयुः मृगय्वादयश्चेत्यौणादिककुप्रत्ययान्तः दक्षिणेर्म्मा दक्षिणे ईर्म्मं व्रणं यस्येति दक्षिणेर्म्मा लुब्धयोगइत्यनिच् यथा मृगोलुब्धकव्रणितदक्षिणाङ्गः तमेव मरणायोपयाति दिशमिव दाहवतीं यथा दिशन्दावाग्नियुतामरौ निर्जले देशे मृग उदन्यन् उदकपानाभिलाष उपयाति उदकमिच्छति सुपआत्मन इति क्यच् उदकस्योदन्भावः अशनायेत्यादिना निपातितम् तदन्तात्लट् शतृप्रत्ययः विशभृदिव यथा विषधरः सर्प उग्रमुखम्भीषणमुखम्पतत्रिराजं गरुडमुपयाति तद्वत्तमिति राजाहःसखिभ्यष्टच् ॥ ४४ ॥

भ० मृगयुमित्यादि। अथ रक्षोवधानन्तरं त्रिमूर्द्धस्त्रिशिरानाम राक्षसो रघुतनयं रामं उपाययौ उपागतः यथा दक्षिणेर्म्मा व्याधेन व्रणितदक्षिणाङ्गोमृगस्तमेव मृगयुं व्याधं याति तद्वत् मृगं यातीति मृगयुर्निपातनात् दक्षिणेऽङ्गे ईर्म्मं व्याधघातव्रणं यस्य स दक्षिणेर्म्मा दक्षिणादीर्म्मादन् व्याधव्रणितदक्षिणाङ्गे मृगेइति पररूत्रं स्मरते ईर्म्मन् शब्दोऽप्यस्ति किम्वा दक्षिणे ईर्म्मं व्रणं यस्येति धर्म्मादनित्यस्य योगविभागादन् लुब्धकयोगस्त्वभिधानात् व्रणोऽस्त्रियामीर्म्ममरुरित्यमरः यथा वा उदकपानाभिलाषी मृगो मरौ निर्जलदेशे दाहवतीं दिशं उपयाति उदकं पातुमिच्छतीति धनोदकाशनेति क्ये उनङ् शतृः यथा वा विषभृत् सर्प उग्रमुखं भीषणवदनं पतत्त्रिराजं गरुडं उपयाति ॥ ४४ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



शितविशिखनिकृत्तकृत्स्नवक्त्रः चितिभृदिव चिति कम्पकीर्णशृङ्गः। भयमुपनिदधे स राक्षसानामखिल कुलक्षयपूर्व्वलिङ्गतुल्यः ॥ ४५ ॥

इति भट्टिकाव्ये चतुर्थः सर्गः॥

शित। त्रिमूर्द्धा राक्षसानां भयमुपनिदधे उपनिहितवान् कीदृशः शितविशिखैस्तीक्ष्णविशिखैः निकृत्तानि छिन्नानि कृत्स्नानि सर्व्वाणि वक्त्राणि मुखानि यस्य सः चितिभृदिव भूधर इव कीदृशः क्षितिकम्पकीर्णशृङ्गः क्षितेर्भूमेः कम्पेन कीर्णानि क्षिप्तानि शृङ्गा नि यस्य क्षितिभृतः अखिलस्य सर्व्वस्य कुलस्य क्षये विनाशे यत् पूर्व्व लिङ्गन्तेन तुल्यः असावप्यखिलराक्षसक्षयस्य पूर्व्वलिङ्गतुल्यः ॥ ४५ ॥ जं०म०

इति भट्टिकाव्यटीकायां जयमङ्गलाख्यायां प्रकीर्णकाण्डे राम प्रवासश्चतुर्थः सर्गः॥ ४ ॥

शितेत्यादि। शितविशिखैस्तीक्ष्णबाणैर्निकृत्तानि छिन्नानि कृत्स्ना नि सर्व्वाणि वक्त्राणि मुखानि यस्य स त्रिमूर्द्धा राक्षसानां भयमुप निदधे उपनिहितवान् चितिभृदिव पर्व्वत इव चितिकम्पात् कीर्णा नि विक्षिप्तानि शृङ्गाणि यस्य स तथा त्रिमूर्द्धः किम्भूतः अखिलकुल क्षयपूर्व्वलिङ्गतुल्यः अखिलस्य कुलस्य क्षयः तस्य यत्पूर्व्वलिङ्गं पूर्व्वचिह्नं भाविक्षयसूचकउत्पातस्तत्तुल्यः केचित्तु अखिलकुल स्य क्षये पूर्व्वलिङ्गं आदिचिह्नं त्रिमूर्द्धस्तादृशः पर्व्वत इत्याहुः ॥ ४५ ॥ भ०

इति सदयगौराङ्गमल्लिकात्मजश्रीभरतसेनकृतायां भट्टि टीकायां मुग्धबोधिन्यां प्रकीर्णकाण्डे त्रिमूर्द्धबधोनाम चतुर्थः सर्गः॥ ४ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



निराकरिष्णू वर्त्तिष्णू वर्द्धिष्णू परितो रणं। उत्पतिष्णू सहिष्णू च चेरतुः खरदूषणौ॥१॥

ज॰म॰ निरा। खरदूषणौ रणम्परितः समन्तात् अभित इत्यादिना द्वितीया चेरतुः भ्रान्तौ निराकरिष्णू शत्रुनिराकरणशीलौ वर्त्तिष्णू अभिमुखं वर्त्तनशीलौ न पलायनशीलौ वर्द्धिष्णू मायया महाप्राणोद्भावनशीलौ उत्पतिष्णू नभउत्पतनशीलौ सहिष्णू शस्त्रप्रहारसहनशीलौ सर्व्वचालङ्कृषीत्यादिना इष्णुच्॥१।

भ॰ निराकरिष्णू इत्यादि। खरदूषणौ रणं परितः सर्व्वतश्चेरतुः चरगत्यां ठी धिक्समयेति परितोयोगे द्वितीया निराकरिष्णू शत्रुनिराकरणशीलौ वर्त्तिष्णू वर्त्तनशीलौ अर्थात् प्रतियोद्धृसंमुखे रणं परित इति वा अनुषञ्जनीयं वर्द्धिष्णू मायया वर्द्धनशीलौ उत्पतिष्णू आकाशादुत्पतनशीलौ सहिष्णू प्रतियोद्धृशस्त्रघातादिसहनशीलौ सर्व्वच भिभ्राजभूसहेत्यादिना कर्त्तरीष्णुः शीलार्थता तु ढचेद्वत्यर्थेति सूत्रे शीलार्थे तृन्नित्युक्तं किन्तु तृण्विधायकसूत्रे शीलार्थता नोक्ता अतएव तृणादयः कतिचित् प्रत्ययाः शीलार्थेऽपि भवन्तीति सूचनात् किम्वा अभिधानाच्छीलार्थतानुक्तावपि न क्षतिः निराकुरुतः शत्रूनित्यादिवाक्यं विधेयं॥१॥

तौ खड्गमुषलप्रासचक्रवाणगदाकरौ। अकार्ष्टामायुधच्छायं रजःसन्तमसे रणे॥२॥

ज॰म॰ तौख। रणे रणभूमौ रजःसन्तमसे सङ्गतन्तमः सन्तमसं अव

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



समन्धीभ्यस्तमसइत्यच् रजसा सन्तमसं अस्मिन् इति रजः सन्त मसन्तस्मिन् रजसा कृतान्धकारे तौ खरदूषणौ आयुधछाय मायुधबाहुल्यमकार्ष्टाम् कृतवन्तौ आयुधानांच्छायेति छाया बाहुल्य इति नपुंसकत्वे कृत्स्नं खड्गादीनाम्बाणानाद्वन्द्वैकवद्भाव ङ्कृत्वा पश्चात्तेन सहिता गदेति शाकपार्थिवादित्वात्सः अन्यथा स मुदायस्य जातिरप्राणिनामित्येकवद्भावेन नपुंसकलिङ्गता स्यात् बाणगदमिति खड्गमुषलप्रासचक्रबाणगदाः करे येषामिति समा से प्रहरणार्थेभ्य इत्यादिना करशब्दस्य परनिपातः ॥ २ ॥

तावित्यादि । खरदूषणौ रणे युद्धे आयुधानां बहूनां छाया मकार्ष्टां कृतवन्तौ रणपदं रणभूमिवाचकमित्यन्ये सन्यक्तमः सन्तमसं समवान्धात्तमसइति अः रजसा सन्तमसं यत्र रणे आ युधानां बाहुल्यात् छायाशब्दस्य नपुंसकत्वमभिधानात् कीदृशौ खड्गादयः करे ययोस्तौ अकार्ष्टामिति कृञ्धातोः लुङि तस्य ताम् सिचि वृद्धिः ॥२॥ भ०

अथ तीक्ष्णायसैर्व्बाणैरधिमर्म्म रघूत्तमौ । व्याधं व्याधममूढौ तौ यमसाच्चक्रतुर्द्विषौ ॥ ३ ॥

अथ । अथैतस्मिन् संग्रामे रघूत्तमौ रामलक्ष्मणौ कर्तृभूतौ कर्म्मभूतौ द्विषाविति सत्सूद्विषेत्यादिना क्विप् यमसाच्चक्रतुः यमा धीनौ कृतवन्तौ तदधीनवचनइति सातिः तीक्ष्णायसैर्बाणैः तीक्ष्ण मायसम्फलं येषामिति व्याधं व्याधं विद्ध्वा विद्ध्वा आभीक्ष्ण्ये णमुल् तत्र समानकर्तृकयोः पूर्व्वकालइति वर्त्तते अभीक्ष्ण्ये द्वे भवत इति ज०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



द्विर्व्वचनं अधिमर्म्मेति विभक्त्यर्थेऽव्ययीभावः अमूढौ सावधानौ रामलक्ष्मणौ मर्म्मवेधमेवाह॥ ३॥

भ० अथेत्यादि। तयोर्व्विक्रमानन्तरं रघूत्तमौ कर्तृभूतौ तीक्ष्णाय सैस्तीक्ष्णफलैर्व्वाणैरधिमर्म्म जीवितस्थाने व्याधं व्याधं विद्धा विद्धा तौ द्विषौ खरदूषणौ कर्म्मभूतौ यमसात् यमाधीनौ चक्रतुः रघूत्तमौ किम्भूतौ अमूढौ रणपण्डितौ किम्वा खरदूषणौ अमूढौ अस्त्रवर्षेऽप्यसम्भ्रान्तौ मर्म्मवेधे सावधानौ वा रणपण्डितावपि वा तीक्ष्णमायसमयोविकारः फलं यत्र मर्म्म विध्यतीति कारकार्थेऽव्ययीभावः व्यधौताडे इत्यस्मात् चणम्बाभीक्ष्ण्ये इति चणम् आभीक्ष्ण्ये द्वित्वं लोकतः सिद्धं कात्स्न्यायत्योः सम्पद्यकादावित्यधीनत्वे चसात् किम्वा देयत्राचेति देयेऽर्थे सकारात् चसात् त्रा सुसित्यादिना द्विषः क्विप्॥ ३॥

हतबन्धुर्जगामासौ ततः शूर्पणखा वनात्। पारेसमुद्रं लङ्कायां वसन्तं रावणं पतिं॥ ४॥

ज०म० हत। असौ सूर्पणखा हतबन्धुः व्यापादितभ्रातृद्वया ततोवनाद्दण्डकारण्यात्रावणम्पतिं प्रभुं शरणञ्जगाम गतवती पारेसमुद्रं समुद्रस्य पारइति पारेमध्येषष्ठ्यावेत्यव्ययीभावः तत्सन्नियोगेन पूर्व्वपदस्यैकारान्तत्वम्पक्षात्सप्तमी नाव्ययीभावादित्यभावः समुद्रस्य पारे स्थितायां लङ्कायां वसन्तं रावणमिति॥ ४॥

भ० हतबन्धुरित्यादि। असौ शूर्पणखा हतबन्धुः सती परेण व्यापादितभ्रातृद्वया सती ततोवनात् दण्डकारण्यात् रावणं पतिं प्रभुं जगाम पारेसमुद्रं समुद्रपारे स्थितायां वसन्तं पारेसमुद्रमित्य

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



व्ययीभाव एलञ्च निपातनात् चीप्सयोर्व्वेति सप्तम्याम: प्रतीति पाठे रावणं प्रति लक्षीकृत्य जगाम॥ ४॥

संप्राप्य राक्षससभं चक्रन्द क्रोधविक्लवा। नामग्राहमरोदीत् सा भ्रातरौ रावणान्तिके॥ ५॥

सभा। सा शूर्पणखा राक्षससभं संप्राप्य ढौकित्वा राक्षसानां सभेति सभाराजेत्यादिना नपुंसकता चक्रन्द क्रन्दनङ्कृतवती क्रोधविक्लवा क्रोधविवशा भ्रातरौ खरदूषणावरोदीत् रोदित वती नामग्राहन्नाम गृहीत्वा भ्रातरौ खरदूषणाविति नाम्नि दि शिग्रहोरिति णमुल् अत्र नामग्रहणविशिष्टाया रोदनक्रियाया व्याप्तुमिष्टत्वाद्रुदि: सकर्म्मक: रावणान्तिके रावणसमीपे सप्तम्य धिकरणे चेति चकाराद्दूरान्तिकार्थेभ्यइति सप्तमी तयो: किञ्जा तमिति रावणेन पृष्टाह॥ ५॥ ज॰म॰

संप्राप्येत्यादि। सा शूर्पणखा राक्षससभं संप्राप्य चक्रन्द राक्ष सानां सभा राक्षससभं क्लीवत्वमभिधानात् क्रोधेन विक्लवा व्या कुला सती भ्रातरौ खरदूषणौ नामग्राहं नाम गृहीत्वा रावण स्यान्तिके समीपे अरोदीत् रुदेर्घ्या व्यां रुदाद्यखिबेरितीम् पूर्व्व क्रन्दनमुक्तं अत्र नामग्रहणमुक्तमिति भेद: अश्रुविमोचनमात्रे रुदिरकर्म्मक: शब्दयुक्तक्रन्दने तु सकर्म्मक: इति प्राञ्च: भ्रातरौ चक्रन्द आजुहाव क्रदि आह्वाने नामग्राहमरोदीदित्यन्वय इति केचित् नामग्राहमिति नाम्नोग्रहणमभिधानात् किम्वा हा खर भ॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



दूषणेति नाम्नोग्राहोग्रहणं यत्रेति वा रोदनक्रियाया विशेषणं ग्राहोघञन्तः ॥ ५ ॥

दण्डकामध्यवात्तां यौ वीर रक्षःप्रकाण्डकौ। नृभ्यां संख्येऽक्षषातां तौ सभृत्यौ भूमिवर्द्धनौ ॥ ६ ॥

ज०म० दण्ड। हे वीर दण्डकात् दण्डकारण्यसन्निवेशात् अध्यवात्ताम् अध्युषितवन्तौ वसनिवासइत्यस्मात्लुङ् हलन्तलक्षणा वृद्धिः सःस्येत्यादिना धातुसकारस्य तत्वम् झलोझलीति सिचोलोपः रक्षःप्रकाण्डकौ प्रशस्तौ राक्षसौ प्रशंसावचनैश्चेति सः ततः स्वार्थे कन् स्वार्थिकाश्च प्रकृतितोलिङ्गवचनान्यतिवर्त्तन्तइति नपुंसको न भवति अन्यथा रूढिशब्दाः प्रशंसावचना आविष्टलिङ्गत्वादन्यलिङ्गेऽपि जातिशब्दे स्वलिङ्गोपादानादेव समानाधिकरणाः स्युः यथा गोप्रकाण्डमिति तौ नृभ्यांमनुष्याभ्यां संख्ये युद्धे भूमिवर्द्धनावक्षषाताम् क्षतौ कर्मणिलुङ् अचिण्वद्भावे रूपम् वर्द्धेत इति वर्द्धनौ कृत्यल्युटोवहुलमिति कर्त्तरि ल्युट् भूमेर्व्वर्द्धनाविति सः भस्मीकृतशरीरस्य भूमौलीयमानत्वात् सभृत्यौ नैकाकिना ॥ ६ ॥

भ० दण्डकामित्यादि। एवंप्रकारेणारोदीदित्यन्वयः वीरेति सोपालम्भसम्बोधनं यौ रक्षःप्रकाण्डकौ प्रशस्तराक्षसौ दण्डकामध्यवात्तां सभृत्यौ तौ नृभ्यां मनुष्याभ्यां संख्ये संग्रामे भूमिवर्द्धनौ अक्षषातां क्षञः कर्मणि टो इगुङ्सर्द्धीति किलान्न गुणः शवस्तु घितिवर्द्धन इति त्रिकाण्डशेषः अरण्ये दण्डकाशब्दः स्त्रीलिङ्गः

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कायोध्याया: पुनरुपगमोदण्डकायां वने व इति भवभूतिः दण्ड कानिति पाठे दण्डकारण्यसन्निवेशानित्यर्थः केचित्तु दण्डकाशब्दः स्त्रीलिङ्गबहुवचनान्त एव इत्युक्ता दण्डका इति शसन्तं पठन्ति अध्यवात्तामिति अधिपूर्व्वाद्वसेष्टीतां व्यांसिः सत्यरे इति सस्य तः अनिमत्वात् त्रिः रक्षसां मध्ये प्रकाण्डकौ प्रशस्तौ एकार्थत्वात् कर्म्मधारयोवा समासे विशेषणमपि परं स्यात् प्रशंसावचनैस्चेति परसूत्रं यद्यपि प्रकाण्डमुद्धतल्लजावित्यमरेणोक्तं दृश्यते च गो प्रकाण्डमित्यादावजहल्लिङ्गता तथापि कप्रत्यये सति स्वार्थिकाः प्रकृतितोलिङ्गवचनान्यतिवर्त्तन्तेऽपीति न्यायात् पुंस्त्वं वस्तुतस्तु पुंलिङ्गोऽपि प्रकाण्डशब्दोऽस्ति निगडाक्रोडनलप्रकाण्डकाण्डा इति पुनपुंसकवर्गे हेमचन्द्रः उद्धप्रकाण्डौ द्वौ प्रशंसायामिति हलायुधः भूमिं वर्द्धयत इति नन्द्यादित्वादनः ॥ ६ ॥

विग्रहस्तव शक्रेण बृहस्पतिपुरोधसा। सार्द्धं कुमा रसेनान्या शून्यस्यासीति कोनयः॥ ७॥

विग्र। बृहस्पतिः पुरोधा मन्त्री यस्य शक्रस्य तेन कार्य्येषु पुरा धीयत इति पुरोधाः पुरःपूर्व्वाद्धाञः सर्व्वधातुभ्य असुन् तथा कुमारः कार्त्तिकेयः सेनानीर्य्यस्य सेनान्नयतीति सत्सूद्विषेत्या दिना क्विप् तेन शक्रेण सह सार्द्धं तव विग्रह आसीत् इदानी कार्य्यनिपुणाभावात् शून्यस्यासि तासस्योर्लोप इति सकारलोपः तस्मात्कोनयः नय एव न भवतीत्यर्थः तदेव दर्शयन्नाह ॥ ७ ॥



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० विग्रह इत्यादि। शक्रेण सार्द्धं तव विग्रहो विरोधस्तथापि त्वं शून्यः कार्य्याकार्य्यविचाररहित एवासि इति कोनयः न कापि नीतिस्तवेत्यर्थः किम्भूतेन बृहस्पतिपुरोधसा बृहतां देवानां गुरुत्वात्पतिः बृहस्पतिर्मनीषादित्वान्निपातः स पुरोधाः पुरोहितो यस्य कुमारः कार्त्तिकेयः सेनानीः सेनापतिर्यस्य सेनां नयतीति क्विप् कव्याद्यनेकाच इति यत्वं लोपोऽस्य सेरिति असेःसौ स लोपः॥ ७॥

यद्यहं नाथ नायास्यं विनसा हतबान्धवा। नाज्ञास्यस्त्वमिदं सर्व्वं प्रमाद्यंश्चारदुर्व्वलः॥ ८॥

ज०भ० यदी। विनसा विगता नासा यस्याः नासैव नासिकेति केण इति ह्रस्वत्वे रूपम् तस्या नसादेशस्य विधीयमानत्वात् अत्र सम्भव एव नास्ति विनसेति पाठान्तरम् तत्र विगता चासौ नासिका च विनासिका तत इत्थम्भूतलक्षणायान्तृतीयायां पद्दन्नोमासइत्यादिना नसादेशः विगतया नासिकयोपलक्षितेत्यर्थः विगता नासिका अस्या इति बहुव्रीहिणा व्याख्याने अञ्नासिकेत्यादिना अञ् नसादेशस्य प्राप्तुतः तस्य संज्ञाविषयत्वात् उपसर्गाच्चेत्यसंज्ञायां विधीयमानो न भवति वेर्ग्रोवक्तव्यइति ग्रादेशो वाधकः हे नाथ यद्यहं विनसा हतबान्धवा नायास्यन्नायाताभविष्यम् तदा तदिदं सर्व्वम्भ्रात्रोर्व्वधन्नासाछेदञ्च नाज्ञास्यः न ज्ञातोऽभविष्यः क्रियातिपत्तौ लिङ् अज्ञाने कारणमाह प्रमाद्यन् विषयेषु प्रमादङ्कुर्व्वन् चारदुर्व्वलः चारहीनः चाराहि चचूराज्ञाङ्कार्य्याकार्य्यज्ञानाय लोके चरतीति चरः पचाद्यच् चर एव चारः प्रज्ञादित्वादण्॥ ८॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



यदीत्यादि। हे नाथ विनसा हतबान्धवा च सती यद्यहं नाया भ०
सं तदा त्वमिदं सर्व्वं पूर्व्वोक्तं नाज्ञास्थः याज्ञाभ्यां ध्वर्थासम्भवे थी
अज्ञाने हेतुमाह प्रमाद्यन् विषयेषु अनवधानतां गच्छन् यन्यो
प्रमादीति प्रमादित्वाद्दीर्घः प्रमादोऽनवधानता चारेण दुर्व्वलो
हीनः राजा चरैर्जगत्कृत्स्नं प्राप्नुयाल्लोकसम्मतैरिति हि शास्त्रं
विनसा इति विगता नासा नासिका यस्याः सा विनसा केचित्तु वि
गतया नासिकया उपलचिता विशेषणे तृतीया पाददन्तेति नसा
देश इत्याहुः बन्धुरेव बान्धवः चर एव चारः स्वार्थे ष्णः॥ ८॥

करिष्यमाणं विज्ञेयं कार्य्यं किन्नु कृतं परैः। अप
कारे कृतेऽप्यज्ञो विजिगीषुर्नवा भवान्॥ ९॥

करि। परैः शत्रुभिरपचयचिकीर्षया करिष्यमाणङ्कार्य्यं वि ज०म०
ज्ञेयम् किन्तु कृतमेव यत्तदवश्यमेव विज्ञेयमित्यर्थः त्वम्पुनः परै
रपकृतोऽपि अज्ञोऽविदितस्वरूपः अतोविजिगीषुर्नवा भवान्
सुप्तो न राज्यं सम्भावयतीत्यर्थः॥ ९॥

करिष्यमाणमित्यादि। परैः शत्रुभिः करिष्यमाणमपि कार्य्यं भ०
विज्ञेयं अर्थाज्जिगीषुणा किन्नु कृतं तदवश्यमेव विज्ञेयमित्यर्थः
परैः कृतेऽपि अपकारे भवान् अज्ञः अतो भवान् नवा विजिगीषुः
जेर्गिःसनश्चोरिति गिः जानातीति ज्ञः कृगृज्ञाप्रीति कः उस्येची
त्यादिना आकारलोपः आदन्तात् डेनेष्टसिद्धौ कृगृज्ञादित्यत्र
ज्ञाग्रहणेन हनजनादित्यस्य उपपदस्यैव विषयः कृगृज्ञा इत्य
स्य तु उपपदेऽनुपपदे च विषय इति ज्ञापितं वाशब्द आक्षेपे
प्रश्ने वा॥ ९॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



वृतस्त्वं पात्रेसमितैः खट्वारूढः प्रमादवान्। पानशौण्डः श्रियं नेता नात्यन्तीनत्वमुन्मनाः ॥ १० ॥

ज०म० वृतः। अत्यन्तङ्गामिनीति अवारपारेत्यादिना खः तस्य भावोऽत्यन्तीनत्वं नैवात्यन्तीनामत्यन्तगामिनीं श्रियन्नेता न प्रापणशीलः तृन्निति ताच्छीलिकस्तृण् नलोकेति षष्ठीप्रतिषेधः यद्यपि महोदयं राज्यम्प्राप्तवानसि तथापि न चिरकालमित्यर्थः यतस्त्वमुन्मनाः भ्रान्तचित्तः यतः पानशौण्डः पाने प्रसक्तः सप्तमी शौण्डैरिति सः अतएव प्रमादवान् अतोऽपि खट्वारूढः उत्पथप्रस्थितः खट्वाक्षेप इति द्वितीया सः तत एव पात्रेसमितैः भोजन एव सन्निहितैः अनुजीविभिर्वृतः पात्रेसमितादयश्चेति क्षेपे सः ॥ १० ॥

भ० वृतइत्यादि। त्वं श्रियं आत्यन्तीनत्वं अत्यन्तगामित्वं न नेता न प्रापयिष्यसि नीञोद्विकर्म्मकात् तृण् ढचेछत्यव्येत्यादौ शीलार्थे तृणवर्ज्जनात् न षी अत्यन्तशब्दात् ढघेकादिति तद्गामिन्यर्थे खीनः तत्वेत्वजात्याख्यइतिपुम्वत् हेतुमाह पात्रेसमितैर्भोजनपात्र एव समितैः सन्निहितैः कार्य्यान्तराक्षमैरनुजीविभिर्वृतोवेष्टितः अत्राक्षेपे समासो विभक्त्यलोपश्चाभिधानात् खट्वारूढः विपथप्रस्थितः क्तेन क्षेपे खट्वाया द्वितीया तत्पुरुष इति परे स्वमते समासे सति मण्डपादिवत् स्वभावादर्थान्तरे वृत्तिः प्रमादवान् अनवधानतायुक्तः यतः पानशौण्डः पाने प्रसक्तः अतएव उन्मना उद्भ्रान्तचित्तः ॥ १० ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अध्वरेष्वग्निचित्वत्सु सोमसुत्वत आश्रमान्। अत्तुं
महेन्द्रियं भागमैति दुश्च्यवनोऽधुना ॥ ११ ॥

अध्व। त्वय्येवम्भूतेऽधुना दुश्च्यवन इन्द्रः आश्रमानैति आग जं०म
इति आङ्पूर्व्वस्येणः एत्येधत्यूट्स्विति वृद्धिः सोमसुत्वतः सोमं
सुनोतीति सोमेसुञ इति क्विप् सोमसुतः सन्ति येष्वाश्रमेष्विति
मतुप् तसौ मत्वर्थ इति भत्वे तकारस्य जस्त्वन्न भवति झयइति
मतोर्व्वत्वम् किमर्थमैतीत्याह अत्तुम्भक्षयितुम्महेन्द्रियम्भागं महे
न्द्रोदेवता अस्येति महेन्द्राद्घाणौ चेति घः क्व अध्वरेषु यज्ञेषु
अग्निचित्वत्सु अग्निञ्चितवन्तोऽग्निचितः आहिताग्नयः अग्नौ चेरिति
क्विप् ते सन्ति येष्विति पूर्व्ववन्मतुप् ॥ ११ ॥

अध्वरेष्वित्यादि। तवैव प्रमादात् अधुना इदानीं दुश्च्यवन भं०
इन्द्रः अध्वरेषु यज्ञेषु महेन्द्रियं महेन्द्रदैवतं भागं अत्तुं भक्षयि
त्तुं आश्रमानैति आगच्छति स भागो राक्षसग्राह्य एवासीदिति
भावः कीदृशेषु अग्निचित्वत्सु अग्निं चितवान् अग्निचिन्मुनिः चासु
सिति चेःक्विप् स्वस्वतन्पिति ततोऽस्त्यर्थे मोङमझपादतुः नदं
तसाविति पदत्वनिषेधात् न चपोऽवेजव कीदृशान् सोमसुत्वतः
सोमं सुतवान् सोमसुत्यजमानः तद्युक्तान् पूर्व्ववत् क्विवादि सो
मोलतासवनं सन्धानं महेन्द्रोदेवता अस्येति विकारसंघेत्यादि
ना इयः ॥ ११ ॥

आमिक्षीयं दधि क्षीरं पुरोडाश्यं तथौषधं। हविर्है
यङ्गवीनञ्च नाप्युपघ्नन्ति राक्षसाः ॥ १२ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज॰म॰ आमि। दध्ना सहितं शृतं पय आमिक्षा तस्मै हितमामिक्षीयं विभाषाहविरपूपादिभ्य इति छयतौ दधि च क्षीरञ्चेति विभाषा वृक्षेत्यादिना व्यञ्जनत्वादेकवद्भावः पुरोडाशाय हितमौषधन्नीवारतण्डुलादि पुरोडाश्यमपूपादित्वाद्यत् ओषधिरेवौषधम् ओषधेरजाताविस्यण् तण्डुलानामजातित्वात् स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्त इति नपुंसकलिङ्गता हविः हूयत इति हविः अर्चिशुचीत्यौणादिक इस् हैयङ्गवीनं घृतं ह्योगोदोहस्य विकार इत्यर्थे हैयङ्गवीनसंज्ञायामिति निपातनात् खञ् ह्यियं स्यादेशश्च तानि नाप्युपपन्नन्ति राक्षसाः त्वय्युदासीने सति इदानीङ्कार्य्यप्रदर्शनेन प्रोत्साहयितुमाह ॥ १२ ॥

भ॰ आमिक्षीयमित्यादि। अधुना राक्षसा अपि एतानि वस्तूनि न उपपन्नन्ति अपिशब्दः पूर्व्वापेक्षया कानि आमिक्षायै हितं दधि दुग्धञ्च व्यञ्जनत्वे समाहार इति परः स्वमतेऽनिधानात् आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः हितार्थे ईयः तथा पुरोडाशाय हितं औषधं नीवारतण्डुलादि पुरोदश्यते इति पुरोडाशोऽन्नविकारः पिष्टकादिः निपातनात् ततो हितार्थे यः ओषधिशब्दात् स्वार्थे ष्णः औषधं क्वचित् स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्त इति क्लीवत्वं हविर्हव्यञ्च ऊदाने चासुषिसितीस् ह्योगोदोहस्य विकारो हैयङ्गवीनं निपातनात् तत्तु हैयङ्गवीनं यत् ह्योगोदोहोद्भवं घृतमित्यमरः ॥ १२ ॥

युवजानिर्धनुष्पाणिर्भूमिष्ठः खविचारिणः। रामो यच्चद्रुहो हन्ति कालकल्पशिलीमुखः ॥ १३ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



पुव। युवतिः यौवनवती जाया यस्य युवजानिः जायाया निङ् वलिलोपः स्त्रियाःपुंवदिति पुंवद्भावात् स्त्रीप्रत्ययो निवर्त्तते धनुर्व्याणिः पाणौ धनुर्यस्य प्रहरणेत्यादिना परनिपातः भूमिष्ठः भूमौ तिष्ठतीति भूमिष्ठः नाकाग्रचरः सुपिस्थ इति कः अम्बाम्बेत्यादिना षत्वम् कालकल्पशिलीमुखः मृत्युतुल्यशरः रामो राक्षसान् हन्ति खविचारिणः आकाशचरणशीलान् सुप्यजाताविति णिनिः ॥ १३ ॥ जं०म०

युवजानिरित्यादि। भूमिष्ठोऽपि रामः खविचारिणोऽपि यस्य द्रुहो राक्षसान् हन्ति भूमौतिष्ठतीति हनजनादिति डः षत्वं मनीषादित्वात् खे आकाशे विचरितुं शीलं येषां ते तथा सुवन्तोपपदे ताच्छील्येणिन्निति परः स्वमते खे विचरन्तीति ग्रहादित्वाणिन् यस्माय द्रुह्यन्तीति क्विप्कीदृशो रामो युवजानिः युवती जाया यस्य स तथा बहुव्रीहौ जायाया इज्जानस्येति परः स्वमते जाया समानार्थो जानिशब्दोऽस्ति जनी सीमन्तिनीबध्वोरित्यनुशासनात् जनीशब्दस्य स्वार्थिकष्णन्तस्य जानिरिति रूपम्वा पुम्वत् स्युक्तपुंस्क इति पुम्वद्भावः धनुः पाणौ यस्य स तथा षत्वविधानं गवाक्षजालैरित्यत्र व्याख्यातं ईषदूनः कालः कालकल्पोयमतुल्यइत्यर्थः तादृशः शिलीमुखोवाणो यस्य स तथा त्यादेस्तोनेइति कल्पः ॥ १२ ॥ भ०

मांसान्योष्ठावलोप्यानि साधनीयानि देवताः। अश्नन्ति रामाद्रक्षांसि विभ्यत्यश्नुवते दिशः ॥ १४ ॥

मांसा। ओष्ठावलोप्यानि ओष्ठाभ्याञ्छेदार्हाणि शक्यानि वा अर्हार्थे शक्यार्थे वा कृत्यः कृत्यैरधिकार्थवचन इति सः। जं०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



साधनीयानि यज्ञस्य साधनाय हितानि तस्मै हितमिति छः साव नीयानीति पाठान्तरम् तत्र सवनं स्नानं तद्योगात्स्नातकोऽपि तथोच्यते तत्र भवः सावनो यज्ञः तस्मै हितानीति छः तानि मांसानि देवता अश्नन्ति भुञ्जते न राक्षसाः रक्षांसि किन्तु रामाद्बिभ्यति वानपुंसकस्येति शतुर्नुमभावपक्षे रूपं दिशोऽश्नुवते व्याप्नुवन्ति ॥ १४ ॥

भ० मांसानीत्यादि। इदानीं देवता मांसानि अश्नन्ति रक्षांसि तु रामाद्बिभ्यति दिशोऽश्नुवते व्याप्नुवन्ति पलायन्त इत्यर्थः कीदृशानि-मांसानि ओष्ठावलोप्यानि छेत्तुं शक्यानि लुपूछेदने तेभ्यः शक्यार्थे इति शक्यार्थे ण्यण् साधनीयानि स्वर्गादेः साधनाय यज्ञाय हितानि सुरसतायाः साधनं घृतादि तेन संस्कृतानि वा अश्नन्तीति अशभोजने श्नाद्योरित्यालोपः बिभ्यतीति ञिभीभि भीत्यां शतृः श्नादीरेद्धिः द्वेः शतुर्नुन् शाविति पक्षे नुणोऽभावः अन्त्यन्तमिति केचित् तदा अन्तोऽद्वेरित्यत् अष्टूङ्लव्याप्तिसंहत्योः श्नुध्वोरित्युव् मान्तोऽदनतः ॥ १४ ॥

कुरु बुद्धिं कुशाग्रीयामनुकामीनतां त्यज। लक्ष्मीं परम्परीणां त्वं पुत्रपौत्रीणतां नय ॥ १५ ॥

ज०म० कुरु। कुशाग्रीयाङ्कुशाग्रमिव सूक्ष्मां कुशाग्राक्त इति इवार्थे छः स्थूलबुद्धिर्माभूदित्यर्थः अनुकामीनतान्त्यज यथेष्टगामिता न्त्यज अवारपारेत्यादिना खः परम्परीणाम्परांश्चापरांश्च अनुभवतीत्यर्थे परापरशब्दात् परोवरेत्यादिना खः परादेशश्च

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



तां लक्ष्मीं क्रमायातान्त्वमुत्रपौत्रीणतान्नय पुत्रांश्च पौत्रांश्चानु भवतीति खः तस्य भावः पुत्रपौत्रानुगामिनीं कुर्वित्यर्थः ॥ १५ ॥

कुर्वित्यादि। त्वं बुद्धिं कुशाग्रीयां कुशाग्रमिव सूक्ष्मां कुरु वि कारसंघेति कुशाग्रादिवार्थे ईयः अनुकामीनतां कामस्य अभि लाषस्य अनु पश्चाद्गामितां यथेष्टाचरणं त्यज अनुकामान्तगा मिन्यर्थे ढघेकादितीनः परम्परीणां क्रमादायातां लक्ष्मीं पुत्र पौत्रीणतां पुत्रपौत्राधीनतां नय प्रापय परञ्च परतरञ्च इति द्वन्द्वे परम्परादेशो निपातनात् ततस्तदनुभवतीत्यर्थे पूर्व्वेण ईनः ॥ १५ ॥ भ०

सहायवन्त उद्युक्ता बहवोनिपुणाश्च यां। श्रियमा शासते लोलां तां हस्तेकृत्य माश्वसीः ॥ १६ ॥

सहा। याञ्च श्रियन्त्वदीयां शौर्य्योपात्तां सहायवन्तः ससहा या उद्युक्ता उत्साहवन्तो निपुणाः कुशलाआशासते इच्छन्ति आङःशासुइच्छायामित्यादादिकस्यात्मनेपदिनो रूपम् आत्म नेपदेष्वनत इत्यदादेशः तां हस्तेकृत्य स्वीकृत्य माश्वसीः आश्वासम्माकार्षीः चञ्चलत्वात् यदाह लोलामिति ह्यन्तचण श्वसजागृणीति वृद्धिप्रतिषेधः इटईटीति सिचोलोपः नित्यं हस्ते पाणाविति गतिसंज्ञायां समासे ल्यवादेशः तां लोलतान्द र्शयन्नाह ॥ १६ ॥ ज०भ०

सहायवन्तइत्यादि। सहायवन्तः प्रशस्तसहाययुक्ता उद्यु क्ता उद्योगिनो बहवोनिपुणाः कर्म्मकुशला यां श्रियं आशासते भ०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



इच्छन्ति तां श्रियं हस्तेकृत्य स्वीकृत्य माश्वसीः आश्वासं माकार्षीः यतोलोलां चञ्चलां आङःशासइच्छायां अदादिरात्मनेपदी हस्तेशब्दः सप्तम्यन्तप्रतिरूपकोऽव्ययः स्वीकारे वर्त्तते हस्ते पाणौप्राध्वमित्यादिना समासः ल्यादनञः क्त्वोल्यपि आङःशास श्वांसिः हसादेः सेम इत्यादौ श्वसवर्ज्जनान्न ञिः ॥ १६ ॥

लक्ष्मीः पुंयोगमाशंसुः कुलटेव कुतूहलात्। अन्तिकेऽपि स्थिता पत्युश्छलेनान्यं निरीक्षते ॥ १७ ॥

ज०म० लक्ष्मीः। त्वयैवं न मन्तव्यम् अन्यैः प्रार्थ्यमानापि न माम्परित्यजतीति यतः छलेन व्याजेन अन्यन्निरीक्षते किमर्थं पुंयोगमाशंसुः अभिलषन्ती सनाशंसभिक्षउः कुतूहलात् कोऽस्य विशेषइति स्नेहादन्तिके अदूरेऽपि स्थिता पत्युः दूरान्तिकार्थैरित्यादिना षष्ठी कुलटेव बन्धकीव शकन्ध्वादिषु दर्शनात्पररूपम् युवजानिरित्युक्तन्तद्योषित्प्रलोभनायाह ॥ १७ ॥

भ० लक्ष्मीरित्यादि। लोलतां दर्शयति लक्ष्मीः पत्युरन्तिके स्थिताऽपि सुतरां दूरस्था कुतूहलात् अन्यं पुरुषं छलेन व्याजेन निरीक्षते केनापि छिद्रेण गन्तुमित्यर्थः यतः पुंयोगमाशंसुः अभिलष्यन्ती एकेन पुंसा तृप्तिर्नास्तीत्यर्थः अतएव कुलटा इव असतीव कुलान्यटति पचादित्वादच् मनीषादित्वादकारलोपः सनाशंसभिक्षउरिति आंपूर्व्वशंसेरुः ॥ १७ ॥

योषिद्वृन्दारिका तस्य दयिता हंसनादिनी। दूर्व्वाकाण्डमिव श्यामा न्यग्रोधपरिमण्डला ॥ १८ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



योषित्। योषिच्चासौ वृन्दारिका चेति वृन्दारकेत्यादिना स: रूपेण प्रियेत्याह दयिता प्रिया प्रशस्तत्वे कारणमाह हंस इव गन्तुं शीलं यस्याः कर्त्तर्य्युपमान इति णिनिः दूर्व्वाकाण्डमिव श्यामा दूर्व्वास्तम्बस्तद्दिव श्यामा न्यग्रोधपरिमण्डला उपमानानीत्यादिना स: ॥ १८ ॥ ज॰म॰

योषिद्वृन्दारिकेत्यादि। प्रलोभनार्थमिदमुच्यते तस्य रामस्य दयिता प्रिया योषिद्वृन्दारिका योषितां स्त्रीणां मध्ये वृन्दारिका रूपवती हंसवन्नदतीति हंसनादिनी कर्त्तर्य्युपपदाणिनिरिति परः स्वमते ग्रहादित्वात् हंसनादिनीशब्दः पारिभाषिकोऽप्यस्ति यथा गत्या नितम्बिनी या तु हंसशीलानुगामिनी। मत्तकोकिलसंशब्दा सा ज्ञेया हंसनादिनी। दूर्व्वाकाण्डमिव तत्तुल्या श्यामाङ्गीत्यर्थः दूर्व्वाकाण्डवत् श्यामवर्णेति व्याख्यानं पुराणविरुद्धं तत्र गौरत्वकथनात् श्यामान्यग्रोधपरिमण्डलाशब्दौ रूढौ यथा शीते सुखोष्णसर्व्वाङ्गी ग्रीष्मे तु सुखशीतला। तप्तकाञ्चनवर्णाभा सा स्त्रीश्यामेति कथ्यते। स्तनौ सुकठिनौ यस्या नितम्बे च विशालता। मध्ये क्षीणा भवेद्या सा न्यग्रोधपरिमण्डला अग्निपुराणे स्त्रीपुरुषलक्षणाध्याये न्यग्रोधपरिमण्डललक्षणमुक्तं यथा प्रसारितभुजस्येह मध्यभागद्वयान्तरं। उच्छ्रायेण समं यस्य न्यग्रोधपरिमण्डलइति केचित्तु दूर्व्वाकाण्डमिव न्यग्रोधपरिमण्डला न्यग् रुणद्धीति न्यग्रोधं अधःप्रसृतं परितोमण्डलं नितम्बमण्डलरूपं यस्याः दूर्व्वाकाण्डमपि अधः प्रसरति नोपरिष्टादित्याहुः अन्ये तु न्यग्रोधस्य वटस्य इव परिमण्डलं परिणाहो नितम्बभागे यस्याः एकदेशधर्म्मेणापि समुदायोपमानतादर्शनादित्याहुः भ॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



श्यामा अप्रसूतेति केचित् अप्रसूताङ्गनायाञ्च श्यामा सोमलतौषधैा। त्रिवृताशारिवागुन्द्रा निशाकृष्णा प्रियङ्गुष्विति विश्वः ॥१८॥

नास्यं पश्यति यस्तस्या निंस्ते दन्तच्छदं न वा। संशृणोति न चोक्तानि मिथ्याऽसौ विहितेन्द्रियः ॥१९॥

ज०म० नास्य। तस्या आस्यम्मुखं यो न पश्यति दन्तच्छदं ओष्ठञ्छाद्यते अनेनेति घः छादेर्घेद्युपसर्गस्येति ह्रस्व दन्तानाञ्च्छदंनवा निंस्ते न चुम्बति णिस्चिचुम्बन इत्यादादिकआत्मनेपदी इदितो नुम् धातोः उक्तानि उदितानि न संशृणोति समोगमित्यादिना तङ् न भवति अकर्म्मकादित्यधिकारात् मिथ्यासौ विहितेन्द्रियः वृथैव तस्य वेधसा विहितानि इन्द्रियाणि चक्षुरादीनि ॥१९॥

भ० नास्यमित्यादि। यस्तस्या आस्यं मुखं न पश्यति नवा दन्तच्छदं ओष्ठं निंस्ते चुम्बति णिसिलङ्चुम्बने नवा तस्या उक्तानि भाषितानि संशृणोति असौ पुरुषः विहितेन्द्रियो विधात्रा कृतेन्द्रियोमिथ्या प्रयोजनाभावात् तस्य चक्षुरादीनि मिथ्येति भावः वृथेति क्वचित्पाठः वृथाविहितानि इन्द्रियाणि यस्य स तथा दन्ताश्छाद्यन्तेऽनेनेति छादेस्त्वमन्क्वीसघेस्व इति ह्रस्वः घेस्वइत्युक्तेर्नाम्न्यन्येतिकेति संज्ञायां घप्रत्ययोबोध्यः ओष्ठाधरौ तु रदनच्छदावित्यमरः ॥१९॥

सारोऽसाविन्द्रियार्थानां यस्यासौ तस्य नन्दथुः। तल्पे कान्तान्तरैः सार्द्धं मन्येऽहं धिङ्गिमज्जथुं ॥२०॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



सारो। इन्द्रियार्थानाम्मध्ये सारोऽसौ दयिता इन्द्रियार्थः रूपाद्यतिशययोगात् यस्यासौ संपद्यते तस्य नन्दथुः आनन्द स्तेतसः तल्पे शयनीये यस्य कान्तान्तरैरन्यस्त्रीभिः सार्द्धन्निमज्ज थुं शयनं सर्व्वत्र ह्रितोऽथुच् तस्य धिक् कुत्सितमहं मन्ये उभयत्र सर्व्वतसोरित्यादिना धिग्योगे द्वितीया तया सार्द्धं शोभनमित्य र्थादुक्तम्भवति ॥ २० ॥ ज०म०

सारइत्यादि। इन्द्रियस्य अर्था विषयाः स्रक्चन्दनवनिता दयस्तेषां मध्ये असौ सीतैव सारः श्रेष्ठा यस्य असौ सीता विद्यते तस्यैव नन्दथुरानन्दः कान्तान्तरैः सार्द्धं तल्पे शय्यायां निमज्ज थुं निमज्जनं शयनं धिक् तयैव सार्द्धं युज्यत इत्यहं मन्ये उभ यत्र ह्रितोऽथुर्भावे धिक्समयेति द्वितीया ॥ २० ॥ भ०

न तं पश्यामि यस्यासौ भवेन्नोद्वेजया मतेः। त्रैलो क्येनापि विन्दस्त्वं तां क्रीत्वा सुकृती भव ॥ २१ ॥

नतम्। सर्व्वथा न तम्पश्यामि जानामि जगति यस्य सम्बन्धि न्याः मतेश्चेतसः उद्वेजया उत्कम्पिकाऽसौ न भवेत् चित्तक्षोभज निकेत्यर्थः उद्वेजयतीति अनुपसर्गाल्लिम्पेति कर्त्तरि शः कृद्योगे कर्म्मणि षष्ठी तस्मात् त्रैलोक्येनापि त्रयस्त्रैते लोकास्तेति त्रिलो काः तएव त्रैलोक्यञ्चातुर्व्वर्ण्यादित्वात्स्वार्थे ष्यञ् स्वार्थिका अति वर्त्तन्त इति नपुंसकत्वम् तेनापि ताङ्क्रीत्वा लब्ध्वा विन्दस्त्वं सुकृती भव पण्डितो भव आढ्यो वा भव पाण्डित्यमस्य त्रैलोक्यमात्रे ज०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



णापि स्त्रीरत्नङ्क्लीबा लभ्यमिति विन्दतीति तेनैव सूत्रेण शः अन्या अपि स्त्रियः सन्तीति चेदाह ॥ २१ ॥

भ० नतमित्यादि। असौ सीता यस्य मतेरुद्वेजया चोभजनिका न भवेत् तं पुरुषं नाहं पश्यामि त्रैलोक्येनापि तां क्लीबा त्वं विन्दो लाभवान् सुकृती च भव सुकृती पुण्यवान् शोभनः कृती पण्डितो वा तत्क्रयणादेव तव लाभवत्त्वं पुण्यवत्वं पाण्डित्यञ्च सफलं अन्यथा निष्फलमिति भावः एजृकम्पे एजेरुदः श इति परः स्वमते साहिसातीत्यादिना अगेरित्यस्य नञा निर्द्दिष्टस्य व्यभिचारात् शः विद्लृशपञ्चौ लाभे पूर्व्वेण शः मुचादित्वान्नुण् त्रिलोक्येव त्रैलोक्यं स्वार्थे ष्यः स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्तेऽपीति वाक्यात् क्लीवत्वं ॥ २१ ॥

नैवेन्द्राणी न रुद्राणी न मनावी न रोहिणी। वरुणानी नचाग्नायी तस्याः सीमन्तिनी समा ॥ २२ ॥

ज०म० नैव। तस्यास्तु सीतायाः तुल्यार्थैरतुलोपमाभ्यामिति षष्ठी न काचित्सीमन्तिनी स्त्री तुल्या समा सीमन्तः केशेष्विति पररूपत्वम् अन्यत्र सीमान्तः स विद्यते यस्य इति इनिः इन्द्राणी इन्द्रभार्य्या न सम्यक् किम्पुनरन्या तथा रुद्राणी रुद्रभार्य्या वरुणानी वरुणभार्य्या इन्द्रवरुणेत्यादिना आनुक् मनावी मनुभार्य्या मनोरौवेत्यौकारः अग्नायी अग्निभार्य्या वृषाकप्यग्निकुसितकुसिदेत्यादिना ऐरिति सर्व्वत्र पुंयोगादाख्यायामिति ङीष् रोहिणी चन्द्रभार्य्या रोहितशब्दात् वर्णादनुदात्तेत्यादिना ङीप् नकारश्च

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



वरुणानी न आग्नायीत्यत्र प्रतिषेध एकः पूर्व्वेण योज्यः द्वितीयः परेणेति नचाग्नायीति पाठान्तरम्॥ २२॥

नैवेत्यादि। काऽपि सीमन्तिनी स्त्री तस्याः सीतायाः समा तुल्या न सर्व्वत्र नञ्सम्बन्धादिह नञ्सम्बन्ध उपपद्यते इन्द्राणी इन्द्रस्य पत्नी तस्याः समा न एव निश्चये अह्मरुद्रभवेत्यादिना पत्याद्ईप् आनङ्च रुद्राणी रुद्रस्य पत्नी पार्व्वती समा न पूर्व्ववत् ईप् आनङ्च मनावी मनोः पत्नी शतरूपा न समा नारीस्त्रीत्यादिना निपातः रोहिणी चन्द्रस्य भार्य्या न समा पूर्व्वेण निपातः वरुणानी वरुणस्य पत्नी न समा अह्मरुद्रेतीप् आनङ्च अग्नायी अग्नेः पत्नी न समा वृषाकप्यग्नीतीप् ऐङ्च केचित्तु इन्द्राणी न समा कीदृशी प्रशस्तसीमन्तयुक्ता एवं रुद्राण्यादावित्याहुः सीमन्तः कथ्यते स्त्रीणां केशमध्ये च पद्धतिरिति हलायुधः मनीषादित्वात्साधुः तस्या इति समार्थैनेत्यादिना षष्ठी॥ २२॥

प्रत्यूचे राक्षसेन्द्रस्तामाश्वसिहि बिभेषि किं। त्यज नक्तञ्चरि क्षोभं वाचाटे रावणोह्यहं॥ २३॥

प्रत्यू। राक्षसेन्द्रो रावणः राक्षसीम्प्रत्यूचे प्रतिवचनमुक्तवान् आश्वसिहि खेदन्त्यज रुदादीत्यादिना इट् बिभेषि किं किमर्थन्तापसकात् हे नक्तञ्चरि मद्विषये क्षोभं रोषन्त्यज वाचाटे वक्तृभाषिणि आलजाटचौ वक्तृभाषिणि यस्माद्रावणोऽहम् अनेनात्मोत्कर्षमावेदयति तमेव स्फुटयन्नाह॥ २३॥

प्रत्यूचेइत्यादि। स राक्षसेन्द्रो रावणः तां शूर्पणखां प्रत्यूचे

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



प्रत्युत्तरमाह आश्वसिहि खेदं त्यज रुञ्जीयइति इम् किं विभेषि तापसकात् हे नक्तञ्चरि क्षोभं दुःखं मयि रोषं वा त्यज हे वाचाटेवक्रनिन्द्यभाषणशीले हि यस्मात् अहं रावणः प्रसिद्धनामानुवादात् उत्कर्षः सूचितः वाचोऽस्त्यर्थे वाग्मिवाचाटवाचाला इति निपातः वाचाटोवक्रगर्ह्यवागित्यमरः रवणस्य विश्रवसोऽपत्यं रावणः विश्रवसौ विश्रवणरवणावपत्यष्णे इति परः स्वमते सर्व्वभूतानि रावयति आक्रन्दयति रावणः नन्द्यादित्वादनः क्रिंवा हिंसनधर्म्मत्वात् रावणः हिंसार्थरुधातोरनटि रवणं ततः अस्य शीलं इत्यर्थे विकारसंघेत्यादिना ष्णः अत्रापि वा नन्द्यादित्वादनः ततः स्वार्थे ष्णः रुलध्वनौ रुङ्वधे गत्यां ॥ २३ ॥

मामुपास्त दिदृक्षावान् याष्टीकव्याहृतोहरिः । आशालाभोन्मुखोदूरात् काक्षेणानादरेक्षितः ॥ २४ ॥

ज॰म॰ मामु। मामुपास्त सेवितवान् हरिरिन्द्रः दिदृक्षावान् द्रष्टुमिच्छावान् आत्मदर्शनेच्छावानित्यर्थः दूरादेव याष्टिकैः वेत्रग्राहिभिर्व्याहृतोऽपसारितः कर्त्तृकरणेकृतेति सः यष्टिः प्रहरणमेषामिति शक्तियष्ट्योरीकक् आशालाभे किमभिधास्यतीत्युत्सुकः उन्मुखः तत्परः सप्तमीति योगविभागात्सः अनादरेक्षितः अवज्ञाविलोकितः काक्षेण कुदृष्ट्या कापथ्यक्षयोरिति कुशब्दस्य कादेशः यदि तत्पुरुष इत्यनुवर्त्तते तदा कुत्सितमक्षमिति विग्रहः अक्षशब्दस्येन्द्रियसामान्याभिधायित्वेऽपि ईक्षितशब्दोपपदत्वाच्चक्षुषि वर्त्तते अथ तत्पुरुषइति नानुवर्त्तते सामान्ये

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



नादेशस्तदा कुत्सितमक्षि यस्येति बहुव्रीहौ बहुव्रीहौसक्थ्यक्ष्णो
रिति षच् काक्षेण मयेत्यर्थः॥ २४॥

मामित्यादि। हरिरिन्द्रो मामुपास्त सेवितवान् आसेर्व्यां रूपं भ०
यष्ट्या प्रहरतीति याष्टीकः द्वारि नियुक्तः यष्टिप्रहारकपुरुषः ढघे
कादिति ष्णीकः तेन व्याहतस्ताडितोऽपि दिदृक्षावान् द्रष्टुं इच्छा
वान् मदाज्ञया लाभनिमित्तं उन्मुखः ऊर्द्धमुखः दूरात्समीपग
मनायोग्यत्वात् मया तु काक्षेण कुदृष्ट्या अनादरेणावज्ञया ईक्षि
तः अवलोकितः कुत्सितमक्षं काक्षं इन्द्रियसामान्यवाचिनोऽक्ष
शब्दस्यात्र प्रकरणाच्चक्षुरेवार्थः कुत्सितमक्षि यस्येति वा सक्थ्य
क्ष्णःषःस्वाङ्गे इति षः काक्षेइति कोःकादेशः तत्र अक्षइति इन्द्रिय
वाचकस्यादन्तस्य कृतसमासान्तस्य अक्षिशब्दस्य च ग्रहणं ईष
दक्षं काक्षं इति वररुचिः तदा कटाक्षे तात्पर्य्यं कोरीषदर्थे इति
कादेशः॥ २४॥

विरुग्णोदग्रधाराग्रः कुलिशोमम वक्षसि। अभिन्नं
शतधात्मानं मन्यते बलिनं बली॥ २५॥

विरु। विरुग्णानि अवसन्नानि कुण्ठितानि उदग्राणि महान्ति ज०म०
धाराग्राणि यस्य स कुलिशोवज्रः मम वक्षसि पतितः सन् बली
आत्मानमभिन्नं शतधा शतप्रकारं सञ्ज्ञायाविधार्थे धा बलिन
मन्यते अहो बलवानहन्न येन शतधा भग्न इति तस्य देवतारूप
त्वात् बलमस्त्येव आत्मानं बलिनं मन्यतइवेत्युत्प्रेक्षा॥ २५॥



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० विद्युद्रित्यादि कुलिशोवज्र आत्मानं बलिनं मन्यते कुतइत्याह मम वक्षसि शतधा शतप्रकारेण अभिन्नं केवलं विद्युम्नानि भग्नानि उदग्राणि महान्ति धाराग्राणि यस्य तादृशः बली वस्तुतोवलवानपि मद्वक्षसभङ्गादेव बलं जानाति असुरसमूहविदारणादपीदमेव तस्याधिकमुत्कर्षस्थानमित्यर्थः तस्य वतारूपलान्ननमस्येव उत्प्रेक्षामात्रं वा मन्यत इव इत्यर्थः रुह्यायाधाच् प्रकारे॥२५॥

हत्वा लङ्काद्रुमालानमहमैरावतं गजं। बन्धनेऽनुपयोगित्वान्नतं तृणवदत्यजं॥२६॥

ज०भ० हत्वा। एत्वालीयतइत्यालानं अधिकरणे ल्युट् विभाषा लीयतइत्यात्वम् लङ्काद्रुमा आलानानि यस्यैरावताख्यस्य गजस्य तङ्कत्वा नतन्नम्रमुखन्तृणमिव मत्वा सोऽहमत्यजम् त्यक्तवान् बन्धनेऽनुपयोगित्वात् प्रयोजनाभावात्॥२६॥

भ० हत्वेत्यादि। लङ्काद्रुम एवालानं बन्धनस्तम्भोयस्य तथाभूतं ऐरावतं गजं हत्वा नतं नम्रं तं अहं तृणवत् अत्यजं अथवा तं गजं तृणवत् न अत्यजं अपि तु अत्यजमेवेति शिरश्चालने नञ् कुत इत्याह बन्धनेऽनुपयोगित्वात् स्वयमेव वशीभूतत्वात् अनुपादेयत्वाद्वा आलीयतेऽस्मिन्नित्यालानं आधारेऽनट् सिम्योर्यण्णोङाऽखलिलिलयस्त्वा इति पचे ङा इरावान् समुद्रः तत्र जात इति ढधेकादिति ष्णः॥२६॥

आहोपुरुषिकां पश्य मम सद्रत्नकान्तिभिः। ध्वस्तान्धकारेऽपि पुरे पूर्णेन्दोः सन्निधिः सदा॥२७॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



आहो। अहोपुरुषस्य भावः मनोज्ञादित्वाद्वुञ् आहोपुरुषिका कार्य्यसिद्धावपि तत्साधने वृत्तिः तां मम शूर्पणखे पश्य सद्रत्नकान्तिभिः ध्वस्तान्धकारेऽपि पुरे पूर्णेन्दोः पूर्णचन्द्रस्य सन्निधिः सदा सन्निधानन्न पुनस्तेन कृत्यं रत्नप्रभाभिरेव तत्कृत्यस्य कृतत्वात् ॥ २७ ॥ ज॰म॰

आहो इत्यादि। ममाहोपुरुषिकां पश्य सद्रत्नकान्तिभिः सद्रत्नानां प्रभाभिर्ध्वस्तान्धकारे नाशितध्वान्तेऽपि मत्पुरे सदा पूर्णेन्दोः सन्निधिः एतेन प्रयोजनाभावेऽपि भीत्या पूर्णीभूत्वा चन्द्रस्तिष्ठति देवैरपि भीत्या नासौ पीयते चन्द्रप्रभाणि च रत्नानि मम सन्तीति सूचितं अहमेव पुरुषोयश्चेति सम्भावनायामाहोपुरुषिका निपातनात् आहोपुरुषिकादर्पाद्यास्यात्सम्भावनात्मनीत्यमरः। अहोपुरुषस्य भाव आहोपुरुषिका इति केचित् तदा विकारसंघेतिभावे कण् स्त्रीत्वमभिधानात् काप्यनाशीरकइति अत इत्वं सदेति कुतःककुहेत्यादिना निपातितं ॥ २७ ॥ भ॰

हृतरत्नश्च्युतोद्योगो रक्षोभ्यः करदोदिवि। पूतक्रतायीमभ्येति सत्रपः किन्न गोत्रभित् ॥ २८ ॥

हृत। हृतोच्चैःश्रवआदिरत्नोगोत्रभिदिन्द्रः अतएव च्युतोद्योगः दिवि वर्त्तमानोऽपि रक्षोभ्यः करदः राजग्राह्यं वित्तम्प्रयच्छन् पूतक्रतायीं शचीं पूतक्रतोरैचङीष् पुंयोगादाख्यायामिति सत्रपः सव्रीडः किन्नाभ्येति न ढौकते ॥ २८ ॥ ज॰म॰

हृतेत्यादि। गोत्रभित् इन्द्रोदिवि वर्त्तमानोऽपि सत्रपः सलज्जः भ॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



सन् पूतक्रतायीं स्वभार्य्यामपि नाभ्येति नाभिमुख्येन गच्छति अपि तु तथैव सत्रपले हेतुमाह मया हृतरत्नः हृतं रत्नं यस्य स तथा गलितोद्योगः राक्षसेभ्यः करदः करं राजग्राह्यभागं ददातीति डः पूतक्रतोरिन्द्रस्य पत्नी पूतक्रतायी वृषाकप्यग्नि इत्यादिना ईप् ऐङ्‌च गोत्रान् पर्व्वतान् योभिनत्ति सोऽतिबली यान् इति स्वाभिप्रायं पदं ॥ २८ ॥

अतुल्यमहसा सार्द्धं रामेण मम विग्रहः। त्रपाकरस्तथाप्येष यतिष्ये तद्विनिग्रहे ॥ २९ ॥

ज०म० अतु। तदेवंविधस्य मम अतुल्यमहसा अतुल्यतेजसा रामेण सह विग्रहस्त्रपाकरः कृञोहेत्वित्यादिना टः तथापि त्वत्प्रार्थनया एष च यतिष्ये तद्विनिग्रहे विविधनिग्रहविषये तस्य यतिष्ये यत्नं करिष्यामि वर्त्तमानसामीप्ये वर्त्तमानवद्वेति विकल्पेन लटो विधानात् लृडुदाहृतः ॥ २९ ॥

भ० अतुल्येत्यादि। यद्यपि अतुल्यमहसा असदृशतेजसा रामेण सार्द्धं मम विग्रहस्त्रपाकरः तथापि तस्य विविधनिग्रहे एषोऽहं यतिष्ये यत्नं करिष्ये त्वत्प्रार्थनयेति शेषः त्रपां लज्जां करोतीति त्रकुट्ः निग्रह इति विषयसप्तमी निमित्तमात्रेऽपि सप्तमी लोकोपचारादित्यन्ये ॥ २९ ॥

उत्पत्य खं दशग्रीवो मनोयायी श्रितास्त्रभृत्। समुद्रसविधावासं मारीचं प्रति चक्रमे ॥ ३० ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



उत्प। उक्त्वैवञ्चमाकाशमुत्पत्य मारीचम्प्रति चक्रमे यत्र मारीचोराचसस्तत्र गत इत्यर्थः अनुपसर्गादिति क्रमेस्तङ् मनोवदाशु यातुं शीलमस्येति कर्त्तर्य्युपमान इति णिनिः शितास्त्रभृत् गृहीततीचणचन्द्रहासः समुद्रस्य सविधे समीपे आवासोयस्य मारीचस्य सह विधेन सविधमिति व्युत्पत्तिमात्रं शब्दस्तत्समीपवाची॥ ३०॥ ज०म०

उत्पेत्यादि। एवमुक्त्वा दशग्रीवोरावणः खमाकाशं उत्पत्य मारीचं प्रति लक्षीकृत्य चक्रमे गतः वागेरिति सं द्वितीयानिमित्तकस्य प्रतिशब्दस्य गिलाभावात् मन इव शीघ्रं यातीति मनोयायीति कर्त्तर्य्युपमाने उपपदे णिनिति परः समते गोत्रादिलाशिन् व्याघ्रश्वाशौ श्वाचेति वाक्यं कुर्व्वता कचिदुपमानव्यञ्जकशब्दाभावेऽप्युपमानं गम्यते इति सूचितं तेन मन इव यायीत्यर्थोगम्यते शितं तीक्ष्णमस्त्रं बिभर्त्तीति क्विप् समुद्रस्य सविधे समीपे आवासो यस्य तं। सदेशाऽभ्याससविधसमर्य्यादसवेशवदित्यमरः॥ ३०॥ भ०

समेत्य तत्सनीडेऽसौ तं वृत्तान्तमशिश्रवत्। त्रस्नुनाथ श्रुतार्थेन तेनागादि दशाननः॥ ३१॥

सम। असौ दशग्रीवः तत्सनीडे मारीचस्य समीपे अत्रापि सह नीडेनेति व्युत्पत्तिमात्रम् समेत्य यात्वा तं वृत्तान्तं शूर्पणखाकथितमशिश्रवत् श्रावितवान् शृणोतेर्ण्यन्तस्य लुङि रूपम् तेन मारीचेन श्रुतार्थेन त्रस्नुना त्रसनशीलेन दशाननः अगादि उक्तः कर्म्मणि लुङ्॥ ३१॥ ज०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० संपत्येत्यादि। असौ रावणः तस्य सनीडे समीपे संपत्य संगत्य तं मारीचं वृत्तान्तं शूर्पणखोक्तं अशिश्रवत् श्रावितवान्। समीपे निकटासन्नसन्निकृष्टसनीडवदित्यमरः। अथ अनन्तरं श्रुतार्थेन तेन मारीचेन वस्तुना भीतेन दशाननोऽगादि उक्तः कर्म्मणि टी ॥ ३१ ॥

अन्तर्द्धत्स्व रघुव्याघ्रात्तस्मात्त्वं राक्षसेश्वर। योरणे दुरुपस्थानो हस्तरोधं दधद्धनुः ॥३२॥

ज०म० अन्त। हे राक्षसेश्वर त्वन्तस्माद्रघुव्याघ्रादन्तर्द्धत्स्व अन्तर्हितोभव व्यवहितो भवेति यावत् दधातेर्लोटि श्नाभ्यस्तयोरित्याकारलोपः अभ्यासस्य दधस्तथोश्चेति भष्भावः अन्तर्द्धौ येनेत्यपादानसंज्ञा यस्मात्स रामः रणे दुरुपस्थानः दुःखेन उपस्थीयते उपगम्यत इति आतोयुचेति युच् यतोहस्तरोधन्दधद्धनुः हस्तेन रुध्वा सदैव योधनुर्धत्ते स कथन्दुरुपस्थानो न भवति हस्तशब्दे तृतीयान्त उपपदे सप्तम्याञ्चोपपीडरुधकर्ष इति णमुल् चकारेण तृतीयायाः समुच्चितत्वात् तृतीयाप्रभृतीन्यन्यतरस्यामिति सः तदेव दुरुपस्थानत्वं स्फुटयन्नाह ॥ ३२ ॥

भ० अन्तरित्यादि। हे राक्षसेश्वर तस्माद्रघुव्याघ्रात् त्वं अन्तर्द्धत्स्व स यथा न पश्यति तथा व्यवहितोभव अन्तःपूर्व्वधाञोगीस्वःक्रादीरेदिः झभखथेत्यादिना खेर्द्दस्वः धस्य दस्य झसान्तस्येति दस्य धः आचोरालोप्यदृत्यालोपः झपझसारिति धस्य तः यतोऽपायेत्यादिना अन्तर्द्धौ पञ्चमी हेतुमाह योरामोदुरुपस्थानः

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



दुःखेनोपस्थीयते उपगम्यते शत्रुभिः समीपगमनमेवाशक्यं किं पुन र्युद्धमिति भावः आतोनोऽदरिद्रइति अनः यतोहस्तरोधं सदा धनुर्दधाति हस्तेन रुद्ध्वा हस्तरोधं आसत्तौ तृतीयान्ताद्‌रुधोणम् इति परः तेन सदा स्थिरतरं धनुर्दधातीत्यर्थः केचित्तु हस्तं रुद्ध्वेत्यर्थे स्वाङ्गात् रुधेर्णम् तेनान्यकर्म्मनिवृत्तिर्हस्तस्य गम्यत इत्या ऊः स्वमते हस्तं रुणद्धि कार्य्यान्तराद्व्यावर्त्तयतीति ढात् षण् धनु र्व्विशेषणं॥ ३२॥

भवन्तं कार्त्तवीर्य्योयोहीनसन्धिमचीकरत्। जिगाय तस्य हन्तारं स रामः सार्व्वलौकिकः॥ ३३॥

भव। यः कार्त्तवीर्य्यः कृतवीर्य्यस्यापत्यं सहस्रबाहुः भवन्तं ज०म० हीनसन्धिमचीकरत् हीनेन दुर्व्वलेन यः सन्धिः तम्भवन्तङ्का रितवान् तेन हीनत्वं बलान्निर्ज्जित्य कारित इति दुरुपस्थानमु क्तम् हृक्रोरन्यतरस्यामिति द्विकर्म्मता तस्य कार्त्तवीर्य्यस्य योह न्ता परशुरामः कृत्प्रयोगे कर्म्मणि षष्ठी तेन हि तस्याग्निहोत्रधे नुमपहृत्य गच्छतः परशुना बाहुसहस्रञ्छिन्नम् तस्य हन्तारं सरामो जिगाय जितवान् जयतेर्लिटि धातुजकारस्य सन्लिटोर्जे रिति कुत्वम् सार्व्वलौकिकं सर्व्वलोके विदितं लोकसर्व्वलोकाभ्यां ठञ् अनुशतिकादित्वादुभयपदवृद्धिः सार्व्वलौकिक इति पाठा न्तरम् तत्र राम इति योज्यम्॥ ३३॥

भवेत्यादि। दुरुपस्थानत्वं स्फुटीकुर्व्वन्नाह यः कार्त्तवीर्य्योऽर्ज्जुनोभवन्तं हीनसन्धिं भग्नसन्धिं अचीकरत् कृतवान् कृञः स्वार्थे भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ञि: चुर्भ्यौञिर्व्वा इत्यस्य योगविभागात् क्वचिच्चुरादेरन्यस्माद पि स्वार्थे ञिर्व्वा भवतीति बोध्यं तेन रामोराज्यमकारयदित्या दिप्रयोगा: यद्वा हीनजनेन सह सन्धिं सन्धानं मिलनं कारया मास यद्भयात् भवता हीनजनोऽप्याश्रितइत्यर्थ: घोऽञौञेरिति प्रयोज्यकर्त्तु: कर्म्मता कृतवीरस्यापत्यं कार्त्तवीर्य्य: गर्गादित्वात् ष्यञ: तस्य कार्त्तवीर्य्यस्य हन्तारं परशुरामं स रामोजिगाय जे र्गि:सन्यो: सार्व्वलौकिकं सकलक्षत्रियनाशेन सर्व्वलोकविदि तम् प्रथमान्तपाठे रामविशेषणं तत्र विदितइत्यर्थे ढघेकादिति ष्णिक: णित्तेञ्रिरिति सुभगादित्वात् उभयपदेवृद्धि: ॥ २३ ॥

यमास्यदृश्वरी तस्य ताडका वेत्ति विक्रमं । शूरम्म न्योरणाच्चाहं निरस्त: सिंहनर्द्दिना ॥ ३४ ॥

ज०म० यम। तस्य रामस्य विक्रमन्ताडका वेत्ति ज्ञातवती वर्त्तमान सामीप्य इति भूते लट् कीदृशी यमास्यदृश्वरी तच्छरताडिता यममुखन्दृष्टवती मृतेत्यर्थ: दृशे: क्वनिप् वनोरचेति ङीप्रफौ अहमपि शूरम्मन्य: शूरमात्मानम्मन्यमान: आत्ममाने खश्च सिंहनर्द्दिना रामेण सिंहइव नर्द्दतीति कर्त्तर्य्युपमान इति णिनि: रणान्निरस्त: वहिष्कृत इत्यर्थ: ॥३४॥

भ० यमास्येत्यादि। तस्य रामस्य विक्रमं ताडका वेत्ति जानाति अहञ्च वेद्मि सा किम्भूता यमास्यदृश्वरी यममुखं दृष्टवती मृतेति यावत् चासुषिति दृशे: क्वनिप् नचखसादनइति ईप् रङ्च अहं किम्भूत: शूरम्मन्य: आत्मानं शूरं मन्यमान: मन्यात्मार्थेइति

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



खश्शित्वात् रले दिवसुतुदेत्यादिना घन् तेन सिंहनर्द्दिना र
णात् निरस्तः निराकृतः सिंह इव नर्द्दतीति मनोयायीतिवत्
वेत्तीति लोकान्तरस्था ताडका इदानीमपि जानातीत्यभिप्रा
येण वर्त्तमाने क्तो वर्त्तमानसामीप्ये भूतेऽपि क्तीत्यन्ये रणादिति
हेतौ पञ्चमी रणभूमेः सकाशात् वहिष्कृत इति वा ॥ ३४ ॥

न त्वं तेनान्वभाविष्ठा नान्वभावि त्वयाऽप्यसौ। अनु
भूतोमया चासौ तेन चान्वभविष्यहं ॥ ३५ ॥

नत्वमित्यादि। तेन रामेण त्वन्नान्वभाविष्ठाः त्वमनेन नानु ज०म०
भूतः कर्म्मणि लुङ् थासि स्यसिजित्यादिना चिण्वदिट् इत्वं नान्व
भावि त्वयाऽप्यसौ नानुभूतः येनैवमुच्यते अत्र चिण्भावकर्म्मणो
रिति चिण् अनुभूतोमया चासौ चशब्दः पुनरित्यर्थे मया पुनर
सावनुभूतः न शक्योजेतुमिति तेन रामेण चान्वभविष्यहमनु
भूतोऽहम् तेन सह योद्धुमक्षम इति अत्र चिण्वद्भावो न कृतः
किन्तु लुङि उत्तमपुरुषैकवचने वलादिलक्षण इट् तेन वृद्ध्यभा
वात् गुणएवेति ॥ ३५ ॥

नत्वमित्यादि। त्वद्वचने कोग्रहः मत्प्रसिद्धौव सदूरीभविष्य भ०
ति इत्याशङ्कायामिदमुत्तरं तेन रामेण त्वं न अन्वभाविष्ठा
न अनुभूतः कथं त्वत्तोऽस्य भयं स्यात् अनुपूर्व्वोभूधातुः सक
र्म्मकः कर्म्मणि थास् हनग्रहदृशश्चइति पक्षे सिण् त्वयापि असौ
रामो न अन्वभावि न अनुभूतः तेन तन्नावज्ञा न युक्ता कर्म्मणि
टो तन् असौ मया अनुभूतः तवापि तत्त्वज्ञोऽहमिति मद्वचनं

स

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



गृहाणेति भावः तेनाप्यहमन्वभविषि अनुभूतः तेन मद्गमनं व्यर्थं पराजितस्य मम दर्शनेन तस्यावज्ञाप्रसङ्गात् कर्मणि टी इण् मिणोरभावपचे इम्॥ ३५॥

अध्यङ् शस्त्रभृतां रामो न्यङ्स्तं प्राप्य मद्विधाः। सकन्याशुल्कमभनक्मिथिलायां मखे धनुः॥ ३६॥

ज॰म॰ अध्यङ्। शस्त्रभृतामध्ये रामोऽध्यङ् अधिकः अध्यञ्चेत्याधिक्ये वर्त्तत इति ऋत्विगित्यादिना क्विन् तस्मिन् लुप्ते अनुनासिकलोपे उगिदचामिति नुम् तस्यानुस्वारपरसवर्णत्वे कृते च हल्ङ्यादिसंयोगान्तलोपौ नकारस्य क्विन्प्रत्ययस्य कुरिति कुत्वेन ङकारः तन्तादृशमाप्य मद्विधा न्यञ्चो हीनाः निशब्दोऽत्राधोभावे वर्त्तते न्यञ्च इति पूर्ववत् क्विन् अनुनासिकलोपः नुम् हल्लोपोनास्ति अहल्त्वात् कुत्वञ्च नास्ति अपदसंज्ञत्वात् योमिथिलायामहद्धनुरभनक् भग्नवान् सोऽस्मादपि कारणात् शस्त्रभृतामध्यङ् भञ्जेर्लङि श्नाम्नलोपः हल्ङ्यादिलोपः कुत्वञ्च कन्याशुल्कङ्कन्यामूल्यन्तद्धि यो रौद्रन्धनुरारोपितगुणङ्करोति तस्मै कन्या दीयत इति मूल्यीकृत्य स्थापितम्॥ ३६॥

भ॰ अध्यङित्यादि। शस्त्रभृतां मध्ये रामोऽध्यङ् आधिक्येन पूजितः कर्मणि क्विप् इसुङ्लोपेऽपाविति प्राप्तनलोपस्य नेदित्पूजार्थाञ्चोरिति प्रतिषेधः विप्रत्ययोवा चङिति अञ्चोः पृथक् ग्रहणात् लुप् प्राक्कङ् सोर्नुः अपेत्रमनोः स्वान्तस्य लुप् अध्यङ् अधिकोवा अधिपूर्व्वोऽञ्चतिराधिक्ये वर्त्तते तं प्राप्य मद्विधा मत्

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कारकाः पुरुषा न्यञ्चः निम्नदेशोऽधोभागे न्यञ्चन्ति अधोगच्छन्तीति न्यञ्चो हीना इत्यर्थः कुत इत्याह सरामोमिथिलायां मखे यज्ञे धनुरभनक् अग्नवान् भञ्जेर्धा रुधादित्वात् नम् नशो नलोपः हसझ्यादिसेरिति दिलोपः खडिति कङ् कन्याशुल्कं कन्यापणं धनुरारोपे सति कन्या देयेति मूल्येन स्थापितं ॥ ३६ ॥

**संविन्तः सहयुध्वानौ तच्छक्तिं खरदूषणौ। यज्वानश्च ससुत्वानोयानगोपीन्मखेषु सः ॥ ३७ ॥**

संवि। नाहमेव रामशक्तिमवैमि अपितु खरदूषणावपि संविन्तः ज्ञातवन्तौ वर्त्तमानसामीप्यइति भूते लट् सकर्म्मकत्वात् समोगमीत्यादिना तङ् न भवति तत्राकर्म्मकादिति वर्त्तते सहयुध्वानौ सह तेन युद्धवन्तौ सहेचेति युधेः क्वनिप् यज्वानश्चाहिताग्नयः ससुत्वानः सोमयाजिसहिताः सुयजोर्ङ्वनिप् संविदन्तीति वचनविपरिणामेन योज्यम् यानगोपीत् अरचीत् मखेषु सरामः लुङि रूपन्तथा मखद्रुहोराक्षसाः यतोरामस्य शक्तिं ज्ञातवन्तः ॥ ३७ ॥ ज०म०

संविन्तइत्यादि। न केवलमहमेव वेद्मि खरदूषणावपि तस्य शक्तिं संविन्तः ज्ञातवन्तौ ताडका वेत्तीतिवत् की सहयुध्वानौ तेन सह युद्धवन्तौ चासुसिति क्वनिप् यज्वानश्चाहिताग्नयश्च विदन्ति पूर्व्वेण क्वनिप् बाहुल्यान्न जिः ससुत्वानः सुत्वभिः कृतसोमपानैः सहिताः पूर्व्वेण क्वनिप् स्वस्यतन्पितीति तन् तेषां त्राने हेतुमाह मखेषु यज्ञेषु सयानगोपीत् अरचीत् तेषां यज्ञे भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



राचस्रहननात् तेऽपि जानन्तीत्यर्थः गुपूरचणे वारिदृति आयो ऽभावः पचे व्यांचिः वेसूदिति पचे दृम्॥ ३७॥

सुखजातः सुरापीतो नृजग्धोमाल्यधारयः। अधिलङ्कं स्त्रियोदीव्य मारब्धा बलिविग्रहं ॥ ३८॥

ज०म० सुख। यतएवन्दरुपस्थानः स तस्माद्बलिना रामेण विग्रह मारब्धाः माकार्षीः रभेराङ्पूर्व्वात् माङि लुङ् थास् झलोझलीति सिज्लोपः झषस्तथोर्धोधः झलाञ्जश्झशि किङ्कार्य्यमित्याह अधिलङ्कं लङ्कायामधि विभक्त्यर्थेऽव्ययीभावः स्त्रियोदीव्य क्रीड लोटि रूपम् दिवःकर्म्मचेति कर्म्मसंज्ञायां वाम्शसोरितीयङ् कीदृशः सुखजातः जातं सुखमस्येति वहुव्रीहिः कृतासवपानत्वात् यदाह सुरापीतः पीतमदिरः नृजग्धः भुक्तमानुषः निष्ठायामदोजग्धिः पूर्व्ववद्वत्वम् एषु वाहिताग्न्यादिदर्शनात्परनिपातः माल्यन्धारयतीति माल्यधारयः अनुपसर्गात् लिम्पेत्यादिना शः॥ ३८॥

भ० सुखेत्यादि। रामोदुरुपस्थान एव अतस्तेन बलिना सह विग्रहं युद्धं मारब्धाः माकार्षीः आङ्रभेष्टौ थास् झषस्तादिति सिलोपः ढभाक्तथोरिति थस्य धः अधिलङ्कं लङ्कायामधिकृत्य स्त्रियोदीव्य स्त्रीभिः क्रीड कारकार्थेऽव्ययीभावः दिवसुतुदेत्यादिना दिवः श्यन् वंनच्तयीति घः हेर्लोपः दिवोधेवेति करणे द्वितीया कीदृशः सुखं जातमस्य सुरा पीता येन ना मनुष्योजग्धोभचितोयेन स तथा एषु अग्न्याहितादित्वात् का

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



न्तस्य परनिपात इति परः स्मरते पूर्व्वपरनिपातयोर्विवचा धीनत्वं दैक्यंयोऽन्वय इत्युक्तेः जग्धोऽदोयपिचेति जग्धादेशः साख्यानि धारयतीति साद्दिसातीति शः॥ ३८॥

तं भीतङ्कारमाकुश्य रावणः प्रत्यभाषत। यातयामं विजितवान् सरामं यदि किन्ततः॥ ३९॥

तंभी। तम्मारीचमूर्व्वोक्तनिराकुर्व्वन् रावणः प्रत्यभाषत प्रत्युक्तवान् लङि रूपम् भीतङ्कारमाकुश्य भीतकृत्वा भीतोऽसीति कर्म्मण्याक्रोशे कृञः खमुञ् यातयामङ्गतवयसं यदि विजितवान् रामोदाशरथिः किन्ततः किं तापसः शूरः॥ ३९॥ ज०म०

तमित्यादि। भीतङ्कारं त्वं भीतोऽसीत्युक्त्वा आकुश्य तं मारीचं रावणः प्रत्यभाषत प्रत्यूचे भीतंकारमिति कर्म्मण्याक्रोशे कृञो भावणार्थे क्वा चणम् खिद्वचेति परः स्मरते तमाकुश्य प्रत्यभाषत तं किम्भूतं भीतं भययुक्तं पुनः किम्भूतं कारं घोरणे दुस्पस्यान इत्यादेर्विज्ञापयितारं कृकङ्विज्ञाने इत्यस्मात् ञ्यन्तात् कभावेऽसीति कर्त्तरि घञ् किम्वा चणम्वेत्यस्य योगविभागात् आक्रोशे चणम् मनीषादित्वात् पूर्व्वपदस्य दीर्घान्तत्वं किं प्रत्यभाषतेत्याह स राघवोयातयामं वृद्धं रामं जामदग्न्यं विजितवान् ततः किं नहि वृद्धजयेन शौर्य्य ज्ञायते। यातयामस्तु जीर्णे स्यात् परित्यक्तोज्झितेऽपि चेति विश्वः॥ ३९॥ भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अघानि ताडका तेन लज्जाभयविभूषणा। स्त्रीजने यदि तच्छ्लाघ्यं धिग्लोकं क्षुद्रमानसं ॥ ४० ॥

ज॰म॰ अघा। तेन रामेण ताडका अघानि व्यापादिता हन्तेः कर्म्मणि लुङ् लज्जा भयं च विभूषणं यस्याः स्त्रीत्वान्न शौर्य्यम् एवं विधाया अनेन रामेण यदि गर्ह्यमपि हननं स्त्रीजने श्लाघ्यं श्लाघनीयम् कृत्यानाङ्कर्त्तरिवेति तृतीया तं धिक् तं लोकं क्षुद्रमानसं हीनमानसम् ॥ ४० ॥

भ॰ अघानीत्यादि। लज्जा भयञ्च विभूषणं यस्याः सा ताडका तेन रामेण अघानि मारिता हन्तेः कर्म्मणि टौ रतनोर्थगिणौ खेर्हौघोञ्जितिचेति घलं स्त्रीजने तत्कर्म्म यदि श्लाघनीयं तदा क्षुद्रमानसं हीनचित्तं लोकं धिक् धिक्समयेति द्वौ ॥ ४० ॥

यज्ञेहेनर्द्दिनमसौ शरैर्भीरुमभाययत्। कुब्रह्मयज्ञके रामो भवन्तं पौरुषं न तत् ॥ ४१ ॥

ज॰म॰ यज्ञे। असौ रामोयज्ञवन्तक्षीरुं शरैरभाययत् भायितवान् षुगात्मनेपदे न भवतः भयहेतोरभावात् अत्र हि शरेभ्यो भयम् नतु रामात् तत् किम्पौरुषम्पुरुषकारः किमसौ पुवादित्वा दण् गेहेनर्दिनञ्चेह एव नर्दिनं पाचेषमितादित्वात्सः कुब्रह्मयज्ञके कुत्सिता ब्रह्माणः कुब्रह्माः कुःपापार्थ इति सः कुमहद्भ्यामन्यतरस्यामिति समासान्तष्टच् तेषाङ्कुत्सितो यज्ञः तस्मिन्सति

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कुत्सायाङ्कन् तेन धूरम्मन्योऽहं रणात्तेन निरस्तः इत्यपुष्कल मुक्तम्॥ ४१॥

यद्वइत्यादि। असौ रामः कुब्रह्मायज्ञके यज्ञवन्तं शरैरभा ययत् अत्रासयत् तदपि न पौरुषं कथमित्याह भीरुं भयशीलं अतएव गेहेनर्द्दिनं स्वगृहएव नर्द्दतीति ग्रहादित्वात्सिन् पात्रे समितादित्वात् चेपे समासोविभक्त्यलोपश्चेति परः अभाययदिति भियोन्यन्तात् घौ स्मिभ्योर्घाद्धर्थे भौ मश्चेत्यस्य भीर्भीष् वेत्यस्य च नात्र विषयः यतः शरेभ्य एवात्र भयं विवचितं नतु प्रयोजकात्कर्त्तुः कुत्सितोब्रह्मा ब्राह्मणः कुब्रह्मः देशाद्ब्रह्मणः कुमहद्भ्यान्तुवेति पचे षः तस्य कुत्सितोयज्ञ इति निन्दायां विकारसंवेत्यादिना कः अतएव प्रयोजनाभावात्तत्र समथा राचसा न गच्छन्ति पुरुषस्य भावः कर्म्म वेति पूर्व्वेण ष्णः॥ ४१॥ भ०

चिरकालोषितं जीर्णं कीटनिष्कुषितं धनुः। किं चित्रं यदि रामेण भग्नं चत्रियकान्तिके॥ ४२॥

चिर। यदि रामेण चत्रियकान्तिके कुत्सितचत्रियसमीपे भग्नन्धनुः किन्तच्चित्रमाश्चर्य्यं चत्रिया जनकादयः तस्य कुत्सायाङ्कन् चत्रियकस्यान्तिके दूरान्तिकार्थयोगे षष्ठीसमासं विधाय पश्चात्सप्तम्यधिकरणे चेति चकाराद्दूरान्तिकार्थेभ्यश्चेति सप्तमी किमिति न चित्रमित्याह चिरकालमुषितमिति कालाध्वनोरिति द्वितीयां विधाय अत्यन्तसंयोगेचेति द्वितीयासः जीर्णञ्चि न०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



रकालोषितत्वात् जृष्वयोर्हानौ निष्ठा ऋतइद्धातोः इकोहलि चेति दीर्घः रदाभ्यामिति निष्ठानत्वम् कीटैर्घुणैर्निष्कुषितङ्खादितं निरःकुष इत्यनुवर्त्तमाने इण्निष्ठायामितीट् ॥ ४२ ॥

भ॰ चिरेत्यादि। क्षत्रियकान्तिके कुत्सितानां क्षत्रियाणां जनकादीनां निकटे यदि रामेण धनुर्भग्नं तदपि किं चित्रं कथं न चित्रमित्याह चिरकालोषितं चिरकालं व्याप्य स्थितं सदाध्वादि व्याप्ताविति द्वितीया तया समासः ततएव जीर्णं जृजरायां हानौ क्तः ऋदिरणावितीर् र्व्यनच्तयोति दीर्घः स्वत्वाद्योदिति नकारः कीटैर्घुणैर्निष्कुषितं अन्तःखादितं नेमडीत्यादौ निष्कुषवर्ज्जनात् इम् षत्वविधानं गवाक्षजालैरभिनिष्पतन्त्य इत्यत्र व्याख्यातं ईदृशधनुर्भङ्गश्लाघयैव क्षत्रियाणां कुत्सा ॥ ४२ ।

वनतापसके वीरौ विपक्षे गलितादरौ। किं चित्रं
यदि सावज्ञौ मम्रतुः खरदूषणौ ॥ ४३॥

ज॰म॰ वन। वने तापसो वनतापसः कुत्सायां कन् तस्मिन् तापसके रामे सावज्ञत्वाद्गलितादरौ विपक्षे किमयङ्करिष्यतीत्यश्रद्धयेव योधितवन्तौ खरदूषणौ यदि मम्रतुः मृतौ कोदोषः किञ्चित्रं म्रियतेर्लुङ्लिङोश्चेति नियमात् लिट्यात्मनेपदन्न भवति ॥ ४३ ॥

भ॰ वनेत्यादि। खरदूषणौ यदि मम्रतुः तदापि किञ्चित्रं नैवाश्चर्य्यमित्यर्थः तपःशीलस्तापसः वने कुत्सितस्तापसो वनतापसको रामस्तस्मिन विपक्षे किमयं करिष्यतीति मत्वा गलितादरौ

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



वीरावपि सावज्ञौ विपक्षादराभावात् युद्धेऽपि सावहेलौ स्थङ शीलैमिति नियमात् नवशःपमे इति ज्ञितोऽन्यत्वात् ध्यः पर स्मैपदं ॥ ४३ ॥

त्वञ्च भीरुः सुदुर्व्वुद्धे नित्यञ्च रणकाम्यसि। गुणां श्चापकुषेऽस्माकं स्तौषि शत्रूंश्च नः सदा ॥ ४४ ॥

त्वञ्च। हे दुर्व्वुद्धे त्वम्पुनः भीरुश्च भवसि नित्यञ्च रणकाम्यसि आत्मनोऽनिशं रणमिच्छसि आत्मेच्छायाङ्काम्यच् अस्माकञ्च सतो गुणानपकुषे अपनयसि क्नुङ् अपनये आदादिकः ङित्वात्तङ् शत्रूंश्च नोऽस्माकं स्तौषि स्तौतेः उतोवृद्धिर्लुकि हलि ॥ ४४ ॥ ज०म०

त्वञ्चेत्यादि। हे दुर्व्वुद्धे मारीच त्वं भीरुश्च भवसि रणकाम्यसि च आत्मनो रणमिच्छसि च लेःकाम्यकृत्वेच्छायां भीरोर्युद्धेच्छाऽ नुचितैव युद्धे पराजयोऽवश्यं एवमस्माकं गुणांश्चापकुषे शौर्य्या दीन् अपनयसि क्नुङ्लचौर्य्ये सदा नोऽस्माकं शत्रून् स्तौषि ष्टुञ् स्तुतौ रपिङ्कुस्तुतोऽदेर्भिः ॥ ४४ ॥

शीर्षच्छेद्यमतोऽहं त्वां करोमि चितिवर्द्धनं। कार यिष्यामि वा कृत्यं विजिघृत्तुर्व्वनौकसौ ॥ ४५ ॥

शीर्ष। यतएवम्विधस्त्वन्दुष्टः अतोऽहं त्वामौद्धितीयाया इत्या ष्टमिकलक्षणेन त्वादेशः शीर्षछेद्यं, शीर्षच्छेदार्हं शीर्षच्छेदाद्यत् ज०म०

ष

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



चितिवर्द्धनङ्करोमि शिरश्छित्वा व्यापादयामीत्यर्थः अथवा कृत्य ङ्करणीयं विभाषाकृवृषोरिति क्यप् कारयिष्यामि हृक्रोरिति द्विकर्म्मकता विजिघृक्षुः विग्रहीतुमिच्छुः सनिग्रहगुहोश्चेतीट् प्रति षेधः रुदविदेत्यादिना सनः कित्त्वे ग्रहिज्येत्यादिना सम्प्रसारणम् होढः एकाचो वशोभष् षढोःकस्सि वनौकसौ रामलक्ष्मणौ वन मोकोगृहं ययोः नलोकेति कर्म्मणि षष्ठ्याः प्रतिषेधः॥ ४५॥

भ० शीर्षेत्यादि। अतः कारणात् अस्मद्गुणापह्नवात् शत्रुत्व नाच शीर्षच्छेद्यं शीर्षच्छेदार्हं त्वां चितिवर्द्धनं मृतं करोमि शिर श्छित्वा मारयामीत्यर्थः शीर्षच्छेदमर्हतीत्यर्थे ढघेकादिति यः किम्वा छिदेर्ण्यण् शीर्षे छेद्यः शीर्षं छेद्यं यस्येति वा विग्रहः अथवा कृत्यं कार्य्यं त्वां कारयिष्यामि यदि जीवनेच्छास्ति तदा मत्कृत्यं कुर्व्विति भावः कृवृषमृजेति पक्षे क्यप् घोऽऔञेरिति प्रयोज्य कर्त्तुः पक्षे कर्म्मत्वं वनमेव ओको ययोस्तौ रामलक्ष्मणौ विग्रहीतुं योधयितुं अभिभवितुं वा इच्छुरहं ग्रहेः सन् नेसुगुहग्रह इति इम्निषेधः ग्रहस्वपप्रच्छांजिः ॥ ४५ ॥

तमुद्यतनिशातासिं प्रत्यवाच जिजीविषुः। मारी चोऽनुनयंस्त्रासादभ्यमित्यो भवामि ते॥ ४६ ॥

ज०म० तमु। तं रावणं एवमुक्तवन्तं निशात इति शाछोरन्यतरस्यामि तीत्वाभावपक्षे रूपं उद्यतः उत्थापितः निशातस्तीक्ष्णोऽसिर्येन तम्मारीचस्त्रासात् प्रत्युवाच वचनमुक्तवान् अभ्यमित्योभवामि

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ते अमित्रस्याभिमुखमभ्यमित्रमाभिमुख्येऽव्ययीभावः अभ्यमित्र मलङ्गामीत्यस्मिन्नर्थे अभ्यमित्राच्छ्चेति चकाराद्यत्खौचेति यत् त्वदमित्राभिमुखङ्गच्छामीत्यर्थः अनुनयन् अनुकूलयन् किमर्थं जिजीविषुः जीवितुमिच्छुः ॥ ४६ ॥

तमित्यादि। मारीचोजिजीविषुर्जीवितुमिच्छुः सन् त्रासात् भ॰ अनुनयन् तं रावणं प्रत्युवाच त्रासहेतुमाह उद्यत उत्थापितो निशातस्तीक्ष्णोऽसिर्येन तं निशातेति क्षाशोर्वेति श्यतेः पक्षे न ङिः किं प्रत्युवाचेत्याह अहं तेतव अभ्यमित्यः शत्रुभिमुखगामी भवामि अमित्रस्य अभिमुखं अभ्यमित्रं आभिमुख्येऽव्ययीभावः अभ्यमित्र शब्दादिदं गच्छतीत्यर्थे विकारसंघेति यः ॥ ४६ ॥

हरामि रामसौमित्री मृगोभूत्वा मृगद्युवौ। उद्यो गमभ्यमित्रीणो यथेष्टं त्वञ्च सन्तनु ॥ ४७ ॥

हरा। अहम्मृगोभूत्वा रामसौमित्री हरामि देशान्तरम्प्रा ज॰म॰ पयामि आखेटकाभिरतत्वात् यदाह मृगद्युवौ मृगैर्दीव्यत इति क्विप् च्छोःशूडनुनासिके चेति चकारात् क्वौ च ऊठ् यणा देशः उवङ् मृगद्युताविति पाठान्तरम् तत्र द्युअभिगमने मृ गान् द्यौति अभिगच्छतीति क्विप् त्वञ्च यथेष्टं यथारुचि तमु द्योगं सन्तनु विस्तारङ्कुर्व्वित्यर्थः तनोतेर्लोटि उतश्चेति हेर्लुक् अभ्यमित्रीणः अमित्राभिमुखमलङ्गामी अभ्यमित्राच्छ्चेति चका राद्यत्खौचेति खः ॥ ४७ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० हरेत्यादि । उपायं दर्शयन्नाह अहं मृगोभूत्वा रामसौ मित्री हरामि अन्यत्र नयामि यतस्तौ मृगद्युवौ मृगयारसिकौ मृगैर्दीव्यत इति क्विपि च्छ्वोः शूडाविति वस्योट् धोरियुवचि मृग द्युताविति पाठे द्युलभिसर्पणे इत्यस्मात् क्विपि स्वस्यतन्पितीति तत् मृगाभिगामिनावित्यर्थः ततस्त्वमपि अभ्यमित्रीणायथेष्ट मुद्योगं सन्तनु तनदुत्त्विस्तारे हेर्लोपोऽस्योप्नोरेवेति हिलोपः अभ्यमित्रीण इति अभ्यमित्व्यवत् ॥ ४७ ॥

ततश्चित्रीयमाणोऽसौ हेमरत्नमयोमृगः । यथा मुखीनः सीतायाः पुप्लुवे बहु लोभयन् ॥ ४८ ॥

ज०म० ततः । उक्तानन्तरमसौ मारीचो मायामृगीभूतः सन् हेम रत्नमयः रत्नञ्च हेमचेति विगृह्य मयड्वैतयोर्भाषायामिति वि कारे मयट् निर्मलत्वात् सीताया अग्रतो यथामुखीनः प्रति बिम्बाश्रय इव भूत्वा पुप्लुवे भ्रमतिस्म इवशब्दलोपोद्रष्टव्यः यथा मुखन्दर्शनमिति यथामुखसम्मुखस्य दर्शनः खः बहु लोभयन् सुष्ठु स्पृहाञ्जनयन् यतश्चित्रीयमाणः आश्चर्य्यम्भवन् हेमरत्न मयत्वात् नमोवरिवदित्यादिना क्यच् चित्रङ् आश्चर्य्ये ङकार स्यात्मनेपदार्थत्वात् शानच् अवयववत्तं लिङ्गं समुदायस्य भव तीति ॥ ४८ ॥

भ० ततइत्यादि । ततोवचनानन्तरं असौ मारीचो मायया हेम रत्नमयोमृगः सन् सीतायायथामुखीनोऽग्रतः स्थायी भूत्वा बहु

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



लोभयन् चक्षुःस्पृहां जनयन् पुप्लुवे भ्रमतिस्म प्लुङ्गतौ डो चित्रं करोतीति चित्रीयमाणः चित्रङ्आश्चर्य्ये कण्ड्वादित्वात् यकः ङित्वादात्मनेपदं हेम रत्नञ्च प्रस्तुतं यत्रेति प्रस्तुतार्थे मयट् वाऽऽख्यात् विकारइत्येके मुखस्य सदृशं यथामुखं दर्पणादिस्थं प्रतिविम्बमुच्यते सादृश्येऽव्ययीभावः मृगस्य रत्नमयत्वेन स्वच्छ तया यथा मुखं दृश्यतेऽत्रेति विकारसंघेत्यादिना तदत्र दृश्यते इत्यर्थे ईनःवस्तुतस्तु उपचारात् यथामुखीनशब्दोऽभिमुखमात्रेऽपि वर्त्तते सीताभिमुखोऽभूत्वेत्यर्थः ॥ ४८ ॥

तेनादुद्यूषयद्रामं मृगेण मृगलोचना। मैथिली विपुलोरस्कं प्रावुवूर्षुर्मृगाजिनं ॥ ४९ ॥

तेना। तेन मृगेण मैथिली सीता राममदुद्यूषयत् क्रीडितु मिच्छन्तमप्रयुक्तवती गृह्यतामयमिति इवन्तस्य दिवेः सनीवन्तेत्यादिना यदा नेट् तदा च्छ्वोःशूट् द्विर्व्वचनम् तस्मात्सनन्तण्य न्तात् लङि रूपम् मृगलोचना मृगस्य लोचने इव लोचने यस्याः मध्यपदलोपी सः विपुलोरस्कं विस्तीर्णवक्षस्थलमुरःप्र भृतिभ्यः कप् किमर्थमदुद्यूषयत् मृगाजिनमृगचर्म्म प्रावुवूर्षुः प्राव रितुमिच्छुः प्राङ्पूर्व्वस्य वृङ इट्सनिवेत्यनिट्पक्षे अज्झनगमां सनीति दीर्घः उदोष्ठ्यपूर्व्वस्येत्युत्वम् रपरत्वं र्वोरुपधायादीर्घ इकः द्विर्व्वचनम् इणकोरिति षत्वम् रेफस्येण्ग्रहणेन ग्रहणाद्द न्त्योष्ठ्योऽपि वकार ओष्ठ्यग्रहणेन गृह्यते ॥ ४९ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० तेनेत्यादि। मैथिली मृगाजिनं मृगस्य चर्म्म प्रावुवूर्षुः प्रावरीतुं परिधातुमिच्छुः सती तेन मृगेण रामं अदुद्यूषयत् क्रीडितुमिच्छामकारयत् दिवेः सन् भ्रस्जश्रिस्वृयूर्णुभरदरिद्रेत्यादिना पक्षेऽनिम् पूर्नानिमीति गुणाभावे छ्वोःशूटाविति वस्य ऊत्वं ततोद्वित्वं ञिःप्रेरणे दिवेरकर्म्मकत्वात् घौञ्जेरिति प्रयोज्यकर्त्तुः कर्म्मत्वं सा कीदृशी मृगस्येव लोचने यस्याः सा तथा रामं कीदृशं विपुलं प्रकीर्णमुरोवक्षःस्थलं यस्य तं उरःप्रभृतितः कोवऊत्रीहाविति परः स्वमते स्वार्थे कः प्रावुवूर्षुरिति वृञ वरणे सन् धौऽज्झनिङ्गमां स्याद्यृदृदुरिति पक्षेऽनिम् दन्त्योष्ठ्यस्याप्योष्ठ्यकार्य्यत्वात् ऋदिरणावूर्वोष्ठ्यादिति उर् व्येनक्तथीति घंः॥ ४९ ॥

योगक्षेमकरं कृत्वा सीताया लक्ष्मणं ततः। मृगस्यानुपदी रामो जगाम गजविक्रमः॥ ५०॥

ज०म० योग। ततोदुद्यूषानन्तरं रामोजगाम योगक्षेमौ शरीरस्थितिपालने करोतीति कृञोहेत्वित्यादिना हेतौ टः ग्रहणवता तदन्तविधेरभावात् क्षेमप्रियमद्रेण्चेत्यण्खचौ न भवतः सीतायाः स्थितिपालनहेतुभूतं लक्ष्मणङ्कृत्वा रामः मृगस्यानुपदी अन्वेष्टा अनुपद्यन्वेष्टेति निपातनात्साधुः गजविक्रमः गजगमनमिव गमनं यस्येत्यर्थः॥ ५०॥

भ० योगेत्यादि। ततोऽनन्तरं लक्ष्मणं जानक्या योगक्षेमकर

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



क्रत्वा गजविक्रमो हस्तिपराक्रमो हस्तिगमनतुल्यगमनोवा रामो मृगस्यानुपदी सन् जगाम फलपुष्पादेरलब्धस्य साधनं योगः शरीरादेर्लब्धस्य पालनं क्षेमः तौ करोतीति क्षकृष्टः अनुपदं यातीति वाऊल्यात् इन् अनुपदमनुगमनं विद्यतेऽस्येति नैका जादिति इन् अन्वेष्टर्य्यनुपदादिनिति परसूत्रं ॥ ५० ॥

स्थायं स्थायं क्वचिद्यान्तं क्रान्त्वा क्रान्त्वा स्थितं क्वचित्।
वीक्षमाणोमृगं रामश्चित्रवृत्तिं विसिष्मिये॥५१॥

स्थायम्। मृगश्चित्रवृत्तिमद्भुतशरीरचेष्टं वीक्षमाणोरामो विसिष्मिये विस्मितः स्मिङोङित्त्वादात्मनेपदं षोपदेशत्वाच्चाभ्या से णः परस्य सस्य षः चित्रवृत्तितां दर्शयन्नाह स्थायं स्थायं स्थित्वा स्थित्वा क्वचित्प्रदेशे यान्तं क्रान्त्वा क्रान्त्वा क्वचित्प्रदेशे उत्प्लुत्यो त्प्लुत्य स्थितम् आभीक्ष्ण्ये णमुलि क्त्वाच्त्वेणमुलौ द्विर्व्वचनञ्च ॥५१॥ ज०म०

स्थायमित्यादि। मृगं वीक्षमाणो रामोविसिष्मिये विस्मितः स्मिङश्चां रूपं षोपदेशत्वात् खेरित्वात् षत्वं अभ्यासेरितीयः विस्मये हेतुमाह चित्रवृत्तिं आश्चर्य्यचेष्टं चित्रवृत्तित्वं दर्शयति स्थित्वा स्थित्वा क्वचित् गच्छन्तं चणम्वाभीक्ष्ण्येपूर्व्वकाले इति चणम् आ भीक्ष्ण्ये द्वित्वं लोकतः सिद्धमिति स्मारं स्मारं नमसीत्युदाहरणेन ज्ञापितं क्वचित् क्रान्त्वा क्रान्त्वा उत्प्लुत्य उत्प्लुत्य स्थितं क्रमोर्घा वेति पक्षे दीर्घः ॥ ५१ ॥ भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



चिरं क्लिशित्वा मर्म्माविद्रामोविलुभितप्लवं। शब्दा
यमानमव्यात्सीत् भयदं चणदाचरं ॥ ५२ ॥

ज॰म॰ चिरम्। रामः चणदाचरम्मारीचमव्यात्सीत् विद्धवान् व्यधे र्लुङि हलन्तलचणाद्वृद्धिः मर्म्माविद्रामः मर्म्माणि विध्यतीति क्विप् नहिवृतीत्यादिना पूर्व्वपदस्य दीर्घत्वं चिरं क्लिशित्वा महान्तङ्का लमायस्य अत्यन्तसंयोगे द्वितीया क्लिशः क्त्वानिष्ठयोरिति विकल्पेनेट् तत्र रलोव्युपधादिति कित्त्वविकल्पे मृडमृदेत्यादिना कित्त्वं विलुभितप्लवं व्याकुलितगमनं लुभोविमोहन इतीट् विमोहनं व्याकुलीकरणम् शब्दायमानं शब्दङ्कुर्व्वाणं शब्दवैरेति क्यङ् भयदन्निशाचरं शब्दविशेषणं वा ॥ ५२ ॥

भ॰ चिरमित्यादि। रामश्चिरकालं क्लिशित्वा आन्तोभूत्वा भयदायकं चणदाचरं तं राचसं अव्यात्सीत् व्यधीताडे टी पूक्लिशुदितइम् इति क्लिशेः पचे इम् सेमचुधेत्यादौ क्लिशवर्ज्जनात् न गुणः मर्म्माणि विध्यतीति क्विप् जिः वीरुहोधङ्काविति दीर्घनिर्द्देशात् क्वचित् क्विवन्ते पूर्व्वपददीर्घत्वं स्यादिति सूचितं आङ्पूर्व्वस्य रूपं वा मर्म्मावित् मर्म्मज्ञोवा वेत्तेरूपं विलुभितप्लवं मर्म्मताडनात् व्याकुलगतिं लुभशविमोहने विमोहनं व्याकुलीकरणं चुधवसपूजेत्यादिना इम् शब्दायमानं शब्दं कुर्व्वाणं शब्द सुखकष्टादेरिति ज्ञः भयदमिति मृगस्य शब्दक्रियाया वा विशेषणं ॥ ५२ ॥

श्रुत्वा विस्फूर्जथुप्रख्यं निनादं परिदेविनी। मत्वा
कष्टश्रितं रामं सौमित्रिं गन्तुमैजिहत् ॥ ५३ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



श्रुत्वा। विस्फूर्जथुप्रख्यं वज्रनिर्घोषतुल्यं टुओस्फूर्जा वज्रनिर्घोषे ट्वितोऽथुच् निनादं शब्दं नौगदनदेति विकल्पनात् पक्षे घञ् श्रुत्वा मैथिली कष्टश्रितं कष्टम्प्राप्तं रामं द्वितीयाश्रितेत्यादिना सः मत्वा बुद्ध्वा कष्टप्राप्तेन रामेण हतमिति परिदेविनी परिदेवन शीला शङ्कमाना सम्पृचानुरुधेत्यादिना घिनुण् सौमित्रिङ्ग न्तुमैजिहत् ईहाङ्कारितवती ईहेर्ण्यन्तात् लुङि द्विर्वचनेचीति स्था निवद्भावादजादेर्द्वितीयस्येति हिशब्दस्य द्विर्वचनम् अभ्यास कार्य्यञ्च ॥ ५३ ॥ ज॰म॰

श्रुत्वेत्यादि। विस्फूर्ज्जथुप्रख्यं वज्रनिर्घोषतुल्यं निनादं श्रुत्वा कष्टश्रितं कष्टं प्राप्तं रामं मत्वा परिदेविनी परिदेवनशीला अर्थात् सीता सौमित्रिं गन्तुं ऐजिहत् चेष्टामकारयत् ईहङ्चे ष्टायां णिःप्रेरणे अङि ह्रेर्द्वित्वं ट्वोस्फूर्ज्जावज्रनिर्घोषे दीर्घवानि त्येके ट्वितोऽथुर्भावे ॥ ५३ ॥ भ॰

एष प्रावृषिजाम्भोदनादी भ्राता विरौति ते। ज्ञा तेयं कुरु सौमित्रे भयात्त्रायस्व राघवं ॥ ५४ ॥

एष। "एष ते भ्राता रौति उतोवृद्धिरित्यौकारः प्रावृषि जातः प्रावृषिजः सप्तम्याञ्जनेर्डः प्रावृडित्यादिना सप्तम्या अलुक् सचाम्भोदश्चेति विशेषणमिति सः तद्वन्नदतीति कर्त्तर्य्युपमाने णिनिः तस्मात्सौमित्रे ज्ञातेयं ज्ञातिभावन्तत्कर्म्म वा कुरु कपिज्ञा त्योर्ढक् तेन भयात्त्रायस्व राघवम् ॥ ५४ ॥ ज॰म॰



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० एषइत्यादि। हे सौमित्रे एष ते तव भ्राता विरौति शब्दायते रुलध्वनौ रपिङ्कस्तुतोऽद्देवि: प्राष्टषि वर्षाकाले जातः प्राष्टषिजः हनजनादिति डः सरसिजमित्युदाहरता क्वचित् समासे विभक्तेरलुगिति सूचितं अम्भोददातीति अम्भोदः पूर्ववत् डः प्राष्टषिजश्चासौ अम्भोदोमेघश्चेति सइव नदतीति ग्रहादिला णिन् त्वं ज्ञातेयं ज्ञातिकर्म्म कुरु किन्तदित्याह भयाद्राघवं त्राय स्व विकारसंघेत्यादिना कर्म्मण्यर्थे ज्ञातेः ण्येयः ॥ ५४॥

रामसंघुषितं नैतन्मृगस्यैव विवञ्चिषोः। रामस्वनितसङ्काशः स्वान इत्यवदत्स तां॥ ५५॥

ज०म० राम। रामसङ्घुषितं रामशब्दितमेतन्न भवति घुषिरविशब्दार्थः तस्य निष्ठायां रुष्यमत्वरेत्यादिना विकल्पेनेट् मृगस्य विवञ्चिषोः छलयितुमिच्छोः वञ्चु गतौ भौवादिकः तस्यानेकार्थत्वात् प्रलम्भनइति चौरादिकस्याण्यन्तस्य वा प्रयोगः येषामनित्यण्यन्ताश्चुरादयइति दर्शनं तेषां मतेनात्रापि सिध्यति एष स्वानोध्वानः स्वनहसोर्वेति पच्चे घञ् कीदृशः रामस्वनितसङ्काशः रामशब्दानुकारीति तां सीतां एवमवदत् उक्तवान् सलच्मणः॥ ५५॥

भ० रामेत्यादि। सलच्मणस्तां सीतां इत्यवदत् किन्तदित्याह एतन्न रामसंघुषितं घुषरवे विवञ्चिषोर्व्वञ्चयितुं छलयितुमिच्छोर्मृगस्यैव एष स्वानः शब्दः रामस्वनिततुल्यः वञ्चकङ्वञ्चने क्तित्वात् चौरादिकः वञ्चनं प्रलम्भनं चुर्म्योञ्जिर्व्वेति ञ्यभावपच्चे

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



रूपमिदं केचित्तु वञ्चगत्यां चौरादिकोधातोरनेकार्थत्वात् प्रल म्भनेऽपि वर्त्ततइत्याहुः खनशब्दे भावे क्ते खनितं घञि खानः ॥ ५५ ॥

आप्यानस्कन्धकण्ठांसं रुषितं सहितुं रणे। प्रोर्णु वन्तं दिशोवाणैः काकुत्स्थं भीरु कः क्षमः ॥ ५६ ॥

आप्या। प्यैङ्वृद्धौ अस्मादाङ्पूर्व्वात्संयोगादेरातोधातो र्य्यण्वत इति निष्ठातोनः ओप्यायीवृद्धावित्यस्य वा रूपम् ओदितश्चेति निष्ठानत्वं पीभावस्तु आङ्पूर्व्वस्य त्वन्धूधसोरिति वच नात् इह न भवति आप्यानस्कन्ध इति आप्यानं स्थूलं स्कन्ध कण्ठांसं यस्य काकुत्स्थस्य बाहुशिरोंऽसः तस्य पश्चिमोभागः स्कन्धः तं रुषितं क्रुद्धं रणे संग्रामे सहितुं हे भीरु कातरे कः क्षमः शक्तः अपि तु न कोऽपीत्यर्थः क्षमेः शक्तोत्यर्थत्वात् तदुपपदे शक धृषेत्यादिना तुमुन् तीषसहेत्यादिना वेट् ककुत्स्थस्यापत्यं का कुत्स्थः शिवादिभ्योऽण् कस्मान्न क्षमइत्याह प्रोर्णुवन्तन्दिशोवाणैः यतः सर्व्वा दिशः वाणैः छादयन्तं ऊर्णोतेः शतरि उवङ् क्षमत इति क्षमः पचाद्यच् ॥ ५६ ॥ ज०म०

आप्यानेत्यादि। हे भीरु कातरस्वभावे रणे रुषितं क्रुध्यन्तं का कुत्स्थं रामं सहितुं अभिभवितुं कः क्षमः शक्तः न कोऽपीत्यर्थः वेमसहलुभइत्यादिना उभयत्र पचे इम् क्षमेः पचादित्वादन् ककुत्स्थस्यापत्यं इति शिवादित्वात् ष्णः आप्यानं स्थूलं स्कन्धक ण्ठांसं यस्य तं ओप्यायीङ् वृद्धौ ओदित्त्वात् स्वत्वादोदिति क्तस्य नकारः य्वोर्लोपो हल्स्यये इति यलोपः आङोऽन्धूधसोरिति निय भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



मात् न ण्यादेशः ष्येङ्वृद्धावित्यस्य रूपं वा अंसोभुजशिरः वाऽऽदिशः प्रोर्णुवन्तं आच्छादयन्तं ॥ ५६ ॥

देहं विभ्रक्षुरस्त्राग्नौ मृगः प्राणैर्दिदेविषन्। ज्याघुष्टकठिनाङ्गुष्ठं राममायान्मुमूर्षया ॥ ५७ ॥

ज०म० देहम्। एष मृगोराममायात् आगतवान् यातेर्लङि रूपम् किमर्थं देहं शरीरं अस्त्राग्नौ अस्त्रे अग्नाविव विभ्रक्षुः भ्रष्टुमिच्छुः भ्रस्जेः सनीवन्तर्द्धेत्यत्रेडभावपक्षे स्कोःसंयोगाद्योरित्यनेन सलोपे षत्वकुत्वयोस्च रूपम् प्राणैर्दिदेविषन् क्रीडितुमिच्छन् दिवः कर्म्म चेति चकारात् करणसंज्ञा सनीवन्तेतीट् पक्षे रूपम् ज्यया गुणेन घुष्टौ निघृष्टौ ततएव कठिनौ अङ्गुष्ठौ सव्यापसव्यकर्षणाद्यस्य घुषिरविशब्दनइति निष्ठायामनिट् मुमूर्षयः मर्तमिच्छया मृङः सनि उदोष्ठ्यपूर्व्वस्येत्युत्वम् अः प्रत्ययात् ॥ ५७ ॥

भ० देहमित्यादि। एष मृगोमुमूर्षया मर्त्तुमिच्छया राममायात् आगच्छत् याप्रापणे घौ मृङः सनि घौऽज्झनिङ्गमामिति दीर्घे ऋदिरणाविति उर् रामस्य अस्त्रमग्निरिव तत्र स्वदेहं भ्रष्टुमिच्छुः भ्रस्जः सनि भ्रस्जश्रिस्वृयूर्णुभरइति इमोऽभावपक्षे स्यादेः सोलोपः यश्छ्राजिति षङ् षढोःकःसे प्राणैर्दिदेविषन् क्रीडितुमिच्छन् इवन्तत्वात् पूर्व्वेण पक्षे इम् ज्याघुष्टोधनुर्गुणनिष्पिष्टः कठिनाङ्गुष्ठोयस्य तं रामं घुषशब्दे चुभ्वाढेत्यादिना निपातः निपातात् निष्पेषणार्थोऽपि गम्यते गुणनिष्पेषेऽङ्गुष्ठकाठिन्यं युक्तं निपातोऽपि शब्दार्थ एव इति चेत् ज्यया घुष्टः शब्दितः सुप्रसिद्धः कठिनाङ्गुष्ठोयस्येति ॥ ५७ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



शत्रून् भीषयमाणं तं रामं विस्मापयेत कः। मास्म भैषीस्त्वयाद्यैव कृतार्थोदृक्ष्यते पतिः॥ ५८॥

शत्रून्। तं रामं शत्रून् भीषयमाणभीतान् कुर्व्वाणं भियोहेतुभये षुक् भीस्म्योर्हेतुभयइति तङ् विस्मापयेत कः चुभितचित्तङ्कुर्य्यात् नैवेत्यर्थः नित्यं स्मयतेरिति णावात्वम् अर्तीत्यादिना पुक् निमन्त्रणे नियोगे वा लिङ् पूर्व्ववदात्मनेपदं तस्मान्मास्म भैषीः माभूर्भीता स्मोत्तरेलङ्चेति चकारात् लुङ् सिचि वृद्धिः त्वया अद्यैव कृतार्थः पूर्णमनोरथः पतिर्द्दृक्ष्यते दृशेः कर्म्मणि लृट्॥ ५८॥ ज०म०

शत्रूनित्यादि। शत्रून् भीषयमाणं भीतान् कुर्व्वाणं रामं को विस्मापयेत चुभितहृदयं कुर्य्यात् न कोऽपीत्यर्थः स्मिभ्योर्घाद्ध्यर्थे मश्चेति स्मिधातोरिकार आ मश्च भीर्भीष्वेति भियः पचे भीषादेशः तस्मात् त्वं मा भैषीः भयं न कुरु मास्मेनघोथ्याविति टीप्रजवदेति त्रिः मायोगे अमागमाभावः त्वया अद्यैव कृतार्थः कृतकृत्यः पतिर्द्दृक्ष्यते दृशः कर्म्मणि ती बर्द्दोऽकिज्झसइति रेफः॥ ५८॥ भ०

यायास्त्वमिति कामोमे गन्तुमुत्सहसे न च। इच्छुः कामयितुं त्वं मामित्यसौ जगदे तया॥ ५९॥

याया। तदन्वेषणाय यायास्त्वमिति कामोऽभिलाषः कामप्रवेदने कच्चितीति इत्यकच्चित्युपपदे लिङ् न च गन्तुमुत्सहसे शक्‌ ज०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



धृषेति तुमुन् तस्मान्नूनमाङ्कामयितुमिछुः एवणशील: समान कर्त्तृकेषु तुमुन् विन्दुरिछुरिति निपातनात्साधुः इत्येवमसौ लक्ष्मणो जगदे गदितस्तया सीतया ॥ ५८ ॥

भ० यायाइत्यादि। त्वं रामान्वेषणाय यायादिति मे मम कामोऽभिलाषः कामोऽकच्चितीति खी नतु गन्तुं उत्सहसे तस्मात्त्वं मां कामयितुं इच्छुः इच्छतीति इच्छुः विन्दिच्छूइति निपातः कमच्चतोगुपूधूपेति कमेर्णिङ् इत्यसौ लक्ष्मणस्तया सीतया जगदे कर्म्मणि ठी ॥ ५८ ॥

**मृषोद्यं प्रवदन्तीं तां सत्यवद्योरघूत्तमः। निरगात् शत्रुहस्तं त्वं यास्यसीति शपन् वशी ॥ ६० ॥**

ज०म० मृषो। माङ्कामयितुमिछुरित्येतन्मृषोद्यम् मृषावादं राजसूयेत्यादिना भावे क्यप् यजादित्वात्सम्प्रसारणं प्रवदन्तीं तां सीतां रघूत्तमोलक्ष्मणः शपन् शत्रुहस्तं त्वं यास्यसीति शापम्प्रयच्छन् भौवादिकोऽत्र शपिर्न दैवादिकः निरगात् निर्गतः तस्मादुटजादित्यर्थात् कथं मृषोद्यमित्याह वशी वशनं वशः इन्द्रियसंयमनं वशिरण्योरुपसंख्यानमित्यप् सयस्यास्ति सवशी जितेन्द्रियः अतएव सत्यवद्यः अवितथवादी शत्रुहस्तं यास्यसीति सत्यं वदतीति कृत्यल्युटोवहुलमिति कर्त्तरि यत् वदः सुपि क्यप् चेति चकाराद्यत् भावे वा यतं विधायाच् अर्शआदित्वात् ॥ ६० ॥

भ० मृषोद्यमित्यादि। त्वं शत्रुहस्तं यास्यसीति तां सीतां शपन् शापं प्रयच्छन् रघूत्तमो लक्ष्मणोनिरगात् निर्गतः इणगतौ

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



शाद्यां भूस्येति सेर्लुक् इच्छुः कामयितुं मामिति मृषोद्यं मिथ्या वादं प्रवदन्तीं मृषोपपदे वदेर्नित्यं क्यप् लेर्व्वदःक्यप्याविति न न्तरं मृषोद्यं नित्यमित्युक्तं ग्रहस्वपाद्योरिति जिः सत्यं वदतीति कृद्वेः कभावइत्युक्तेः कर्त्तरि यः सत्यवद्यः लेर्व्वदःक्यप्याविति भावे ये सत्यं वद्यं विद्यते अस्येति अर्शआदित्वादद्वा सत्यं वद्यं अस्येति बहुव्रीहिर्व्वा यद्वा वदनं वत् वदस्थैर्व्ये क्विप् विकारसंघे त्यादिना तत्र साधावर्थे यः सत्यस्य करणे साधुरित्यर्थः वशी जितेन्द्रियः वशइन्द्रियसंयमः सोऽस्यास्तीति नैकाजादिति इन् अतएव सत्यवद्यः ॥ ६० ॥

## कुलकं।

गते तस्मिन् जलशुचिः शुद्धदन्तावणः शिखी। जंज
पूकोऽक्षमालावान् धारयो मृदलावुनः ॥ ६१ ॥

गते। तस्मिन् लक्ष्मणे गते सति रावणः सीतामूच इति वक्ष्य माणेन सम्बन्धः कीदृशः जलशुचिः स्नातइत्यर्थः शुद्धदन् निर्म्म लदशनः शुद्धा दन्ता यस्य अग्रान्तेत्यादिना दन्तस्य दत्रादेशः शिखा अस्यास्तीति शिखी परिव्राजकः व्रीह्यादित्वादिनिः जञ्ज पूकः पापाशयत्वात् गर्हितञ्जपतीति लुपसदेति यङ् जपजभे त्यभ्यासस्य नुक् यजजपदशां यङ् इत्यूकः अक्षमालावान् अक्ष सूत्रयुक्तः संसर्गे मतुप् धारयतीति धारयः अनुपसर्गादिति शः कस्य मृदलावुनः नञिलंम्बेर्नलोपश्चेत्यौणादिकऊकारे प्र त्यये अलावूः तस्य विकारः फलमिति ओरञ् तस्य फले लुक्

जं०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



नपुंसकह्रस्वत्वम् सत्पूर्णमलाबु इति मध्यपदलोपी सः क्तप्रयोगे कर्म्मणि षष्ठी इकोऽचिविभक्ताविति नुम्॥ ६१ ॥

भ० गतेइत्यादि। तस्मिन् लक्ष्मणे गते सति रावणः समागत्य सीतामूचे इति चतुर्थश्लोकेनान्वयः कीदृशः जलशुचिः जलेन शुचिः स्नातत्वात् शुद्धा निर्म्मला दन्ता यस्येति शुद्धदन् निपातनात् शिखी शिखायुक्तः नैकाजादिति इन् पापाशयत्वात् गर्हितं जपतीति जञ्जपूकः गत्यर्थात् गृलुपेत्यादिना यङ् जमजपजभेति खेर्नुए जागृयङन्तयजजपेति ऊकः यङोलुक् असमालावान् अचसूत्रयुक्तः मृदलाबुनोधारयः धारयतीति साहिसातिचेतीति शः ढे षी मृच अलाबुश्च इति समाहारद्वन्द्वे चगैकवं क्लीवं मृत्पूर्णमलाबु मृदलाबु वा भवेदलाबुरालाबुरालाबुश्चादलाबुचेति शब्दभेदः अलाबुस्तुम्बीफलं मृत् तीर्थमृत्तिका ॥ ६१ ॥

कमण्डलुकपालेन शिरसा च मृजावता संवस्य लाचिके वस्त्रे मात्राः संभाण्ड्य दण्डवान् ॥ ६२ ॥

अ०म० कम। कमण्डलुना कपालेन च जातिरप्राणिनामिति द्वन्द्वे एकवद्भावः मृजावता निर्म्मलेन शिरसा च उपलक्षित इत्थम्भूते तृतीया संवस्य परिधाय वस्त्रात्समाच्छादनइति मुण्डमिश्रेत्यादिना णिच् लाचिके वस्त्रे लाचया रक्ते लाचारोचनेत्यादिना ठक् मात्राः कमण्डल्वादिकान् सम्भाण्ड्य समाचित्य राशीकृत्येत्यर्थः

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भाण्डात्समाचयनइति पुच्छभाण्डेत्यादिना णिङ् दण्डवान् गृहीतत्रिदण्डः संसर्गे मतुप् ॥ ६२ ॥

कमेत्यादि। कमण्डलुश्च कपालोभिक्षापात्रञ्चेति समाहार भ० द्वन्द्वः तेन उपलक्षितः केचित्तु कं जलं पालयतीति कपालं कम ण्डलुश्चासौ कपालश्चेति कर्म्मधारयः तेन उपलक्षितः परि व्राजकोहि दक्षिणकरे सजलं पात्रं धारयतीति भावइत्याङ्कः मृजावता मार्जनायुक्तेन शिरसा उपलक्षितः मृजलूषण्युद्धौ षित्त्वात् भीषिचिन्तीत्यादिना ङः स्त्रीलिङ्गत्वञ्च विशेषणे तृतीया लाक्षिके वस्त्रे संवस्य परिधाय ञिःकण्वादेरिति वस्त्रात् समा च्छादने परिधाने च ञिः संपूर्व्वस्यैव तदभिधानशक्तिः प्रकृत्यर्थ परित्यागस्तु धातोः स्वभावात् यदुक्तं विशेषकर्मसम्बन्धात् प्रकृ तेस्तु गतार्थतेति लाक्षया रक्ते लाक्षिके विकारसंघेत्यादिना तेन रक्तेऽर्थे ष्णिकः मात्रां परिच्छदं कमण्डलुप्रभृतिं संभाण्ड्य समाचित्य युगद्वहनार्थं राशीकृत्य भाण्डानि संचिनोतीत्यर्थे पूर्व्ववत् ञिः प्रकृत्यर्थत्यागः संपूर्व्वतानियमस्य मात्रा कर्णविभू षणे। अक्षरावयवे वृत्ते मानेऽल्पे च परिच्छदेइति विश्वः दण्ड वान् गृहीतदण्डः ॥ ६२ ॥

अधीयन्नात्मविद्वियां धारयन्मस्करिव्रतं। वदन् वक्राङ्गुलिस्फोटं भ्रूक्षेपञ्च विलोकयन् ॥ ६३ ॥

अधी। मा कुरुत कर्म्माणि शान्तिर्व्वः श्रेयसीत्येवन्घोषयन्ति ज०म० ये ते मस्करिणः परिव्राजकाः तेषामेतमस्करमसौ धारयन्

च

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



मस्करमस्करिणाविति परिव्राजके सुट् आत्मविदां योगिनां विद्यामुपनिषदमधीयन् जपन् ईङ्धार्य्योरिति ईङोधारेश्च अक्ष्छ्रवति कर्त्तरि शतृप्रत्ययः अन्तरा वक्रु प्रभूतं वदन् अङ्गुलिस्फोटम्पुनः स्फोटिकान्दत्वा भ्रूक्षेपञ्च विलोकयन् भ्रुवावुत्क्षिप्योत्क्षिप्य विलोकयन् उभयत्रापि स्वाङ्गेध्रुवद्दति णमुल् ॥ ६३ ॥

भ० अधीत्यादि। आत्मविदां योगिनां विद्यामुपनिषदं अधीयन् पठन् धारीङोरकृच्छ्रिशतरिति परस्मैचं स्वमते क्वचिदभिधानात् आत्मनेपरस्मैपदिनोः परस्मैपदात्मनेपदिता मस्करिणः परिव्राजकस्य व्रतं धारयन् अङ्गुलीस्फोटं अङ्गुलीं स्फोटयित्वा वक्रु वदन् मितभाषितया वक्रु हस्तसंज्ञयैव वदतीति भावः भ्रूक्षेपं भ्रुवमुत्क्षिप्य विलोकयन् ऋजुतया कटाक्षाद्यभावद्दत्याशयः उभयत्र पोड्यमानात्स्वाङ्गात्स्वमिति परः वक्रु अङ्गुलेः स्फोटो यत्र वदनक्रियायां भ्रुवोः क्षेपोयत्र विलोकनक्रियायां स्फोटक्षेपौ घञन्तौ ॥ ६३ ॥

संदिदर्शयिषुः साम निजुन्हुषुः क्षपाटतां। चंक्रमावान् समागत्य सीतामूचे सुखाभव ॥ ६४ ॥

ज०म० संदि॥ इह भयमाभूदिति सामं सान्त्वं सन्दिदर्शयिषुः सन्दर्शयितुमिच्छुः वदन् वक्रङ्गुलिस्फोटमिति योज्यं दृशेर्ण्यन्तसनन्तत्वे रूपं क्षपाटतां राक्षसत्वन्निजुन्हुषुर्निन्दोतुमिच्छुः धारयन्मस्करिव्रतमिति योज्यम् न्होतेरज्झनगमांसनीति दीर्घः कुटिलं क्र

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



मणश्चङ्क्रमा क्रमेर्नित्यकौटिल्ये गताविति यङ् नुगत इत्यभ्यासस्य नुक् अःप्रत्ययादित्यकारः अतोलोपः यस्य हलः टाप् सा यस्यास्ति चङ्क्रमावान् कुटिलगतिमानित्यर्थः समागत्य ढौकित्वा सीता मूचे किमित्याह सुखाभवेति अनुकूला भवेत्यर्थः यदहमार्थये तत्र प्रतिकूला न भवेति भावः सुखप्रियादानुलोम्य इति कृभ्वस्ति योगे डाच् ॥ ६४ ॥

सन्दीत्यादि। साम सान्त्वं संदर्शयितुमिच्छुः दृशेर्ण्यन्तात् सन् चपाटतां राक्षसभावं निह्नोतुमिच्छुः न्हुङ्लचौर्य्ये सनि घोऽज्झनिङ्गमामिति घः चंक्रमावान् कुटिलगतियुक्तः अमेध्यादि स्थलपरिजिहीर्षया चित्तक्षत्यं वा कौटिल्यं गत्यर्थाद्दूलुपेति यङ् त्रमजपेति खेर्नुण् यङोलुक् शंस्यादः ततोवतुः ईट्शः सन् समागम्य सुखाभव यदहं याचे तत्रानुकूला भवेति सीतामूचे सपत्रनिष्पत्रेत्यादिना सुखादानुकूल्ये डाच् यद्यप्यत्र तीयसम्ववीजेत्यादिसूत्रात् कृञीत्यनुवर्त्तते तथापि मण्डूकप्लुताधिकारात् च्चिः कृभ्वस्त्सभूततद्भावइति सूत्रात् कृभ्वस्तित्यस्यानुवर्त्तनं बोध्यं प्रयोगदर्शनात् वृत्तौकृञीति लिपिकरप्रमादात् वाङ्गल्यार्थं वा किम्वा सुखं विद्यते यस्मादित्यर्शआदित्वात् अः ततआप् ॥ ६४ ॥

सायन्तनीं तिथिप्रण्यः पङ्कजानां दिवातनीं। कान्तिं कान्त्या सदातन्या ह्रेपयन्ती शुचिस्मिता ॥ ६५ ॥

सायम्। का त्वमिति वक्ष्यमाणेन सम्बन्धः सायन्दिनावसानन्तत्र भवाङ्कान्तिम् यदा षोऽन्तकर्मणीत्येतस्मात् घञ्प्रत्ययान्तः तदा

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



सायञ्चिरेति टुव्युलौ तुट् च मकारान्तत्वञ्च निपात्यते यदा सायंशब्दोमकारान्तः तदाप्यव्ययत्वादेव प्रत्ययागमौ स्यातां कस्येत्यपेक्षायां तिथिप्रण्यः चन्द्रमसः पञ्चदश कलाः तासां वृद्धि ह्रासाभ्यां पञ्चदशतिथीः प्रणयति प्रवर्त्तयति सत्सूद्विषेति क्विप् उपसर्गादसमासेति णत्वम् एरनेकाचइति यणादेशः पङ्कजा नाञ्च कान्तिङ्कीदृशीन्दिवातनीन्दिवाभवां कान्त्या त्वदीयया स दातन्या सदाभवया ह्रेपयन्ती लज्जयन्ती दिवातन्याः सायन्त न्याश्च सदाभवत्वात् जिह्रीतेरर्तीत्यादिना णौ पुक् शुचिस्मिता शुभ्रहासा ॥ ६५ ॥

भ० सायमित्यादि। का त्वमेकाकिनीति द्वितीयश्लोकेन सम्बन्धः तिथिप्रण्यश्चन्द्रस्य सायन्तनीं दिनावसानभवां कान्तिं तथा पङ्क जानां पद्मानां दिवातनीं दिनभवां कान्तिं स्वकान्त्या ह्रेपयन्ती लज्जयन्ती कीदृश्या सदातन्या सर्व्वकालस्थितया चन्द्रपद्मयोस्तु प्रभा न सदा तिष्ठतीति लज्जाहेतुः पञ्चदशतिथीः प्रणयति प्रव र्त्तयतीति तिथिप्रणीश्चन्द्रः तस्य ह्रासवृद्धिभ्यामेव ज्योतिःशास्त्रे तिथिनिरूपणात् त्रासुस्विति क्विप् प्राग्वन्नोणइति णत्वं कव्याद्यने काचइति यत्वं तिथिप्रणीर्दर्शविपन्निशामणिस्त्रिनेत्रचूडामणिर त्रिनेत्रभूरित्यमरः मन्मथेनार्पिता छाया सैव कान्तिरिति स्मृते ति परिभाषिता कान्तिः सीतायाः चन्द्रपद्मयोस्तु शोभामात्रं कान्तिरिति बोध्यं त्यचाद्यचिरदक्षिणेत्यादिना सायंदिवासदा शब्देभ्यस्तनट् भवार्थे शुचिस्मिता शुद्धहासा स्मितन्त्वद्दृष्टदशने हासे इति वैजयन्ती ॥ ६५ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



का त्वमेकाकिनी भीरु निरन्वयजने वने। क्षुध्यन्तो ऽप्यघसन् व्यालास्त्वामपालां कथन्न वा॥ ६६॥

कालम्। का त्वन्देवी मानुषी राक्षसी वेति एकाकिनी असहाया एकादाकिनिच्चासहायइति आकिनिच् भीरु इत्यामन्त्रणम्भयप्रकृतित्वात् स्त्रीणाम् निरन्वयानिरनुगमाजनायस्मिन्वने यत्र न कथञ्चिन्मनुष्याणां सम्भवः क्षुध्यन्तोऽपि बुभुक्षमाणाअपि दिगादित्वात् यत् व्यालाहिंस्राव्याघ्रादयः कथं वा त्वान्नाघसन् न भक्षितवन्तः अदेः लुङ्सनोर्घस्लृ लृदित्वाच्च्लेरङ् क्षुध्यन्तोनाघसन्निति पाठान्तरम् तत्र कथन्न वा अपरिचितानेवाघसन् इति योज्यम् अपालां सतीं अविद्यमानः पालोयस्याइति पालरक्षण इति चौरादिकः पालयतीति पालः पचाद्यच् यदा प्रयोजकविवक्षा तदा पातेर्लुगागमो णौ वक्तव्यइति लुक् ततः पचाद्यच् ॥ ६६॥ जं॰मं॰

का त्वमित्यादि। हे भीरु वने एकाकिनी का त्वं देवी मानुषी अन्या वा वने किम्भूते निरन्वयजने निरन्वयानिःसम्बन्धाजना यत्र भीरु इति सम्बोधनं भयप्रकृतित्वान्नारीणां जातिभेदस्य प्रत्यक्षत्वाद्वा एकादाकिन्नसहायेऽभिधानात् क्षुध्यन्तोबुभुक्षमाणा व्यालाव्याघ्रादयोहिंस्राः अपालां पालकारक्षितां त्वां कथं नाघसन् न भक्षितवन्तः घस्लृदःसन्स्यल्घज्नीति अदघ्यां घस्लृद नुबन्धात् शासत्यियुदिति ङः क्षुधबुभुक्षायां दिवादिः पाल रक्षणे चौरादिकः पचादित्वादन् व्यालोदुष्टगजे सर्पे श्वापदेनान्यवत्सल इति मेदिनी॥ ६६॥ भ॰

CC-0. In Public Domain. Funding by IKS-MoE.

Digitized by eGangotri and Sarayu Trust.



हृदयङ्गममूर्त्तिस्त्वं सुभगम्भावुकं वनं। कुर्व्वाणा भीममप्येतद्ददाभ्यैः केन हेतुना॥ ६७॥

ज॰म॰ हृद। केन हेतुना इदं वनमभ्यैः अभिगतासि वद कथय अभिपूर्व्वादिणो लङ् मध्यमपुरुषैकवचनं आडजादीनाम् आटश्चेति वृद्धिः हृदयङ्गच्छति या मूर्त्तिः शरीरमत्यन्तसौन्दर्य्यात् गमेश्चेति खच् सा एवम्विधा मूर्त्तिर्यस्याः सा लक्ष्मीममप्येतद्वनं सुभगम्भावुकं सर्व्वस्यैवाप्रियं प्रियङ्कुर्व्वाणा असुभगं भूत्वा सुभगं भवतीति कर्त्तरि भुवइति खुकञ्॥ ६७॥

भ॰ हृदयेत्यादि। केन हेतुना त्वं एतद्वनं अभ्यैः अभिगता इति वद अभिपूर्व्वादिणोध्याः सिप् लुगङ्गोऽपः घीटीथीष्विति अम् आदिर्गचोरिति णुः भूयोऽम् त्वादयोऽर्थार्थैकत्तेरिति तृतीया हृदयङ्गमा मूर्त्तिर्यस्याः सा तथा लावण्यातिशयात् हृदयं गच्छतीति तृभृवृहइत्यादिना खः नाम्नीत्यस्य व्यभिचारो वाऽऽत्वात् भीममप्येतद्वनं सुभगम्भावुकं कुर्व्वाणा प्रागप्रियं प्रियं भवतीति भुवो घेखिष्णखुकञाविति खुकञ्॥ ६७॥

सुकृतं प्रियकारी त्वं कं रहस्युपतिष्ठसे। पुण्यकृच्चाटुकारस्ते किङ्करः सुरतेषु कः॥ ६८॥

ज॰म॰ सुकृतं। सुकृतम्पुण्यकारिणं शोभनं कृतवानिति सुकर्म्मपापेत्यादिना क्विप् कं रहसि विजने त्वमुपतिष्ठसे उपश्लिष्यसि सङ्गतकरणेतङ् प्रियकारी अनुकूलवर्त्तिनी सती प्रियमनुकूलङ्करोतीति

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



क्षेमप्रियमद्रेऽणचेति अण् टिड्ढाणञित्यादिना ङीप् पुण्यकृत् कृतपुण्यः तस्य पूर्ववत्क्विप् चाटुकारः प्रियवाक्यकरः नशब्दस्लो केत्यादिना ट प्रतिषिद्धेऽणेव भवति ईदृशस्ते किङ्करः दासः दिवा विभेति टः किंयत्तदङ्गषु कृञोऽज्विधानमिति तत्स्त्रीविषये द्रष्टव्यम् सुरतेषु शोभनरतेषु नपुंसके भावे क्तः अनुदात्तेत्यादिनानुना सिकलोपः अनेनोभयरुचिराख्याता ॥ ६८ ॥

सुकृतमित्यादि। त्वं प्रियकारी अनुकूलवर्त्तिनी सती कं सुकृ तं पुण्यकारिणं पुरुषं रहसि विजने उपतिष्ठसे सङ्गच्छसि मैत्रा ध्वसङ्गाराधइति सङ्गे मं शोभनं करोतीति चासुमिति क्विप् प्रियङ्करोतीति क्षेमप्रियमद्रात्कुर्व्वा इति खाभावपक्षे ढातषण् कः पुण्यकृत् ते तव सुरतेषु शोभनरतेषु किङ्करोदासः सन् चाटुकारः प्रियवाक्यकारी पुण्यं करोतीति क्विप् रमेर्भावे क्तः वनतनाद्यनिमामिति मलोपः चाटु करोतीति क्वचिदपवादवि षयेऽप्युत्सर्गो ऽभिनिविशतइति न्यायात् स्वकुष्टइति टविषयेऽपि ढातषण् किमित्यव्ययं तस्मात् कृञष्टः ॥ ६८ ॥ भ०

परिपर्य्युदधेरूपमाद्युलोकाच्च दुर्लभं। भावत्कं दृष्टवत्स्वेतद्स्मास्वधि सुजीवितं ॥ ६९ ॥

परि। एतद्रूपम्भावत्कम्भवत्याइदमिति भवतष्ठक्छसाविति ठक्छसौ ठक्छसोश्चोपसंख्यानमिति पुंवद्भावः इसुसुक्तान्तात्कः दुर्लभम्परिपर्य्युदधेः अपपरीवर्जनइति कर्म्मप्रवचनीयसंज्ञा यान्द्वितीयायाम्प्राप्तायाम्पञ्चम्यपाङ्परिभिरिति पञ्चमी अप ज०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



परिवर्हिरञ्चवःपञ्चम्यादिति विभाषासमासश्च असमासपक्षे परे र्वर्जनइतिद्विर्वचनम् उदधिं वर्जयित्वा चतुरुदधिमेखलायाम्भुवि दुर्लभमायुलोकाच्च स्वर्गलोकान्तञ्च यावत् दुर्लभमचापि पूर्व्वव त्पञ्चमी तादृशन्दृष्टवत्वस्मासु अधि सुजीवितमस्मद्विषयो अधि क्येन सुजीवितम् अहो वा सुजीवितमिति अहो शब्दार्थे अधिश ब्दोवर्त्तते ॥ ६८ ॥

भ० परीत्यादि। एतत् भावत्कं भवदीयं रूपं दृष्टवत्सु अस्मासु अधि सुजीवितं अधिकं शोभनं जीवनं विषये सप्तमी यद्वा अधि केशार्थोपाधिभ्यामिति स्वाम्यर्थेनाधिना च योगे सप्तमी तेनास्म त्स्वामिकं सुजीवितमित्यर्थः त्वामपश्यतस्तु जनस्य तन्नास्तीति भावः भवत्याइदमित्यर्थे विकारसंघेति कण् पुम्वत्स्युक्तपुंस्कः स्त्रियामित्यादौ तलशसन्ततरादावित्यस्य तद्धितसंज्ञके त्वपर्य्य न्तप्रत्यये शसन्ततरादौचेति देवीदासचक्रवर्त्तिव्याख्यानात् पुंवत् ये तु त्वतौभावइत्यनेन क्तयोस्त्वयोरेवमित्याङ्गस्तन्मतेऽभि धानात् योगविभागात् किम्बा पुम्वद्भेरिति पुम्वत् भवच्छब्दस्य स्त्रि संज्ञायां पठितत्वात् पुम्वत्भेरित्यत्र कोलुक्त्येचेत्यस्मात्त्येचेत्य नुवर्त्तते वृत्तौ त्येचेति यन्न दृश्यते तल्लिपिकरप्रमादात् ग्रन्थगौ रवाद्वा न लिखितं तदनुवृत्तेर्दुर्निवारत्वेन स्पष्टत्वात्पुम्वत्त्वं नास्तिवृत्तिमात्रे तसादौ चेति परसूत्रं कीदृशं रूपं उदधेः परि परि उदधिं वर्ज्जयित्वा दुर्लभं दुष्प्रापं उदधिपरिच्छिन्नायां पृथिव्यां दुर्लभमित्यर्थः समुद्रे लक्ष्म्या उत्पत्तिः तत्रैव तत्सम्भवो नान्यत्रेति भावः आद्युलोकात् स्वर्गलोकपर्य्यन्तञ्च दुर्लभं उभ यत्र अन्यारभ्येत्यादिना पञ्चमी पर्य्याङौ त्यागसीमार्थौ आङ्

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



व्यान्निमीनोस्याागेऽन्याविल्युक्तः वर्ज्जनार्थपरैर्विभाषया दिवम भिधानात् ॥ ६९ ॥

प्रपीतमधुका भृङ्गैः सुदिवेवारविन्दिनी। सत्परिमल लक्ष्मीका नापुंस्कासीति मे मतिः ॥ ७० ॥

आपी ॥ परि सर्व्वतोमार्जनमिति परिमलः कलचपश्चेत्यधि कृत्य नृजेष्टिलोपश्चेति कलप्रत्ययश्चौणादिकः इह सुरतोपभो गविमर्द्दः परिमलोऽभिप्रेतः तस्य लक्ष्मीः तत्कृतलात् सती विद्य माना परिमलशोभा यस्याः उरःप्रभृतिभ्यः कप् सा लमपुंस्का अविद्यमानभर्त्तृका नासीति मे मतिः पूर्व्ववत्कप् किमिव सुदिवेवा रविन्दिनी पद्मिनी शोभनन्दिवा नीहाराद्यभावाद्दिवा दिवसं यस्याः सुप्रातेत्यादिना अच् आपीतमधुका भृङ्गैः आपीतम्मधु यस्याः शेषाद्विभाषेति कप् यथेयं सत्परिमललक्ष्मीका तथाल मपीति ॥ ७० ॥ ज०भ०

प्रपीत्यादि। त्वं न अपुंस्कासि किन्तु विद्यमानभर्तृकासीति मेमम मतिः यतः सती परिमलस्य लक्ष्मीर्यस्यास्तादृशी विम र्द्दोत्थे परिमलोगन्धे जनमनोहरइत्यमरः सुरते भोगविमर्द्द एव परिमलइति जयमङ्गला पुंलक्ष्मीभ्यामेकवचनान्ताभ्यां कोव ऊन्नोहाविति परः स्वमते लक्ष्मीशब्दात् घृतःकइति कः अपुंस्केति पुंवत्स्युक्तपुंस्कइति ज्ञापकात् घृतःकइत्यस्य योगविभागेन क्वचि दन्यत्रापि कइति बोध्यं स्वार्थे कोवा यथा भृङ्गैः प्रपीतं मधु यस्या भ०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



स्तादृशी सुदिवा अरविन्दिनी पद्मिनी तथा त्वमपि सत्परिमल लक्ष्मीका शोभनं नीहारादिरहितं दिवा दिनं यस्याः सुपूर्व्वाद्दिवाशब्दाद्दङ्भ्रीहौ अदिति परः स्वमते दिवाशब्दात् स्वार्थे ष्णाः तस्यानित्त्वविवक्षया न ईप वृद्धिश्च यद्वा शोभने दिवसेदूति सप्तम्यन्तं रूपं दिवाशब्दोऽयमव्ययः ॥ ७० ॥

मिथ्यैव श्रीः श्रियम्मन्या श्रीमन्मन्यो मृषा हरिः । साक्षात्कृत्याभिमन्येऽहं त्वां हरन्तीं श्रियं श्रियः ॥ ७१ ॥

ज०म० मिथ्यै। श्रियः श्रियं रूपसम्पदं हरन्तीमभिभवन्तीं त्वां साक्षात्कृत्य प्रत्यक्षीकृत्य विभाषाकृञीत्यनुवर्त्तमाने साक्षात्प्रभृतीनि चेति गतिसंज्ञा गतिसमासे ल्यवादेशः अहमभिमन्ये किं मिथ्या श्रीः श्रियम्मन्या अहमेव श्रीर्नान्येति मन्यमाना श्रीर्म्मिथ्या नैव श्रीः किन्तु त्वमेवेति आत्ममाने खश् दिवादित्वात् श्यन् इच एकाचोमत्ययवच्चेत्यम्भावः तस्यामः प्रत्ययत्वान्मलोपाभावः न विभक्तौतुस्मादूति वचनात् अचीतीयङादेशः क्विबन्ताधातुत्वन्न जहतीति क्विब्वचीत्यादिना अयतेरौणादिकः क्विप् हरिस्यात्मानं श्रीमन्तम्मन्यमानो मृषा न श्रीमान् यस्य त्वं स एव श्रीमानित्यहमभिमन्ये॥ ७१ ॥

भ० मिथ्यैवेत्यादि । श्रिया लक्ष्म्याः श्रियं शोभां हरन्तीं जयन्तीं वा त्वां साक्षात्कृत्य अहमेवमभिमन्ये श्रीर्लक्ष्मीर्मिथ्यैवात्मानं श्रियं मन्यते हरिरपि मृषा आत्मानं श्रीमन्तं मन्यते त्वमेव श्रीस्त्वदीयशोभाहरणात् त्वत्पतिरेव त्वद्योगात श्रीमानिति भावः मन्या

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



स्वार्थइति खश् शित्वात् दिवसुतुदेति यन् खित्यव्याजन्तस्यइति एकाजिजन्तत्वात् श्रीशब्दस्य ह्रीकान्तत्वं ह्रस्वोपाणौप्राध्वमित्यादिना समासपक्षे व्यादनञः क्लीयशे साचादादेरभूततद्भावेक्लञः क्लीयप् वेति परः॥ ७१॥

नोदकण्ठिष्यतात्यर्थं त्वामैक्षिष्यत चेत् स्मरः। खेलायन्ननिशं नापि सजूःकृत्य रतिं वसेत्॥ ७२॥

नोद। स्मरभार्य्या रतिः सापि रूपेण निकृष्टेति दर्शयति चेत् यदि स्मरः त्वामैक्षिष्यत दृष्टवानभविष्यत् तदा अत्यर्थमो दकण्ठिष्यत रतिम्प्रति भृशमुत्कण्ठितोनाभविष्यत् ईक्षदर्शने इति कठिशोकइति भ्वादिकात् क्रियातिपत्तौ लृङ् नापि रतिं स्वभार्य्यां सजूःकृत्य सहायीकृत्य वसेत् अपितु परित्यजेत् अत्र क्रियातिपत्तिर्न विवक्षिता किन्तु हेतुहेतुमद्भावः नापि रतिं सजूःकृत्य वसेत् यदि त्वामीक्षेतेति हेतुपदमभ्यूह्य हेतुमद्भावदर्शनात् ऊर्य्यादिषु सजूःसहार्थइति वचनात् गतिसंज्ञा खेलायन् अनिशं क्रीडन् सर्व्वदा खेलाशब्दात् कण्ड्वादित्वात् यक्॥ ७२॥ ज॰म॰

नोदेत्यादि। रतिरपि न ते तुल्येति दर्शयन्नाह स्वयं कामश्चेत् यदि त्वां ऐक्षिष्यत तदा अत्यर्थं न उदकण्ठिष्यत रतिं प्रति भृशमुत्कण्ठितोनाभविष्यत ईक्षङ्दर्शने कठिङ्आध्याने उभयत्र ध्वर्यासम्भवे यो नापि रतिं स्वभार्य्यां सजूःकृत्य भ॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



सहायीकृत्य अनिशं निरन्तरं खेलायन् क्रीडयन् वसेत् तां परित्यजेदेव यदि त्वां पश्येत् इति हेतुपदमत्र बोध्यं भव्येवाफलहेतोरित्यस्य योगविभागाद्धेतेऽपि स्वो भव्येऽपि न चतिः विलासार्थात् खेलाशब्दात् कण्ड्वादित्वात् करोत्यर्थे क्यः सजुःशब्दोऽयमव्ययः सहायार्थे वर्त्तते साचादादित्वात् हस्तेपाणौप्राध्वंइत्यादिना समासः॥ ७२॥

वल्गूयन्तीं विलोक्य त्वां स्त्री न मन्तूयतीह का।
कान्तिं नाभिमनायेत को वा स्थाणुसमोऽपि ते॥ ७३॥

ज॰म॰ वल्गु। त्वां वल्गूयन्तीं शोभमानां विलोक्य न मन्तूयति स्त्रीह का इह जगति का स्त्री न मन्तूयेत् न कुप्येत् सर्व्वदा कुप्यत्येव ईर्ष्यायुक्तत्वात् स्त्रीणाम सम्भावने लिङ् वल्गुमन्तुशब्दाभ्याङ्कण्ड्वादित्वाद्यक् कोवा कोनाम स्थाणुसमोऽपि काष्ठतुल्योऽपि गुणदोषानभिज्ञत्वात्ते तव कान्तिं विलोक्य नाभिमनायेत पूर्व्वमदृष्टत्वादनभिमनाः सन् अभिमनाः सचेताभवेत् पूर्व्ववल्लिङ् अभिमनसोभृशादित्वात्क्यङ् सलोपश्च महादेवतुल्योवा आस्तामन्यः सोऽपि तावदभिमनायते॥ ७३॥

भ॰ वल्गित्यादि। इह जगति का स्त्री वल्गूयन्तीं शोभमानां त्वां विलोक्य न मन्तूयति न ईर्ष्यति स्वपतिवैराग्यशङ्कया सर्व्व कुप्यतीत्यर्थः वल्गुमन्तुभ्यां कण्ड्वादित्वात्क्यः धौऽजय्यरे कोवा स्थाणुसमोऽपि महादेववज्जितेन्द्रियोऽपि काष्ठवन्नीरसोऽपि वा

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



तव कान्तिं विलोक्य न अभिमनायेत प्रीतमनान भवेत् अपि तु सर्व्वएवाभिमनायेत भृशादेश्च्व्यर्थे वेति पाचिकोङ्: सलोपस्य घों ऽज्य्यरे प्रौच्यासम्भावने इति खो ॥ ७३ ॥

दुःखायते जनः सर्व्वः सएवैकः सुखायते। यस्यो त्सुकायमाना त्वं न प्रतीपायसेऽन्तिके ॥ ७४ ॥

दुःखा ॥ सएवैकोजनः सुखायते सुखं वेदयते यस्यान्तिके समीपे न त्वम्प्रतीपायसे न प्रतिकूलवर्त्तिनी भवसि उत्सुकायमाना उत्कायमाना सती यस्य पुनरन्तिके उत्सुकायमाना प्रतीपायसे ससर्व्वोजनः दुःखायते दुःखं वेदयते सुखदुःखशब्दाभ्यां सुखादिभ्यः कर्त्तृवेदनायामिति क्यङ् उत्सुकप्रतीपशब्दाभ्याम्भृशादित्वात् ॥ ७४ ॥ ज०म०

दुःखेत्यादि । यस्यान्तिके समीपे त्वं उत्सुकायमाना उत्सुकीभवन्ती न प्रतीपायसे न प्रतिकूलीभवसि सएवैकोजनो जगति सुखायते सुखमनुभवति अन्यः सर्व्वोजनोदुःखायते दुःखमनुभवति सुखदुःखशब्दाभ्यां शब्दसुखकष्टादेरिति वेदे ङ्यः केचित्तु सुखदुःखयोस्तदाश्रयेऽपि वर्त्तमानत्वात् असुखःसुखोभवति अदुःखोदुःखोभवति इत्यर्थे डाच् लोहितादेःपञ्चेति ङ्यमाङः उत्सुकप्रतीपाभ्यां भृशादित्वात् च्व्यर्थे ङ्यः केचित्तु प्रतीपशब्दात् घान्ङ्यकीत्यादिना आचारे ङ्यमाङः ॥ ७४ ॥ भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कः पण्डितायमानस्त्वामादायामिषसन्निभां। त्रस्यन् वैरायमाणेभ्यः शून्यमन्ववसद्वनं॥ ७५॥

ज॰म॰ कःपं। पण्डितायमानः अपण्डितः कथमपि पण्डितोभवन् भृशादित्वात्क्यङ् त्वामामिषसन्निभां सर्व्वजनप्रार्थनीयत्वात् आदाय गृहीत्वा कः शून्यं वनमन्ववसत् शून्ये वने अवसदित्यर्थः उपान्वध्याङ्वसइति कर्म्मसंज्ञा कीदृशः त्रस्यन् बिभ्यत् वैरायमाणेभ्यः वैरङ्कुर्व्वाणेभ्यः शब्दवैरेत्यादिना क्यङ् भीत्रार्थानामित्यपादानसंज्ञा॥ ७५॥

भ॰ कइत्यादि। कः पण्डितायमानः अपण्डितः पण्डितोभवन् आमिषसन्निभां लोभ्यद्रव्यतुल्यां त्वां आदाय गृहीत्वा शून्यं वनं अन्ववसत् वसतिस्म कर्म्मक्रियेत्यादिना डे ढं पण्डिताद्भृशादित्वात् ज्ञः वैरायमाणेभ्यः वैरं कुर्व्वाणेभ्यः त्रस्यन् शत्रुभयाभावे एवं कर्त्तुमनुचितमिति भावः वैरात् शब्दादित्वात् शब्दसुखकष्टादेरिति कृतौ ज्ञः यतोऽपायभीति अपादानसंज्ञा आमिषं पललेलोभ्ये सम्भोगोत्कारयोरपि। आमिषं सुन्दराकारे रूपादिविषयेऽपि चेति विश्वः॥ ७५॥

ओजायमाना तस्यार्घं प्रणीय जनकात्मजा। उवाच दशमूर्द्धानं सादरा गद्गदं वचः॥ ७६॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ओजा। एवमुक्तवति रावणे जनकसुता दशमूर्द्धानमुवाच दश मूर्द्धानः शिरांसि यस्य तस्यार्घ्यम्प्रणीय दत्वा अतिथिरयमि ति सम्प्रदानस्य शेषत्वेन विवक्षितत्वात् षष्ठी ओजायमाना ओज इवाचरन्ती कर्त्तुःक्यङ्सलोपश्च ओजसोप्सरसोनित्यमिति वच नात् किञ्चिल्लज्जापरित्यागात् तेजस्विनी भवन्तीत्यर्थः किमु वाच वचोवक्ष्यमाणं सादरा सती परिव्राजकइति गद्गदमनभि व्यक्तमसंस्कृतत्वात्॥ ७६॥ ज॰म॰

ओजेत्यादि। जनकात्मजा सादरा सती तस्य कपटपरिव्रा जकस्य अर्घ्यं प्रणीय अतिथिबुद्ध्या दत्वा दशमूर्द्धानं दश मूर्द्धानो यस्य तं रावणं गद्गदं लज्जया अन्तर्भिया वा सम्यगनभिव्यक्तं वचोवक्ष्यमाणं उवाच ओजायमाना किञ्चिल्लज्जापरित्यागात् ओजस्विनीवाचरन्ती ओजःशब्दात् धर्मिप्रधानात् सान्त्वकी ति क्यः सलोपश्च भृशादित्वात् च्व्यर्थे वा क्यः तस्य इति सम्प्रदा नस्य सम्बन्धविवक्षायां षष्ठी प्रणीयेत्यस्य समीपे स्थापयित्वा इति वार्थः मूल्येपूजाविधावर्घः अर्घाय इदमित्यर्थे विकारसंघेति यः॥ ७६॥ भ॰

महाकुलीनऐक्ष्वाके वंशे दाशरथिर्म्मम। पितुः प्रियङ्करो भर्त्ता क्षेमकारस्तपस्विनां॥ ७७॥

महा। यदुक्तन्तेन कं रहस्युपतिष्ठसइति अस्य प्रतिवचनं मम भर्त्ता महाकुलीनः महाकुलस्यापत्यमिति महाकुलादञ्खञा ज॰म॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



विति खञ् किमादित्यवंशसम्भवः किं सोमवंशसम्भवो वा महाकु लस्यापत्यमित्याह ऐक्ष्वाके वंशे इक्ष्वाकूणामयमैक्ष्वाकः दाण्डि नायनेत्यादिना टिलोपनिपातनम् अन्ये तत्र सन्तीत्याह दाश रथिः दशरथस्यापत्यं यः सम भर्त्ता महाकुलीनः कीदृशः पितुः प्रियङ्करः अनुकूलकारी तपस्विनाञ्च क्षेमकारः क्षेमप्रिय मद्रेणेति चकारात् खच्॥ ७७ ॥

भ॰ महेत्यादि। कं रहस्युपतिष्ठसे इति रावणप्रश्ने उत्तरमिदं मम भर्त्ता दाशरथिः प्राधान्यात् विशेषेण महिम्ना च ज्येष्ठ एव गम्यते दशरथस्यापत्यं इति वाक्यायतइति अदन्तत्वात् ष्णिः णित्त्वेत्रिः ऐक्ष्वाके वंशे महाकुलीनः इक्ष्वाकुनामा कश्चित् सूर्य्यवंशसम्भवः तस्यापत्यमिति तद्भवे वंशे इत्यर्थाद्गम्यते शिवा दित्वात् ष्णः ओर्लोपोऽकद्रुपाण्ड्वोरेये इत्यत्र एयस्य अश्चेति समासात् उकारलोपः ये तु केवलष्णेयप्रत्ययइति व्याचक्षते तन्मते योगविभागात् महाकुले विद्यमानः ढघेकादिति णीनः महाकुलीनइति पाठे अनित्त्वविवक्षया न ञिः महाकुलस्याप त्यमिति केचित् पितुः प्रियङ्करः प्रियङ्करोतीति क्षेमप्रियमद्रा त्कर्व्वेति खः तस्य विकल्पपक्षे तपस्विनां क्षेमकारः कुशलकर्त्ता ढात्षण्॥ ७७ ॥

निहन्ता वैरकाराणां सतां वक्रकरः सदा। पार श्वधिकरामस्य शक्तेरन्तकरो रणे॥ ७८ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



निह। वैरकाराणां शत्रूणां वैरपूर्व्वात्कृञोनशब्दश्लोकेत्यादिना टे प्रतिषिद्धे अणेव भवति निहन्तेति तृजन्तस्य प्रयोगः तत्र कर्म्मणि षष्ठी सतान्धर्म्मे स्थितानाम्बङ्कर: बहुकार्य्यङ्करोतीति दिवाविभेति टः स्त्रीविवक्षायान्तु किंयत्तद्बहुष्विति करोतेरच् आङ्परयोः खनिशृभ्याण्डिच्चेत्यौणादिकः कुः परशुशब्दः तत्पर्य्यायएवाव्युत्पन्नः परश्वधशब्दः सप्रहरणं यस्य परश्वधाठञ्च तस्य परशुरामस्य सम्बन्धिन्याः शक्तेः सामर्थ्यस्यान्तकरोविनाशयिता अन्तङ्करोतीति पूर्व्ववट्टः रणे सङ्ग्रामे तत्र भवः॥ ७८॥ ज॰म॰

निहेत्यादि। तथा वैरकाराणां निहन्ता ढात्षण् कर्म्मणि षष्ठी सतां साधूनां सदा सर्व्वदा बहूनि कार्य्याणि करोतीति सकुष्टः रणे पारश्वधिकरामस्य जामदग्न्यस्य शक्तेः सामर्थ्यस्य अन्तकरो नाशयिता परश्वधेन परशुना प्रहरतीति ष्ठिकः परान् श्यति खण्डयतीति परशुः परश्वधश्चेति निपातनात् ॥ ७८॥ भ॰

अध्वरेष्विष्टिनां पाता पूर्त्ती कर्म्मसु सर्व्वदा। पितुर्न्नियोगाद्गाजत्वं हित्वा योऽभ्यागमद्वनं॥ ७९॥

अध्व। इष्टमेभिरिति इष्टिनोयज्वानः इष्टादिभ्यश्चेतीनिः किमिष्टवन्तः अध्वरान् कर्म्माणि तत्र क्तस्येन्विषयस्येति कर्म्मणि सप्तमी अध्वरेष्विष्टिनामिति कर्म्मणि षष्ठी कृद्योगे पाता रक्षिता पूर्त्ती कर्म्मसु सर्व्वदा पृणातेर्निष्ठायामुदोष्ठ्यपूर्व्वस्येत्युत्वम् न ज॰म॰

२ ख

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ध्याख्येत्यादिना निष्ठानत्वप्रतिषेधः पूर्त्तमनेनेति पूर्व्ववदिनिः किम्पूर्त्तमिति' सर्व्वदा श्राद्धादिकर्म्मणि पूर्व्ववत्सप्तमी स्वराजत्वं राज्यम् हित्वा त्यक्त्वा वनमभ्यागमत् आभिमुख्येन आगतवान् लुङ् ॡदितः अङि रूपम् पितुर्नियोगात् नायोग्यत्वात् समे भर्त्तेति योज्यम् ॥ ७९ ॥

भ० अध्वरइत्यादि। तथा अध्वरेषु इष्टिनां यज्वनां पाता रक्षिता पालरक्षणे इष्टं यजनं भावे क्तः ढघेक्तीति कर्म्मणि षष्ठी सर्व्वदा कर्म्मसु पूर्त्ती पूर्त्तं पूरणं भावे क्तः स्वल्वाद्योदित्यादौ पूर्व्जनात्र क्तस्य नः वृदुश्रिजूर्णोरिति इम्निषेधः कर्म्मापादाने ऽपि भावे क्तः अध्वरान् इष्टमेभिः कर्म्माणि पूर्त्तमनेन चेत्यर्थे इष्टादेरिष्टमनेनेत्यादावर्थे कर्त्तरि वाच्ये इन्प्रत्ययोभवेदिति परः स्मरते क्तेनाढे इति ज्ञापकात् क्तान्तात्कर्त्तरि इन् तद्योगे कर्म्मणि सप्तमी किम्वा इष्टपूर्त्ताभ्यां भावक्तान्ताभ्यां नैकाजादिति अस्त्यर्थे इन् अध्वरकर्म्मभ्यां विषये सप्तमी केचित्तु अध्वरादृष्टा एभिः कर्म्माणि पूर्त्तान्यनेन चेति कर्म्मक्तादिन् कर्त्तरीत्याहुः यः पितुराज्ञया राजत्वं हित्वा त्यक्त्वा वनमभ्यागमत् समे भर्त्तेति योज्यं ॥ ७९ ॥

पतत्रिक्रोष्टुजुष्टानि रक्षांसि भयदे वने। यस्य
बाणनिकृत्तानि श्रेणीभूतानि शेरते ॥ ८० ॥

ज०म० पत ॥ यस्य वाणैर्निकृत्तानि छिन्नानि रक्षांसि भयदे वने दीर्घ

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



निद्रया शेरते समम भर्त्तेति योज्यम् शेरतइति शीङोरुट् कीदृशानि अश्रेणयः श्रेणयोभूतानि ऊर्य्यादिच्विडाचश्चेति च्वन्तानाञ्चगतिप्रादयइति सः च्वौचेति दीर्घः च्व्यर्थानान्तु श्रेण्यादयः क्ृतादिभिरित्ययं विषयः पतत्रिभिः क्रोष्टुभिश्च जुष्टानि परिवृतानि॥ ८०॥

पतत्रीत्यादि। त्वयम् वैरायमाणेभ्य इति वाक्ये तस्य त्रासो नास्तीत्युत्तरमिदं यस्य वाणैः शरैर्निकृत्तानि खण्डितानि रक्षांसि भयदे वने शेरते पतितानि सन्तीत्यर्थः समे भर्त्तेति सम्बन्धः शीङः की अन्ते शीङारेणुः मान्तोरम् मान्तोऽदनतः अश्रेणयः श्रेणयोभूतानि श्रेणीभूतानि च्विः कृभ्वस्त्वभूततद्भावइति च्विः दीर्घश्च त्योवमात्रेोलोप्यइति च्विलोपः पतत्रिभिः मृगादिभिः क्रोष्टुभिः शृगालैश्च जुष्टानि परिवृतानि जुषमुदिसेवे॥ ८०॥

भ॰

दीव्यमानं शितान् वाणानस्यमानं महागदाः।
निघ्नानं शात्रवान्नामं कथं त्वं नावगच्छसि॥ ८१॥

दीव्य। शितांस्तीक्ष्णान् वाणान् दीव्यमानं क्षेप्तुं शक्तन्तच्छीलं वा अनेकार्थत्वाद्धातूनान्दिवेस्ताच्छील्यवयोवचनेत्यादिना चानश् दिवादिभ्यः श्यन् महागदाः अस्यमानं क्षेप्तं शक्तन्तच्छीलं वा पूर्व्ववच्चानश् शात्रवान् शत्रून् प्रज्ञादित्वादण् निघ्नानं हन्तुं शक्तन्तच्छीलं वा पूर्व्ववत्प्रत्ययः हन्तेर्गमहनेत्युपधालोपः होहन्तेरिति कुत्वम् एवम्विधं रामङ्कथन्नावगच्छसि तेन कर्म्मणा सर्व्वलोकविदितत्वादिति भावः॥८१॥

ज॰म॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० दीव्येत्यादि। कथं त्वं राममपि नावगच्छसि न जानासि सर्व्वलोकप्रसिद्धकर्म्मत्वात् तथाहि शितान् वाणान् दीव्यमानं तीक्ष्णैः शरैः क्रीडाशीलं विजिगीषाशीलं वा दिव्युजिगीषेच्छापण द्यूतौ क्रीडागत्योः दिवोधेवेति करणे द्वितीया महतीर्गदाश्रस्य मानं चेप्तुं शक्तं उत्क्षेपणयोग्ये वयसि वर्त्तमानं वा चेप्तुं शीलं यस्येति वा शात्रवान् निघ्नानं निहन्तुं शक्तं सर्व्वत्र शक्तिवयस्ता च्छील्येशतुः शानः हन्तेर्हन्गमित्युङ्लोपे हनोक्तोघ्नः शत्रुरेव शात्रवः स्वार्थे ष्णः॥ ८१॥

कुलकं।

भ्रातरि न्यस्य यातोमां मृगाविन्मृगयामसौ। एषितुं प्रेषितोयातोमया तस्यानुजोवनं॥ ८२॥

ज०भ० भ्रात। यद्येवं कासावित्याह असौ रामोमाम्भ्रातरि न्यस्य अर्पयित्वा मृगयामाखेटकं यातः मृगेः स्वार्थिकोणिच् अदन्तत्वाच गुणो न भवति तदन्तात्कृञ्श्चेति अधिकृत्य परिचर्य्या परिसर्य्या मृगया टाद्यानामुपसङ्ख्यानमिति भावे शप्रत्ययः यक् अल्लोपाभावस्च टाप् मृगान्विध्यतीति मृगावित् कासौ भ्रातेति चेदाह तस्यानुजः कनिष्ठोमया प्रेषितः सन् यातोवनं अनु पश्चाज्जायतइति अन्येभ्योऽपि दृश्यतइति डः अनो कर्म्मण्युक्तमकर्म्मण्यपि भवति किमर्थं एषितुम् तमेव ज्ञातुम् इषुगतावित्यस्य रूपम् ज्ञानार्थत्वात् प्रेषितइति तस्यैव रूपम्॥ ८२॥

भ० भ्रातरीत्यादि। तथापि त्वामेकाकिनीं हित्वा त्यक्त्वा कुतोगत

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



इत्याह असौ रामो मां भ्रातरि न्यस्य समर्प्य मृगयां यातो गतः मृगान् विध्यतीति मृगावित् स कुत्रेत्याह तस्यानुजोऽपि मया प्रेषितः प्रस्थापितः सन् एषितुं ज्ञातुं अर्थाद्रामं वनं गतः सर्व्वे गत्यर्था ज्ञानार्था इति वचनात् इष्यसर्पणइत्यस्य ज्ञानार्थत्वं अनु जातोऽनुजः हनजनादिति डः॥ ८२॥

**अथायस्यन् कषायाक्षः स्यन्नस्वेदकणोल्बणः। स न्दर्शितान्तराकूतस्तामवादीद्दशाननः॥ ८३॥**

अथेति। अथैवमुक्तो जानक्या दशाननस्तामवादीत् उक्तवान् ज॰म॰ आयस्यन् क्रोधाविष्टत्वात् शरीरञ्छेदयन् यसुप्रयत्नइति दैवादिकः परस्मैपदी क्रोधादेव कषायाक्षः वहुव्रीहौ सक्थ्यक्ष्णो रिति षच् स्यन्नैः स्रुतैः स्वेदकणैरुल्वणउद्भटः व्याप्तइत्यर्थः स्यन्दे र्निष्ठायां रूपम् संदर्शितमान्तरमन्तर्गतमाकूतमभिप्रायो येन सएवंविधः॥ ८३॥

अथेत्यादि। अथ तयैवमुक्तो दशाननस्तां सीतामवादीत् भ॰ अजवदेति व्रिः कीदृशः आयस्यन् तद्वाक्यैः क्रोधवशात् शरीरं खेदयन् कषायाक्षः क्रोधेन कषाये अक्षिणी यस्य सतथा सक्थ्यक्ष्णः षः स्वाङ्गे स्यन्नैः स्रुतैः स्वेदकणैरुल्वणः उद्भटः व्याप्तइत्यर्थः स्यन्दूङ्स्रुतौ ऊदित्वाद्वेमत्वे नेमडीश्वीदित्यादिना इमनिषेधः हसुङनलोपोऽणाविति नस्य लोपः रदत्वाद्योदिति क्तस्य दस्य च नः सन्दर्शितं प्रकटीकृतं आन्तरं अन्तर्गतं आकूतमभिप्रायो येन स तथा॥ ८३॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कृते कानिष्ठिनेयस्य ज्यैष्ठिनेयं विवासितं। कोनग्न मुषितप्रख्यं वञ्च मन्येत राघवं ॥ ८४ ॥

ज॰म॰ कृते। कनिष्ठाया अपत्यं ज्येष्ठाया अपत्यमिति स्त्रीभ्योढक् कल्याण्यादीनामिनङ् तयोः कल्याण्यादिषु पठितत्वात् कनिष्ठा सुतस्य भरतस्य कृते निमित्ते ज्येष्ठायाः सुतः निरुपयोगितया विवासितः विसर्ज्जितः विपूर्व्वस्य वसतेर्हेतुमण्ण्यन्तस्य निष्ठायां रूपम् तन्नग्नमुषितप्रख्यं यथा कश्चिन्मुषितोनग्नोभवति तद्भूतं पूर्व्वकालेति सः तस्याः पूर्व्वापरकालत्वात् राजदन्तादित्वात्पर निपातः ईदृशं राघवङ्कोवञ्च मन्येत श्लाघेत नैवेत्यर्थः ॥ ८४ ॥

भ॰ कृतेइत्यादि। कोजनो राघवं वञ्च मन्येत श्लाघेत न को ऽपीत्यर्थः किम्भूतं कानिष्ठिनेयस्य कनिष्ठाया अपत्यस्य भरतस्य कृते निमित्तं ज्यैष्ठिनेयं ज्येष्ठाया अपत्यमपि विवासितं पित्रा परि त्यक्तं राज्याद्वहिष्कृतं वसेर्णिजन्तात्क्तस्य रूपं ततएव लग्नमुषित प्रख्यं यः कश्चित् प्रथमं मुषितोनिराकृतः पश्चाल्लग्नोलज्जितो दिगम्बरीकृतो वा भवति तत्तुल्यं पूर्व्वकालस्यापरकालेनेति कर्म्मधारयार्थं परसूत्रं स्वमते पूर्व्वकालसम्बन्धात् यएव मुषि तः परकालसम्बन्धात् सएव लग्नइत्येकार्थतास्त्येव अभिधानात् पूर्व्वकालीनस्य परनिपातः राजदन्तादित्वादिति परः ज्येष्ठाक निष्ठाभ्यामावन्तत्वात् वाक्काद्यतोऽव्यावादेरिति कृतस्य ष्णायस्य कल्याणीसुभगेत्यादिना इनेयः लग्नेति ओलजङीङ्क्षिये ओदि त्वात् सूल्वाद्योदिति क्तस्य नकारः मग्नवञ्जस्य गत्वं केचित्तु नस्जेर्नस्य निपातनात् तवर्गपञ्चमइत्याङ्कः ॥ ८४ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



राक्षसान् वटुयज्ञेषु पिण्डीशूरान्निरस्तवान्। यद्यसौ कूपमाण्डूकि तवैतावति कः स्मयः॥ ८५॥

राक्ष।अध्वरेष्विष्टिनामित्यस्योत्तरमाह यद्यसौ राक्षसान पिण्डीशूरान् पिण्ड्यामेव शूरान् भोजनेएव शूरान् पात्रेसमितादयश्चेति सः वटुयज्ञेषु कुब्राह्मणयज्ञेषु निरस्तवान् तिरस्कृतवान् हे कूपमाण्डूकि कूपे माण्डूकीव पूर्व्ववत्तः ढक्मण्डूकादिति चकारादण्वापत्ये एतावति स्वल्पे वस्तुनि तव कः स्मयः नैव युज्यते मत्पराक्रमे तु युक्तः तत्रापि मम न युक्तं वक्तुमित्याह॥ ८५॥ ज०म०

राक्षसानित्यादि। अध्वरेष्विष्टिनां पातेत्यस्योत्तरमिदं वटवो ब्राह्मणास्तेषां यज्ञेषु यदि असौ रामः पिण्डीशूरान् पिण्ड्यां भोजनएव शूरान् कार्य्यान्तराक्षमान् राक्षसान् निरस्तवान् तदा एतावति अल्पेऽपि कार्य्ये हे कूपमाण्डूकि तव कः स्मयो गर्व्वः विस्मयोवा मण्डूकस्य भेकस्य स्त्र्यपत्यमिति शिवादित्वात् षण् कूपे माण्डूकी इव एतेनाल्पदृश्वत्वादन्ये वीरास्त्वया न दृष्टा इति ते स्मयइति सूचितं कूपमण्डूकीति पाठे जातेरस्त्रइतीष् कूपमाण्डूकीत्यत्र पिण्डीशूरान् इत्यत्र च पात्रेसमितादित्वात् क्षेपे तत्पुरुषइति परः स्वमते अर्थवशात् क्षेपोगम्यते॥ ८५॥ भ०

मत्पराक्रमसंछिन्नराज्यभोगपरिच्छदः। युक्तं ममैव किं वक्तुं दरिद्राति यथा हरिः॥ ८६॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० मत्प। राज्यभोगादयः परिच्छदोहस्त्यश्वादिः समत्पराक्रमेण संचिप्तोऽपहतोयस्य हरेरिन्द्रस्य सयथा दरिद्राति निरर्थको भवति तन्ममैव किं वक्तुं युक्तमात्मगुणवादस्य लज्जाकरत्वात् दरिद्रातेरादादिकत्वाच्छपोलुक्॥ ८६ ॥

भ० मदित्यादि। मत्पराक्रमेण संचिप्तोऽपहृतो राज्यभोगपरिच्छदोहस्त्यश्वादिर्यस्य तादृशोहरिरिन्द्रोयथा यदि दरिद्राति दुर्गतोभवति तदा किं ममैव वक्तुं युक्तं अपि तु नैवेत्यर्थः आत्मगुणानुवादस्य लज्जाकरत्वात् दरिद्राचलुदुर्गत्यां ॥ ८६ ॥

निर्लङ्कोविमदः स्वामी धनानां हृतपुष्पकः। अध्यास्तेऽन्तर्गिरं यस्मात् कस्तन्नावैति कारणं ॥ ८७ ॥

ज०म० निर्ल। यस्मात् कारणात् धनानां स्वामी धनदः अन्तर्गिरमध्यास्ते अध्यासितवान् गिरेः कैलासस्यान्तर्मध्ये विभक्त्यर्थेऽव्ययीभावः गिरेश्च सेनकस्येति टच् अधिशीङ्स्थासामिति कर्मसंज्ञा तेन तृतीयासप्तम्योर्बहुलमित्यम्भावो न भवति नाव्ययीभावादित्यमेव भवति तत्कारणम्मम पराक्रमस्मां वा कोनावैति न जानाति कीदृशः निर्लङ्कः लङ्कातोनिष्क्रान्तः निरादयः क्रान्ताद्यर्थे पञ्चम्येति सः एकविभक्तिचेत्युपसर्जनसंज्ञायां ह्रस्वत्वम् हृतपुष्पकः हृतं आछिन्नम्पुष्पकाख्यं विमानं यस्य अतएव विमदोऽपि तदर्थः लङ्का पुष्पकञ्च धनदस्यासीत् तच्छित्त्वा अनेन गृहीतमिति ॥ ८७ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



निर्लङ्क इत्यादि। धनानां स्वामी कुवेरः यस्मात् कारणात् अन्तर्गिरं गिरेः कैलासस्यान्तर्मध्यमध्यास्तेऽधिवसति तत्कारणं मत्पराक्रमरूपं कोजनोनावैति अपितु सर्व्वएव जानाति कीदृशः कुवेरः निर्लङ्कः लङ्कायानिष्क्रान्तः पञ्चमीतत्पुरुषः व्यंपूर्व्वमिति निरः पूर्व्वनिपातः निर्गता लङ्का यस्येति वा विमदः विगतोमदो दर्पोयस्य हृतपुष्पकः हृतं पुष्पकं विमानं यस्य ईदृशोऽपि मत्प राक्रमादेवेति भावः अन्तर्गिरमिति सप्तम्यर्थेऽव्ययीभावः झय् नदीपौर्णमास्याग्रहायणीगिरेर्व्वेति पचे अः कर्म्मक्रियेत्यादिना आधारस्य कर्म्मत्वं॥ ८७॥ भ०

भिन्ननौक इव ध्यायन् मत्तोविभ्यद्यमः स्वयं। कृष्णि मानं दधानेन मुखेनास्ते निरुद्यतिः॥ ८८॥

भिन्न। स्वयं साक्षान्मत्तोविभ्यत् त्रस्यन् यमोवैलक्षण्यात् मुखेन कृष्णिमानङ्कृष्णवर्णत्वं वर्णदृढादिभ्यःष्यञ्चेति चकारादिमनिच् दधानेन धारयता इत्थम्भूते तृतीया निरुद्यतिः निरुद्यमः आस्ते उत्पूर्व्वाद्यमेः स्त्रियाङ्क्तिन् अनुनासिकलोपः कीदृशः ध्यायन् चिन्त यन् किम्ममापद्यदद्यमनेन हृतसर्व्वस्वइति भिन्ननौकइव विपन्न पोतवणिगिव उरःप्रभृतिभ्यः कप्॥ ८८॥ ज०भ०

भिन्नेत्यादि। यमः मत्तोविभ्यत् त्रस्यन् स्वयं ध्यायन् चिन्तयन् निरुद्यतिर्निरुद्यमआस्ते स्वयमिति स्वयमेवात्मनोऽसामर्थ्यं जाना ति मत्न्येन बोधितइत्यर्थः कृष्णिमानं कृष्णत्वं दधानेन मुखेन भ०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



उपलचित: विशेषणे तृतीया गुणादिमनभावे भिन्ना विदारिता नौर्यस्य ताट्टशोवणिक् यथा ध्यायति तथा ध्यायन् एकवचनान्तेन नौशब्देन बहुब्रीहौ कइति परः स्वमते स्वार्थे पुंवत्त्वयुक्तपुंस्कइति ज्ञापकात् तस्यकेरिति अस्मदः पञ्चम्यास्तस् युष्मदस्मदोस्त्वाहावित्यादिना मदादेशः गणोक्तकार्य्यस्य बाहुल्यात् त्यदादेरःकाविति अनिषेधः ञिभीलिभीत्यां शटः क्तादीरेद्विः अद्देरित्युक्तेर्न नुण् निरुत्पूर्व्वात् यमः क्तौ वनतनाद्यनिमामिति मलोपः एतेन दिक्पतीनां जयादहमेव सुप्रसिद्धोनतु तथेत्युक्तं ॥ ८८ ॥

समुद्रोपत्यका हैमी पर्व्वताधित्यका पुरी। रत्नपारायणं नाम्ना लङ्केति मम मैथिलि ॥ ८९ ॥

ज०म० एवं। स्वपौरुषमदर्श्य स्वीकर्त्तुमाह समु। हे मैथिलि लङ्केति नाम्ना मम पुरी कीदृशी समुद्रएवोपत्यका आसन्नोयस्याः सा समुद्रोपत्यका समुद्रस्य पर्व्वतोपत्यकात्वात् समुद्रोपत्यकेति समासे साधुत्वन्न भवति यतः संज्ञाधिकारात् पर्व्वतस्यासन्ने अधिरूढे उपाधिभ्यां त्यकन्प्रत्ययान्तयोरुपत्यकाधित्यकाशब्दयोः साधुत्वमुक्तम् प्रतिषेधे त्यकन् उपसंख्यानमिति प्रत्ययस्यादितीकारो न भवति हैमी हेमविकारा प्राणिरजतादिभ्योऽञ् पर्व्वताधित्यका त्रिकूटपर्व्वतस्योपरि स्थिता रत्नपारायणं यत्र रत्नानामपारमवसानमयन्ते बुध्यन्ते तत्परीचकाः सर्व्वरत्नस्थानमित्यर्थः। दुर्गावस्थित्यानभिभवनीयतां रत्नोपचयात् समृद्धताञ्चयन् प्रलोभयति ॥ ८९ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



समुद्रइत्यादि। सम्प्रति सीताप्रलोभनं क्रियते हे मैथिलि लङ्केति नाम्ना ख्याता मम पुरी कीदृशी समुद्रोपत्यका समुद्रस्य उपत्यका समीपे भूमिः पर्व्वतस्य त्रिकूटस्य अधित्यका उपरि स्थिता अध्युपाभ्यां त्यचादित्वात् त्यचाद्यचिरेत्यादिना भवादित्वात् ऊर्द्धासन्नयोस्त्यः ततः स्वार्थे कः स्त्रियामाप् काप्यनाशीरकइत्यादिना चिपादित्वात् न इत्वं उपत्यकाद्रेरासन्ना भूमिरूर्द्धमधित्यका इत्यमरकोषे अद्रेरित्युपलक्षणं समुद्रउपत्यका पर्व्वतासन्नभूमिर्यस्यादिति केचित् एतेन दुर्गमत्वं सूचितं हैमी हेम्नो विकारः विकारसंघेति ष्णः मन्वर्ज्जेत्यादौ विकारष्णवर्ज्जनात् नलोपनिषेधाभावात् न्वोर्लोपौताविति नस्य लोपः रत्नानां पारमवसानं अयन्ते बुध्यन्ते तत्परीचका अत्रेति रत्नपारायणं बहुलनटोघे इति आधारे अनट् स्वभावादजहल्लिङ्गता सर्व्वरत्नस्थानमित्यर्थः यदाह हलायुधः साकल्यवचनं प्राज्ञैः पारायणमुदाहृतमिति॥ ८९॥ भ०

आवासे सिक्तसंमृष्टे गन्धैस्त्वं लिप्तवासिता। अर्पितोरुसुगन्धिस्रक् तस्यां वस मया सह॥ ९०॥

आवासे। तस्यां पुर्य्यां आवासे गृहे आवसत्यस्मिन्निति अधिकरणे घञ् मया सह त्वं वस प्रार्थनायां लोट् सिक्तसम्मृष्टे पूर्व्वं सिक्ते पश्चात्सम्मृष्टे गन्धैर्लिप्तवासिता सती पूर्व्वं लिप्ता चन्दनादिभिर्गन्धैः पश्चाद्वासिता धूपिता सम्मृष्टादिभिः पूर्व्वकालेत्यादिना जं०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



सः अर्पिता न्यस्ता उर्व्वी महती सुगन्धिस्रक् सुरभिमाला यस्यां सा त्वं किमिति त्वया सह वसामीति चेदाह ॥ ९० ॥

भ० आवासइत्यादि। तस्यां पुर्य्यां आवासे गृहे मया सह त्वं वस प्रार्थनायां लोट् पूर्व्वं सिक्ते पश्चात् संमृष्टे शोधिते सिक्तसंमृष्टे गन्धै श्चन्दनादिभिर्लिप्तवासिता पूर्व्वं लिप्ता पश्चाद्वासिता धूपैः उभ यत्र पूर्व्वपरकालसम्बन्धादेकार्थत्वेन कर्म्मधारयः गन्धयतीति गन्धश्चन्दनादिः वासिता करिणी नार्य्यांर्वासितं सुरभीकृते। ज्ञा तमात्रे खगारावे वासितं वस्त्रवेष्टितइति विश्वः अर्पिता न्यस्ता उर्व्वी महती सुगन्धिः सुरभिः स्रक् माला यस्यां तादृशी च सती सूत्सुरभिपूतेरित्यादिना गन्धादिप्रत्ययः ॥ ९० ॥

सङ्गच्छ पौंस्नि स्त्रैणं मां युवानं तरुणी शुभे। राघ वः प्रोष्यपापीयान् जहीहि तमकिञ्चनं ॥ ९१ ॥

ज०म० सङ्ग। हे पौंस्नि पुमांसमर्हति तद्धिताय वा अर्हार्थे हितार्थे वा स्त्रीपुंसाभ्यान्नञ्स्नञौ स्त्रीप्रत्यये नञ्स्नञीकक्तरुणतलुनाना मुपसंख्यानमिति मां युवानन्तरुणं सङ्गच्छ अङ्गीकुरु गमेः प्रार्थ नायां लोट् इषुगमीत्यादिना छत्वम् समोगम्यृच्छेत्यादिना तङ् न भवति सकर्म्मकत्वात् विशेषतः स्त्रैणं स्त्रियै हितमर्हन्तं वा पूर्व्व वत्प्रत्ययः तरुणी युवती सती शुभे कल्याणि शोभतइति इगुपध लक्षणः कः ममापि तादृशोभर्त्तास्तीति चेदाह राघवः प्रोष्यपा पीयानिति पापशब्दाद्विन्मतोर्लुगिति ईयसुन् लुक् मतुपः प्रोष्य पापीयानिति मयूरव्यंसकादित्वात्सः देशान्तरं यात्वा पापव

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



त्तर: अतएतमकिञ्चनन्दरिद्रं न विद्यते किञ्चन यस्येति सर्व्व नामाव्ययसंज्ञायाउपसर्जनप्रतिषेधइति वचनान्नाव्ययसंज्ञा तेन न विभक्तिलोप: जहीहि त्यज ईत्वस्य जहातेश्चेति वा वचनाद्वि कल्प: ॥ ९१ ॥

सङ्गेत्यादि ॥ हे पौंस्नि हे पुरुषयोग्ये पुरुषहिते वा हे शुभे भ० कल्याणि तरुणी त्वं स्त्रैणं स्त्रीयोग्यं स्त्रीहितं वा युवानं मां सङ्गच्छ अङ्गीकुरु विधिनिमन्त्रणेत्यादिना प्रार्थनायां गी सदृशयोरावयोर्योगउचितइति भाव: स्त्रीपुंसाभ्यां विकारसंघेत्यादिना ष्ण: नञ्पुंस्त्रियो: तरुणशब्दान्नदादित्वादीप् शोभतेइति शुभा इगुपधत्वात् ज्ञाप्रीजुङइति क: ममापि ईदृशोभर्त्तेति चेत् आह राघव: प्रोष्यपापीयान् देशान्तरं गत्वा पापवत्तर: पापवत् शब्दात् गुणादेष्ठेयस्विति ईयसु: लुक्तद्धितलुकिनामिति वतोर्लुक् ओमस्वडिदिति डित्वात् टेर्लोप: मयूरव्यंसकादित्वाच्च समास इति पर: स्वमते गमकत्वात् असमासत्वेऽपि न चति: तमकिञ्चनं दरिद्रं जहीहि त्यज किञ्चनेत्यव्ययेनापि समासे मयूरव्यंसकादित्वेन निपातनात् वाच्यलिङ्गतेति पर: नञ् तत्पुरुषादर्शआदित्वादित्यन्ये न विद्यते किञ्चनमस्येति बहुव्रीहौ नाव्ययकार्य्यमिति केचित् स्वमते द्रविणे किञ्चनं क्लीवइति कोषादनव्ययेन किञ्चनशब्देन समास: वस्तुतोऽप्येवमकिञ्चनशब्दोनिर्धनवाची वाच्यलिङ्ग: तथाच कोष: नि:स्वाकिञ्चनदुर्व्विधाइति स्वाद्योरित्यादिना हाकइत्वं ॥ ९१ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अश्नीतपिवतीयन्ती प्रसिता स्मरकर्म्मणि। वशेकृत्य दशग्रीवं मोदस्व वरमन्दिरे॥९२॥

ज॰म॰ अश्नी। अश्नीत पिवतेति मयूरव्यंसकादित्वात्: तत्र ह्याख्यात माख्यातेन क्रियासातत्य इति पठ्यते सततमश्नीतपिवतेत्येवम्भृत्य जनानादेष्टुमिच्छतीति सुपश्चात्मन: क्यच् अश्नीतपिवतीयन्ती प्रसिता स्मरकर्म्मणि आधिक्येन प्रवृत्ता कामव्यापारे प्रसितोत्सुका भ्यान्तृतीया चेति चकारात्सप्तमी वशेकृत्यानुवर्त्तिनन्दशग्रीवङ्कृत्वा साचात्प्रभृतित्वाद्गतिसंज्ञा मोदस्व हर्षञ्जनय वरमन्दिरे श्रेष्ठगृहे स्थिता॥९२॥

भ॰ अश्नीत्यादि। दशग्रीवं वशेकृत्य आयत्तीकृत्य वरमन्दिरे श्रेष्ठ गृहे त्वं मोदस्व हर्षं जनय वशेइति सप्तम्यन्तप्रतिरूपकोऽव्यय: हस्तेपाणावित्यादिना साचादादित्वात् समास: कीदृशी अश्नीत पिवतेति भृत्यजनानादेष्टुमिच्छन्ती अश्नीतपिवतेति सततं नियोगो यस्यां क्रियायां सा अश्नीतपिवता दैक्यं सोऽन्चयइति समास: तत्र हि सामान्यत्वात् पदमात्रस्यैव ग्रहणं तेन क्वचित् स्याद्य न्तस्य क्वचित्त्याद्यन्तस्य क्वचिदुभयस्य चैक्यमिति लब्धं त्याद्यन्त स्यान्यप्रत्ययान्तत्वाभावेऽपि समासे अन्यपदार्थत्वात्लिङ्गत्वं तेनात्र क्रियायाविशेषणार्थत्वात् स्त्रियामतश्चाप् कोर्लुकृत्येचेत्यत्र स्यादि केरेव ग्रहणमभिधानात् तेन त्यादिकेर्न लुक् निपातनाद्रूप सिद्धिरिति परे अश्नीतपिवतामिच्छतीति क्य: स्मरकर्म्मणि काम चेष्टायां प्रसिता तत्परा प्रसितोत्सुकाभ्यां तात्पर्य्ये तृतीया

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



सम्यगावितिपरः सहते विषयविवक्षा षिञवन्धने क्तः॥ ९२॥

मास्म भूर्ग्राहिणी भीरु गन्तुमुत्साहिनी भव। उल्ला सिनी च भूत्वा मे वक्षःसम्मर्द्दिनी भव॥ ९३॥

मास्म। हे भीरु मास्म भूर्ग्राहिणी प्रतिकूला माभूः न यास्या जं०म० मीत्यमुमर्थङ्गृह्णामीति कृत्वा स्मोत्तरे लङ्चेति चकारात् लुङ् गन्तुमुत्साहिनी उद्युक्ता भव शकधृषेत्यादिना तुमुन् उत्साहि नीति सहोपपदत्वात् ततस्त्वालङ्कृतशरीरत्वादुल्लासिनी शोभमा ना भूत्वा नोऽस्माकं वक्षःसम्मर्द्दिनी स्तनाभ्यामुरस्थलस्य पीडिका भव ग्रहोत्साहोल्लाससम्मर्दानाङ्ग्रहादिषु पठितत्वात् कर्त्तरि णिनिः ऋन्नेभ्योङीप्॥ ९३॥

मास्मत्यादि। हे भीरु ग्राहिणि प्रतिकूलार्थग्राहिणि त्वं मास्म भ० भूः न भव गन्तुमुत्साहिनी उद्युक्ता भव उल्लासिनी गत्वालङ्कारा दिभिः शोभमाना भूत्वा नोऽस्माकं वक्षःसम्मर्द्दिनी स्तनाभ्यामुर स्थलस्य पीडिका भव सर्व्वत्र ग्रहादित्वात्मिन् चकारः समुच्चये अस्मदएकत्वे वहुत्वमभिधानात् गौरवव्यञ्जकं॥ ९३॥

तां प्रातिकूलिकीं मत्वा जिहीर्षुर्भीमविग्रहः। वाहु पपीडमाश्लिष्य जगाहे द्यां निशाचरः॥ ९४॥

तान्त्रा। यदैवमभिधीयमाना न प्रतिपन्ना तदा तांप्रातिकू जं०म० लिकीम्प्रतिकूलवर्त्तिनीं मत्वा ज्ञात्वा ओजःसहाम्भसा वर्त्तत

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



इत्यधिकृत्य प्रतिकूलं वर्त्ततइत्यस्मिन्नर्थे तत्प्रत्यनुपूर्व्वेत्यादिना ठक् जिहीर्षुः हर्त्तुमिच्छुः भीमविग्रहः भीषणशरीरः दृष्टराक्षस शरीररूपः सुखेन ह्रियतइति वाहूपपीडमाश्लिष्य वाहुभिरुपपीड्य सप्तम्याञ्चोपपीडइति चकारात् तृतीयान्तउपपदे णमुल् जगाहे रथेनोत्पत्य द्यामाकाशन्निशाचरोगाहते स्म दिवशब्दसमानार्थोद्योशब्दश्चौणादिकः गमेर्डोइत्यच द्युतेश्चेति वचनात् श्चौतोऽम्शसोरित्यात्वं कालापैस्तु दिव्शब्दादेव व्युत्पादयितुं सूत्रमवधीयते वाम्येति दिव अमि विकल्पेनाकारादेशइति ॥ ९४॥

भ० तामित्यादि। उक्तवाक्यानङ्गीकारात् तां सीतां प्रातिकूलिकीं प्रतिकूलवर्त्तिनीं मत्वा जिहीर्षुर्हर्त्तुमिच्छुर्निशाचरोरावणो भीमविग्रहोभयङ्करमूर्त्तिः सन् वाहूपपीडं वाहुभिरुपपीड्य आश्लिष्य तां गृहीत्वा द्यामाकाशं जगाहे गाहङ्‌विलोडे गतवानित्यर्थः तृतीयान्तादुपपीडोणमिति परः स्मृते वाहुभ्यामुपपीडः पीडनं यत्रेत्याश्लेषक्रियाविशेषणं उपपीडोघञन्तः द्यामिति द्योशब्दस्य दिव्शब्दस्य वा अमि रूपं प्रतिकूलं यथा स्यात्तथा वर्त्ततइति क्रियाविशेषणस्य कर्म्मत्वात् ढघेकादिति ष्णिकः॥९४॥

त्रस्यन्तीं तां समादाय यातोरात्रिञ्चरालयं। तूष्णीं भूय भयादासाञ्चक्रिरे मृगपक्षिणः॥ ९५॥

ज०म० त्रस्य। त्रसन्तीं च तां तद्रूपदर्शनात् समादाय गृहीत्वा याती गच्छतोरावणात् यातेः शतरि पञ्चम्यां रूपम् किम्भूतो

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



रात्रिञ्चरालयं लङ्कां रात्रौ चरतीति चरेष्टः रात्रेःकृतिविभाषेति मुम् तस्माद्रावणाद्यत् भयन्ततोभयात् तूष्णींभूय तूष्णीमि भुवइति क्ताचेति समासे ल्यवादेशः आसाञ्चक्रिरे आसिताः दयायासश्चेत्याम् मृगपक्षिणः मृगाश्च पक्षिणश्च समानजातीयानामिति वचनादेकवद्भावोऽत्र न भवति ॥ ९५ ॥

त्रस्यन्तीमित्यादि। त्रस्यन्तीं बिभ्यतीं तां सीतां समादाय गृहीत्वा रात्रिञ्चरस्यालयं लङ्कां याते गच्छतो रावणाद्भयात् मृगाश्च पक्षिणश्च तूष्णींभूय मौनिनोभूत्वा आसाञ्चक्रिरे स्थितवन्तः आसङ्उपवेशे इजादीत्याम् भस्कृञ्चामः यातइति शत्रन्तं रात्रौ चरतीति पचादित्वादन् रात्रेर्मन्वाकृति तूष्णीमित्यव्ययं मौनार्थे वर्त्तते व्यस्वग्यनुकारइत्यादिना ऊर्य्यादित्वात् समासे क्तायप् ॥ ९५ ॥

उच्चैरारस्यमानां तां कृपणां रामलक्ष्मणौ। जटायुः प्राप पक्षीन्द्रः परुषं रावणं वदन् ॥ ९६ ॥

एते प्रकीर्णकाः।

उच्चैः। तां सीताञ्जटायुः पक्षीन्द्रः रावणम्परुषन्निष्ठरं वदन् प्राप प्राप्तवान् कीदृशीं उच्चैरारस्यमानां हा राम हा लक्ष्मणेति शब्दौ द्वौ उच्चैर्महता ध्वनिना पुनःपुनारसन्तीमित्यर्थः रसेः शब्दकर्म्मकत्वात् क्रियासमभिहारेयङ् कृपणान्दीनाम् इति प्रकीर्णकाण्डः प्रथमः समाप्तः ॥ ९६ ॥

उच्चैरित्यादि। उच्चैर्यथा स्यात्तथा रामलक्ष्मणौ रारस्यमानां



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



हा राम हा लक्ष्मणइति पुनःपुनराक्रयमानां कृपणां दीनां सीतां जटायुः पक्षिराजः प्राप रावणं परुषं निष्ठुरं वदन् वदिर्द्विकर्म्मकः रसशब्दे मूत्रसूत्रेत्यादिना यङ्। इति गौराङ्गमल्लीकपुत्रोभरतमल्लिकः। प्रकीर्णकाण्डव्याख्यानं मुग्धबोधमतेऽकरोत् ॥ ९६ ॥

## अतःपरं टाधिकारः ॥

द्विषन् वनेचराग्र्याणां त्वमादायचरोवने। अग्रेसरोजघन्यानां माभूः पूर्व्वसरोमम ॥ ९७ ॥

ज०म० इतः परमधिकारकाण्डमुच्यते यत्र प्राधान्येनैकैकमधिकृत्य लक्षणप्रदर्शितम् तदधिकारकाण्डम् शेषलक्षणेषु प्रकीर्णकमेव द्रष्टव्यम् एवञ्च कृत्वा अन्तरान्तरा तत्सूचनार्थम्प्रकीर्णकश्लोकाभिधानमत्र च काण्डे निर्द्दिष्टसंज्ञकाश्चत्वारः परिच्छेदाः तत्र प्रथमे आद्यं टप्रत्ययमधिकृत्योच्यते सर्गार्थस्य विवक्षितस्यापरिसमाप्तत्वात् तमेवाभिसंन्धायाह। द्विषन्नित्यादि। एवञ्च कृत्वा मिश्रकउच्यते द्वयोरप्यत्र प्राधान्येन विवक्षितत्वात् परुषं वदन् कीदृशं हे द्विषन्माभूः पूर्व्वसरोममेति ममाग्रतोभूत्वा मागा इत्यर्थः पूर्व्वं सरतीति पूर्व्वे कर्त्तरीति टः यतस्त्वमग्रेसरोजघन्यानामग्रेसरतीति पुरोग्रतइत्यादिना टः जघन्यइति शाखादिभ्योयइतीवार्थे यः पापानाम्प्रथमस्त्वम् कुतः आदायचरोवने आदाय चरतीति भिक्षासेनेत्यादिना वने चरन्तीति वनेचराः

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अधिकरणे चरेष्टः तेषामग्र्याः प्रधानास्तेषय: तानादायचरसि भचयसि कर्म्मणि षष्ठी॥ ९७॥

इतः प्रभृत्यधिकारकाण्डमुच्यते एकैकं विषयमाश्रित्य लक्षण प्रदर्शनं यत्र तदधिकारकाण्डं तत्रापि लक्षणान्तरसम्बन्धात् प्रकीर्णतास्तीति सूचनार्थं मध्ये मध्ये प्रकीर्णश्लोकाभिधानं विवक्षितस्य सर्गार्थस्यापरिसमाप्तत्वात् सर्गमध्ये काण्डान्तरारम्भेन दोषाय एवञ्चायं सर्गो मिश्रकउच्यते द्वयोरप्यत्र प्राधान्येन विवक्षितत्वात्। अथ टाधिकारः। द्विषन्नित्यादि। परुषं वदन्तीति यदुक्तं तत्किमित्याह हे वनेचराग्र्याणां मुनीनां द्विषन् शत्रो त्वं मम पूर्व्वसरोऽग्रयायी माभूः यतस्त्वं जघन्यानां नीचानां अग्रेसरः प्रथमः वने आदाय गृहीत्वा अर्थात् सीतां चरसि गच्छसीति आदायचरः द्विषन्निति द्विषः शत्रौ शतुरिति परः समते द्विषच्छब्दः शत्रुवाचित्वे रूढएव विद्वेषार्थे तु कीपमवदिति शतृः उभयथा सम्बन्धे षष्ठी वने चरतीति पचादित्वादन् अभिधानात् सप्तम्यलुक् अग्रेभवोऽग्र्यः श्रेष्ठउच्यते रेफान्तपाठेऽग्रशब्दएव श्रेष्ठार्थः तथाच। अग्रमालम्बने व्राते परिमाणे पलस्य च। प्रान्ते समन्तादधिके प्रधाने प्रथमार्थयोरिति विश्वः। दामागैहागित्यादौ यव्वर्ज्जनात् न दाञ्दत्वं चरेः पूर्व्ववदन् गमकत्वात् दत्तार्घाः सिद्धसंघैरितिवत् क्रियायाः कारकापेक्षायामपि यवन्तेन समासः अविवक्षितकर्म्मत्वात् सापेक्षत्वाभावेन वा समासः असमासेऽपि न क्षतिः मयूरव्यंसकादित्वात् सापेक्षत्वेऽपि समासइति परः अग्रे इत्येकवचनान्तमव्ययं स्तकु

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ष्टइति टः जघनं पश्चाद्भागः तत्तुल्योजघन्यः विकारसंघेत्यादिना तुल्यार्थे घ्यः॥ ९७।

यशस्करसमाचारं ख्यातं भुवि दयाकरं। पितुर्वाक्यकरं रामं धिक्त्वां दुन्वन्तमत्रपं॥ ९८॥

ज॰म॰ यश। रामन्दुन्वन्तमुपतापयन्तमत्रपन्निर्लज्जन्धिक् त्वां गर्हां टुदुउपतापे इत्यस्य स्वादिकस्य शतरि हुश्नुवोःसार्व्वधातुक इति यणादेशे रूपम् कीदृशं रामं यशस्करसमाचारं समाचरणं समाचारः चरितं भावे घञ् यशस्करोतीति यशस्करः कृञोहेत्वित्यादिना टः विसर्ज्जनीयस्य सः यशस्करणहेतुभूतः समाचारोयस्य ख्यातम्भुवि प्रसिद्धन्दयाकरङ्करुणाकरणशीलं ताच्छील्ये टः पितुर्वाक्यकरम्पितुर्वचनानुष्ठाने अनुकूलं आनुलोम्ये टः॥ ९८॥

भ॰ यशस्केत्यादि। रामं दुन्वन्तं उपतापयन्तं अत्रपं परस्त्रीहरणेन निर्लज्जं त्वां धिक् धिक्समयेत्यादिना द्वी टुदुउपतापे स्वादित्वात् शतरि नुःश्नुध्वोरिति वः रामं कीदृशं यशस्करः समाचारोयस्य तं यशःकरोतीति स्तकुष्टइति टः अत्र ढात्ष लिति सूत्रात् ढादित्यनुवर्त्तते सेतुकखेति वेः सः कृञोहेत्वादावर्थे टइति परः स्मरते यशस्करी विद्येति निर्द्दिशता विद्याया यशस्करणे हेतुत्वात् हेत्वाद्यर्थः सूचितः अन्यथा विद्येति ग्रहणस्य वैयर्थ्यं स्यात् हेत्वाद्यर्थानुक्तावपि न क्षतिः सम्यगाचरणं

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



समाचारस्तेष्टा घञ्ऽलनटोऽघे इति घञ् भुवि ख्यातं दयाकरणशीलं पूर्व्ववट्टः परमते ताच्छील्यार्थेऽपि पितुर्व्वाक्यानुष्ठानेऽनुकूलं पूर्व्ववट्टः परमतेऽनुकूलार्थेऽपि वाक्यशब्देनाच तदभिधेयमुच्यते॥ ९८॥

अहमन्तकरो नूनं ध्वान्तस्येव दिवाकरः। तव राक्षस रामस्य नेयः कर्म्मकरोपमः॥ ९९॥

अहम्। हे राक्षस अहन्तव नूनमवश्यमन्तकरः विनाशयिता ज०म० कीदृशः रामस्य नेयो वश्यः अचो यत् कर्म्मकरोपमः भृतकतुल्यः कर्म्मणि भृताविति टः ध्वान्तस्येव दिवाकरः यथान्धकारस्यान्तकरो दिवाकरः सूर्य्यः तथा अन्तकरदिवाकरौ दिवाविभेति टप्रत्ययान्तौ एवमुक्त्वा खम्पपातेति सम्बन्धः॥ ९९॥

अहमित्यादि। हे राक्षस नूनं निश्चितं अहं तव अन्तकरः भ० नाशयिता अन्तं करोतीति टः यथा दिवाकरः सूर्य्यो ध्वान्तस्य अन्धकारस्य अन्तकरः दिवाशब्दोऽयमाधारस्वपदिनवचनोऽव्ययः तेन दिवा दिवसे प्राणिनश्चेष्टायुक्तान् करोतीति निशादिवाद्विति परः स्वमते दिवाशब्दोऽयमव्ययः सप्तम्यन्तत्वं प्रायिकं तेन दिवा दिनं करोतीति पूर्व्ववट्टः वाऽऽख्यादा दिवा दिवसे करोति रश्मिर्यस्य इति केचित् ध्वान्तमिति ध्वनेस्तमसि क्ते क्षुब्धस्वाढ इत्यादिना निपातः अहं कीदृशः रामस्य नेयः वश्यः वश्यः प्रणेयो निभृत इत्यमरः कर्म्मकरोपमः भृतकतुल्यः कर्म्म करोतीति टः कर्म्मशब्दाद्भृतौ ट इति परः॥ ९९॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



सतामरुष्करं पक्षी वैरकारं नराशिनं। हन्तुं कल
हकारोऽसौ शब्दकारः पपात खं ॥ १०० ॥

इति टाधिकारः ॥

ज०म० सता। एवमुक्त्वा असौ जटायुः पक्षी खमाकाशमपपात पतितः किमर्थं नराशनं राक्षसं हन्तुं हनिष्यामीति कीदृशं राक्षसं सतामरुष्करं धर्मे स्थितानामपीडाकरम् अरुःशब्दः पीडोपलक्षणपरः दिवाविभेति टः वैरकारं वैरकरणशीलं कलहकारः पक्षी कलहयितुमनुकूलः अनयोर्नशब्दश्लोकेति टे प्रतिषिद्धेऽणेव भवति कर्मण्यणः प्राप्तिरस्तीति टाधिकारउदाहृतः कियत्खमपपात यावति दूरे शब्दपातस्तावत्खमिति टाधिकारः समाप्तः ॥ १०० ॥

भ० सतामित्यादि। एवमुक्त्वा असौ पक्षी जटायुर्नराशिनं राक्षसं हन्तुं खमाकाशं पपात जगाम कीदृशं राक्षसं सतां साधूनामरुष्करं व्रणकरं पीडाकरमित्यर्थः पूर्ववट्टः निष्पतन्त्य इतिवत् षत्वं वैरं विरोधं करोतीति वैरकारस्तं ढातषमित्यस्य कुम्भकार इत्युदाहरणेन कुम्भादेः कृञः षण् अन्यस्मात् स्टकुष्टइत्यस्य विषयइति सूचितं तेनात्र कुम्भादित्वात् षण् पक्षी कीदृशः कलहकारः कलहं करोतीति पूर्ववत् षण् एवं शब्दकारः शब्दपातमिति पाठे शब्दस्य पातोऽयनेति खविशेषणं यावद्दूरं शब्दगमनं तावद्दूरमित्यर्थः शब्दस्येव पातो गतिर्यत्रेति पतनक्रियाविशेषणं वा एतेन यथा शब्दस्य शीघ्रगमनं तथास्येति ध्वनितं इति। टाधिकारः ॥ १०० ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



## अतः परं प्रकीर्णकाः ॥

धुन्वन् सर्व्वपथीनं खे वितानं पक्षयोरसौ । मांस
शोणितसन्दर्शं तुण्डघातमयुध्यत ॥१०१ ॥

इतः प्रकीर्णकश्लोकानाह । धुन्वन्नित्यादि । असौ पक्षी अयुध्यत  ज॰म॰
युध्यते स्म युधेर्द्दिवादिकस्य लङि रूपम् तुण्डघातमिति क्रियाविशे
षणम् तुण्डेन चञ्च्वाघातो हननं यस्मिन् युद्ध इति करणे हन
इति न णमुल् कषादिषु यथाविध्यनुप्रयोगात् अहिंसार्थत्वाच्च
तदारम्भस्य यथा पादघातम्भूमिं हन्तीति हिंसार्थानाञ्च समान
कर्म्मकाणामित्यनेनापि न भवति समानकर्म्मकताभावात् अकर्म्म
कत्वाद्युधेः तेन भावे घञ् धुन्वन् कम्पयन् खे आकाशे पक्षयोर्विता
नं सर्व्वपथीनं सर्व्वः पन्था इति पूर्व्वकालेत्यादिना सः ऋक्पूरिति
समासान्तोऽकारः सर्व्वपथान् व्याप्नोतीति तत्सर्व्वादेरित्यादिना
खः मांसशोणितसन्दर्शङ्कात्स्न्येन मांसं शोणितञ्च दृष्ट्वा कर्म्मणि
दृशिविदोः साकल्यइति णमुल् अमैवाव्ययेनेति सः ॥१०१ ॥

अथ प्रकीर्णकाः । धुन्वन्नित्यादि । असौ जटायुः खे आकाशे  भ॰
पक्षयोर्व्वितानं विस्तारं धुन्वन् कम्पयन् मांसशोणितसन्दर्शं यथा
स्यात् तुण्डघातं यथा स्यात् तथा अयुध्यत युधोऽयुद्ध मांसरक्त
योरर्थाद्रावणस्य सम्यग्दर्शो दर्शनं यत्र तुण्डस्याघातो यत्र चेति
युद्धक्रियाविशेषणं दृशघातौ घञन्तौ परे तु साकल्येन मांसं शो
णितञ्च दृष्ट्वा रावणस्येत्यर्थात् दृशोणमसाकल्ये एवं तुण्डेन हत्वा
तुण्डघातं तृतीयान्तादासक्तौ णम् तुण्डघातेन युद्धसम्भवादा

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



सक्तिरत्र गम्यतइत्याङः वितानं कीदृशं सर्व्वश्चासौ पन्थाश्चेति सर्व्वपथः पथ्यप्युरःसे इति अः सर्व्वपथं व्याप्नोतीति ढघेकादिति ईनः॥ १०१॥

न विभाय न जिह्राय न चक्लाम न विव्यथे। आघ्नानोविध्यमानोऽपि रणान्निववृते न च॥ १०२॥

ज०म० नवि। आघ्नानः पक्षी प्रहरन् आङोयमहनइति तङ् न विभाय न भीतः तस्मान्न जिह्राय न लज्जितः सम्यङ्मया न हत इति न चक्लाम न क्लान्तः न विव्यथे व्यथोलिटीति सम्प्रसारणम् जितश्रमत्वात् विध्यमानोवा वाशब्दश्चार्थे परेण हन्यमानस्य न विव्यथे न पीडां भेजे सत्वाधिकत्वात् रणाच्च न निववृते न निवृत्तः अभग्नोत्साहत्वात्॥ १०२॥

भ० नवीत्यादि। असौ पक्षी आघ्नानः प्रहरन् न विभाय न भीतः मया ताडितोऽपि न मृतइति न जिह्राय न लज्जते स्म न चक्लाम नासमर्थोवभूव न विव्यथे न पीडितो भवति स्म विध्यमानः परेण ताड्यमानोऽपि रणात् न निववृते न निवृत्तः अभग्नोत्साहत्वात् सर्व्वत्र ठी व्यथेस्तु व्यथग्रहेति जिः आघ्नानइति आत्माङढादढाचाहनयमइति मं किम्वा आघ्नानः शत्रुहिंसनशक्तः शक्तिवयस्ताच्छील्ये इति शानः॥ १०२॥

पिशाचमुखधौरेयं सच्छन्नकवचं रथं। युधि कद्रथवद्भीमं वभञ्ज ध्वजशालिनं॥ १०३॥

एते प्रकीर्णकाः।

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



पिशा। युधि सङ्ग्रामे पक्षी रथं बभञ्ज भग्नवान् तस्य पुष्पका दन्यत्वात् तथाहि कद्रथवत् कुत्सितरथमिव रथवदयोश्चेति कदादेशः धुरं वहन्ति धौरेयाश्वाः धुरोयढञौ पिशाच स्येव मुखं येषान्ते धौरेयायत्र रथे तम्पिशाचमुखधौरेयं सच्छो भनं शस्त्रं कवचञ्च यस्मिन् तम्भीमम्भयानकन्तथा धुर्य्यत्वात् ध्वज शालिनं ध्वजवन्तं शालिन्छब्दः किन्प्रत्ययान्तस्तद्दन्तमाह अन्य स्त्वाह ध्वजेन शालितुं श्लाघयितुं शीलमस्येति णिनिः अनेकार्थ त्वाद्धातूनामिति। एते प्रकीर्णकाः।॥ १०३॥ जं०म०

पिशाचेत्यादि। जटायुः युधि संग्रामे रावणस्य रथं बभञ्ज कद्रथवत् कुत्सितरथमिव कत्कचत्रिरथवदद्दति कुशब्दस्य क दादेशः कीदृशः पिशाचस्येव मुखं येषां तेऽश्वाधौरेयायत्र धुरं वहतीत्यर्थे ढघेकादिति ष्णेयः सत् शोभनं विद्यमानं वा छत्रं कवचं वा यस्मिन् छत्रकवचाभ्यां सह रथं बभञ्जेत्यर्थोवा भीमं भयानकं ध्वजशालिनं ध्वजयुक्तं शालिनच्छब्दस्तद्दत्तार्या अस्त्यर्थे शालिन् प्रत्ययद्दति वृद्धाः ध्वजेन शलते शोभते ग्रहादि त्वाणिन् धातूनामनेकार्थत्वात् शालिरत्र दीप्त्यर्थंद्दति केचित् ध्वजेन शाडयितुं शीलं यस्येति डलयोरैक्यमिति स्मरणात् शाडृ श्लाघायामित्यस्य रूपमित्यपरे शलङ्कश्लाघद्दत्यस्मात् ङम्भात् कथनेद्दत्यस्माद्वा ञेर्णिन्निति केचित्। द्दति प्रकीर्णकाः॥ १०३॥ भ०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



## अतःपरं आमधिकारः ।

संत्रासयाञ्चकारारिं सुरान् पिप्राय पश्यतः । संत्याजयाञ्चकाराथ सीतां विंशतिबाहुना ॥ १०४ ॥

ज०म० इतःप्रभृत्याममधिकृत्याह सन्त्रा। अथैतस्मिन्युद्धप्रस्तावे स पक्षी सीतां विंशतिबाहुना रावणेन त्याजयाञ्चकार त्याजितवान् गत्यादिषु त्यजेरसङ्ग्रहात् तृतीयैव भवति कस्मात्त्याजितवानित्याह सन्त्रासयाञ्चकारारिं यस्मादरिं रावणन्त्रासितवान् अकर्म्मकत्वात् त्रासेर्ण्यन्तावस्थायामरेः कर्म्मत्वम् आभ्यां हेतुमण्णन्ताभ्याम् कास्प्रत्ययादित्यादिना आम् आमोऽमित्वमव्ययत्वात् आमइति लेर्लुक् अयामन्तेत्यादिना अयादेशः आमकारान्तस्य कृत्संज्ञायाम्प्रातिपदिकत्वे प्रथमैकवचनम् तस्यायादिति लुक् स्वरादिषु आमआमिति पठितत्वादव्ययत्वम् मन्तस्यानभिव्यक्तपदार्थत्वात् कृञ्चानुप्रयुज्यतइत्यादिना लिट् परस्य कृञोऽनुप्रयोगः कर्त्रभिप्रायाभावाभावेऽनुप्रयोगे तङ् न भवति सुरांश्च पश्यतोयुद्धञ्जटायुः पिप्राय प्रीणितवान् शत्रुत्रासनं सीतात्याजनञ्च देवानाम्प्रीतेः कारणम् ॥ १०४ ॥

भ० अथामधिकारः । संत्रेत्यादि स पक्षी अरिं रावणं सम्यक् त्रासयाञ्चकार अतएव पश्यतोयुद्धमवलोकयतः सुरान् देवान् पिप्राय प्रीणितवान् अथ त्रासानन्तरं विंशतिबाहुना रावणेन सीतां संत्याजयाञ्चकार त्यजेर्णौऽणौकर्तेरित्यस्य विषयाभावात् प्रयोज्यकर्त्तरि तृतीया त्रसेरकर्म्मकत्वात् प्रयोज्यकर्त्तुः कर्म्मत्वं उभयत्र प्रत्ययान्तत्वात् ण्विजादीत्याम् भ्यस्कृन्वामइति कृञो

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ऽनुप्रयोगः मोनुरित्यनुस्वारः अपेअमनोरिति अः अत्र विरा मस्त्रीकारात् अनुस्वारस्य वर्गान्तोवा भवतोति काशापाः पिप्रा येति अनेकाचधातोराम् नवेकाचद्रत्युपन्यस्तं विंशतिवाङ्गना इति साभिप्रायपदेन रावणस्य त्रासाधिक्यं जटायोर्व्वीर्य्याधिक्य ञ्च सूचितं ॥ १०४ ॥

असीतो रावणः कासाञ्चक्रे शस्त्रैर्निराकुलः। भूय स्तं वेभिदाञ्चक्रे नखतुण्डायुधः खगः॥ १०५ ॥

असी। असीतः परित्यक्तसीतोरावणः आकाशस्थः कासाञ्चक्रे ज०म० कुत्सितमभिहितवान् एह्येहीति विहगाधिपेति कासृशब्दकुत्सा यामित्यनुदात्तेत्कासित्यादिना आम् शस्त्रैः इत्थम्भूते तृतीया निराकुलः पूर्व्वमाकुलः सीताग्रहणे व्याकुलत्वात् भूयः पुनरपि खगः पक्षी डप्रकरणे अन्येष्वपि दृश्यतइति वचनात् गमेर्डः तन्नि शाचरं वेभिदाञ्चक्रे अत्यर्थम्भिन्नवान् वेभिद्यतेर्यङन्तादाम् नख तुण्डान्येवायुधानि यस्य ॥ १०५ ॥

असीत्यादि। असीतस्त्यक्तसीतोरावणः आकुलः सन् शस्त्रैः भ० कासाञ्चक्रे शुशुभे कासृकुशब्दे धातूनामनेकार्थत्वात् अत्र दीप्त्यर्थः दीप्त्यर्थोऽपि दन्त्यान्तकासृङ्धातुरस्तीति केचित् यद्वा पक्षिणं प्रति एहि एहि खगाधम त्रास्यसीत्यादि कुत्सितशब्दं कृतवान् अस्मिन् पक्षे शस्त्रैरिति विशेषणे तृतीया दरिद्राकाशका सेति पक्षे आम् पूर्व्वं सीताग्रहणे व्याकुलः सम्प्रत्यनाकुलः भूयः पुनरपि खगः पक्षी तं रावणं वेभिदाञ्चक्रे अत्यर्थं भिनत्ति स्म

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कीदृशः नखतुण्डप्रहरणः भिदेर्मूत्रसूत्रशूचाटेत्यादिना यङ् प्रत्ययान्तत्वात् ञ्विजादीत्यादिना आम् यङोलुक् यङ्लुकयलोपे अरेनणुत्री इति निषेधात् न गुणः ञ्विजादीत्यादौ यामिति विषये सप्तमी तेन यङ्लुकि परस्मैपदविषये क्वञ्जउभयपदित्वात् आत्मनेपदवदनुप्रयोगः खे गच्छतीति हनजनादिति डः ॥ १०५ ॥

हन्तुं क्रोधवशादीहाञ्चक्राते तौ परस्परं। न वा पलायाञ्चक्रे विर्दयाञ्चक्रे न राक्षसः ॥ १०६ ॥

ज०म० हन्तुम्। तौ पक्षिरावणौ क्रोधवशात् क्रोधाधीनतया परस्परमन्योन्यं हन्तुमीहाञ्चक्राते चेष्टाङ्कृतवन्तौ इजादेरित्यादिना आम् विः पक्षी जनिघसिभ्यामित्यधिकृत्य वेञोडिच्चेत्यौणादिक इक् नवा नैव वाशब्दएवार्थे पलायाञ्चक्रे पलायितः उपसर्गस्यायताविति लत्वम् राक्षसश्च न दयाञ्चक्रे न दयते स्म पक्षिणञ्चत्वहं कथं व्यापादयामीति उभयत्रापि दयायासश्चेत्याम् ॥ १०६ ॥

भ० हन्तुमित्यादि। तौ पक्षिरावणौ क्रोधवशात् क्रोधाधीनतया परस्परमन्योन्यं हन्तुमीहाञ्चक्राते ईहङ्चेष्टे परस्परं व्यतिलुनन्तीत्युदाहरता व्यतीहारे परस्परशब्दोमनीषादित्वान्निपातितइति सूचितं विः पक्षी'न पलायते स्म राक्षसोऽपि हन्तुं नदयां कृतवान् सर्व्वत्र ञ्विजादीत्याम् पलायाञ्चक्रइति परापूर्व्वस्यायधातोरूपं रेफस्य लत्वं मनीषादित्वात् मामाङ्नञ् नह्निनान वाइत्येते प्रतिषेधार्थाः एवार्थे अत्र वाशब्दइत्यन्ये ॥ १०६ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



उपासाञ्चक्रिरे द्रष्टुं देवगन्धर्व्वकिन्नराः। छलेन पक्षौ लोलूयाञ्चक्रे क्रव्यात् पतत्त्रिणः॥ १०७॥

उपा। देवगन्धर्व्वकिन्नराद्रष्टुं युद्धन्द्रष्टुमिति उपासाञ्चक्रिरे उपगताः पूर्व्ववदाम् क्रव्यात् रावणः क्रव्यमांसमत्तीति क्रव्यात् अदोनन्नइति विट् पतत्त्रिणः पक्षिणः पक्षौ लोलूयाञ्चक्रे अत्यर्थं लूनवान् यङ्प्रत्ययान्तत्वादाम् छलेन मायया प्रसह्य जेतुन्न शक्यतइति भल्लेनेति पाठान्तरम्॥ १०७॥ ज०म०

उपेत्यादि। देवागन्धर्व्वाः किन्नराश्च द्रष्टुमर्थात् युद्धं उपासाञ्चक्रिरे उपगताः आसङउपवेशे ञ्विजादीत्वाम् दीव्यतीति देवः पचादित्वादन् गानं धर्म्मोऽस्येति गन्धर्व्वो मनीषादिः नराकृतित्वात् कुत्सितोनरः किन्नरः ईषदर्थे किंशब्दइत्यन्ये क्रव्याद्रावणः छलेन कपटेन पतत्त्रिणः पक्षिणः पक्षौ लोलूयाञ्चक्रे अत्यर्थं चिच्छेद त्यान्तत्वादाम् क्रव्यं मांसमत्तीति क्विप्॥ १०७॥ भ०

प्रलुठितमवनौ विलोक्य छत्त्रं दशवदनः खचरोत्तमं प्रहृष्यन्। रथवरमधिरुह्य भीमधुर्य्यं स्वपुरमगात् परिगृह्य रामकान्तां॥ १०८॥

इति भट्टिकाव्ये पञ्चमः सर्गः॥

प्रलुठितमित्यादि। खचराः पक्षिणः खे चरन्तीति अधिकरणे ज०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



चरेष्टः तेषामुत्तमं जटायुं छत्तं छिन्नं लूनपक्षत्वात् अवनौ भुवि प्रलुठितं विलोक्य प्रहृष्यन् हर्षं प्राप्नुवन् निवृत्तोविघ्नकारीति दशाननोरथवरं स्मरणात् प्राप्तं पुष्पकाख्यमारुह्य भीमधुर्य्यं रामकान्तां सीतां तथैव परिगृह्य स्वपुरमगात् गतवान्॥ १०८॥

इति जयमंगलाख्यायां पंचमः सर्गः॥

भ॰ विलुठितमित्यादि। छत्तं छिन्नं लूनपक्षत्वात् अवनौ भूमौ विलुचितं पतितं खचरोत्तमं जटायुं विलोक्य प्रहृष्यन् हृष्टोभवन् रावणोरथवरं अधिरुह्य रामकान्तां सीतां परिगृह्य स्वपुरं लङ्कां अगात् गतः रथानां वरः श्रेष्ठः पुष्पकाख्यः स्मरणादुपागतः तं कीदृशं भीमाधूर्य्याश्वायत्र धुरं वहतीति ढघेकादितियः॥ १०८॥

इति गौराङ्गमल्लिकात्मजश्रीभरतमल्लिकविरचितायां मुग्धबोधिन्यां भट्टिटीकायां सीताहरणोनाम मिश्रकः पञ्चमः सर्गः॥

शोषाञ्चकार कामाग्निर्दशवक्त्रमहर्निशं। विदाञ्चकार वैदेहीं रामादन्यनिरुत्सुकां॥ १॥

ज॰म॰ अत्राधिकारस्यापरिसमाप्तत्वात्तमेव विवृत्याह॥ शोषाञ्चकारेत्यादि अथ शब्दोवक्ष्यमाणतृतीयश्लोके यः सोऽत्र द्रष्टव्यः अथ तस्मिन् सीतापरिग्रहे जाते कामाग्निः कामोऽग्निरिव दशवक्त्रं दशाननमोषाञ्चकार ददाह उषदाहे उषविदेत्याम् अहर्निशं अहश्च निशा च सर्व्वोद्वन्द्वोविभाषैकवद्भवतीत्येकवद्भावादत्यन्तसंयोगे द्वितीया अङ्कोनकारस्य रोऽसुपीति रत्वं कस्माद्ददाह

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



इत्याह रावणोवैदेहीमन्यनिरुत्सुकां रामादन्यस्मिन् सर्व्वत्र निरभिलाषां विदाञ्चकार अगुणत्वं विदेस्तथेति विदेरगुणत्वात् गुणभावः॥ १॥

ओषामित्यादि। अत्रापि स एवाधिकारः अपरिसमाप्तत्वात् भ॰ कामोऽग्निरिव दशवक्त्रं रावणं अहर्निशं ओषाञ्चकार उषदाहे दरिद्राकासकाशेति पचे आम् अहश्च निशा च इति समाहार द्वन्द्वः सदाध्वादीति ढो दशवक्त्रपदन्यासेन विंशत्या नेत्रैरेकदैव सीतासौन्दर्य्यातिशयविलोकनात् कामपीडानिर्भरत्वं द्योत्यते वैदेहीं रामादन्यस्मिन् सर्व्वत्र निरुत्सुकां निरभिलाषां विदाञ्चकार ज्ञातवान् डाम्वाव्यामिति वेत्तेर्डाम् ङित्वान्न गुणः॥ १॥

प्रजागराञ्चकारारेरीहासु निशमादरात्। प्रविभयाञ्चकारासौ काकुत्स्थादभिशङ्कितः॥ २॥

प्रजागराञ्चकारेत्यादि। अरे रामस्य ईहासु चेष्टासु गुरोश्च ज॰म॰ इत्यकारः आदरादादरेण प्रजागराञ्चकार जागरितवान् शत्रुचिकीर्षितज्ञानपरोऽवभूवेत्यर्थः पूर्व्ववदाम् अनिशमिति निशाक्रियाविच्छेदोनास्ति यस्मिन् प्रजागरणे इति निशेति क्रियाविच्छेदोपलक्षणं प्रायेण हि निशायामपि क्रियाणां प्रवर्त्तनं किमिति जागरितवानित्याह काकुत्स्थादसौ प्रविभयांचकार प्रभीतवान् भीह्रीत्यादिनाम् श्लुवत् कार्य्ये धातोर्गुणयादेशौ अभिशङ्कितः किमियं करिष्यतीति॥ २॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० प्रजेत्यदि। असौ रावणोऽरेरामस्य ईहासु चेष्टितेषु अनिशं निरन्तरं प्रजागराञ्चकार सावधानोबभूव आदरात् आदरं कृत्वा यवर्थे पञ्चमी हेतौ वा काकुत्स्थात् प्रविभयाञ्चकार अति भीतः ञिभीलिभीत्यां पशाम्वाभीह्रीति पशाम् श्लावद्भले क्वादीरे द्विः एर्घूङङ्गति गुणः स्वस्कृन्वामदूति कृञनुप्रयोगः अतिशङ्कितः किमयं करिष्यतीति नानाविकल्पव्याकुलः॥२॥

न जिह्रयाञ्चकाराथ सीतामभ्यर्थ्य तर्ज्जितः। नाप्यूर्ज्जां बिभरामास वैदेह्यां प्रसितोभृशं॥३॥

ज०म० न जिह्रयाञ्चकारेत्यादि। सीतामभ्यर्थ्य याचित्वा न जिह्रयाञ्चकार न लज्जितः तर्ज्जितः भर्त्सितोऽपि तयैवेत्यर्थात् नाप्यूर्ज्जां बलं बिभरामास धारितवान् कृञिति प्रत्याहारग्रहणादस्तेरप्यनुप्रयोगः ह्रीधातोर्गुणायादेशौ डुभृञ्धारणपोषणयोः उभयत्रापि पूर्व्ववदाम् श्लुवच्च कथं न धारितवान् इत्याह वैदेह्यां प्रसितः प्रसक्तः भृशमत्यर्थं॥३॥

भ० नजीत्यादि। अथ सीतायाअन्यनिरुत्सुकत्वज्ञानानन्तरं सीतामभ्यर्थ्य वहुधा अनुनीय तया तर्जितोभर्त्सितोऽपि रावणो न जिह्रयाञ्चकार ह्रीलिलज्जे ऊर्ज्जां बलमपि न बिभरामास भृञ्भृतिपुष्योः उभयत्र पूर्व्ववत्पशाम् भृञ्जादेर्द्विः खेरेद्दति भृधातोः खिर्द्विः आमोऽनुप्रयोगअस्तेर्भून भवतीति परः स्वमते स्वस्कृन्वामदत्यत्र असञ्जषार्थे इत्यस्य ग्रहणं नत्वस्तेः यदा व्याकरणा

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



न्तरसम्वादात् अस्तेरेवानुप्रयोगः कृतभ्वादेग्रस्यास्तेरनुप्रयोग स्य वैयर्थ्यं भुवोऽनुप्रयोगस्योक्तत्वात् तेनामोऽनुप्रयोगे भूररेइत्य स्य न विषयइति बोध्यं ऊर्ज्जैः सेम्त्कात्सरोरिति अप्रत्ययः स्त्री त्वञ्च ऊर्ज्जमिति पाठे क्विप् कुतइत्याह वैदेह्यां प्रसितआसक्तः तच्चिन्तया बलक्षयात्॥ ३॥

विदांकुर्व्वन्तु रामस्य वृत्तमित्यवदत् स्वकान्। रक्षां सि रक्षितुं सीतामाशिषञ्च प्रयत्नवान्॥ ४॥

विदाङ्कुर्व्वन्त्वित्यादि। स्वकानात्मीयान् शुकसारणादीन् अव ददुक्तवान् किमित्याह रामस्य वृत्तमनुष्ठितं किन्तस्येहा गन्तुमु द्यमोऽस्ति न वेति विदाङ्कुर्व्वन्तु विदांकुर्व्वन्त्वित्यन्यतरस्यामिति निपातितं सीतां रक्षितुं रक्षांसि आशिषदादिष्टवान् शासेः सर्त्ती त्यङ् शासइदङ्हलोरिति शासेरुपधायाइत्वं शासिवसीति षत्वं प्रयत्नवान् प्रयत्नपरः। आमधिकारोगतः॥ ४॥ ज॰म॰

विदामित्यादि। रामस्य वृत्तं चेष्टितं भवन्तोविदांकुर्व्वन्तु जानन्तु इति स्वकान् आत्मीयान् दूतान् रावणोऽवदत् ङाम्वा थांग्यान्तुक्न्विति वेत्तेर्ङाम् ग्यां कृञनुप्रयोगएव प्रयत्नवान् सन् सीतां रक्षितुं रक्षांसि आशिषत् आदिष्टवान् चकारः समुच्चये शासुअनुशिष्टौ शासुलिदुदिति ङः शासुङिङ्हलङे इति इत्वं किलात्तत इति षत्वं। इत्यामधिकारः॥ ४॥ भ॰



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



## अथ प्रकीर्णकाः।

रामोऽपि हतमारीचो निवर्त्स्यन् खरनादिनः। क्रोष्टुन् समशृणोत् क्रूरान्रसतोऽशुभशंसिनः॥ ५॥

ज०म० अथ प्रकीर्णश्लोकानाह। रामइत्यादि। हतमारीचो रामोऽपि निवर्त्स्यन् प्रत्यागमिष्यन् बलादिलक्षणइटि प्राप्ते न वृद्भ्यइतीण् निषेधः क्रोष्टून् शृगालान् रसतः शब्दायमानान् अशृणोत् संश्रुतवान् सकर्म्मकत्वात् समोगमीत्यात्मनेपदं न भवति लङि रूपं क्रूरान् भीषणान् यतः खरनादिनः खरवन्नदन्ति कर्त्तरीति णिनिः अशुभशंसिनः अनिष्टसूचनशीलान्॥ ५॥

भ० अथ प्रकीर्णकाः। रामइत्यादि। हतोमारीचो येन सरामोऽपि निवर्त्स्यन् प्रत्यागमिष्यन् रसतः शब्दं कुर्व्वतः क्रोष्टून् शृगालान् समशृणोत् क्रोष्टूनां शब्दं शृणोति स्मेत्यर्थः रसतइति तद्विशेषणात् तथाचोक्तं सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे इति यद्यपि शब्दएव श्रूयते नतु शृगालः तथापि शृगालस्यायं शब्दइति ज्ञाने शृगालोऽपि विषयइति तस्यापि ज्ञानकर्म्मत्वमविवादं औपचारिकोऽयं प्रयोगइत्यन्ये अनेकार्थत्वात् शृणोतिरिह दर्शनार्थइति केचित् वृद्भ्यो नेस्मेिस्यसनोरिति वृतेरिम्निषेधः पे ततएव पं खरनादिनो गर्द्दभवत् नदतः ग्रहादित्वात् णिन् कर्त्तर्य्युपमानउपपदे णिन्निति परः अतएवाशुभशंसिनः अशुभं शंसितुं सूचयितुं शीलं येषामिति ताच्छील्ये णिन्निति परः स्वमते ग्रहादित्वात् अतएव क्रूरान् भयदान्। अपि सम्भावनाप्रश्नशब्दगर्हासमुच्चये। तथा युक्तपदार्थेषु कामचारक्रियासु चेति विश्वः॥ ५॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



आशङ्कमानो वैदेहीं खादितां निहतां मृता। सश्च
त्रुघ्नस्य सोदर्य्यं दूरादायान्तमैच्चत ॥ ६ ॥

आशङ्कमान इत्यादि। तथाविधाशुभश्रवणादाशङ्कमानो वि- ज०म०
तर्कयन् वैदेहीं किं खादितां निशाचरादिना ततः निहतां त्यक्त
प्राणां अहो स्वयमेवायुःचयान्मृतां वा स रामः शत्रुघ्नस्य सोदर्य्यं
भ्रातरं सोदराद्यः आयान्तमागच्छन्तमारादैचत दृष्टवान् ईचे
र्लुङि ॥ ६ ॥

आशङ्केत्यादि। अमङ्गलश्रवणात् वैदेहीं राचसादिभिर्भ- भ०
चितां मृगालादिभिर्वा निहतां स्वयमेवायुःचयात् मृतां वा
आशङ्कमानस्तर्कयन् रामः शत्रुघ्नस्य सोदर्य्यं लक्ष्मणं आयान्तं
आराद्दूरादैचत ईचेर्लुङि समानउदरे स्थितः सोदर्य्यः ढघेका
दिति यः रूपनामगोत्रेत्यादिना पचे समानस्य सः कनिष्ठभ्रातृ
सम्बन्धोक्तत्वेन लक्ष्मणस्यापकर्षः सूचितः स्त्रीवचनेन त्यक्तधैर्य्य
त्वात् आराद्दूरसमीपयोः ॥ ६ ॥

सीतां सौमित्रिणा त्यक्तां सध्रीचीं रक्षुमेकिकां।
विज्ञायामंस्त काकुत्स्थः चये चेमं सुदुर्लभं ॥ ७ ॥

एते प्रकीर्णकाः।

सीतामित्यादि। सौमित्रेरेकाकिनोदृष्टत्वान्नियतमनेन ज०म०
त्यक्तेति तां विज्ञाय ज्ञात्वा काकुत्स्थो रामः चये गृहे चीयतेऽस्मि
न्निति अधिकरणेऽच् चेमं कल्याणं सुदुर्लभं सुदुःखेन लभ्यत इति
ईषदित्यादिना खल् अमंस्त ज्ञातवान् कथं चये चेमं सुदुर्लभं

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



मिति आह सध्रीचीं सहचारिणीं न कचिदेकाकिनीं तिष्ठन्तीं सहाञ्चतीति ऋत्विगादिना किन् सहस्य सध्रिरित्यञ्चतौ वप्रत्यये सहस्य सध्यादेशः अञ्चतेश्चोपसंख्यानमिति ङीप् अचद्रत्यकार लोपः चाविति दीर्घः कुतः वस्तुं वसनशीलां क्रियाशब्दत्वादूङ् न भवति एकिकां लक्ष्मणेन त्यक्तत्वात् एकादाकिनिचचासहाये इति चकारात्कन् प्रत्ययस्यादितीत्वं। एते प्रकीर्णकाः॥ ७॥

भ० सीतामित्यादि। सौमित्रिणा त्यक्तां अतएव एकिकां सीतां विज्ञाय काकुत्स्थः क्षये निवासे क्षेमं कुशलं सुदुर्लभं अमंस्त एकाकिनीलक्ष्मणस्यागमनात् तद्योगज्ञानेऽपि कुतः क्षेमं सुदुर्लभमित्याह वस्तुमिति तां कीदृशीं वस्तुं वासशीलां क्षिपवसेति क्तुः तथा च वासा न्मृतेति सम्भाव्यते अतएव सध्रीचीं सदा सहचरीं न कचिदेकाकिनीं तिष्ठन्तीं सहाञ्चतीति क्विपिसहसन्तिरःसध्रिसमितिरीति सहस्य सध्रिःअत्राञ्चतेर्गत्यर्थत्वात् नेदित्पूजार्थाञ्चोरित्यस्य विषयाभावात् हसुङलोपोऽणाविति नकारलोपःद्विन्त्र्न्चाहइति ईप् अचोऽल्लोपोर्घस्येति अकारलोपे निमित्ताभावात् यत्ल निवृत्तौ इकारस्य दीर्घः एकादाकिन्कावसहाये इति परः खम ते विकारसंघेत्यादिना असहाये खार्थे वा कः स्त्रियामाप् काप्य नाशीरके इति इत्वं चीयतेऽस्मिन्निति अन् क्षिनिवासगत्योः क्षयेऽपचयकाले इत्यर्थोवा। क्षयोरोगान्तरे वेश्मकल्पान्तापचयेष्वपीति विश्वः। एते प्रकीर्णकाः॥ ७॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



## अतःपरं दुहादिः।

सोऽपृच्छल्लक्ष्मणं सीतां याचमानः शिवं सुरान्।
रामं यथास्थितं सर्व्वं भ्राता ब्रूते स्म विक्लवः॥ ८॥

अतोद्विकर्म्माधिकारः। सोऽपृच्छदित्यादि अकथितं चेत्यत्र दुहियाचीत्यादिश्लोकस्थान् धातून् प्रयुङ्क्ते कविः तत्र रामोऽपृच्छत् सीतामिति प्रधानं कर्म्म लक्ष्मणमित्यकथितं कर्म्म याचमानः प्रार्थयमानः शिवं कल्याणं अर्थात्सीतायाः शिवं प्रधानं कर्म्म सुरान् देवान् इत्यकथितं कर्म्म भ्राता लक्ष्मणः सर्व्वं यथावत् स्थितं ब्रूते स्म उक्तवान् सर्व्वमिति प्रधानं कर्म्म राममित्यकथितं॥ ८॥ ज०म०

अथ द्विकर्म्मकप्रकरणं। सइत्यादि। सरामः सीतां लक्ष्मणं अपृच्छत् दुहादेः कर्म्म हेतुः कर्म्मेति परः स्वमते याच्ञार्थेत्यादीनां स्वभावाद्विकर्म्मकत्वमुक्तं कर्म्मद्वयन्तु तात्पर्य्यलभ्यमेव सीतामिति प्रधानं कर्म्म लक्ष्मणस्य हेतुत्वमर्थाल्लभ्यतएव तेनात्र न लक्ष्मणमिति कीदृशोरामः सुरान् शिवं याचमानः दातुं प्रेरयन् अर्थात् सीतायाः शिवमिति प्रधानं कर्म्म भ्राता लक्ष्मणोविक्लवोविक्लवः सन् सर्व्वं यथास्थितं सीताप्रेरणादिकं रामं उक्तवान् वचनेन वोधितवान् राममिति हेतुकर्म्म॥ ८॥ भ०

सन्दृश्य शरणं शून्यं भिक्षमाणोवनं प्रियां। प्राणान् दुहन्निवात्मानं शोकं चित्तमवारुधत्॥ ९॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज॰म॰ संदृश्येत्यादि। रामः शरणं गृहं शून्यं संदृश्य दृष्ट्वा शोकं चित्तमवारुधत् चित्तं शोकं प्रावेशयत् कीदृशः प्रियां जानकीं वनं भिक्षमाणः प्राणान् दुहन्निव त्यजन्निव प्राणानिति प्रधानं कर्म्म आत्मानमित्यकथितं आत्मनः प्राणान् त्यजन्निव॥ ९॥

भ॰ संदृश्येत्यादि। रामः शरणं गृहं शून्यं संदृश्य शोकं चित्तमवारुधत् शोकमन्तः स्थापयित्वा चित्तमपावृणोत् शोकं प्रावेशयदिति वार्थः रुधिरौञ्आवृतौ दूरित्वात् शास्तुलिद्युदिति पचेङः कीदृशः प्रियां सीतां वनं भिक्षमाणः दातुं प्रेरयन् प्रियामिति प्रधानं कर्म्म आत्मानं प्राणान् दुहन्निव मोचयन्निव आत्मानमिति कर्म्म हेतुः॥ ९॥

गता स्यादवचिन्वाना कुसुमान्याश्रमद्रुमान्। आं
यत्र तापसान् धर्म्मं सुतीक्ष्णः शास्ति तत्र सा॥ १०॥

इति दुहादिर्द्विकर्म्मकः।

ज॰म॰ गतेत्यादि। यत्र यस्मिंस्तपोवने सुतीक्ष्णोनाम ऋषिः धर्म्मं शास्ति शिक्षयति धर्म्ममिति प्रधानं कर्म्म तापसानित्यकथितं तत्र तपोवने गता स्यात् सम्भावने लिङ् आकारोनिपातः स्मरणे किं कुर्व्वती कुसुमान्यवचिन्वाना कुसुमानीति प्रधानं कर्म्म आश्रमद्रुमानित्यकथितं अवचिन्वानेति चिनोतेः कर्त्रभिप्राये तङ्। दुह्यादिदण्डकोगतः। ॥ १०॥

भ॰ गतेत्यादि। वक्ष्येवं विललाप स इति वक्ष्यमाणश्लोकेनान्वयः यत्र सुतीक्ष्णमुनिस्तापसान् धर्म्मं शास्ति तत्र सा गता स्यात् सम्भावने खौ लोपोऽस्त्यसोरिति अस्तेरकारलोपः किं कुर्व्वती

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



आश्रमद्रुमान् कुसुमानि अवचिन्वाना द्रुमान् विघट्टयन्ती पुष्पाण्यादादाना आ इत्यव्ययशब्दः स्मरणार्थे प्रयुज्यते यदुक्तं मर्य्यादायामभिविधौ क्रियायोगेषदर्थयोः। यश्चाकारः सद्भिस्त्प्रोक्तो वाक्यस्मरणयोरङिदिति। आमिति क्वचित् पाठः सोऽपि स्मरणार्थ एव। इति द्विकर्म्मकाः॥ १०॥

## अतः परं प्रकीर्णकाः।

आः कष्टं वत ही चित्रं हूं मातर्दैवतानि धिक्।
हा पितः क्वासि हे सुभ्रु वह्वेवं विललाप सः॥ ११॥

प्रकीर्णकानाह। आः कष्टमित्यादि। शोकेनाक्रान्तमना विलपन्नाह आः पीडायां पितृवियोगपीडितः आः इत्याह अस्मद्वियोगेन पिता प्राणांस्त्यक्तवानित्यभिप्रायःकष्टमित्याह कष्टं कृच्छ्रं भर्तृमरणादस्मद्वियोगाच्च मातुः कावस्थेत्यभिप्रायेणाह वत इति वतशब्दः खेदे सौमित्रिरपि तया सीतया अन्यादृशः सम्भावितइति विस्मितो हीत्याह हिशब्दो विस्मये यदि नाम स्त्रिया मूर्खतया तथाभिहितं सौमित्रिणा विदुषा कथं तादृशः शापो दत्तइत्यभिप्रायेणाह चित्रमिति चित्रमाश्चर्य्यं यदेवंविधोऽपि स्खलतीति सर्व्वमेव दुर्जातं कैकेयीप्रभवमिति क्रुध्यन् हूंमातरित्याह हूंशब्दः क्रोधे अथवा सर्व्वमेतत् दैवचेष्टितं न ममानुष्ठितमित्यभिप्रायेणाह धिग्दैवतानीति धिक् कुत्सायां अविज्ञाय चक्षुषा प्राणांस्त्यक्तवन्तं पितरं पुनरहं द्रष्टास्मीत्यभिप्रायेणाह हा पितः अत्र द्रष्ट

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



व्योऽसीति हा शोके हे सीते क्व गतासीति भूशब्दादप्राणिजातेरि त्यादिनोङ् उवर्णान्तमात्रस्य विधानादऊङ्ग्रीहिः उपसर्जनत्वञ्च पुनः स्त्रियामूङ् अन्तादिवच्चेति पूर्व्वं प्रत्यन्तवत्त्वात् प्रातिपदि कत्वं अतः सम्बुद्धौ ह्रस्वत्वं विललाप सएवं कृत्वा बहुनेकप्रकारं विलापं कृतवान्॥ ११॥

भ० अथ प्रकीर्णकाः। आइत्यादि। सीतावियोगेन पूर्व्वदुःखस्मर णात् पितृवियोगपीडितः प्राह आइति आस्तु स्यात् कोपपीडयोः मद्वियोगेन पिता प्राणान् जहावित्यभिप्रायेणाह कष्टमिति कष्टं कृच्छ्रं पतिमरणान्मद्वियोगाच्च मातुः कावस्था इत्यतश्चाह वतेति खेदद्योतकोऽयं वतशब्दः लक्ष्मणोऽपि सीतया अन्यथा सम्भावि तइति विस्मितः प्राह हीति ही विस्मयविषादयोः यद्यपि स्त्रीला न्मौर्ख्येण तया तथाभिहितं तथापि लक्ष्मणेन तादृशः शापोदा तुमनुचितइत्यभिप्रायेणाह चित्रमिति चित्रमाश्चर्य्यं सर्व्वमिदं कैकयीप्रभवमिति रोषादाह हूं मातरिति हूंशब्दः क्रोधे भर्त्सने वा तथाविधायामातुरपीदृशोऽकस्मात् मतिविपर्य्ययोदैवकृतए वेत्यतश्चाह दैवतानि धिगिति धिक्शब्दोनिन्दाभर्त्सनयोः अविशे षज्ञत्वादिति भावः पितुर्व्वाक्यादीदृशं दुःखमनुभवन्नहं पित्रा न ज्ञायते नवा पितृदर्शनेन विना ममैतद्दुःखं व्यपगमिष्यतीत्याह हा पितरिति हा विषादशुगर्त्तिषु धिक्समयेत्यादिसूत्रस्य षष्ठ्य पवादत्वान्नात्र तद्विषयः सामान्येन हाशब्दं प्रयुज्य पश्चात् पितृ सम्बोधनमतोन द्वितीयेति दुर्गः वस्तुतस्तु हाशब्दवाच्यं दुःखं स्वविषयमेव पितृशब्देन तस्य सम्बन्धाभावः कथं द्वितीयया भवि तव्यं एतत् सकलदुःखं यत्सङ्गत्या विस्मर्त्तव्यं सापि नास्तीत्याश

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



येनाह ह सुभ्रु क्वासीति कोपेऽपि भूपाख्यं नास्तीति सुभ्रुपदस्या भिप्रायः एवं स्मृत्वा स रामोऽवक्रप्रकारं विलापं कृतवान् शोभने भ्रुवौ यस्याः तस्याः सम्बोधनं सुभ्रूदीदीति ह्रस्वः ॥ ११ ॥

इहासिष्टाशयिष्टेह सा सखेलमितोऽगमत्। अग्लासीत् संस्मरन्नित्थं मैथिल्या भरताग्रजः ॥ १२ ॥

इहेत्यादि। इह प्रदेशे आसिष्ट उपविष्टा इदमोहः इदम इश् इह अशयिष्ट शयितवती आसेः शीङस्च लुङ् सखेलं सलीलं इतः प्रदेशादगमत् गतवती इत्थमेवंप्रकारं मैथिल्याः स्मरन् अधीगर्थेति कर्म्मणि षष्ठी भरताग्रजो रामोऽग्लासीत् ग्लानिङ्गतः ग्लायतेर्लुङ् यमरमेति सगिटौ ॥ १२ ॥ ज०भ०

इहेत्यादि। अत्र प्रदेशे सा सीता आसिष्ट शिलासङ्उप वेशे अत्राशयिष्ट उभयत्र टीमं इतः सकाशात् सखेलं सलीलं अगमत् लृदित्वात् ङः इत्थमेवंप्रकारेण मैथिल्याः संस्मरन् भरताग्रजो रामोऽग्लासीत् यमरमेति इमसनौ मैथिल्यादिति ढेचषीति कर्म्मणि षष्ठी ढघेक्तीत्यादिना शतुर्योगे षष्ठ्याः प्रति षेधेऽपि नञा निर्द्दिष्टस्यानित्यत्वाद्वा कर्म्मणि षष्ठी सम्बन्धविवक्षया स्मृत्यर्थयोगे कर्म्मणि वा षष्ठीति परः इह इत्यत्र कुतः क्वकुहे त्यादिना निपातितं ॥ १२ ॥ भ०

इदं नक्तन्तनं दाम पौष्पमेतद्दिवातनं। प्रुचेवोद ध्य शाखायां प्रम्लायति तया विना ॥ १३ ॥



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज॰म॰ इदमित्यादि। नक्तंतनं निशाभवं इदं दाम पुष्पमाला पुनर्हि वातनं दिवसभवं सायमित्यादिना ट्युट्युलौतुट् च पौष्पं पुष्पाणामिति तस्येदमित्यण् शुचेव शोकेनेव सम्पदादिः शाखायामुद्बध्य आत्मानमित्यर्थात् प्रम्लायति म्लानिं गच्छति म्लायतेः शित्यायादेशः शाखायां प्रलम्बमानं म्लानिं गच्छन्तं वोच्छेदमुत्प्रेक्षितं कुतः शोकात्तया विना सीताविच्छेदेन ॥ १३ ॥

भ॰ इदमित्यादि। इदं नक्तन्तनं रात्रिभवं पौष्पं पुष्पसम्बन्धि दाम माला इदञ्च दिवाभवं दाम तया विना शुचा शोकेन शाखायां उद्बध्य अर्थादात्मानं प्रम्लायति म्लानिं प्रयाति शाखास्थितां म्लानमालां वोच्छेदमुत्प्रेक्षितं इत्येवं विललापेति व्यवहितश्लोकेनान्वयः स्मरन्नेवं मुमोह सइति वक्ष्यमाणनवमश्लोकेन वा एवमुत्तरेष्वपि बोध्यं त्यचाद्यचिरेत्यादिना नक्तंदिवाशब्दाभ्यां अव्ययाभ्यां तनट् ॥ १३ ॥

ऐक्षिष्महि मुहुः सुप्तां यां मृताशङ्कया वयं। अकाले दुर्म्मरमहो यज्जीवामस्तया विना ॥ १४ ॥

ज॰म॰ ऐक्षिष्महीत्यादि। यां वयमैक्षिष्महि ईक्षितवन्तः ईक्षेः सेटो लुङ् मुहुः सुप्तां अविच्छिन्ननिद्रत्वात् मृताशङ्कयेति अनिष्टशंसित्वात् प्रियजनहृदयस्य इदानीं तया विना अहो वयं यज्जीवामस्तदकाले दुर्म्मरमिति विललाप जीवितस्यापूर्णकाले दुःखेन मरणमिति खलु ॥ १४ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ऐचीत्यादि। वयं सुभ्रां यां प्रियां मृता नवेत्याशङ्कया मुहु भ०
र्व्वारंवारं ऐचिष्महि ईक्षेष्यामहि अनिष्टाशंसीनि बन्धुहृदया
नीति मृताशङ्कित्वं एतेनानुरागातिशयः सूचितः अहो आश्चर्य्यं
यत्तया विनापि वयं जीवामस्तदस्मादकाले जीवनस्यापूर्णकाले
दुःखेन म्रियते ईषद्दुःखैरिति भावे खल्॥ १४॥

अचेमः परिहासोऽयं परीचां मा कृथा मम। मत्तो
मान्तर्द्धिथाः सीते मा रंस्थाजीवितेन नः॥ १५॥

एते प्रकीर्णकाः।

अचेमइत्यादि। परिहसनं परिहासः क्रीडा अयमचेमो न ज०म०
कल्याणकरः मम परीचां किं मामपश्यन् दुःखमस्ति नवेति मा
कृथाः उश्चेति कित्त्वाद्गुणाभावः ह्रस्वादिति सिचोलोपः तस्माद्धे
सीते मान्तर्द्धिथाः अन्तर्हिता मा भूः अन्तर्द्धावित्यपादानसंज्ञायां
पञ्चम्यास्तसिः प्रत्ययोत्तरपदयोश्चेति मदादेशः लुङि स्थाघ्वो
रिच्चेति सिचः कित्त्वमित्वञ्च ह्रस्वादिति सिचोलोपः नोऽस्माकं
जीवितेन मा रंस्थाः क्रीडां मा कार्षीः रमेरात्मनेपदित्वात्तङ्।
एते प्रकीर्णकाः॥ १५॥

अचइत्यादि। कदाचित् परिहासेनान्तर्हिता सा भवेदि भ०
त्याशङ्क्योत्तरमिदं अयमन्तर्द्धानरूपः परिहासोऽचेमः अशुभः
तवादर्शनेन मम दुःखमस्ति नवेत्येवं मत्परीचां त्वं मा कृथाः
कृञस्तासि इगुङ्कुर्मढीस्वनिमिति सेः कित्त्वान्न गुणः झसस्थादिति
सिलोपः मत्तः सकाशात् मा अन्तर्द्धिथाः मत्कर्तृकदर्शनाभावे

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



च्छया व्यवहिता मा भूः धाञस्थासि स्थादोर्ङिरिति ङिरगुणलञ्च पूर्व्ववत्सिलोपः यतोऽपायेति यतोऽन्तर्द्धिस्तदपादानं सर्व्वत्र हेतुमाह हे सीते नोऽस्माकं जीवितेन मा रंस्थाः क्रीडां न कुरु तवादर्शनेन प्राणायास्यन्तीति भावः। इति प्रकीर्णकाः ॥ १५ ॥

## अतः परं सिजधिकारः ।

अहं न्यवधिषं भीमं राक्षसं क्रूरविक्रमं। मा घुक्षः पत्युरात्मानं मा न श्लिक्षः प्रियं प्रिये ॥ १६ ॥

ज०म० सिचं सापवादमधिकृत्याह। अहमित्यादि। यतोऽहं राक्षसं मारीचं क्रूरविक्रमं भीमं भयानकं न्यवधिषं निहतवानस्मि हन्तेर्लुङि चेति वधादेशः अदन्तत्वादृद्ध्यभावः तस्मान्मा घुक्षः न गोपय पत्युरात्मानं अन्तर्द्धावित्यपादानत्वं ख्यत्यात्यरस्येत्युत्वं गुहेः सलड्गुपधादनिटः क्सः होढः भभावकत्वषत्वानि सिपस्य विसर्जनीयः मा न श्लिक्षः मा न परिरब्धाः अपितु श्लिष्य मां हे प्रिये श्लिष आलिङ्गने क्सः ॥ १६ ॥

भ० अथ सापवादसिजधिकारः। स्वमते स्वधिकारः। अहमित्यादि। भीमं भीषणमूर्त्तिं क्रूरविक्रममसह्यपराक्रमं राक्षसं मारीचं अहं न्यवधिषं हतवान् हनलौगतौवधे अमि ध्यांसिः हनवधष्टीति वधादेशः हसादेःसेम्इत्यादौ वधवर्ज्जनात् सेमत्वसूचनात् प्रकृत्यन्तरत्वाद्वा इम् पत्युर्मत्तः सकाशात् आत्मानं त्वं मा घुक्षः न गोपय गुहञ्सवृतौ उदित्वादेमूदिति इमोऽभावपक्षे हसषोऽनिमिजूङ्इति सक् होढः झभान्तस्येति घः षढोः कः

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



क्लिशादिति षः हे प्रिये प्रियं मां मा न श्लिक्षः अपितु अवश्यमेव प्रियमालिङ्गय द्वौ निषेधौ सातिशयं प्रकृत्यर्थं गमयतइति न्या यात् श्लिषोश्लेषे आलिङ्गनेऽर्थे पूर्व्वण सक्॥ १६॥

मास्म ह्वार्षीर्मृषा दोषं भक्तां मां मातिचिक्लिशः। शैलं न्वशिश्रियद्वा मा नदीं नु प्रत्यदुद्रुवत्॥ १७॥

मास्मेत्यादि। मृषा दोषं व्यलीकं दोषं मा ह्वार्षीः मयीत्य जं०म० र्थात् स्मोत्तरे लङ्चेति चकाराल्लुङ् सलइगुपधेति क्सस्य न इग्य इति निषेधः इरितोवेत्यङ्भावे सिच् सृजिदृशोरित्यम् हलन्तल चणा वृद्धिः त्रश्चेत्यादिना षत्वं यतोऽहं भक्तस्ततोमां भक्तां माति चिक्लिशः नातिक्लेशय क्लिशेर्ण्यन्तात् सिपि णिश्रीत्यादिना चङ्वा णिलोपः द्विर्व्वचनादिः पुनर्व्विकल्पयन्नाह मयि दोषदर्शनात् मत्प्रतिकूलवर्त्तिनी सती शैलं नु पर्व्वतं किमप्यशिश्रियदाश्रिता ततोनदीं प्रत्यदुद्रुवत् प्रतिगतेत्यर्थः नुशब्दोवितर्के चङ्॥ १७॥

मास्मइत्यादि। मृषा दोषं मास्म ह्वार्षीः अर्थान्मयि दोषद भ० र्शनाद्वा अन्तर्हितेत्याशङ्क्य इदमुक्तं इट्शोप्रेचे मास्मेन धीच्या विति टौ सन्निधौ दृशेर्वर्ज्जनात् इरितात् ङः विकल्पपचे च्यांसिः वर्द्धोऽकिदिति रत्वं अनिमित्वाद्गुजवदेति त्रिः शक्राजेति षङ् भक्तां अनुरक्तां मां त्वं मातिचिक्लिशः नातिपीडय क्लिशेर्ज्ञिःप्रेरणे ञिश्रीत्यङ् द्वित्वं गुणः न्यङुङःस्वः ञेर्लोपः निकटे यदि तिष्ठेत्त दा मद्वचनादागच्छेदित्यतोऽन्यद्विकल्पयन्नाह वामेति मय्यपि दोषदर्शनात् प्रतिकूला सती शैलं किं अशिश्रियत् आश्रिता

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



उत नदीं प्रत्यदुद्रुवत् प्रतिगता श्रिञ्सेवने द्रुगतौ अनयोरङि श्रुध्वोरिति इयुवौ नुशब्दो वितर्के॥ १७॥

ऐ वाचं देहि धैर्य्यं नस्तव हेतोरसुस्रुवत्। त्वं नो मतिमिवाधासीर्नष्टा प्राणानिवादधः॥ १८॥

ज॰म॰ ऐवाचमित्यादि। ऐशब्दो निपातोऽभिमुखीकरणे वर्त्तते वाचं देहि प्रार्थनायां लोट् घ्वसोरेद्धावित्येत्वं किमितिचेदाह धैर्य्यं नोऽस्माकं धीरता तव हेतोरसुस्रुवत् गलितं नष्टा अदर्शनं गता सती त्वन्नोऽस्माकं मतिं बुद्धिमधासीरिव बुद्धेरपाटवात् विभाषा धेट्श्व्योरिति यदा न चङ् तदा यमरमेति सगिटौ प्राणानदधः पीतवती कायस्याचेष्टत्वात् चङि रूपमालोपः॥ १८॥

भ॰ ऐवाचमित्यादि। ऐ सीते वाचं देहि प्रार्थनायां गौ देशादेघो र्दधेहौ तव हेतोः नोऽस्माकं धैर्य्यं असुस्रुवत् स्रुतं पूर्व्ववत् अङ् त्वं नोऽस्माकं मतिं बुद्धिं अधासीरिव पीतवतीव बुद्धेरपाटवात् कार्य्यान्तरासंक्रमाचोत्प्रेचेयं नष्टा अदर्शनं गता सती प्राणानपि त्वं अदधइव पीतवतीव देहस्य निश्चेष्टत्वात् धेट्पाने पूर्व्वेण विभाषितोऽङ् एचोयित्या उस्येचीत्यालोपः अङोऽभावपचे थ्यांसिः यमरमेति इमसनौ ग्रसस्याञ्भसीमइति सेर्लोपः भूस्था पिवदेनइति सेर्लुकि प्राप्ते धेशाच्छासाग्रइति पचे तदभावः नशअदर्शने क्तः नुणरधोमुचांनग्रइति क्तस्य नस्य हसुङ्न लोपोऽणावित्यनेन लोपः शच्छ्राजेति षङ् ऐ शब्दोऽयमव्ययो

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ऽभिमुखीकरणे आह्वाने वा। एऐशब्दौ तु हेहैवत् स्मृत्यामन्त्रण
इतिष्विति विश्वः॥१८॥

रुदतोऽश्विश्वियच्चक्षुरास्यं हेतोस्तवाश्वयीत्। म्रिये
ऽहं मां निरास्थश्चेन्मा न वोचश्चिकीर्षितं।१९॥

रुदतइत्यादि। तवार्थे त्वां पश्यामीति रुदतोमम चक्षुरश्विश्वि ज०म०
यत् उच्छूनं आस्यं मुखं चाश्वयीत् विभाषाधेट्श्व्योरिति चङ्
सिचौ चङीयङ् ह्यन्तेति न वृद्धिः इट् इटईटीति सिचोलोपः
गुणायादेशौ मां निरास्थश्चेद्यदि मम दर्शनं निरस्तवती त्वं तदा
म्रियेऽहं म्रियतेर्लुङ्लिङोश्चेति चकाराच्छित्यात्मनेपदं रिङ्शय
गिति रिङ् अतोयत्त्वया चिकीर्षितं कर्त्तुमिष्टं तन्मा न वोचः
मा मा भाषिष्ठाः अपितु ब्रूहि अस्यतिवक्तीत्यङ् वचउम्॥१९॥

रुदेत्यादि। तवादर्शनाद्रुदतो मम चक्षुरश्विश्वियत् उच्छूण भ०
मतिरोदनात् आस्यमपि अश्वयीत् ञिश्वीत्यादिना श्वेर्विभाषि
तोऽङ् अङोऽभावपक्षे ग्यांसिः नेमेकाजादित्यादौ श्विजागुरि
त्युक्तेर्गुणः त्वं चेत् यदि मां निरास्थः अदर्शनेन निरस्तवती तदा
अहं म्रिये भविष्यत्सामीप्ये वर्त्तमानत्वविवक्षा मृङ्प्राणत्यागे तु
दादित्वात् शः मृङश्चेति लिङि रियङ्गीपे अभ्यारितीयः अस
क्षेपणे वक्त्यस्येति ङः वच्यस्यपितामिति अस्थः चिकीर्षितं कर्त्तु
मिष्टं त्वं मा न वोचः अवश्यं ब्रूहि वचेर्ब्रुञोवा वचोऽरेदिति
वचादेशः पूर्ववत् ङः वोचादेशश्च॥१९॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



लक्ष्मणाचक्ष्व यद्याख्यत्सा किञ्चित्कोपकारणं।
दोषे प्रतिसमाधानमज्ञाते क्रियतां कथं ॥ २० ॥

ज०म० लक्ष्मणेत्यादि। हे लक्ष्मण यदि सा किञ्चित्कोपकारणमाख्यदुक्तवती इदन्तेनाप्रियमाचरितं पूर्व्ववदङ् तदाचक्ष्व कथय अज्ञाते दोषे प्रतिसमाधानं कथं क्रियतां नैवेति भावकर्म्मणि लोट् रिङित्यादिना रिङ् ॥ २० ॥

भ० लक्ष्मेत्यादि। हे लक्ष्मण यदि सा सीता किञ्चित्कोपकारणं आख्यत् कथितवती तदा त्वं आचक्ष्व कथय चक्षिङः प्रार्थनायां गोस्व अदादित्वात श्पोलुक् स्वादेःसेलोपइति ककारलोपः षढोःकःसे क्विलादिति षः ख्याप्रकथने चक्षिङः ख्याञ् वा वक्तव्येति ङः उस्येचीत्यालोपः अज्ञाते दोषे प्रतिसमाधानं तदपमार्ज्जनार्थं कर्म्म कथं मया क्रियतां कर्त्तव्यं रतनोर्यगिणाविति यकि क्रते घौऽज्य्यरइति सामान्यविधिं वाधित्वा ऋद्रिःश्यग्ढीपइति विशेषविधिः रिलेऽपि पूर्व्ववाधितत्वात् विक्रतत्वाद्वा न तेन दीर्घः किम्वा यङ्ग्यक्येचर्द्रीरित्यत्र दीर्घकरणेन ऋद्रिःश्यग्ढीपइत्यनेन क्रतरेर्दीर्घोनस्यादिति ज्ञापितं यङ्ग्यक्ये घौऽज्य्यरइत्यनेन चौ अस्वावीर्घावित्यनेन चेष्टसिद्धिः ॥ २० ॥

इह सा व्यलिपद्गन्धैः स्नान्तीहाभ्यषिचज्जलैः। इहाहं द्रष्टुमाह्वं तां स्मरन्नेवं मुमोह सः ॥ २१ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



इहेत्यादि। इह प्रदेशे सा सीता गन्धैर्व्यलिपत्समालिप्तवती मामात्मानञ्चेत्यर्थात् इह स्नान्ती क्रीडापूर्व्वकमभ्यषिचत् हस्त यन्त्रमुक्तसलिलेन मामभिमुखं सिक्तवतीत्यर्थः षत्वं इह द्रष्टुं तामाक्कं आह्वतवान् लिपिसिचिह्वश्चेति क्लेरङ् एवं स्मरन् मुमोह मोहं गतवान्॥ २१॥ ज०म०

इहेत्यादि। इह स्थाने सा सीता गन्धैर्व्यलिपत् मामात्मानञ्चे त्यर्थात् गन्धयन्तीति गन्धाश्चन्दनादयः लिलिपौशलेपे इह स्नान्ती सती सा जलैः क्रीडापूर्व्वकं अभ्यषिचत् अर्थान्मां षिच्प्रोक्षरणे सीकःस्तुस्तुभेत्यादिना अभ्यवधानेऽपि षत्वं इह द्रष्टुं तामहं आक्कं आह्वतवान् क्लेलॆश्वर्द्धे सर्व्वत्र वत्यस्तेत्यादिना ङः सरामएवं स्मरन् मुमोह मोहं गतः स्नान्तीति आदीपोरिति विभाषितनुण्॥ २१॥ भ०

तस्यालिपत शोकाग्निः स्वान्तं काष्ठमिव ज्वलन्।
अलिप्तेवानिलः शीतोवने तं न त्वजिह्लदत्॥ २२॥

तस्येत्यादि। तस्य रामस्य स्वान्तं मनः क्षुब्धस्वान्तेत्यादिना निपातितं शोकाग्निः शोकोऽग्निरिव अलिपत दीपितवान् परस्मैपदेषु लिपीत्यादिना नित्ये प्राप्ते आत्मनेपदेष्वन्यतरस्यामिति विकल्पेनाङ् स्वरितञितइति क्रियाफलविवक्षायामात्मनेपदं काष्ठमिव स्वान्तं ज्वलन् अतिवर्त्तमानः अनिलोवायुः शीतोऽपि सन् वने तं राममलिप्तेव दीपितवानिव अङ्भावपक्षे झलोझली ज०म०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ति सिचोलोपः नतु नैवाजिह्लदत् ह्लादितवान् शोकाग्नेरुद्धतत्वात् ह्लदेर्ण्यन्तात्सिञीति चङ् ॥ २२ ॥

भ० तस्येत्यादि । शोकएवाग्निर्ज्वलन् वर्द्धमानः तस्य रामस्य स्वान्तं मनः काष्ठमिवचिन्तया नीरसत्वात् अलिपत ददाह यद्यपि लेपश्चन्दनादिनोपदेहस्तथाप्यग्निना लेपोदाहएव पर्य्यवस्यति धातूनामनेकार्थत्वाद्वा शीतोऽपि अनिलः वने तं रामं अलिप्तेव स्पृष्टवानिव मान्द्येन सम्यगस्पर्शनात् किम्वा वह्निना अलिप्त ददाह अतएव न अजिह्लदत् नानन्दयत् शोकाग्नेर्वर्द्धमानत्वात् वक्ष्यस्येत्यादिना आत्मनेपदे लिपादेर्ङौविभाषितः पक्षे च्लेः सिः झस्य स्यादिति सिलोपः ह्लादीङ्मोदने ण्यन्ताल्लुङः स्वः स्वेः सन्वत् ॥२२॥

स्नानभ्यषिचताम्भोऽसौ रुदन् दयितया विना ।
तथाभ्यषिक्त वारीणि पितृभ्यः शोकमूर्च्छितः ॥ २३ ॥

ज०म० स्नानित्यादि । असौ रामोदयितया विना शोकमूर्च्छितः शोकेन मोहं नीतः स्नातुमारब्धः मूर्च्छेर्हेतुमण्यन्तस्य रूपं स्नाशौचे शतृ प्रत्ययः रुदन्नम्भः सलिलं अभ्यषिचत चिप्तवान् शिरस्यञ्जलिना अथ स्नातः पितृभ्योवारीणि अभ्यषिक्त दत्तवान् सिचेः पूर्व्ववद्विभाषाऽङ् सिचिरत्रोत्सर्गे वर्त्तते ततश्चार्थान्तरवृत्तित्वाज्जलस्य कर्म्मत्वं ॥ २३ ॥

भ० स्नानेत्यादि । दयितया विना शोकेन मूर्च्छितोऽपि असौ रामो रुदन् स्नान् स्नानं कुर्व्वन् अम्भोऽभ्यषिचत मन्त्रैः संस्कृतवान् स्वशिरसि अञ्जलिना चिप्तवानित्यर्थोवा तथा स्नातः पितृभ्योवारीणि

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अभ्यषिक्त दत्तवान् पित्रर्थं क्षिप्तवान् वा धातूनामनेकार्थत्वात् सिचेः संस्कारक्षेपदानवाचकत्वं तेन जलस्य कर्म्मत्वं अभ्युक्षणे कर णत्वं यथा जलेन षिञ्चतीति पूर्व्ववत् ङः गीकइति षत्वं मूर्च्छास्य मोहे उच्छ्रये ञ्यन्तात् क्तः केवलात्तु क्तक्तवत्त्वोरादितइम् न स्यात् मूर्च्छा जाताऽस्येति इतोऽस्यजातइति इतोवा ॥ २३ ॥

तथार्त्तोऽपि क्रियां धर्म्म्यां सकालेनामुचत् क्वचित् ।
महतां हि क्रिया नित्या छिद्रे नैवावसीदति ॥२४॥

तथेत्यादि। सरामस्तेन प्रकारेणार्त्तोऽपि क्वचिदपि धर्म्म्यां ज०म० क्रियां काले नामुचत् न त्यक्तवान् अस्मादेव यतोमहतां सत्यपि छिद्रे व्यसने नित्या क्रिया नावसीदति आङ्पूर्व्वादर्त्तेऋणोतेर्वा निष्ठायां ऋतिधातौ वृद्धिः मुचेः लृदनुबन्धत्वादङ् शत्रः शच् रिङि यङौ ॥ २४ ॥

तथेत्यादि। तथा तेन प्रकारेण आर्त्तोऽपि व्याकुलोऽपि सरामः भ० क्वचिदपि काले धर्म्म्यां धर्म्मादनपेतां क्रियां नामुचत् न त्यक्त वान् मुच्लृ अपञ्चौमोचे लृदित्त्वात् ङः आङ्पूर्व्वादर्त्तेः क्तः गेर्धा रनेधिणइति त्रिः हि यस्मात् महतां छिद्रे व्यसने सत्यपि नित्या क्रिया नैवावसीदति नापगच्छति क्रियेति कुःशस्येति शः स्त्रीलञ्च ऋद्भिःअघ्वोरितीयः यदकरणे प्रत्यवायः सा नित्या ॥ २४ ॥

आक्रोशत समुद्धः ह्रूरान् मुङ्क्राक्रत राक्षसान् ।
एत सीताद्रुहः संख्ये प्रत्यर्थयत राघवं ॥ २५ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज॰म॰ आक्रास्तेत्यादि। पुनः पुनरभिभवितुं क्रूरानाक्रास्त आक्रान्तवान् तथा राक्षसानाक्रत पूर्व्ववत् विकल्पः स्पर्द्धायामाङ इत्यात्मनेपदं कथमाक्रतवानित्याह हे सीताद्रुहः सीताहिंसकाः क्रूरा राक्षसावा एत आगच्छत आङ्पूर्व्वादिणो लोट् संख्ये संग्रामे राघवं प्रत्यर्थयत प्रत्यर्थिनं कुरुत प्रत्यर्थिन्शब्दात्तत्करोतीत्यर्थे णिच् तदन्ताल्लोटः परस्मैपदं अर्थयाञ्चायामित्यस्य तु स्वार्थिकण्यन्तस्य सर्व्वदात्मनेपदित्वात् प्रत्यर्थयध्वमिति वा स्यात् ॥२५॥

भ॰ आक्रेत्यादि। स रामो मुहुर्व्वारंवारं क्रूरान् आक्रास्त अर्थात् युद्धाय राक्षसानपि आक्रत स्पर्द्धायामाङ् इति सं पूर्व्ववत् ङसी कथमाक्रत इत्याह हे सीताद्रुहः सीताहिंसकाः यूयं एत आगच्छत आङ्पूर्व्वादिणो गो संख्ये युद्धे राघवं प्रत्यर्थयत प्रत्यर्थिनं कुरुत प्रत्यर्थिशब्दात् लेःकृत्याख्यानेञ्जिरिति कृतौ ञिः ञीसंस्वेति ङित्त्वे टेर्लोपः अर्थकङ् याचन इत्यस्य वा रूपं क्वचिदात्मनेपदिनोऽपि परस्मैपदितेति न्यायात् केचित्तु चुर्भ्याञ्जिर्व्वेति ञेरभावपक्षे ञिलान्तं ञोदूभयपदमेवेत्याहुः ॥ २५ ॥

स्वपोषमपुषद्युष्मान् या पक्षिमृगशावकाः। अद्युतच्चेन्दुना सार्द्धं तां प्रब्रूत गता यतः ॥ २६ ॥

ज॰म॰ स्वपोषमित्यादि। हे मृगपक्षिणां शावकाः पोताः या सीता युष्मान् स्वपोषमपुषत् पुष्टवती स्वेपुष इति णमुल् यथाविध्यनु

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



प्रयोगः तां प्रब्रूत कथयत यतोयच्च आद्यादित्वात्तसिः गता सत्य द्युतत् द्योततिस्म सार्द्धमिन्दुना चन्द्रमसा तुल्यत्वात्॥ २६ ॥

स्वपोषित्यादि॥ एवंप्रकारेण मृगादीनप्याकांक्षेति सम्बन्धः भ० हे पक्षिणां मृगाणाञ्च शावकाः शिशवोया सीता युष्मान् स्वपोषं अपुषत् स्वेन आत्मना धनेन वा पुष्टवती अभिधानात् स्वपूर्व्वात् पुषेर्णम् तदनुप्रयोगस्य या इन्दुना सार्द्धं अद्युतत् तस्याद्योतनेन इन्दोः स्वभावेन गुणीभूतत्वात् ततोऽप्युत्कर्षः सूच्यते सार्द्धंशब्देन समानत्वं वा लक्ष्यते उभयत्र शासुलिद्युत्युषादेरिति ङः पे ङ विधानादेव द्युतेः पं उक्तञ्च अतएव पं तां प्रब्रूत वदत त्वत्स्व यास्वय्येव कथनं किमर्थं इत्याशङ्कायामाह गतेति यस्माद्ग ता अन्यत्र मां त्यक्त्वेत्यर्थात् केचित्तु यतोयत्र गता तं देशञ्च ब्रूते त्यध्याहरन्ति केचित्तु या यतोयत्वात् अपुषत् इन्दुना सार्द्धं साम्यं गता या अद्युतच्च यतोऽयत्ने इत्यस्य क्विपीत्याहुः केचित्तु हे पक्षिमृगशावकाः गतायतः सन्तः तां प्रब्रूत गतं गमनं भावे क्तः न यतन्ते इति अयतः कर्त्तरि क्विप् गताय अयतोऽयत्न वन्तः स्थिराः सन्तइत्यर्थइत्याहुः गताय नास्ति यत् यत्नो येषां तादृशाः सन्तइत्यन्ये॥ २६ ॥

गिरिमन्वस्टपङ्गामोलिमुर्ज्जनकसम्भवां। तस्मिन्ना योधनं वृत्तं लक्ष्मणायाशिषन्महत्॥ २७॥

गिरिमित्यादि। गिरिं लक्षीकृत्य गतः स्टदित्वादङ् किमर्थं ज०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



लब्धुमिच्छुः सनिमीमेत्यादिना इस् अत्र लोपइत्यभ्यासलोपः खरिचेति चर्त्वं जनकसम्भवां सम्भवत्यस्मादिति सम्भवः ऋदोरप् जनकः सम्भवोयस्यास्तां सीतां अस्मिन् गिरौ आयोधनं युद्धं महदतिशयत्वात् वृत्तं लक्ष्मणायाशिषत्कथितवान् क्रियायोगे चतुर्थी मन्त्रीत्यादिनाऽङ् शासइदङ्हलोरितीत्वं शासिवसीति षत्वं कथमकथयदित्याह ॥ २७ ॥

भ॰ गिरीत्यादि। जनकसम्भवां सीतांलब्धुमिच्छूरामोगिरिमनुलचीकृत्य अस्वपत् स्वप्नपैागतौ ल्वदित्वात् ङः लभेः सनिमिमीमादेत्यादिना अकारस्य इस् खिलोपश्च स्यादेः सोलोपश्च झषन्तस्येति पः सम्भवत्यस्मात् सम्भवः जनकः सम्भवो यस्याः जनकात्सम्भवनं यस्यादिति वा तस्मिन् गिरौ वृत्तं महदायोधनं युद्धं लक्ष्मणायाशिषत् उक्तवान् तादर्थ्ये चतुर्थी यदभिप्रेत्य धात्वर्थस्तत्र चतुर्थीति परः शासुअनुशिष्टौ शासुलिद्युदिति ङः शासङिद्धस्ङेदिति इत्वं क्लित्वादिति षत्वं ॥ २७ ॥

सीतां जिघांसू सौमित्रे राक्षसावारतां ध्रुवं। इदं शोणितमभ्यग्रं संप्रहारेऽच्युतक्षयोः ॥ २८ ॥

ज॰म॰ सीतामित्यादि। इत्येवं लक्ष्मणायाशिषदिति श्लोकचतुष्टयं यावत् सम्बध्यते हे सौमित्रे सीतां हन्तुमिच्छन्तौ राक्षसावारतामागताविति ध्रुवं निश्चितं उत्प्रेक्षायामित्यन्ये आङ्पूर्व्वादर्तेरादादिकादेवाङ् पुषादिसूत्रे शास्तिसाहचर्य्येण तस्यैव ग्रहणात् ऋदृशोऽङीति गुणः आङ्विनाप्यडागमे कृते रूपमिदं हन्तेः सनि

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अञ्झनगमांसनीति दीर्घः अभ्यासाच्चेति घत्वं कुतोज्ञातमित्याह इदमभ्यग्रं शोणितं तयोः संप्रहारे युद्धे अच्युतत् गलितं च्युतिरक्षरणे अकर्म्मकोऽत्र इरनुबन्धत्वादिरितोवेत्यङ् सीतां भक्षयितुं तयोरेव विवादोवृत्तइति भावः॥ २८॥

सीतामित्यादि। इत्येवं लक्ष्मणायाशिषदिति श्लोकचतुष्टयेषु सम्बध्यते हे सौमित्रे ध्रुवं निश्चिते उत्प्रेक्षे वा सीतां हन्तुमिच्छू राक्षसावारतां आङ्पूर्व्वात् ऋलिगत्यांइत्यस्मात् ऋप्रापणेचेत्यस्माद्वा वक्ष्यस्येत्यादिना पक्षे ङः ऋदृशोऽङिगुणः इति गुणः आङा विनापि रूपमेतत् हन्तेः सनिर्ग्रोऽज्झनिङ्गमामिति दीर्घः खेर्हौघः कुतोज्ञातमित्याह तयोरेव संप्रहारे युद्धे इदं अभ्यग्रं अभिनवं शोणितं अच्युतत् गलितं च्युतिरक्षरणेऽकर्म्मकः इरित्वात् शासुलिद्युदित्यादिना पक्षे ङः सीतामत्तुं तयोरेव विरोधोजातइति भावः॥ २८॥　भ०

इदं कवचमच्योतीत् साश्वोऽयं चर्णितोरथः। एह्यमुं गिरिमन्वेष्टुमवगाहावहे द्रुतं॥ २९॥

इदमित्यादि। इदं कवचमच्योतीत् भ्रष्टं अङभावे सिजेव भवति अयं रथः साश्वश्चर्णितआस्ते यतश्चैवं तस्मादेहि आगच्छ द्रुतं किं पश्चाद्विलम्बसे अमुं गिरिमवगाहावहे विलोडयावः किमर्थं अन्वेष्टुं सीतामित्यर्थात् एतत्सर्व्व पर्व्वतसमीपे कथ्यते॥ २९॥　ज०म०

इदमित्यादि॥ कवचमिदं अच्योतीत् भ्रष्टं इरित्वात् ङाभावपक्षे च्लांसिः अश्वेन सह चूर्णितोऽयं रथस्तास्ते यतएवं तस्मात्　भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



द्रुतं शीघ्रं एहि आगच्छ आङ्पूर्व्वस्येणो हौ रूपं अन्वेष्टुमथात् सीतां अमुं गिरिं आवां अवगाहावहे सर्व्वतः पर्य्यटावः॥ २९॥

मन्युर्म्मन्ये ममास्तम्भीद्विषादोऽलभदुद्यतिं। अजारीदिव च प्रज्ञा बलं शोकात्तथाजरत्॥ ३०॥

ज०म० मन्युरित्यादि। मन्युर्मम शोकः मन्ये इत्यहं सशोकः सुहृज्जनेऽस्तम्भीत् स्तब्धवान् विषादउद्यतिमलभत् अत्र पक्षे अनुनासिकलोपः प्रज्ञा च तत्र विवेकिनी बुद्धिः अजारीत् विवेकवैकल्यात् जीर्णेव तथाशब्दः समुच्चये बलं शोकादजरत् जीर्णं स्वकार्य्याकरणात् ऋद्दृशोऽङीति गुणः जॄस्तम्भित्यादिना स्विजङौ॥ ३०॥

भ० मन्युरित्यादि। हे सौमित्रे मन्युः शोकोमम मन्ये स्कन्धमूर्द्धशिराद्वयमस्तम्भीत् शोकजन्यवायुना मन्यास्तम्भोनाम व्याधिर्जातइत्यर्थः मन्युशोकौ तु शुक् स्त्रियां पश्चाद्ग्रीवाशिरामन्येति चामरः विषादउत्साहविपर्य्यय उद्यतिं उद्यममलभत् लब्धवान् तुः सौत्रिकः शासलिड्दिति वाङ् हसुनङ् लोपः ङाभावपक्षेंस्यांसिः उत्पूर्व्वाद्यमेः क्तौ वनतनाद्यनिमामिति मलोपः मम प्रज्ञा बुद्धिश्चाजारीत् कर्त्तव्यमूढत्वाज्जीर्णेव तथा मम बलं शोकात् अजरत् कार्य्याक्षमत्वाज्जीर्णमिव पूर्व्ववद्वाङ् ऋश्रोर्ण्ङिति गुणः पक्षे सिः व्रजवदेति त्रिः तथेति समुच्चयाभ्युपगमयोरिवेति वृद्धाः॥ ३०॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



गृध्रस्येहाश्वतां पक्षौ क्षतौ वीक्षस्व लक्ष्मण। जिघांसोर्नूनमापादि ध्वंसोऽयं तां निशाचरात्॥ ३१॥

गृध्रस्येत्यादि। हे लक्ष्मण इह प्रदेशे गृध्रस्य पक्षौ क्षतौ छिन्नौ अश्वतां शूनौ पूर्व्ववदङि श्वयतेरः इति वीक्षस्व नूनमवश्यं सीतां जिघत्सोरत्तुमिच्छोर्गृध्रस्य अदेर्लुङ्सनोर्घस्लृ निशाचरादयं ध्वंसः पक्षच्छेद आपादि उत्पन्नः कर्त्तरि लुङ् चिण्तेपदइति त्लेश्चिणादेशः तशब्दस्य चिणोलुक्॥ ३१॥ ज०म०

गृध्रेत्यादि। हे लक्ष्मण इह स्थाने गृध्रस्य क्षतौ छिन्नौ पक्षौ अश्वतां वायुना मांसादिपरिणामेन वा वृद्धिं गतौ इति वीक्षस्व पश्य टुओश्विगतिवृद्ध्योः पूर्व्वेण वा ङः वच्यस्यश्विपतामिति श्वः नूनं निश्चितं तां सीतां जिघांसोर्गृध्रस्य अयं ध्वंसः पक्षच्छेदः निशाचरादापादि उत्पन्नः पदस्तनीण्घेइति कर्त्तरि इण् इणस्तनलोपः जिघत्सोरिति पाठे अत्तुं भोक्तुमिच्छोः घस्लृदःस निति अदेर्घस्लृः सत्स्यरे॥ ३१॥ भ०

क्रुद्धोऽदीपि रघुव्याघ्रोरक्तनेत्रोऽजनि क्षणात्। अबोधि दुःस्थं त्रैलोक्यं दीप्तैरापूरि भानुवत्॥ ३२॥

क्रुद्धइत्यादि। तदेवं रघुव्याघ्रो रामः क्रुद्धोऽदीपि दीप्तवान् क्षणाच्च रक्तनेत्रोऽजनि जातः जनिबध्योश्चेति न वृद्धिः त्रैलोक्यं निहन्मि यस्मिन् हन्यमानेऽपि सीताद्रुहोऽपि नश्यन्ति इत्यभि प्रायेण दुःस्थमबोधि बुध्यते स्म किम्वा रामस्य दाराह्रियन्ते ज०म०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



यदान्येषु का कथा इति दुःखं त्रैलोक्यमबोधि दीप्तैस्तेजोभिर्हेतुभिरापूरि वर्द्धते स्म भानुवदादित्यवत् दीप्तैरिति भावे निष्ठा सर्व्वत्र कर्त्तरि लुङ् दीपजनेत्यादिना चिण्॥ ३२॥

भ० क्रुद्ध इत्यादि। लक्ष्मणायैवमुक्त्वा रघुव्याघ्रो रामः क्रुद्धः सन् अदीपि जज्वाल क्षणाच्च रक्तनेत्रोऽजनि जातः त्रैलोक्यमेवं दुःखं अबोधि ज्ञातवान् शत्रुमलब्ध्वा तन्नाशाय त्रैलोक्यमपि नाशयिष्यामीत्याशयः येनाहमपि दुःखः कृतस्तेन सुतरां जगद्दुःखमिति वा दीप्तैस्तेजोभिर्हेतुभिरापूरि वर्द्धते स्म भानुरिव दीपेर्भावे क्तः सर्व्वत्र पदस्तनीण् घेइत्यादिना कर्त्तरि पाक्षिक इण् इणस्तनलोपः जनबधःसेमइत्यादिना जनेर्ह्रस्वः॥ ३२॥

अतायस्योत्तमं सत्वमप्यायि कृतकृत्यवत्। उपाचायिष्ट सामर्थ्यं तस्य संरम्भिणोमहत्॥ ३३॥

ज०म० अतायीत्यादि। अस्य रामस्य उत्तमं सत्वमभिप्रायः शोकव्यसनयोरविकारत्वात् अतायि सन्ततं नान्तरा विच्छिद्यते स्म अप्यायि वृंहितं कृतकृत्यवत् समाप्तक्रियवत् हस्ततलस्थं शत्रुवधं मन्यमानस्य उभयत्रापि पूर्व्ववच्चिण् तस्य रामस्य संरम्भिणः शत्रुविषये क्षुभितचित्तस्य सामर्थ्यं बलमुपाचायिष्ट स्वयमेवोपचीयते स्म चिनोतेरचः कर्म्मकर्त्तरीति चिण् पक्षे चिण्वदिट् चेति॥ ३३॥

भ० अतेत्यादि। अस्य रामस्य सत्वं व्यवसायः स्वभावोवा अतायि सततं वभूव नान्तरा विहन्यते स्म उत्तमं व्यसनेऽपि अविहतं तायृङ्पातनसन्तत्योः अप्यायि वर्द्धते स्म कृतकृत्यवत् समाप्तक्रिय इव

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



क्रोधोत्साहाधिक्यात् विहितोवैरिवधइत्यध्यवसायात् प्याधीङ् वृद्धौ उभयत्र पूर्व्ववद्वा इण् संरम्भिण: शत्रुविषये क्रुद्धस्य तस्य रामस्य सामर्थ्यं महदुपाचायिष्ट स्वयमेवोपचीयते स्म हनग्रह दृशश्चइति चिनोतेः सेर्म्मिण् कर्म्मकर्त्तरि चाप्यृङ्निशानेऽर्चें इत्य स्यानेकार्थत्वात् कर्त्तर्य्येवेदं रूपमित्यन्ये सत्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः। आत्मनि व्यवसाये च चित्ते प्राणिषु जन्तुष्विति विश्वः॥ ३३॥

अदोहीव विषादोऽस्य समरुद्धेव विक्रमः। सम भावि च कोपेन न्यश्वसीच्चायतं मुहुः॥ ३४॥

अदोहीत्यादि। अस्य रामस्य विषादः प्रागुत्पन्नोऽदोहीव स्वयं चरितइव अथवा अदोहीव प्रपूर्य्यते स्मेव विक्रमः पुरुषकारः समरुद्धेव संरुध्यते स्म इव कर्म्मवदित्यादिना कर्म्मवद्भावेन प्राप्त स्य चिणो नरुधइति निषेधःतेन सिजेव भवति झलोझलीति सिचो लोपः झषस्तथोर्धोऽधः झलाञ्जश्झशीति धत्वजस्त्वे कोपेन च समभावि सम्भूतं चिण्भावकर्म्मणोरिति भावे चिण् त्रैलोक्यदौः स्थावबोधाज्जातखेदः सन् आयतं दीर्घं न्यश्वसीत् निश्वसितवान् ह्यन्तेति वृद्धिर्न भवति मुहुरिति सर्व्वत्र योज्यं॥ ३४॥ ज॰म॰

अदोहीत्यादि। अस्य रामस्य प्रागुत्पन्नोविषादः स्वयमेवा दोहि इव क्रोधातिशयात् स्वयं चरितइव पूर्य्यते स्मेवेत्यन्ये वेणज दुहइति कर्म्मकर्त्तरि वा इण् विक्रमोऽपि समरुद्धेव स्वयमेवान्तः प्रविष्टइव नतपरुधसढेति कर्म्मकर्त्तरि इणनिषेधः झसस्यादि भ॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ति सिलोपः अस्य कोपेन समभावि सम्भूतं रतनोर्यणिणाविति भावे इण् कोपात् मुहुर्व्वारंवारं आयतं दीर्घं यथा स्यात्तथा रामोऽन्यश्वसीत् हसादेःसेमइत्यादौ श्वसवर्ज्जनात् न वृद्धिः। इति सिजधिकारः॥३४॥

## श्नम्प्रकरणं कथ्यते।

अथालम्ब्य धनूरामोजगर्ज्ज गजविक्रमः। रुणध्मि सवितुर्मार्गं भिनद्मि कुलपर्व्वतान्॥ ३५ ॥

ज॰म॰ इतःप्रभृति श्नम्विकरणमधिकृत्याह। अथेत्यादि। अथानन्तरं रामोधनुरालम्व्य गृहीत्वा जगर्ज विष्फुर्ज्जितवान् धनूराम इति रुलोपइति दीर्घः गजगतिः सवितुः सूर्य्यस्य मार्गं पन्थानं रुणध्मि आवृणोमि शरैरित्यर्थात् तथा भिनद्मि विदारयामि कुलपर्व्वतान्॥ ३५ ॥

भ॰ अथ नशब्दाधिकारः। स च रुमते श्नण्। अथेत्यादि। अनन्तरं गजपराक्रमोरामोधनुरालम्ब्य गृहीत्वा जगर्ज्ज सिंहनादं चकार किं कृत्वा जगर्ज्जेत्याह अहं सवितुः सूर्य्यस्य मार्गं पन्थानं रुणध्मि आवृणोमि अर्थात् शरैः मृदुत्वादेव ममेदृशं कर्म्म संवृत्तं इदानीं महतां दण्डभयादन्योऽपि सीतां दास्यति नच पुनरेवं कोऽपि करिष्यतीति भावः अतएव न तृणेढ्मीति लोकोऽयमिति वक्ष्यति कुलपर्व्वतान् पृथिव्याअवलम्बकान् पर्व्वतानपि अहं भिनद्मि विदारयामि रुधिरोञ्नआवृतौ ञधी भिदिर्भिदि दिवस्तुदरुधेति अणेव श्यनादिवत् प्रकृतिप्रत्य

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



यर्योः साहाय्यकारित्वान्न श्रप् दिवसुतुदरुधक्रादेरिति षष्ठ्येकवचनान्तं पदं तेन दिवादिप्रभृतीनां सम्बन्धे श्यनादयोरेपरे निर्द्दिष्टाद्दृत्यर्थः ते कुत्र भवन्तीत्याशङ्क्य वृत्तावुक्तं एभ्यइति तेन सूत्रे षष्ठीनिर्द्देशात् रुधादेः श्नम् मित्त्वादन्त्याचउत्तरः एभ्यइति वृत्तौ पञ्चमीनिर्द्देशादन्ये प्रकृतेरुत्तरइति बोध्यं न च सूत्रे पञ्चमीनिर्द्देशेऽपि मित्वात् श्नम् रुधादेरन्त्यादचः परे भवितुमर्हति एमितइत्यस्य षष्ठ्यन्तएव विषयत्वात् शासुखिद्धि, त्विषादेरिति पञ्चम्यन्तत्वात् प्रकृतेः परोङः न तु ङित्वादन्त्यस्य स्थाने इत्यादिदर्शनात् षष्ठीनिर्द्देशेऽपि पञ्चम्यर्थोगम्यते तथाहि अनडुत्पुंपयोलक्ष्मीनावामेकत्ववाचिनां। नित्यं कः स्यादङ्ग्व्रीहौ वा स्याद्द्वित्ववङ्गत्वयोरिति। अन्यत्रापि नित्यात्वतां स्वरान्तानां सृजिदृश्योश्च वेट्यलि। टचि नित्यानिटःसुसेदृव्येऽदांनित्यमिट् थलीति॥ ३५॥

रिणच्मि जलधेस्तोयं विविनच्मि दिवः सुरान्।
चुणद्मि सर्पान् पाताले छिनद्मि क्षणदाचरान्॥ ३६॥

रिणच्मीत्यादि। जलधेस्तोय रिणच्मि रिक्तीकरोमि रिचि रविरेचने दिवः स्वर्गात् सुरान्विविनच्मि पृथक्करोमि विचिर पृथग्भावे चुणद्मि चूर्णयामि सर्पान् पाताले चुदिरपेषणे अट् कुप्वाङिति णत्वं छिनद्मि क्षणदाचरान् राक्षसान् द्विधा करोमि छिदिरद्वैधीकरणे॥ ३६॥ जं॰मं॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० रिणच्मीत्यादि। जलधेः समुद्रस्य तोयं रिणच्मि रिक्तीकरोमि रिचिर्धोविरेके रेफात् अणोणत्वं सुरान् दिवः स्वर्गात् विविनच्मि पृथक्करोमि विचिर्लिधौञ् पृथक्त्वे विपूर्व्वः सुरा योगात् सुराः अर्शआदित्वादः तदुक्तं सुरापरिग्रहाद्देवाः सुरा इत्यभिविश्रुताइति किम्वा सुरन्ति भान्ति ईशते वा इति सुरा सुरश्‌भैश्वर्ययोरित्यस्मात् ज्ञगॄज्ञाप्रीजुङइति कः पाताले सर्पान् चुणद्मि चूर्णयामि ञधौक्षुदिर्चुदि चुत्सम्पेषणं षकारात्त्वं पतन्ति लोका अस्मिन्निति पातालं निपातनात् चणदाचरान् छिनद्मि द्वैधीकरोमि छिदिर्धौञ्छेदे॥ ३६॥

यमं युनज्मि कालेन समिन्धानोऽस्त्रकौशलं।
शुष्कपेषं पिनष्म्युर्व्वीमखिन्दानः स्वतेजसा॥ ३७॥

ज०म० यममित्यादि। यममपि कालेन तदधीनेन मृत्युना युनज्मि सम्बध्नामि अस्त्रकौशलं समिन्धानः सम्वर्द्धयन् ञिइन्धीदीप्तौ आत्मनेपदिनोलटः शानच् श्नान्नलोपः श्नसोरल्लोपः उर्व्वीं शुष्कां कृत्वा चूर्णयामि पिषृसंचूर्णने शुष्कचूर्णरूक्षेषुपिषइति णमुल् अखिन्दानः स्वतेजसा दैन्यमव्रगन् अपरिश्राम्यन् खिद दैन्ये पूर्व्ववल्लोपः॥ ३७॥

भ० यममित्यादि॥ यममपि कालेन मृत्युना अहं युनज्मि हन्मीत्यर्थः युजिर्धाञ्युतौ अस्त्रकौशलं समिन्धानः वर्द्धयन् इन्धीञ् धञ्चिदीप्तौ शानः नणोनलोप्यइत्युङ्लोपः नणान्त्रेणाविति नस्य अकाररहितत्वं उर्व्वीं शुष्कपेषं पिनश्मि चूर्णयामि धौपिष्लृ

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



चूर्णने प्रुष्कचूर्णत्वात् पिषीणम् गतार्थत्वे तदनुप्रयोगश्चेति पर: क्षमते चणम्वित्यस्य योगविभागात् चैश्चुष्पचोमकवदिति प्रुषैः तस्य कः स्वतेजसा अखिन्दानः दैन्यमभजन् अपरिश्रा स्यन् वा खिदङ्ध्यौ दैन्यके नणोन्नेऽणौ ॥ ३७ ॥

भूतिं तृणद्मि यज्वाणां हिनस्मीन्द्रस्य विक्रमं। भन ज्मि सर्व्वमर्य्यादास्तनच्मि व्योम विस्तृतं। ३८ ॥

भूतिमित्यादि। यज्वाणं भूतिं सम्पदं तृणद्मि उत्पादयामि उतृ दिरहिंसानादरयोः इन्द्रस्य विक्रमं हिनस्मि अपनयामि हिंसि हिंसायां इदितोनुम् तस्य श्नान्नलोपः सर्व्वमर्य्यादास्य व्यवस्थाः सर्व्वेषां भनज्मि मर्द्दयामि भञ्जोआमर्द्दने श्नान्नलोपः तनच्मि व्योम विस्तृतं संकोचयामि स्तृञ्ञआच्छादने क्तान्तेन चौरादिकस्य रूपं तञ्चूसङ्कोचे श्नान्नलोपः कस्मादेवं प्रवृत्तस्त्वमिति चेदाह ॥३८॥ ज०म०

भूतिमित्यादि। यज्वाणां भूतिं सम्पदं तृणेह्मि नाशयामि तृहञ्धिर्नादरेच चकाराद्धिंसायां इन्द्रस्य विक्रमं हिनस्मि अपनयामि हिसधिकिहिंसे नणोनलोप्यइति इदित्वात् कृतनुणो लोपः सर्व्वेषां मर्य्यादाव्यवस्थाभनज्मि निवर्त्तयामि भन्जोधो मोटने व्योम्नआकाशस्य विस्तृतं विस्तारं तनच्मि सङ्कोचयामि तञ्चुधसंकुचि तनज्मीति पाठे तन्जुधसङ्कोचे स्तृनञ्स्तृतावित्य स्माद्भावे क्तः व्योमविशेषणे विस्तृतमिति निरर्थकं स्यात्॥ ३८॥ भ०

न तृणेह्मीति लोकोऽयं मां वित्ते निष्पराक्रमं। एवं वदन् दाशरथिरपृणग्धनुषा शरं॥ ३९ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज॰म॰ नतृणेह्मीत्यादि। न तृणेह्मि न मारयामि इति कृत्वा तृहिहि सिहिंसायां श्नम् तृणहइम् अयं लोको मां निष्पराक्रमं निर्व्वीर्य्यं विन्ते विचारयति विदविचारणइत्यस्मादात्मनेपदिनः श्नम् श्नलोपः एवमुक्तेन प्रकारेण वदन् दाशरथिः धनुषा शरं। अपृणक् पृणक्ति स्म पृचोसंपर्के लङि श्नम् हल्ङ्यादिलोपः कुत्वं इति श्नम् विकरणनिदर्शनं॥ ३९॥

भ॰ नतृणेह्मीत्यादि। कथमेवं प्रवृत्तिरित्याह अहं न तृणेह्मि न हन्मि इति कृत्वा मनसीत्यर्थात् अयं लोकः मां निष्पराक्रमं विन्ते विचारयति तेन मे पत्यपहारो वृत्तइति भावः धीविदङ् मीमांसे नणोन्त्रेऽणौ तृहधहिंसे तृहइणपिद्धसे इति नणइण् श्चकारात् णत्वं दाशरथीरामएवं वदन् धनुषा शरं अपृणक् युनक्ति स्म पृचृधीच्सम्पर्के हसङ्यादिसेरिति दिलोपः चङिति कङ् स्ततोणत्वं शृणाति हिनस्तीति शरोऽनन्तः तालव्यादिः दन्त्यादिरप्यस्ति चित्रपुङ्खः शरः सरइति त्रिकाण्डशेषः। इति नशब्दाधिकारः॥ ३९॥

## अथ प्रकीर्णकाः।

न्यवर्त्तयत्सुमित्राभूस्तं चिकीर्षुं जगत्त्रयं। ऐन्द्रे तामाश्रमादाराद्गिरिकल्पं पतत्त्रिणं॥ ४०॥

ज॰म॰ इतः प्रकीर्णकश्लोकानाह। न्यवर्त्तयदित्यादि। तं रामं जगत्त्रयं चिकीर्षुं कर्त्तुमिच्छं सुमित्राभूर्लक्ष्मणोन्यवर्त्तयत् निवर्त्तितवान् भ्रातः अलं कोपेन त्वया सार्द्धं कः संग्रामे युद्धं दातुं समर्थः

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



यदत्र युक्तं तत्प्रतिविधीयतामिति भवनं भूः सम्पदादित्वात् क्विप् सुमित्रायां भूर्यस्य ऐचेतां रामलक्ष्मणौ दृष्टवन्तौ लङि रूपं पक्षिणं गिरिकल्पं महाप्राणित्वात् आश्रमादारात् समीपे दूरान्तिकार्थैरिति पञ्चमी ॥ ४० ॥

अथ प्रकीर्णकाः। न्यवेत्यादि। इत्थं जगतः क्षयं कर्त्तुमिच्छन्तं भ० तं रामं सुमित्राभूर्लक्ष्मणोन्यवर्त्तयत् निवारयामास अन्यापराधेनान्यदण्डानौचित्यात् सुमित्रा भूरुत्पत्तिस्थानं यस्य सुमित्रायां भूर्भवनं यस्येति वा सुमित्रायाभवतीति वा क्विवन्तमिदं रूपं अथ रामलक्ष्मणौ आश्रमादारात् समीपे गिरिकल्पं पर्व्वततुल्यं पतत्रिणं पक्षिणं ऐचेतां दृष्टवन्तौ अन्यारभ्यार्थारादिति पञ्चमी ॥ ४० ॥

तं सीताघातिनं मत्वा हन्तुं रामोऽभ्यधावत। मा बधिष्टाजटायुं मां सीतां रामाहमैक्षिषि ॥ ४१ ॥

तमित्यादि। तं सीताघातिनं सीता हतानेनेति मत्वा रामो ज०म० हनिष्यामीत्यभ्यधावत धावुगतिशुद्ध्योरित्यस्माल्लङि स्वरितेत्वादात्मनेपदं तं हन्तुमुद्यतं रामं जटायुराह मा बधिष्टाइति हे राम मां जटायुं मा बधिष्ठाः मा बधीः बधबन्धने इत्यस्मादनेकार्थत्वादात्मनेपदिनः सेटोलुङि रूपं न हन्तेःसत्याङि आङोयमहनइत्यात्मनेपदं नास्ति अकर्म्मकादित्यनुवृत्तेः स्वनामपरिकीर्त्तनं तव पितुरहं सखेति ख्यापनार्थं सीतामैक्षिषि दृष्टवानहं लुङुत्तमैकवचने अतोमां मा बधिष्टाः ॥ ४१ ॥

तमित्यादि। तं पक्षिणं सीताघातिनं सीतामयं हतवान् इति भ०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



मत्वा हन्तुं रामोऽभ्यधावत वेगेन अभिमुखं गतवान् धावन्नजवे त्वजि उपास्थितैवमुक्तोतमिति वक्ष्यमाणश्लोकेनान्वयात् मा वधिष्ठा इत्यादिपद्यार्द्धं हन्तुमुद्यतं रामं प्रति जटायुवाक्यमिति गम्यते हे राम जटायुं मां त्वं मा वधिष्ठाः मारय हन्तेस्यासख्योस्सिः हन वधष्टीव्यलीति वधादेशः धात्वरक्तत्वात् वसेरस्येतीम् आत्मने पदमिच्छन्ति परस्मैपदिनां क्वचिदिति परवाक्यात् क्षमते वाऊ ख्यात् आत्मनेपदं किम्वा आङ्पूर्व्वहन्तेः आत्माङ्गढाद्ढाचाहन यमइति मं आत्माङ्गढादित्यस्य क्वचिद्व्यभिचारात् तथाच गाण्डी वी कनकशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्षइति किम्वा जटायुमिति नामकीर्त्तनेन तव पितुः सखा अहमिति ज्ञा पितं तेन च तव पितुः सख्यदार्व्येनाहं तव स्वाङ्गमिव मम हिंसया तव स्वाङ्गहिंसा व्यर्थेति आरोपितात्माङ्गत्वादात्माङ्गढादित्या त्मनेपदं किम्वा आत्माङ्गढादित्यत्र आत्मशब्देनात्मीयोऽपि लक्ष्यते किम्वा धातूनामनेकार्थत्वाद्वधङ्निन्दे च इत्यस्य रूपं कित्तिजगुपइत्यादौ निन्दावधेःसन्विधानादत्र न सन् जटा आयुर्यस्येति व्युत्पत्त्या तस्य च प्रवयसोजटायुषः स्वर्गिणः किमनु शोच्यतेऽधुनेति दर्शनाच्च जटायुमिति चिन्त्यमिति भ्रान्तावद न्ति यतो वाऊत्यादिणधातोरुण्प्रत्यये आयुशब्दोऽयमुदन्तोऽपि दृश्यते यथा वायुना जगदायुनेति जटायुश्च जटायुरिति शब्द भेदः पौलस्त्यस्य जटायुषा विघटितः कार्ष्णायसोऽयं रथः पश्यैते पुरतः पिशाचवदनाः कङ्कालशेषाः कृताः। खड्गच्छिन्नजटायुपच तिरितः सीताञ्चलन्तीं वहन्नन्तर्व्याकुलविद्युदम्बुदइव द्यामभ्युद स्थादरिरित्येतत्पद्यमुनादिवृत्तावुद्धृलदत्तेन जटायुशब्दस्य स

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



क्षोदन्तत्वेन दैन्यज्ञापनायोदाहृतं अहं सीतामैषिषि दृष्ट वान् त्वां स्मि इम् अतोऽपि मा बधिष्ठाइति भावः॥ ४१॥

उपास्थितैवमुक्ते तं सखायं राघवः पितुः। पप्रच्छ जानकीवार्त्तां संग्रामञ्च पतत्त्रिणं। ततो रावणमाख्याय द्विषन्तं पततां वरः॥ ४२॥

उपास्थितइत्यादि। पक्षिणैवमुक्ते सति राघवस्तं रणभङ्गानुष्ठानेन उपास्थित परिचितवान् संगतकरणआत्मनेपदं स्थाघ्वोरिच्चेतीत्वं ह्रस्वादंगादिति सिचोलोपः पितुः सखायं मम पितुः सखायमिति कृत्वा सखिशब्दाद्द्वितीयैकवचने रूपं सख्युरसम्बुद्धाविति णित्वाद्वृद्धिरायादेशः पप्रच्छ पृष्टवान् तं पक्षिणं जटायुं किं जानकीवार्त्तां संग्रामञ्च ततउपस्थानानन्तरं रावणं द्विषन्तं शत्रुं आख्याय कथयित्वा रावणेन हृता सीतेति पततां पक्षिणां वरोजटायुर्ममारेति परेणान्वयः॥ ४२॥ ज०म०

उपेत्यादि। पक्षिणा एवमुक्ते सति राघवस्तं पितुः सखायं उपास्थित आराधितवान् मैत्राध्वसङ्गइति मं स्थादेर्ङिष्टीमेइति ङिर्गुणाभावश्च झस्ह्रस्वादिति सिलोपः ततउपस्थानानन्तरं द्विषन्तं शत्रुं रावणमाख्याय सीता तेन हृतेति कथयित्वा पततां पक्षिणां वरः श्रेष्ठोजटायुर्ममारेति वक्ष्यमाणश्लोकेन सम्बन्धः॥ ४२॥ भ०

व्रणवेदनया ग्लायन्ममार गिरिकन्दरे। तस्यान्त्यक्रियां कृत्वा प्रतस्थाते पुनर्व्वनं॥ ४३॥

व्रणेत्यादि। व्रणकृता वेदना पीडा मध्यपदलोपी समासः तया ज०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ग्लायन् ग्लानिं गच्छन् शतर्य्यायादेशः ममार मृतः क्व गिरिकन्दरे यं गिरिमन्वसृपत् तस्य निम्नप्रदेशे कन्दं रातीति व्युत्पत्तिमाचं तस्य जटायोरग्न्यम्बुक्रियां दाहमुदकदानञ्च कृत्वा पुनर्भूयो वनमरण्यं प्रतस्थाते प्रस्थितौ समवप्रविभ्यइत्यात्मनेपदं ॥ ४३ ॥

भ० व्रणेत्यादि । व्रणेन या वेदना तया ग्लायन् ग्लानिं गच्छन् ममार अथ गिरिकन्दरे यं गिरिमन्वसृपद्रामस्तस्य निम्नप्रदेशे गुहायां वा अग्निक्रियां दाहं अम्बुक्रियां तर्पणं च कृत्वा पुनर्व्वनं प्रतस्थाते अर्थाद्रामलक्ष्मणौ प्रतिज्ञानिर्णयेत्यादिना प्रस्थोमं मृङ्स्थौङ्मिमिति नियमात् ठीपं । अथालम्व्यधनूराम इत्यादिपद्यार्द्धादनन्तरं सीताविरहदुःखार्त्तः कोपसंरक्तलोचनइति यमं युनज्मि कालेनेत्यादिपद्यार्द्धानन्तरं विनज्मि धाम सर्व्वेषां वृणेह्मि सकलं जगदिति एवं वदन् दाशरथिरित्यादि पद्यार्द्धादनन्तरं जगन्नाशाय सन्नद्धस्तृणवत् स्वेन तेजसेति न्यवर्त्तयत् सुमित्राभूरित्यादिपद्यार्द्धानन्तरं तेजःचात्रं विदृण्वानं दिधक्षन्तमिवानलमिति तं सीताघातिनं मत्वेत्यादिपद्यार्द्धानन्तरं प्रोवाच सतदापक्षी भयाद्रामेण तर्जितइति उपास्थितैवमुक्तमित्यादि पद्यार्द्धानन्तरं पप्रच्छ जानकीवार्त्तां संग्रामञ्च पतत्रिणमिति तस्याग्न्यम्बुक्रियां कृत्वेत्यादि पद्यार्द्धानन्तरं विराधमीयिवांसौ तां विचिन्वानावितस्ततइति पद्यार्द्धं केनचित् क्वचित् पुस्तके प्रक्षिप्तं सर्व्वमिदं प्राचीनैरुपेक्षितत्वादमूलमेव तत्राप्यथालम्व्यधनूरामइत्यादिपद्यार्द्धानन्तरं सीताविरहदुःखार्त्तः कोपसंरक्तलोचनइति पद्यार्द्धमतीवायुक्तं नञ्शब्दाधिकारे मशब्दाभावात्

॥ ४३ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



सत्वानजस्त्रं घोरेण बलापकर्षमश्नता। क्षुध्यता ज
गृहाते तौ रक्षसा दीर्घवाहुना॥ ४४॥

सत्वानित्यादि। तौ रामलक्ष्मणौ रक्षसा राक्षसेन जगृहाते ज०म०
गृहीतौ कर्म्मणि लिट् किं नाम्ना दीर्घवाहुना अन्वर्था चेयं संज्ञा
एक एकेन बाहुना द्वितीयोद्वितीयेन क्षुध्यता बुभुक्षमाणेन
घोरेण भीमेन सत्वान् अजस्त्रं सदा नञ्पूर्व्वाज्जसोर्नाम कर्म्मोति
र: अश्नता भुञ्जानेन किं कृत्वा बलापकर्षं बलादाकृष्यैव पाका
दिकमनपेक्ष्य अपादाने परीप्सायामिति णमुल्॥ ४४॥

सत्वानित्यादि। तौ रामलक्ष्मणौ दीर्घवाहुनाम्ना रक्षसा भ०
जगृहाते गृहीतौ कर्म्मणि ठौ क्षुध्यता बुभुक्षुणा दिवादित्वात् श्यन्
बलापकर्षं सत्वान् प्राणिनोऽजस्त्रं निरन्तरं अश्नता भक्षयता ब
लादपकृष्य त्वरया परिष्कारादिकमकृत्वैव पञ्चम्यन्तात्त्वरायां
णमिति परः स्वमते बलेनापकर्षोऽपकर्षणं यत्रेति सत्वभक्षण
क्रियाविशेषणं एतेन त्वरयापरिष्कारादिकं तदपि प्राप्तं परि
ष्कृतत्वादौ बलहेतुत्वस्य वैयर्थ्यात् क्षणम्वेत्यस्य योगविभागाद्वा
क्षणम् घोरेण भयदेन नञ्पूर्व्वाज्जसेर्हिंसदीपकम्पाजस्त्रेति रः
॥ ४४॥

भुजौ चकृततुस्तस्य निस्त्रिंशाभ्यां रघूत्तमौ। स
च्छिन्नबाहुरपतद्दिक्को क्षलयन् भुवं॥ ४५॥

इति प्रकीर्णकाः।

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० भुजावित्यादि। रघूत्तमौ रामलक्ष्मणौ तस्य योजनबाहोः बाहू यथास्थानमागतौ चक्रततुः छिन्नवन्तौ कृतीच्छेदने इत्यस्य रूपं काभ्यां निस्त्रिंशाभ्यां खड्गाभ्यां निर्गतस्त्रिंशतोऽङ्गुलिभ्य इति वाक्ये डच्प्रकरणे संख्यायास्तत्पुरुषस्योपसंख्यानमिति त्रिंशच्छब्दाड्डच्विधिः निरादय इति समासः टिलोपः सच्छिन्नबाहुः कृत्तभुजः सन् अपतत् पतितः पतेर्लङि रूपं लृदित्वादङ् विक्लो व्याकुलः भुवं भूमिं क्लयन् क्लचलने घटादित्वे ह्रस्वत्वं। इति प्रकीर्णका:॥ ४५ ॥

भ० भुजावित्यादि। रघूत्तमौ निस्त्रिंशाभ्यां तस्य रक्षसोभुजौ खड्गग्रहणोद्यतौ चक्रततुः कृतीशपछिदि त्रिंशतोऽङ्गुलीभ्यो निर्गतः निस्त्रिंशः निसःशतोड इति सूत्रे निश इति निर्देशात् निष्पतन्त्य इत्यादिवत् ज्ञापकप्राप्तस्य षत्वस्याभावः त्रिंशतोऽङ्गुलीभ्योऽधिकं परिमाणं खड्गस्योक्तं निस्त्रिंशः करखड्गयोरिति कोषः स च्छिन्नबाहुः सन् भुवं क्लयन् कम्पयन् न्यपतत् क्लह्वलचाले ज्वलक्लेत्यादिना अगेर्वा ह्रस्वः विक्लोव्याकुलः। इति प्रकीर्णका:॥ ४५ ॥

## अथकृत्याधिकारः।

प्रष्टव्यं पृच्छतस्तस्य कथनीयमवीवचत्। आत्मानं वनवासञ्च जेयञ्चारिं रघूत्तमः॥ ४६ ॥

ज०म० इतः परं कृत्याधिकारः। प्रष्टव्यमित्यादि। सयोजनबाहुः निहतोरामं पप्रच्छ कोभवान् कस्य पुत्रः कथं तव वनवासः कस्माच्चो

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



द्विग्नः सन् भ्रमसीति प्रष्टव्यं प्रश्नार्हं पृच्छतस्तस्य तव्यत्तव्यानीयर इति तव्यत् प्रस्वेति षत्वं टत्वञ्च रघूत्तमः इदानीं कथनीयं कथनार्हं तत्प्रश्नानुरूपं पूर्व्वेणानीयर अवीवचद्वक्तिस्म वचभाषणे चौरादिकः स्वार्थिकोणिच् लुङ् चङ् णिलोपह्रस्वः द्विर्व्वचनसन्वद्भावेत्वदीर्घत्वेषु रूपं किन्तदित्याह आत्मानं रामोदाशरथिरिति वनवासं पितुरादेशात् वनवासं जेयं चारिं यः कनकमृगछलेन रावणः सीतामपहृतवान् ॥ ४६ ॥ भ०

अथ कृत्याधिकारः। स्वमते त्यास्तव्यानीयघ्यण्क्यप्केलिमाः। प्रष्टव्यमित्यादि। कस्त्वं कथमिहागतइत्यादि प्रश्नार्हं पृच्छतस्तस्य राचसस्य सम्बन्धे रघूत्तमः कथनार्हं प्रश्नानुरूपं अवीवचत् कथितवान् वच्कच्सन्देशे किलाचुरादिः ञिश्रीत्यङ् न्यङ्गुङःखः खेःसन्वत् ञेर्लोपः किन्तदित्याह आत्मानं पित्रादिसम्बन्धेन वनवासं वनवासकारणमर्थात् जेयं जेतव्यमरिं शत्रुं रावणं शत्रुतावीजसहितमित्यर्थात् प्रछीश्नञ्चीसे तव्ये शछाजितिषङ् शतरि तु ग्रहस्वपाद्योरिति जिः कथत्कवाक्यप्रबन्धे हसात्तोपोऽशित्ययोरित्यकारलोपेऽपि स्थानिवद्भावान्नञ्चित्यन्तोजुङतोरिति ञिः ञेर्लोपः ते त्याः शक्यार्हेति अर्ह इत्यर्थे सर्व्वत्र त्यः ॥ ४६ ॥

**लभ्या कथन्नु वैदेही शक्योद्रष्टुं कथं रिपुः। सह्यः कथं वियोगश्च गद्यमेतत्त्वया मम ॥ ४७ ॥**

लभ्येत्यादि। कथं केन प्रकारेण उपायेन लभ्या वदेही प्राप्या जं॰ पोरदुपधादिति यत् शत्रुः केन प्रकारेण द्रष्टुं शक्यः शकधृषेत्या भ॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



दिना तुमुन् वियोगस्त्वायं सीतायाः कथं केन प्रकारेण सह्यः सो ढव्यः सकिसहोस्येति यत् गद्यमेतत् कथनीयमेतत् गदमदेत्या दिना यत् ममेति शेषविवचायां षष्ठी त्वं पुनः कः इति पृष्टश्चाह ॥ ४७ ॥

भ० लभ्येत्यादि। इत्यपि अवीवचदिति सम्बन्धः नु प्रश्ने कथं वैदेही लभ्या रिपूरावणः कथं द्रष्टुं शक्यः अज्ञातदेशत्वात् कथं वियोगः सीतायाइत्यर्थात् सह्यः एतत्सर्व्वं त्वया मम सम्बन्धे गद्यं वाच्यं लभङ्गीडुःशप्राप्तौ शकयञ्शकिरूनशक्तौ सहङ्मर्षे एभ्यः पूशक सहेत्यादिना यः गदभाषे इत्यस्मात् गदमदयमेति यः त्वयेति त्वभावक्तेति कर्त्तुः षष्ठी निवृत्तिपचे तृतीया ॥ ४७ ॥

अहं राम श्रियः पुत्रोमद्यपीतइव भ्रमन्। पापच र्य्योमुनेः शापाज्जातइत्यवदत्स तं ॥ ४८ ॥

ज०म० अहमित्यादि। हे राम अहं श्रियः पुत्रः मद्यपीतइव वाहिता ग्न्यादित्वान्निष्ठान्तस्य परनिपातः कार्य्याकार्य्यविवेकाभावात्पा पचर्य्योराचसः मुनेः स्थूलशिरसः शापाज्जातउत्पन्नः माद्यत्य नेनेति मद्यं चरितव्यं चर्य्यमेतौ पूर्व्ववद्यत्प्रत्ययान्तौ पापं चर्य्यं यस्येत्यवदत् सयोजनवाजस्तं रामं वाक्यार्थोऽत्र कर्म्म ॥ ४८ ॥

भ० अहमित्यादि। इति सयोजनवाजस्तं रामं अवदत् किन्तदि त्याह हे राम अहं श्रियोऽप्सरसः पुत्रः मद्यपीतः पीतमदिर इव भ्रमन् कार्य्याकार्य्यविवेकशून्यत्वात् कृतापराधोमुनेः स्थूल शिरसः शापात् पापचर्य्यः पापहेतुकर्म्मा राचसोजातः एतत्

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कथनं तद्वाक्ये रामप्रीत्यर्थं मदीभिर्यञ्जिहर्षे मद्यतेऽनेनेति मद्यं अभिधानात् गदमदयमेत्यादिना ढभावे विहितोऽपि यः करणे पीतं मद्यं येनेति अग्न्याहितादित्वात् क्तान्तस्य वा परनिपात इति रः स्वमते गमकत्वात् पापं चर्य्यं चरणीयं यस्य गदमद यमचरेति यः ॥ ४८ ॥

प्रयातस्तव यस्यत्वं शस्त्रपूतोऽब्रवीमि ते। रावणेन हृता सीता लङ्कां नीता सुरारिणा ॥ ४९ ॥

प्रयातइत्यादि। इदानीं तव यस्यत्वं बध्यत्वं प्रयातः यमेः ज०म० पूर्व्ववत् यत् शस्त्रपूतस्तव शस्त्रेण पावितः सन् देवोभूतोऽब्रवीमिते तुभ्यं कथयामि युष्मदस्तुर्य्येकवचनस्य तेमयावेकवचनइतिते आदेशः क्रियायोगे चतुर्थी कथनीयमाह रावणेन सुरारिणा हृता सीता लङ्कां नीता ॥ ४९ ॥

प्रयातइत्यादि। इदानीं तव यस्यत्वं बध्यत्वं प्रयातः प्राप्तः सन् भ० तव शस्त्रेण पूतः पापान्निर्म्मुक्तः पूर्व्वदशां लब्ध्वा ते तुभ्यमहं ब्रवीमीति तादर्थ्ये चो यमेः पूर्व्वेण यः पूङ्क्लिशूदितइत्यनेन वेमत्वात् नेमृडोस्वीदिद्वेम इति पूङः क्तक्तवत्वोरनिमत्वं वचनीयमाह रावणेन सुरारिणा सीता हृता लङ्कां नीता प्रापिता च एतेन लङ्कायां रिपुर्द्रष्टव्यइति शक्योद्रष्टुं रिपुः कथमित्यचोत्तर मुक्तं ॥ ४९ ॥



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ऋष्यमूकेऽनवद्योऽस्ति पण्यभ्रातृबधः कपिः। सुग्रीवोनाम वर्य्योऽसौ भवता चारुविक्रमः॥५०॥

ज०म० वैदेही प्राप्या कथमिति यमुपेत्य पृष्टवान् तं कथयन्नाह ऋष्यमूकइत्यादि। ऋष्यमूकपर्व्वते सुग्रीवोनाम कपिः चारुविक्रमो महापराक्रमोऽस्ति असौ भवता वर्य्योवरणीयः प्रार्थनीयः वर ईप्सायामिति चौरादिकाद्यत् यद्वा अवद्यपण्येत्यत्र वृञो वर्य्येति स्त्रियामनिरोधे अनिरोध्या सततप्रवर्त्तनी वर्य्या प्रीतिर्यस्येत्यर्शआद्यच् भवता सहवर्य्यः प्रीतिमान् समानव्यसनत्वात् यतः पण्यभ्रातृबधः सः पण्योविक्रेतव्योभ्रातुर्वालिनोबधोयेन यद्येवं तदा कथं मया पापीयान् वर्य्यइत्यतआह अनवद्यः अगर्हणीयः दारापहारित्वेन आततायिनोभ्रातुर्बधेन निर्द्दोषत्वादिति भावः॥५०॥

भ० ऋष्येत्यादि। लभ्या कथं नु वैदेहीत्यत्रोत्तरमिदं सुग्रीवोनाम कपिर्ऋष्यमूकनामपर्व्वते अस्ति असौ सुग्रीवोभवता वर्य्यः वरणीयः यतश्चारुविक्रमः अनुपकारकेण मया वृतोऽसौ मत्कार्य्यं कथं साधयिष्यतीत्याह पण्यभ्रातृबधः पण्योविक्रेतव्योभ्रातुर्व्वालिनोबधोयेन भवता वालिबधं कारयित्वा सीतोद्धारं करिष्यतीति भावः पण्यतुल्यत्वात्पण्यव्यपदेशः तर्हि पापात्मनस्तस्य वरणमनुचितं नच तद्वचनेऽपि विश्वासइत्यतआह अनवद्यः अनिन्द्यः दारापहारित्वेनाततायिनोभ्रातुर्वधे निर्दोषत्वात् नञ्पूर्व्वोवदिः पणङ्व्यवहृतौ स्तुतौ वृञ्गसम्भक्तौ एषां यान्तानां पण्यवद्यवर्य्येत्यादिना निपातनात् तथा रूपं केचित्तु वरत्वेप्सेइत्यस्मात्तव्यानीययाइति ये वर्य्यइति रूपमित्याहुः ऋषयो

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ऽमूका अध्ययनशीला यत्र स ऋष्यमूकः मूर्द्धन्यषकारवानयं ऋष्यो मृगविशेषो मूकीयत्रेति वा बलद्दश्याद्दश्यास्खलीति यमकात् तालव्यशकारवानिति केचित् केचित्तु ऋचोऽद्रिभेदे भल्लूके इति विश्वप्रकाशे एकदेशेनापि संज्ञा गम्यतइति न्यायात् ऋचमूकइत्येव संज्ञामाऊः नामेति प्रकाश्यसम्भावनाक्रोधाभ्युपगमेष्वव्ययं अन्यथा भेदके तृतीया स्यात्॥ ५०॥

तेन वह्येन हन्तासि त्वमर्य्यं पुरुषाशिनां। राक्षसं क्रूरकर्म्माणं शक्रारिं दूरवासिनं॥ ५१॥

तेनेत्यादि। तेन सुग्रीवेण त्वं राक्षसं हन्तासि निहनिष्यसि वह्येन वहत्यभिप्रेतमनेनेति वह्यं करणमिति यत् कीदृशमर्य्यं स्वामिनं पुरुषाशिनां राक्षसानां अर्य्यःस्वामिवैश्ययोरिति यन्निपात्यते क्रूरकर्म्माणं पापाचारं शक्रारिं रावणं यद्येवमहमेव हन्तुं समर्थइत्यभिप्रायेणाह दूरवासिनं समुद्रान्तरितवासित्वात् एकाकिना हन्तुं न शक्यतइति भावः॥ ५१॥ ज॰म॰

तेनेत्यादि। तेन सुग्रीवेण त्वं राक्षसं रावणं हन्तासि घ्यांरूपं वह्येन उह्यतेऽर्थोऽनेनेति वह्यस्तेन कीदृशं पुरुषाशिनां राक्षसानां अर्य्यं स्वामिनं क्रूरकर्म्माणं पापाचारं शक्रस्यापि अरिं एतेन दुर्ज्जयत्वं दर्शितं दूरे वसन्तं एतेन समुद्रान्तरितत्वात् सहायं विना न हन्तुं शक्यतइति भावः वहैञौप्रापणे ऋलिगत्यां अनयोः पूर्व्वेण निपातः॥ ५१॥ भ॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



आस्ते स्मरन् सकान्ताया हृतायावालिना कपिः।
वृषोयथोपसर्य्याया गोष्ठे गोर्दण्डताडितः ॥ ५२॥

ज॰म॰ यद्यनवद्यस्तदा कथमस्य पण्डभार्त्वबधइत्याह आस्तेइत्यादि। वालिना हृतायाः कान्तायाः स्मरन्नास्ते कोऽन्यः सम्भवेत् यस्त्वं हत्वा त्वया मां योच्यते अधीगिति कर्म्मणि षष्ठी कस्येव वृषो यथा उपसर्य्यायाआसन्नप्रसवायागोः स्मरन् गोष्ठे आस्ते उपसर्य्याकाल्याप्रजनइति निपातितं दण्डताडितः सन् दण्डस्थानी योऽत्र वाली ॥५२॥

भ॰ आस्तइत्यादि। तुल्ययोः सख्यनैविद्यसूचनाय पण्डभार्त्ववधत्वादोषदर्शनाय वा इदमाह सकपिः सुग्रीवोवालिना हृतायाः कान्तायाः स्मरन् आस्ते कुतोमया सा लब्धव्येति कर्म्मणि षष्ठी यथा उपसर्य्यायाआसन्नगर्भग्रहणायागोः स्मरन् वृषोगोष्ठे गोस्थाने दण्डेन ताडितः सन् तिष्ठति तद्वत् दण्डतुल्योऽत्र वाली उपस्थियते वृषभेन गम्यते उपसर्य्या ऋतुमत्यां पण्यावद्येत्यादिना निपात्यते ॥ ५२ ॥

तेन सङ्गतमार्य्येण रामाजर्य्यं कुरु द्रुतं । लङ्कां प्राप्य ततः पापं दशग्रीवं हनिष्यसि ॥ ५३ ॥

ज॰म॰ तेनेत्यादि। हे राम तेन वानरेण संगतं सख्यं अजर्य्यं अनपायं नजीर्य्यतइत्यस्मिन् वाक्ये अजर्य्यं संगतमिति निपातितं आदौ विशेष्यत्वेनोपात्तं संगतं तद्विशेषणमजर्य्यं कुरु द्रुतं यावत्तस्यानेन

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



युष्मद्विधेन संगतं न भवति आर्य्येण सदाचारेण ऋहलोर्ण्यत् ततः सङ्गतात् लङ्कां प्राप्य गत्वा पापं पापीयांसं रावणं हनिष्यति ॥ ५३ ॥

तेनेत्यादि। हे राम तेन सुग्रीवेण सह द्रुतं शीघ्रं अजर्य्यं मैत्रीं कुरु कीदृशं सङ्गतं समयक्रमेण उचितं सङ्गतपदस्य सख्य वाचित्वेऽजर्य्यस्य तथार्थत्वाद्वैयर्थ्यं स्यात् केचित्तु सुग्रीवेण सह सङ्गतं सख्यं कुरु कीदृशं अजर्य्यं अनपायं सङ्गतार्थस्यापि अजर्य्य शब्दस्योपचारादन्यत्र प्रवृत्तिरित्याहुः न जीर्य्यतीत्यजर्य्यं सङ्गतं पूर्व्ववन्निपातितं स्नेहोमैत्रीप्रीतिरजर्य्यसभाजनसङ्गतं प्रोक्तमिति हलायुधः आर्य्येण सदाचारेण ऋधातोर्हस्त्यवासोरिति ण्यणि रूपं आरात् पापेभ्योदूरेयातीति आर्य्यइति केचित् तदा मनी षादिः द्रुतशब्देन यावद्भवद्विधेनान्येन सह तस्य सख्यं न जात मिति व्यज्यते ततः सङ्गतानन्तरं लङ्कां प्राप्य दशग्रीवं पापं त्वं हनिष्यसि स्वस्वर्द्धेन इतीम् ॥ ५३ ॥ भ०

अनृतोद्यं न तत्रास्ति सत्यवद्यं ब्रवीम्यहं। मित्र भूयं गतस्तस्य रिपुहत्यां करिष्यसि ॥ ५४ ॥

ननु यावत्कार्य्यं न सिध्यति तावन्मांसङ्गच्छति कृतकृत्यस्तु नैवेत्य तआह अनृतोद्यमित्यादि। सत्यमुद्यतइति कर्म्मणि यत् अहंसत्यं वचोब्रवीमीत्यर्थः अनृतोद्यं तत्र सुग्रीवे नास्ति अनृतमसत्यं उद्यं वचनं अनृतोद्यं भावे क्यप् यजादित्वात्संप्रसारणं उभयत्रापि जं०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



वदः सुपि क्यप् चेति चकाराच्च यस्मादेवं तस्मान्मित्रभूयं मित्रभावं गतः भुवोभावे क्यप् रिपुहत्यां शत्रुहत्यां करिष्यसि हनस्तचेति क्यप् तकारश्चान्तादेशः ॥ ५४ ॥

भ० अनृतोद्यमित्यादि। स्वकार्य्यं साधयित्वा यदि मामुपेक्षते तदा किं स्यादित्याह अहं सत्यवद्यं सत्यवचनं ब्रवीमि तत्र सुग्रीवेऽनृतोद्यं मिथ्यावचनं नास्ति वदैवाचि लेर्व्वदः क्यपयाविति क्यप् ग्रह स्वपाद्योरिति जिः तस्मात्तस्य सुग्रीवस्य मित्रभूयं मित्रभावं गतः सन् रिपुहत्यां शत्रुवधं करिष्यसि भूहनःक्यप्भावेनतस्येति क्यप् नस्य तश्च लिङ्गभेदोऽभिधानात् ॥ ५४ ॥

आदृत्यस्तेन वृत्येन स्तुत्योजुष्येण सङ्गतः। इत्यः शिष्येण गुरुवद्गृध्यमर्थमवाप्स्यसि ॥ ५५ ॥

ज०म० आदृत्यइत्यादि। तेन संगतः सन् गृध्यमभिलषणीयमवाप्स्यसि ऋदुपधादिति क्यप् कीदृशः कीदृशेनेत्याह आदृत्यः आदरणीयः वृत्येन वरणीयेन स्तुत्यः स्तवार्हः जुष्येण सेव्येन हनुमत् प्रभृतीनां कइव शिष्येण गुरुरिव यथोपाध्यायः शिष्येणैकार्थः अनुगम्यस्तद्वदिति एतिस्तुशास्सित्यादिना क्यप् ह्रस्वान्तात्तुक् ॥ ५५ ॥

भ० आदृत्येत्यादि। न केवलं रिपुहननमन्यदप्यस्तीत्याह तेन शिष्येणेव गुरुरिव त्वं सङ्गतः सन् गृध्यमाकाङ्क्षणीयमर्थमवाप्स्यसि त्वं कीदृशस्तेन वा कीदृशेन आदृत्यआदरणीयः वृत्येन वर

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



लीयेन स्तुत्यः स्तवार्हः जुष्येण सेवार्हेण जनानामर्थात् तेन तुल्य योरुभयोः सङ्गतं योग्यं इत्यः अनुगन्तव्यः अर्थात्तेन भवतो गुरुत्वेन तस्य शिष्यत्वेन मैत्रीकरणेऽपि न ते मानहानिरिति सूचितं इङ्शादरे वृञ्ज्वृतोश्रुञ्जस्तुतौ शङीञ्जिजुषमुदिषिवे इणगतौ शासुस्तु शासने गृधिर्युलिप्से एभ्योदृभृजुषेत्यादिना क्यप् स्वस्य तन्पिति॥ ५५ ॥

नाखेयः सागरोऽप्यन्यस्तस्य सङ्गृत्यशालिनः। मन्युस्तस्य त्वया मार्ग्योमृज्यः शोकस्य तेन ते॥ ५६॥

नाखेयइत्यादि। तस्य सुग्रीवस्य सङ्गत्यशालिनः हनुमदादिभृत्ययुक्तस्य भृञोऽसंज्ञायामिति क्यप् अन्योद्वितीयः सागरोऽपि नाखेयोन खननीयः अपितु खननीयएव अपिशब्दः सम्भावनायां तस्य कारणं सङ्गृत्यशालित्वं ईचखनइति क्यवोकारौ तस्य शरीरस्य मन्युस्त्वया मार्ग्योऽपनेयः ते तव तेन च शोकोमृज्यः मृजेर्विभाषेति यद्विकल्पे एयत्॥ ५६॥ ज०म०

नाखेयइत्यादि। हनूमदादिसङ्गत्यशालिनस्तस्य सुग्रीवस्य अन्योऽपि सागरोन अखेयः अपि तु शक्यखननएव एतेन तन्मैत्रं वऊसहायत्वं समुद्रलङ्घनमपि सुकरमिति सूचितं खनुङ्विदारे खनाच्चेरेये इति टेरेत्वं तस्मात् प्रथमं त्वया तस्य मन्युर्दैन्यं मार्ग्योमार्ज्जनीयः पश्चात्तव शोकस्तेन मृज्यः अपनेयः एतेन सद्यः कथं वियोगस्येत्यत्रोत्तरं दत्तं सुग्रीवेणाचिरादेव वियोगा भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



पनयात् अपिशब्दः सम्भावनयां मृजलूषभ्रुद्धौ क्ववृषमृजेति वा क्यप् पक्षे हस्तव्यासोरिति ध्यण् चजोःकगौघितीति गत्वं मृजो ऽकङितीति वृिः ॥ ५६ ॥

सराजसूययाजीव तेजसा सूर्य्यसन्निभः। अमृषो द्यं वदन् रुच्योजगाहे द्यां निशाचरः ॥ ५७ ॥

ज॰म॰ सइत्यादि। सनिशाचरोद्यामाकाशं जगाहे गतः राजसूय याजीव राज्ञा सूयते राजा वा अनेन सूतइति राजसूयः क्रतुः तेनेष्टवान् सराजसूययाजी करणे यजइति णिनिः तद्वदित्यर्थः रुच्यः प्रियोजातोरामस्येत्यर्थात् राजसूयइत्यादिना क्यबन्ता राजसूयादयः ॥ ५७ ॥

भ॰ सराजेत्यादि। इत्येवममृषोद्यं सत्यवचनं वदन् सनिशाच रोयोजनवाञ्छी स्वर्गं आकाशं वा जगाहे गतः राजसूयनाम यज्ञकर्त्तेव तेजसा सूर्य्यतुल्यः रुच्यः रामस्य रुचिविषयः प्रिय इति यावत् सुञनसन्धाक्लेदपीडामन्थे राज्ञा सूयते सोमोऽत्रेति राजसूयः पाय्यधाय्येत्यादिना निपातितः राजसूयेन यजते राजसूययाजी ग्रहादित्वात् णिन् सरतीति सूर्य्योऽर्कः रोचते रुच्यः एतौ गृह्यविनीयेत्यादिना निपातितौ सूरएव सूर्य्यः स्वा र्थयइति गोयीचन्द्रः नञ्पूर्व्वमृषाशब्दाद्वदेर्नित्यं क्यप् मृषोद्यं नित्यमित्युक्तेः ॥ ५७ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अकृष्टपच्याः पश्यन्तौ ततो दाशरथी लताः। रत्ना
न्नपानकुप्यानामाटतुर्नष्टसंस्मृती ॥ ५८॥

अकृष्टपच्या इत्यादि। ततो निशाचरगमनानन्तरं दाशरथी रामलक्ष्मणावाटतुर्गतवन्तौ कीदृशौ नष्टा संस्मृतिर्ययोः केषां संस्मृतिः रत्नान्नपानकुप्यानां रत्नान्नपानानि प्रसिद्धानि कुप्यं स्वर्ण रजताभ्यामन्यत् वस्तु तत् क्यप् गकारस्य ककारः कर्म्मणि षष्ठी लताः पश्यन्तौ कृष्टे पच्यन्त इति कृष्टपच्याः पूर्व्ववत् क्यप् पश्चान्नञ्समासः स्वयमेव पच्यन्ते यास्ता इत्यर्थः ॥ ५८॥ जं०मं०

अकृष्टेत्यादि। ततस्तद्गमनानन्तरं लताः पश्यन्तौ दाशरथी रामलक्ष्मणौ आटतुः अटगतौ लताः कीदृशीः अकृष्टपच्याः कृष्टे क्षेत्रे स्वयमेव पच्यन्त इति कृष्टपच्याः पूर्व्वेण निपातः पश्चान्नञ्समासः कीदृशौ रत्नानां अन्नस्य पानस्य कुप्यानां ताम्रादीनाञ्च नष्टा सम्यक् स्मृतिर्ययोः गुणभूतापि क्रिया साधनसम्बन्धमनुभवतीति कर्म्मणि षष्ठी सम्बन्धविवक्षयेत्यन्ये कुप्यत इति कुप्यं स्वर्णरूप्याभ्यामन्यद्धनं पूर्व्ववन्निपातः ॥ ५८॥ भ०

समुत्तरन्तावव्यथौ नदान् भिन्नोद्यसन्निभान्।
सिध्यतारामिव ख्यातां शवरीमापतुर्व्वने ॥ ५९ ॥

समुत्तरन्तावित्यादि। तौ तस्मिन् वने शवरीमापतुः प्राप्तवन्तौ अव्यथौ न व्यथेते इति पूर्व्ववत् क्यप् परिश्रमवर्जितावित्यर्थः जं०मं०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



नदान् समुत्तरन्तौ कीदृशान् भिद्योद्ध्यसन्निभान् भिद्योद्ध्यौ नदवि
शेषौ भिद्योद्ध्याविति पूर्व्ववत् निपातितं भिनत्ति कूलमिति भिद्यः
उज्झत्युदकमिति उद्ध्यः उदझउत्सर्गे दकारात्परस्य धकारो
निपात्यते तत्सदृशान् नदान् सिध्यतारामिव ख्यातां सिध्यन्त्यस्मि
न्निति सिध्यः पुष्यसिध्यौ नक्षत्रे इति निपातनात् पुष्याख्यां तारा
मिव ख्यातां शवरीं॥ ५८ ॥

भ० समुत्तरन्तावित्यादि। तौ वने शवरीमापतुः प्राप्तवन्तौ न
व्यथेते अव्यथौ नदान् समुत्तरन्तौ कीदृशान् भिद्योद्ध्यसन्निभान्
कूलं भिनत्तीति भिद्योनदः वार्य्युज्झतीति उद्ध्योनदः तयोस्तु
ल्यान् शवरीं कीदृशीं सिध्यतारामिव कार्य्यसाधकत्वात् ख्यातां
प्रसिद्धानुभवां कार्य्यं साधयतीति सिध्या सर्व्वत्र गृह्यविनीयेत्या
दिना निपातः॥ ५८ ॥

वसानां वल्कले शुद्धे विपूयैः कृतमेखलां। श्यामा
मञ्जनपिण्डाभां दण्डिनीमजिनास्तरां॥ ६०॥

ज०म० वसानामित्यादि। वसानां परिदधानां वल्कले विपूयैर्म्मुञ्जैः
कृतमेखलां कृतकटिसूत्रां यद्यपि विपूर्व्वस्य पवतेर्विपूयइत्यादि
ना मुञ्जे निपातितं तथापि मुञ्जानामनुपहतत्वं ज्ञापयितुं विपू
यैरिति विशेषणं पवित्रैरित्यर्थः मुञ्जशब्दस्तदानीं सामान्यमाह
विपूयैरित्युक्ते मुञ्जैरित्युपादानमनर्थकं एवं कृत्वा पाठान्तरमु
च्यते वसानां वल्कले शुद्धे विपूयैरिति श्यामां कृष्णां श्यायोम
इति निष्ठामत्वं अंजनपिण्डस्येवाभा यस्याअस्तीति तां कृष्णां

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



दण्डिनीं गृहीतदण्डां आस्तीर्य्यतइति आस्तरः स्तृदोरप् अजिनमास्तरउत्तराखंगीयस्यास्तामजिनास्तरां ॥ ६० ॥

वसानामित्यादि। दृष्ट्वा तामसुचङ्गामइति तृतीयश्लोकेनान्वयः मुद्धं वल्कलद्वयं वसानां वसलङ्कृतौ स्तृतिराच्छादनं विपूयैर्मुञ्जैः कृतमेखलां कृतकटीसूत्रां पूङशोधे पूर्व्ववन्निपातः मुद्धेइत्यत्र मुञ्जैरिति पाठे विपूयैरित्यस्य पवित्रैरित्यर्थः यद्यपि विपूयशब्दो मुञ्जे रूढस्तथाप्यन्वयवशात् पवित्रार्थः त्वामां व्रतेन चीणां त्वैष्णुप्यचोमकवइति कस्य मः अञ्जनपिण्डवदाभा यस्यास्तां तद्वदाभातीति वा दण्डिनीं पालाशदण्डवतीं अजिनमास्तरः शयनी यस्याः आस्तरउत्तरासङ्गइति केचित् ॥ ६० ॥

प्रगृह्यपदवत् साध्वीं स्पष्टरूपामविक्रियां। अगृह्यां वीतकामत्वाद्देवगृह्यामनिन्दितां ॥ ६१ ॥

प्रगृह्येत्यादि। अविक्रियामजातविकारां अतएव स्पष्टरूपां एवञ्च साध्वीं साधुचरितां कमिव प्रगृह्यपदवत् यस्य पदस्य प्रगृह्यसंज्ञा तत्पदं प्रगृह्यं प्रत्यपिभ्यांग्रहेरित्यनुवृत्तौ पदास्वैरित्यादिना प्रपूर्व्वाद्ग्रहेः पदेऽभिधेये क्यप् यथा तत्पदमविकाररूपत्वात् स्पष्टं साधु च स्रुतप्रगृह्याअचीति प्रकृतिभावेन स्वरसन्ध्यभावादित्यर्थः कथमजातविक्रियेति चेदाह अगृह्यां ग्रहेः स्वैरविषये क्यप् अगृह्यामस्वैरिणीमस्वतन्त्रा न भवतीत्यर्थः कस्मात् वीतरागत्वात् वीतरागाप्यस्वतन्त्रा भवति देवगृह्याममरपक्षां पक्षविषये क्यप् एवं चानिन्दितामगर्हितां ॥ ६१ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० प्रगृह्येत्यादि। नास्ति विक्रिया रागादिविकारो यस्यास्तामविक्रियां स्पष्टं अकौटिल्यं व्यक्तं रूपं स्वभावो यस्यास्तां स्पष्टरूपां साध्वीं साधुचरितां अतएव प्रगृह्यपदतुल्यां यत्र नाजोऽन्तोऽनाङित्युक्तेत्यादिना सन्धिनिषेधः क्रियते तत्र पाणिनिना प्रगृह्यसंज्ञा कृता गृह्यविनीयेत्यादिना पदादौ गृह्यं निपातितं पदादिविषयस्तूदाहरणेऽभिहितः तथाहि प्रगृह्यं पदमित्यादि तदपि पदं विकाररहितं अतएव स्पष्टरूपं दीर्घादिविकारे सत्येव रूपस्यान्यथाभावात् साधु च भवति अर्थप्रतिपादकत्वं धर्म्मजनकत्वं व्याकरणव्युत्पाद्यत्वं वा पदस्य साधुत्वं अविक्रियत्वे हेतुमाह अगृह्यां स्वतन्त्रां विगतकामत्वात् सरागा हि भोगार्थं परतन्त्रा भवति गृह्या परतन्त्रा पश्चान्नञ्समासः देवगृह्यां देववर्ग्यां देवपक्षपातिनीं अतएवानिन्दितां वीतकामत्वादित्यत्र पूर्व्वं स्त्रीत्वविवक्षया त्वप्रत्ययः स्त्रीत्वविवक्षा चेत् पुंवत्स्युक्तद्रति पुम्वद्भावः ॥ ६१ ॥

धर्म्मकृत्यरतां नित्यमवृष्यफलभोजनां। दृष्ट्वा ताममुचद्रामो युग्यायातइव श्रमं ॥ ६२ ॥

ज०म० धर्म्मकृत्यरतामित्यादि। पुण्यकर्म्मरतां नित्यं अवृष्यफलभोजनां वृष्याणीन्द्रियविकारनिमित्तानि फलानि भोजनं यस्याः पश्चान्नञ्समासः विभाषाकृवृषोरिति क्यप् दृष्ट्वा तां तथाविधां श्रममसुचत् मुक्तवान् तद्दर्शनाह्लादितत्वात् युग्यायातइव वाहनं प्राप्तइव क्यप् युग्यञ्च पत्रद्रति निपातितं ॥ ६२ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



धर्म्मेत्यादि। नित्यमविरतं धर्म्मस्य कृत्ये करणे रतां हृद्यं वैद्यशास्त्रोक्तवीर्य्यकरं विकारोत्पादकं तद्भिन्नं फलमेव भोजनं यस्याः भुज्यतेऽनेनेति वेति घञ्जलनटोऽघेइति अनट् तेन भोजनं यस्यादिति वा कृञडुदकृतौ वृषुसेचने आभ्यां कृवृषमृजेत्यादिना वा क्यप् एवम्भूतां तां शबरीं दृष्ट्वा चित्तप्रसन्नतया रामः अममुचत् त्यक्तवान् मुच्लृशपञोमोचे ल्दिलात् ङः युग्येन वाहनेनास्वादिना आगतइव गृह्यविनीयेत्यादिना युजः क्यपि युग्यं निपातितं॥ ६२॥ भ०

सतामूचेऽथ कच्चित्त्वममावास्यासमुन्नये। पितॄणां कुरुषे कार्य्यमवाच्यैः स्वादुभिः फलैः॥ ६३॥

सइत्यादि। अथानन्तरं त्यक्तश्रमः सरामस्तां शबरीमूचे उक्तवान् कच्चित् किं त्वं अमावास्यायाः संप्राप्तौ पितॄणां कार्य्यं तत्प्रीत्यर्थं ब्राह्मणभोजनं स्वादुभिर्मिष्टैः फलैः अवाच्यैरवचनीयैः कुरुषे अमा सह वसतोऽस्यां चन्द्रार्काविति अमापूर्व्वकवसधातोः क्यप्॥ ६३॥ ज० म०

सतामित्यादि। अथ अमत्यागानन्तरं सरामस्तां शबरीं ऊचे कथितवान् ब्रूञुक्तौ वचोऽरे कच्चिदिति कामप्रवेदनेऽव्ययं त्वं फलैरमावास्यायास्तिथेः समुन्नये सम्प्राप्तौ पितॄणां सम्बन्धि कार्य्यं कुरुषे कीदृशैः फलैः अवाच्यैः अनिन्द्यैः स्वादुभिर्मिष्टैः अमा सहार्थेऽव्ययं सहवसतोऽस्यां चन्द्रार्कावित्यमावास्या यद्वा भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अमा नाम रवेरश्मिः सूर्य्यलोके प्रतिष्ठिता। तस्यां सोमोवसत्यस्मा
ममावास्या प्रकीर्त्तिता। पाय्यधाय्येत्यादिना ण्यति निपातः कवृ
षद्धजेत्यस्याप्रवृत्तिपक्षे क्रञोहस्ण्व्यासोरिति ण्यण् वाच्यं वचनीयं
निन्द्यमेव रूढं भुजवचेति ण्यणि कत्वनिषेधः॥ ६३॥

अवश्यपाव्यं पवसे कच्चित्त्वं देवभाग्घविः। आसा
व्यमध्वरे सोमं द्विजैः कच्चिन्नमस्यसि॥ ६४॥

ज०म० अवश्यपाव्यमित्यादि। देवभाक् देवान् भजतइति भजोण्विः
तद्धविः कच्चित् किं पवसे पवित्रीकरोषि सन्त्वादिना झयोहोऽन्य
तरस्यामिति हकारस्य पूर्व्वसवर्णः पूञपवनइति भौवादिकः की
दृशमवश्यपाव्यमवश्यम्भावेन पावयितव्यमित्यर्थः ओरावश्यके
ण्यत् मयूरव्यंसकादित्वात्समासः लुम्पेदवश्यमः कृत्येतुंकाममनसो
रपीति मकारलोपः सोममौषधिविशेषं आसाव्यमभिषवार्हं अध्व
रे यज्ञे द्विजैः सह कच्चित्त्वं नमस्यसि आसुयुवपीति यत्॥ ६४॥

भ० अवेत्यादि। कच्चित्त्वं देवभाग्यवद्र्हव्यं पवसे अग्निसंस्कारादिना
पवित्रीकरोषि देवाय दातुमित्यर्थात् देवान् भजतइति ढाञ्ज
वहसहोविण श्चोहोस्यपादेति हस्य घत्वं हविः कीदृशं अवश्यपाव्यं
अवश्यभावेन पवितुं पवित्रीकर्त्तुं योग्यं पूङ्शोधेण्यणोरावश्यक
इति ण्यण् ञित्यन्तेजुङतोरिति त्रिः ओदौतोऽज्वत्तद्धयक्यच्या
इति अज्वद्भावात् जलायवायावइति आवादेशः क्रियाविशेष
णस्य द्वितीयान्तत्वात् तत्पुरुषः समासः द्यादित्वन्तपूर्व्वदानांष

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



संज्ञा इति सामान्योक्तेः मयूरव्यंसकादित्वात् समास इति न्यासः सम् तुम्मनःकामेऽवश्यमित्यादिना मलोपः कच्चित् त्वं द्विजैः सार्द्धं सोमं लताविशेषं नमस्यसि नमःकरोषीति नमसपोवरिव इति क्यः सोमं किम्भूतं अध्वरे यागे आसाव्यं अभिषवणीयं सन्धा नार्हं ऋहलोर्ण्यदिति ण्यत् द्विजैरासाव्यमिति वान्वयः ॥ ६४ ॥

**आचाम्यं सन्ध्ययोः कच्चित् सम्यक्त्वेन प्रहीयते।**
**कच्चिदग्निमिवानाय्यं काले संमन्यसेऽतिथिं ॥ ६५ ॥**

आचाम्यमित्यादि। प्रभातेऽपराह्णे च सन्ध्ययोर्यदाचाम्य जं॰म॰ मुपस्पर्शनं पूर्व्ववत् ण्यत् कच्चित्सम्यक् यथावत्तव तत्र न प्रहीयते काले आतिथ्योक्तकाले कच्चित् संमन्यसे पूजयसि यथा अग्निं आनाय्यम् मन्यसे तद्वत् आनाय्योऽनित्य इति नयतेराङ्पूर्व्वस्य ण्यत् अयादेशौ निपात्येते ॥ ६५ ॥

आचाम्यमित्यादि। कच्चित्ते तव सायं प्रातःसन्ध्ययोः सम्यगा भ॰ चाम्यं आचमनं स्वयमेव न प्रहीयते न भ्रश्यते कर्म्मकर्त्तरि प्रत्ययः पूशकसहेत्यादौ चमादिवर्ज्जात् ऋहलन्तत्वाद्वयण् जनवधः सेमइत्यादौ आचमवर्ज्जनान्न ह्रस्वः कच्चित् त्वं काले आतिथ्योचिते अतिथिं सम्मन्यसे पूजयसि यथा आनाय्यमग्निं दक्षिणाग्निं सम्मन्यसे तद्वत् आङ्पूर्व्वस्य णीञोण्यणि पाय्यधाय्येत्यादिना निपातः ॥ ६५ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



न प्रणाय्योजनः कच्चिन्निकाय्यं तेऽधितिष्ठति। देव कार्य्यविघाताय धर्म्मद्रोही महोदये॥ ६६॥

ज०म० नप्रणाय्यइत्यादि। महानुदयः स्वर्गापवर्गाणां यस्याः सा तथा हे महोदये देवकार्य्यविघाताय देवानहं हनिष्यामीति भाववचनाच्चेति भविष्यति घञ् तुमर्थाच्चभाववचनादिति चतुर्थी प्रणाय्योऽसम्मतोजनः प्रणाय्योऽसम्मताविति निपातितं कच्चित् निकाय्यं गृहं ते तव नाधितिष्ठते नाधिवसति पाय्येत्यादिना निवासे चिनोते र्निपूर्व्वात् ण्यदायादेशौ आदेः कुत्वञ्च अधिशीङ्स्थासांकर्म्मेति कर्म्म धर्म्मद्रोही धर्म्मद्रोहशीलः॥ ६६॥

भ० नेत्यादि। हे महोदये कच्चित् प्रणाय्योऽसम्मतोजनश्चौरादिस्ते तव निकाय्यं निवासं देवकार्य्यविघातार्थं नाधितिष्ठति धर्म्मद्रोही धर्म्मद्रोहशीलः धर्म्माय द्रुह्यतीति ग्रहादित्वात्णिन् धर्म्मद्रोहोऽस्यास्तीति वा प्रपूर्व्वणीञोघ्यणि प्रणाय्यः निपूर्व्वचिनोतेर्घ्यणि निकाय्यः द्वौ पूर्व्वेण निपात्येते कर्म्मक्रियेत्यादिना निकाय्यस्याधारत्वे कर्म्मत्वं महानुदयः स्वर्गापवर्गफललक्षणन्तत्वज्ञानमेव वा यस्यास्तस्याः सम्बोधनं महोदयः कान्यकुब्जेस्वाधिपत्यापवर्गयोरिति विश्वदर्शनात् ततोऽर्शआदित्वादइत्यन्ये विघातायेति हनो घञि खेर्हाघोघ्निति चेति घः हनस्तङ्॥ ६६॥

कुण्डपाय्यवतां कच्चिदग्निचित्यावतां तथा। कथाभीरमसे नित्यमुपचाय्यवतां शुभे॥ ६७॥

इति कृत्याः।

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कुण्डपाय्यवतामित्यादि । कुण्डेन पीयतेऽत्र क्रतौ कुण्डपाय्यः क्रतुः क्रतौ कुण्डपाय्यसंचाय्याविति निपातितं कच्चित्कथाभीरमसे कलोपद्गति दीर्घः तथाग्निचित्यावतां आहिताग्निकानां कथाभी रमसे चित्याग्निचित्ये चेति निपात्यते अग्निचयनमग्निचित्या भावे क्यप् तुक् तद्वतां तथोपचाय्यवतां उपचीयते इत्युपचाय्योऽग्निः अग्नौ परिचाय्येति निपातितः उपपूर्व्वाच्चिनोतेर्ण्यदायादेशौ तद्वतां कथामीरमसे शुभे कल्याणि । इति कृत्याधिकारः ॥६७॥ ज॰म॰

कुण्डेत्यादि । हे शुभे कल्याणि कच्चित् त्वं कुण्डपाय्यवतां तथा अग्निचित्यावतां तथा उपचाय्यवतां कथाभिर्नित्यं रमसे क्रीडसि कुण्डैः पीयतेऽत्र सोमइति कुण्डपाय्यः क्रतुविशेषः पाय्यधाय्ये त्यादिना निपातः सविद्यते येषां इति मोऽग्न्ग्रपाद्दतुः अग्नेश्चयनं राशीभावइत्यग्निचित्या पूर्व्ववन्निपातः उपचीयतइत्युपचाय्यो ऽग्निः पूर्व्ववन्निपातः अग्निविशेषोयज्ञविशेषाङ्गं। इति कृत्याः ॥६७॥ भ॰

## अथ प्रकीर्णकाः।

वर्द्धते ते तपोभीरु व्यजेष्ठाविघ्ननायकान्। अजै षीः कामसंमोहौ संप्राण्याविनयेन वा॥ ६८॥

अतःपरं प्रकीर्णकाः। वर्द्धतइत्यादि हे भीरु कातरचित्ते तव तपोवर्द्धते तस्य च ये विघ्नास्तेषां ये नायकाः प्रणेतारस्तान् ज॰म॰



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज॰म॰ व्यजेष्ठाः जितवत्यसि लुङि विपराभ्यांजेरित्यात्मनेपदं कामसम्मोहौ कच्चिदजैषीः जितवत्यसि सिचि वृद्धिः विनयेन वा संप्राप्थाः संप्राप्तासि कर्म्मणि लुङ् झलोझलीति सिचोलोपः अत्रानुक्तमिति कच्चिदिति ग्राह्यं॥ ६८॥

अथ प्रकीर्णकाः।

भ॰ वर्द्धतइत्यादि कच्चिदित्यत्रानुषञ्जनीयं हे भीरु कच्चित्ते तव तपोवर्द्धते कच्चित् त्वं तपसो विघ्नानां नायकान् प्रणेतॄन् व्यजेष्ठा अभिभूतवत्यसि विपराजीति मं कच्चित् त्वं काममनङ्गविकारं सम्मोहमविद्याञ्च अजैषीः व्रजवदेति व्रिः कच्चिद्विनयेनापि त्वं समाप्थाः संप्राप्तासि कर्म्मणि ढी सम्बोधनमहिम्नार्थावगमात् कच्चिदित्यस्यानुषङ्गं केचिन्नेच्छन्ति॥ ६८॥

नायस्यसि तपस्यन्ती गुरून् सम्यगतूतुषः। यमान्नोदविजिष्ठास्त्वं निजाय तपसेऽतुषः॥ ६९॥

ज॰म॰ नायस्यसीत्यादि। तपस्यन्ती तपश्चरन्ती कच्चिन्नायस्यसि न खिद्यसे तपश्चरणशालीभूतेत्यर्थः कर्म्मणोरोमन्थेति क्यङ् तपसः परस्मैपदञ्च गुरून् आचार्य्यादीन् सम्यक् यथावदनुवृत्त्याऽतूतुषः तोषितवत्यसि तुषिर्णन्तस्य लुङि रूपं चङि णिलोपादि यमान्मृत्योर्नोदविजिष्ठाः नाभैषीः पुण्यकृतां नोमृत्युभयमित्यर्थः ओविजेरात्मनेपदं लुङि सिचइट् विजइति सिचोङित्वेन गुणः निजायात्मीयाय अतुषः तुष्टवत्यसि॥ ६९॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



नायेत्यादि। अत्रापि कच्चिदनुषज्यते तपस्यन्ती तपःकुर्व्वती त्वं कच्चिन्नायस्यसि न खिद्यसे अत्यन्ताभ्यासात् नमस्तपोवरि वद्गति क्यः दूर्यस्युयतने कच्चित्त्वं गुरूनाचार्य्यादीन् सम्यगतूतुषः तोषितवत्यसि तुषिल्र्यौञ्जितुष्टौ ञ्यन्तादङ् ञ्यङ्गुडःस्वःखेः सन्वदिति खेर्घः कच्चित्त्वं यमान्न उदविजिष्ठाः नाभैषीः पुण्यवतां मृत्योर्भयं नास्तीति भावः यमइन्द्रियनिग्रहे वा कियत्कालं यमः कार्य्यइति भयं दूरीभूतमित्यर्थः विजङ्कोशाभीकम्पे विजेर्नुर्नेमी त्यगुणत्वं कच्चित्त्वं निजाय स्वकीयाय तपसे अतुषः तुष्टासि श्रद्धावती असिद्धित्वशङ्काशून्या वासीत्यर्थः पुषादित्वात् ङः ॥६९॥ भ०

अथार्घ्यं मधुपर्काद्यमुपनीयादरादसौ। अर्च्चयित्वा फलैरर्च्चौ सर्व्वत्राख्यदनामयं॥७०॥

इति प्रकीर्णकाः।

अथेत्यादि। अथानंतरमसौ शवरी अर्घ्यमर्घार्थं पादार्घाभ्याञ्चेति यत् मधुपर्काद्यं मधुपर्कमिश्रमुदकं मधुपर्कः तदाद्यं आदौ भवमाद्यं तदुपनीयादरात् फलैरर्चयित्वा अर्च्चौश अर्च्चनार्हौ एयत् रामलक्ष्मणौ सर्व्वत्रोक्तेषु अनामयं कल्याणं आख्यत्कथितवती अस्यतीव्यङ्। इति प्रकीर्णकाः॥७०॥ ज०म०

अथेत्यादि। एवं प्रश्नानन्तरं असौ शवरी मधुपर्केणाद्यं सहितं अर्घ्यमुपनीय अर्च्चौश अर्च्चार्हौ रामलक्ष्मणौ फलैरादरात् अर्चयित्वा सर्व्वत्र पूर्व्वपृष्टेष्वर्थेषु अनामयं कुशलं आख्यत उक्त भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



वती वत्स्यस्वेति ङः मूल्ये पूजाविधावर्घः अर्घशब्दात्तदर्थे विकारसंघेति यः मधुपर्काद्यमिति पाठे आदौ भव आद्यः मधुपर्कश्चाद्योचस्वेत्यर्थविशेषणं यद्वा आदिरेवाद्यः अर्घ्यमधुपर्कादि पूजोपहारश्चोपनीयेत्यर्थः आमयशब्दोलक्षणया अनिष्टमात्रे प्रयुज्यते। इति प्रकीर्णकाः॥ ७०॥

## अतःपरं कृदधिकारः।

सख्यस्य तव सुग्रीवः कारकः कपिनन्दनः। कृतं
कृष्टासि मैथिल्याः सैवमुक्त्वातिरोऽभवत्॥ ७१॥

ज०म० अथ कृदधिकारमाह। कृत्यानां तदन्तर्भावेऽपि भावकर्म्मणोःकृत्यादिति विशेषप्रतिपादनार्थः पृथगधिकारः तत्रोपपदं सप्तमीस्थमित्यादिना एतदप्यधिक्रियते तान् इतोदर्शयन्नाह सख्यस्येत्यादि सा शवरी तिरोऽभवदन्तर्भूता एवमुक्त्वा किं तदित्याह तव सख्यस्य सखित्वस्य सख्युर्य्यः कर्म्मषष्ठी कारकः सुग्रीवः ण्वुल्तृचाविति ण्वुल् त्वया सह मैत्रीं करिष्यति कपिनन्दनः कपीनां नन्दयिता नन्द्यादिभ्योल्युः कृद्योगे षष्ठी असीति वर्त्तमाने लट् ॥ ७१॥

भ० अथ कृदधिकारः। यद्यपि कृत्यानां कृत्त्वमस्ति तथापि भावकर्म्मणोस्तद्विधानमिति सूचनाय पृथक् प्रदर्श्य कर्त्तरि शेषानाह तत्र निरुपपदसोपपदयोर्निरुपपदं प्रयोगवाञ्छ्यादादौ दर्शयति सख्यस्येत्यादि। सा शवरी एवमुक्त्वा तिरोऽभवत् अन्त

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



हिंता किम्मदित्याह सुग्रीवस्तव सख्यस्य कारकः सख्यं करिष्यति सख्युर्भावः कर्म्म वा सख्यं विकारसंघेति यः ढधेकृतीत्यादिना कर्म्मणि षष्ठी कपीनां नन्दयिता कपेः पुत्रोवा ग्रहनन्दिपचादेरिति अनः ततोऽद्भुतं मैथिल्याद्रष्टाऽसि प्रेत्तकोभविष्यसि अस्तेर्भविष्यत्सामीप्ये क्री अभिधानात् असीति युष्मदर्थं अव्ययमिति वा तृसकौघे इत्यादिषु कालस्यानिर्द्देशात् त्रिष्वपि कालेषु तृणादयोभवन्तीति बोध्यं तृशेर्वद्गोऽकिदिति रः॥ ७१॥

नन्दनानि मुनीन्द्राणां रमणानि वनौकसां। वनानि भेजतुर्व्वीरौ ततः पाम्पानि राघवौ॥ ७२॥

नन्दनानीत्यादि। ततश्चक्रादनन्तरं वीरौ राघवौ रामलक्ष्मणौ वनानि भेजतुः सेवितवन्तौ एत्वाभ्यासलोपौ तृफलेत्यादिना पाम्पानीति पम्पायाअदूरं अदूरभवस्येत्यण् मुनीन्द्राणां नन्दनानि प्रमोदकारीणि वनौकसां वनेचराणां उच्समवाये अस्मादौणादिकोऽसुम् पृषोदरादित्वाद्वर्णविपर्य्ययः तेषां रमणानि रतिजनकानि नन्द्यादित्वात् ल्युः कर्म्मणि षष्ठी॥ ७२॥ जं॰मं॰

नन्दनानीत्यादि। ततोऽनन्तरं राघवौ पाम्पानि वनानि भेजतुः सेवितवन्तौ जग्मतुरित्यर्थः भजञोभागसेवयोः तॄफलभजत्रपेति अतएत्वं खिलोपश्च पम्पानामसरःसम्बन्धीनि पम्पायाअदूरभवानीत्यर्थे वा विकारसंघेत्यादिना ष्णः मुनीन्द्राणां नन्दनानि प्रमोदकानि वनौकसां वनवासिनां रमणानि क्रीडाजनकानि उभयत्र ग्रहनन्दिपचादेरिति अनः कर्म्मणि षष्ठी॥ ७२॥ भ॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भृङ्गालीकोकिलक्रुड्भिर्व्वाशनैः पश्य लक्ष्मण। रोच नैर्भूषितां पम्पामस्माकं हृदयाविधं ॥ ७३ ॥

ज॰म॰ भृङ्गालीत्यादि। हे लक्ष्मण पम्पां पश्य अस्माकं हृदयाविधं हृद यं विध्यतीति ग्रहिज्यादिना संप्रसारणं नहिवृतीति दीर्घः भूषितां कैर्भृङ्गालीभिः भ्रमरपंक्तिभिः कोकिलैः क्रुङ्भिश्च वाशनैः कूजद्भी रोचनैः शोभनैः क्रुङिति ऋत्विगादिना क्विन् निपातनसामर्थ्याद नुनासिकलोपाभावः संयोगाच्च लोपः क्विन्प्रत्ययस्येति कुत्वं ॥ ७३ ॥

भ॰ भृङ्गेत्यादि। रामदूत्युवाचेत्यर्थाद्गम्यते हे लक्ष्मण पम्पां पश्य कीदृशीं भृङ्गालीभिर्भ्रमरपङ्क्तिभिः कोकिलैः क्रुङ्भिः क्रौ चैश्च भूषितां क्रुन्ठगत्यां चासुदित्यादिना विच् चकारेत्त्वं क्विप् संशयनिवारणार्थं नतु अव्ययार्थमिति बोध्यं विवितिपाठइत्येके चङित्यादौ क्रुञ्चः पृथक्पाठात् प्राक्कङ् न्नोर्नुः अपेत्र्मनोरि ति ङस्यान्तस्य लुप् कीदृशैः वाशनैः कूजद्भिः वाशृङ्शब्दे रोचनैः शोभमानैः उभयत्र नन्द्यादित्वादनः पुनः किम्भूतां अस्माकं हृद याविधं चेतः पीडयन्तीं हृदयं विध्यतीति क्विप् ग्रहस्वपाद्योरि ति जिः वीरुहोधङ्क्वाविति दीर्घनिर्द्देशात् क्वचित् क्विबन्ते पूर्व्वप दस्य दीर्घत्वमिति दीर्घः आङ्पूर्व्वस्य रूपं वा ॥ ७३ ॥

परिभावीनि ताराणां पश्य मन्थीनि चेतसां। उद्भा सीनि जलेजानि दुन्वन्त्यदयितं जनं ॥ ७४ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



परिभावीनीत्यादि। जलेजानि पद्मानि पश्य तत्पुरुषे कृती त्यादिनाऽलुक् सप्तम्याः उद्भासीनि भासमानानि अतएव ताराणां परिभावीनि तिरस्कारीणि ततश्चेतसां मन्थीनि पीडाकारीणि अतोजनमदयितं प्रियारहितं दुन्वन्ति टुदुउपतापे सौवादिकः मन्थोद्भासपरिभूभ्यो ग्रहादित्वाणिनिः॥ ७४॥ ज॰म॰

परीत्यादि। हे लक्ष्मण जलेजानि पद्मानि पश्य हनजनादिति डः सरसिजमित्युदाहरणेन क्वचित् समासे सप्तम्या अलुगिति सूचितं तत्पुरुषे कृतिवहुलं सप्तम्या अलुगिति परः कीदृशानि उद्भासीनि शोभमानानि अतएव ताराणां परिभावीनि तिरस्कारकाणि समानीत्यर्थो वा ढघेकृत्यव्येति कर्म्मणि षष्ठी नोऽचोऽन्तरदुर्गेरित्यादौ भूवर्ज्जनात् न णत्वं किन्तु भुर्णोऽदान्तइत्यादिना समासादिहितेन स्यादिना सहितत्वात् विकल्पेन णत्वं नोऽचोऽन्तरित्यादिना उपसर्गमात्राश्रयस्यैव णत्वनिषेधात् अतएव चेतसां मन्थीनि पीडकानि सर्व्वत्र ग्रहादित्वाणिन् अतएव अदयितं प्रियारहितं मादृशं जनं दुन्वन्ति पीडयन्ति टुदुउपतापे शतरि स्वादित्वात् नुः॥ ७४॥ भ॰

सर्व्वत्र दयिताधीनं सुव्यक्तं रामणीयकं। येन
जातं प्रियापाये कद्वदं हंसकोकिलं॥ ७५॥

सर्व्वत्रेत्यादि। हे लक्ष्मण सर्व्वत्र यत्किञ्चिद्रामणीयकं रमणीयस्य भावः योपधाद्वुञ् तत्सर्व्वं दयिताधीनं दयितायत्तं अखड ज॰म॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



चेत्यादिना खः सुव्यक्तं स्पष्टं कुतः येन प्रियायाश्चभाव सति हंसकोकिलं हंसाश्च कोकिलाश्चेति शकुनित्वात् द्वन्द्वैकत्वं कद्वदं कुत्सितप्रलपितं वदतीति पचाद्यच् कुत्सितं वदइति रथवदयो श्चेति कोः कत् दयितायां सत्यां मधुरप्रलपितमिदमिति ॥ ७५ ॥

भ॰ सर्व्वेत्यादि। हे लक्ष्मण रामणीयकं यत्किञ्चित् रमणीयत्वं तत्सर्व्वञ्च दयिताधीनं प्रियानिमित्तकमिति सुव्यक्तं स्पष्टमेव कथमित्याह येन हेतुना प्रियायाश्चपाये विरहे सति हंसको किलमपि कद्वदं कुत्सितवादिजातं यदा सीतासीत्तदा मधुरा लापीदमासीदिति भावः कुत्सितं वदतीति कत्कचत्रिरथवद इति कदादेशः रमणीयस्य भावइति विकारसंघेति कण् हंसाश्च कोकिलाश्चेति समाहारद्वन्द्वः ॥ ७५ ॥

पक्षिभिर्वितृदैर्यूनां शाखिभिः कुसुमोत्किरैः। अज्ञो योयस्य वा नास्ति प्रियाप्रम्लोभवेन्न सः ॥ ७६ ॥

ज॰म॰ पक्षिभिरित्यादि। उतृदिर्हिंसानादरयोरित्यस्मादिगुपधः कः यूनां वितृदैः हिंसकैः पक्षिभिः शाखिभिर्वृक्षैश्च ब्रीह्यादित्वा दिनिः कुसुमोत्किरैः उत्किरन्तीत्युत्किराः पूर्व्ववत् कः कुसुमा नामुत्किराः कर्मयोगलक्षणां षष्ठीं विधाय समासः तैर्हेतुभूतैः करणभूतैर्वा सप्रम्लोन भवेत् प्रकर्षेण म्लायते प्रम्लः आतश्चोप सर्गेकः योऽज्ञः गुणदोषानभिज्ञः पूर्व्ववत्कः यस्य प्रियोनास्ति तस्य प्रयोजनाभावः सर्व्वत्र विवेकित्वात् प्रीणातीति प्रियः इगुप धेति कः ॥ ७६ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



पचिभिरित्यादि। पचिभिः शाखिभिश्च सएव जनः प्रम्लोम्ला निमान्न भवति योजनोऽज्ञो गुणदोषानभिज्ञोभवति यस्य वा जानतोऽपि प्रियोजनोनास्ति सर्व्वत्र विरक्तत्वात् नलस्तद्विधोऽभिज्ञः प्रियानुरक्तश्चेति भावः पचिभिः शाखिभिश्च कीदृशैः यूनामर्धादिरहिणां विहृदैर्हिंसकैः शाखिभिः कीदृशैः कुसुमोत्किरैः पुष्पविचेपकैः इदुत्रधिर्नादरेच चकाराद्धिंसायां इगपविचेपे ज्ञागबो धने प्रीञ्प्रीतौ एभ्यः इगुपज्ञाप्रीजुङ्इति कः ढघेक्तीति कर्म्मणि षष्ठी प्रम्लायतीति प्रम्लः एचोऽशित्यादृत्यच ऋशितीति विषयसप्तमी हलजमादिति ङः॥ ७६॥ भ०

ध्वनीनामुद्भ्रमैरेभिर्मधूनामुद्धयैर्भृशं। आजिघ्रैः पुष्पगन्धानां पतङ्गैर्ग्लपितावयं॥ ७७॥

ध्वनीनामित्यादि। पतङ्गैर्भ्रमरैर्ग्लपिताः पीडितावयं ग्लास्ना वनुवमांचेति मित्वात् ह्रस्वः पतेरङ्गच्पचिणीत्यौणादिकः ध्वनीनामुद्भ्रमैः ध्वनीन् कुर्व्वद्भिः भ्माधातोः पाघ्रेति शः पाघ्राभ्मेति धमादेशः मधूनामुद्धयैः मधूनि पुनःपुनः पिबद्भिः धेट्पानइत्यस्माया देशः आजिघ्रैः पुष्पगन्धानां पुष्पगन्धान् गृह्णद्भिः पाघ्राभ्मेति शः कर्त्तृयोगलचणा षष्ठी॥ ७७॥ ज०म०

ध्वनीनामित्यादि। एभिः पतङ्गैर्व्वयं ग्लपिताः पीडिताः विशेषेण महिम्ना भ्रमरैरिति गम्यते एभिरित्यङ्गुलीनिर्द्दिष्टत्वेन वा कीदृशैः ध्वनीनां गुञ्जितानां उद्भ्रमैः कारकैः मधूनां उद्धयैः पा भ०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



नकारिभिः पुष्पगन्धानां आजिघ्रैः ग्रहणकारिभिः भृशमत्यर्थ मिति सर्व्वत्र क्रियाविशेषणं भ्राशब्दाग्नियुतौ ध्वनौ अनेकार्थत्वा दत्र करोत्यर्थः धेटपाने घ्रागन्धग्रहणे एभ्योधेटदृशपाघ्राध्मः शद्दति शित्त्वात् स्यादानपाघ्नेत्यादिना ध्माधम घ्राजिघ पतङ्गः पक्षिसूर्य्ययोः पतोगच्छतीति शर्द्धजहोरङ्गमदृत्यादिना खे निपा तः ग्लायतेर्ण्यन्तस्य ज्वलह्वलह्मलग्लेति वा ह्रस्वः॥ ७७॥

धारयैः कुसुमोर्म्मीणां पारयैर्व्वाधितुं जनान्। शा खिभिर्हा हताभूयोहृदयानामुदेजयैः॥ ७८॥

ज०म० धारयैरित्यादि। हा कष्टं शाखिभिर्द्रुमैर्भूयोऽत्यर्थं वयं हताः कामशराणां धारणात् तदेवाह कुसुमानां ये उर्म्मयः भङ्गाः प्रकाशावा तान् धारयद्भिः उर्म्मिस्तरङ्गे पीडायां वेगे सङ्गप्रकाश योः। उत्कणावस्त्रसंकोचवोधेषु च प्रकीर्त्तितदृति विश्वः समूहे ऽपीति अतएव जनान् मद्विधान् वाधितुं पारयद्भिः शतोहृदया नामुदेजयैरुत्कण्ठाजनकैरिति भावः धृञ्धारणे पृपालनपूरण योः एजृकम्पने च एभ्योणिजन्तेभ्यः अनुपसर्गाल्लिम्पविन्देत्यादि ना शः उदेजीति सूत्रे निर्द्देशात् अनुपसर्गादिति न निषेधः॥ ७८॥

भ० धारयैरित्यादि। हा कष्टं शाखिभिर्वृक्षैर्व्वयं भूयोऽत्यर्थं हताः कीदृशैः कुसुमानामुर्म्मयः प्रकाशाः संज्ञावा तेषां धारयैः धारकैः अतएव जनान् वाधितुं पीडयितुं पारयैः पारयद्भिः यतोहृदयानामुदेजयैः उत्कम्पकैः धृशङस्थितौ पृलिपालनपूर

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



णयोः ह्रस्वान्तोजुहोत्यादिः दीर्घान्तः क्रैयादिकस्त्र एजृकम्पे उत्पूर्व्वः एभ्यः प्रेरणन्यन्तेभ्यः साहिसातीत्यादिना शः पारत्कत्तरवत् इत्यस्य न ग्रहणं प्रेरणन्यन्तैः साहचर्य्यात् अगेरिति प्रतिषेधेऽपि उदेनेः शः कृत्तद्धितसमासानामभिधानं नियामकमित्युक्तेः उर्म्मिस्तरङ्गे पीडायां वेगे सङ्गप्रकाशयोः। उत्कण्ठावस्त्रसङ्कोचकोषयोरपि कीर्त्तितेति विश्वः समूहेति जयमङ्गला ॥ ७८ ॥

ददैर्दुःखस्य मादृग्भ्यो धायैरामोदमुत्तमं। लिम्पैरिव तनोर्व्वातैश्चेतयः स्याज्ज्वलोन कः ॥ ७९ ॥

ददैरित्यादि। वातैर्ददैः दुःखस्य दुःखं ददद्भिः केभ्योमादृग्भ्यः अस्मादृशेभ्योविरहिभ्यः त्यदादिषुदृशइति क्विन् दृङ्शवतुष्विस्याकारः धायैरामोदमुत्तमं आमोदं प्रियासङ्गमेन हर्षं यावत् विरहिभ्योदत्तस्य दुःखस्य धायैः पोषकैरित्यर्थः उत्तममिति क्रियाविशेषणं उत्तममामोदं धायैः कुसुमानां परिमलं धारयद्भिरिति व्याख्याने अनित्यत्वात् कृत्प्रयोगे कर्म्मषष्ठ्यभावः लिम्पैरिव तनोः शरीरं लिम्पद्भिरिव वातैर्हेतुभिः कोनाम विरहाग्निना यश्चेतयमानः ज्वालाज्वलन्नग्निरिव न स्यात् किन्तु भवेदेवेति भावः ददैर्धायैरिति श्याद्व्यधेति आकारान्तलक्षणे शे प्राप्ते ददातिदधात्योरिति णशभवतः शे आतोलोपः णेतुयुक् लिम्पस्रेतयइति अनुपसर्गादिति शः ज्वलइति ज्वलिति कसन्तेभ्योणइति णस्य विकल्पपचाद्यच्॥ ७९ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० दद्वैरित्यादि। कस्येतयस्येतनावान् जनोऽर्थादिरही वातै र्हेतुभिर्ज्वलोन स्यात् अग्निरिव न भवति वायुभिश्चेतःसन्तोषात् सर्व्वएव ज्वलो दीप्तिमान्स्यादिति वा केवलं मद्विधानां विरहि णां कष्टमित्याह माद्दग्भ्योदुःखस्य दद्वैर्दातृभिः यतः उत्तममा मोदं पुष्पसम्बन्धिनं धायैर्धारयद्भिः क्वचिद्विशेषेऽपि सामान्य प्रवृत्तिरिति न्यायात् ढघेञ्छतीति कर्म्मणि षष्ठीं वाधित्वा कर्म्मक्रि येत्यादिना द्वितीया तनोर्द्देहस्य लिम्पैर्लेपकारिभिरिव दद दाने पचादित्वादच् अहमिव दृश्यते इति तदादिभवत्समाने त्यादिना कर्म्मणि क्विप् अेङ्गडुधाञ्धारणे पुष्टौ दासंज्ञक त्वात् स्वसव्यधेन तनदावद्वसदृति नः यन्ज्ञित्कृदिण्वातः ञिलि पोग्रपञ्जलेपे साहिसातीत्यादिना शः मुचादित्वात् नुण् चितक इञ्ञाने इत्यस्मात् अभिधानात् शः धेटदृशेत्यत्र योगविभाग इत्यन्ये साहिसातीत्यादौ चेतीति लिपिकरप्रमादात् पतितमि त्यन्ये जज्वलज्वलनत्विषोः दुनीभूज्वलेत्यस्याप्रवृत्तिपचे पचा दित्वादच्॥ ७९॥

अवश्यायकणास्नावाश्चारुमुक्ताफलत्विषः। कुर्व्व न्ति चित्तसंस्नावं चलत्यर्णाग्रसम्भृताः॥ ८०॥

ज०म० अवश्यायेत्यदि। अवश्यायतइत्यवश्यायः तस्य कणाविन्दवः आस्रवन्तीत्यास्रावाःचरन्तः श्याद्व्यधेति णः कर्त्तरि तयोर्विशेषण समासे राजदन्तादिति परनिपातः ते कुर्व्वन्ति चित्तसंस्रावं संस्रव

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



तीति संस्रावः पूर्व्ववत्। चित्तं संस्रावं चलत्कुर्व्वन्ति इत्यर्थः पूर्व्ववत् समासपरनिपातौ कीदृशाश्चलत्पर्णाग्रसंस्थिताः अतएव चारुमुक्ताफलत्विषः दर्शनीयमुक्ताफलानुकारिणः सीताहारस्थमुक्ताफलानि स्मारयन्तीत्यर्थः॥ ८०॥

अवेत्यादि। अवश्यायकणास्रावाश्चित्तसंस्रावं कुर्व्वन्ति अवश्यायस्य नीहारस्य कणाविन्दवः आस्रवन्तीति आस्रावाः कर्म्मधारये गमकत्वात् विशेषणस्यापि परनिपातः सुगतौ दुनीभूञ्चेत्यादिना पचे णः चित्तञ्च तत् संस्रावं चलश्चेति पूर्व्ववत् कीदृशाः चलतां पत्राणां अग्रेषु संभृताः चलन्तश्च ते पत्राग्रसंभृताश्चेति वा स्थूलीभूतागलिताइत्यर्थः अतएव चारुणः शोभनस्य त्विट् दीप्तिर्येषु ते तथा सीताहारस्थितानि मुक्ताफलानि स्मारयन्तइत्यर्थः श्वैङगतौ घङि यन्ङित्कृदिणातइति यन्॥ ८०॥ भ०

अवसायोभविष्यामि दुःखस्यास्य कदा न्वहं। न जीवस्यावहारोमां करोति सुखिनं यमः॥ ८१॥

अवसायइत्यादि। कदा नु काले अहं दुःखस्यानुभूयमानस्य अवसायोऽन्तकरोभविष्यामि येन जीवस्यावहारोऽवहर्त्ता यमो मां सुखिनं न करोति मारयतीत्यर्थः अवस्यति इति अवसायः षोऽन्तकर्म्मणि अवहरतीत्यवहारः श्याद्व्यधेति सर्व्वत्र णः युक्॥ ८१॥ ज०म०

अवेत्यादि। नु प्रश्ने वितर्के वा कदा अहं अस्य दुःखस्य अवसायोऽन्तकरोभविष्यामि येन जीवस्यावहारोऽपकारको भूत्वा भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अद्यापि यमोमां दुःखिनं न करोति विना मरणं न दुःखमपगमिष्यतीत्यर्थः षायनाशे ह्वञ् ह्वत्यां आभ्यामेवपूर्व्वाभ्यां स्वसव्यधेन ननदावह्वसइति ग्रः॥ ८१॥

दह्येऽहं मधुनोलेहैर्दावैरुग्रैर्यथा गिरिः। नायः कोऽत्र सयेन स्यां वताहं विगतज्वरः॥ ८२॥

ज०म० दह्येहमित्यादि। मधुनोलेहैर्भृंगैः अहं दह्ये श्याद्यधेति णः दावैर्वनाग्निभिरुग्रैः प्रचण्डैर्यथा गिरिर्दह्यते तद्वत् अत्र कोनायः नयतीति नायः उपायः ईप्सितप्रापकः उभयत्र दुन्योरिति णः येन नायेन विगतज्वरः विगतपीडः स्यामिति आशंसायांलिङ् वत खेदे॥ ८२॥

भ० दह्यइत्यादि। मधुनोलेहैर्मधुलिड्भिर्भ्रमरैरहं दह्ये कर्म्मणि की यथा उग्रैः प्रचण्डैर्दावैर्वनाग्निभिर्गिरिर्दह्यते तद्वत् अत्र सकोनायोऽभिमतप्रापकउपायः येनाहं विगतज्वरोविगतसन्तापः स्यां नु प्रश्ने वितर्केवा वत खेदे अस्तेःस्यांलोपोऽस्त्यमोरिति अकारलोपः लिहोऽत्रस्वादे पचादित्वादन् टुदुउपतापे दुगतौ वा णीञ् प्रापणे दुनीभूज्वलेति वैकल्पिकोणः दवौदावौवनारण्यवह्नीइत्यमरः॥ ८२॥

समाविष्टं ग्रहेणेव ग्राहेणेवात्तमर्णवे। दृष्ट्वा दृष्टान् स्मरस्येव वनान्तान्मम मानसं॥ ८३॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



समाविष्टमित्यादि। वनान्तान् वनपर्य्यन्तान् स्मरस्य कामस्य गृहमिव उन्मादकत्वात् गेहेकइति ग्रहेःकः अर्द्धर्चादिपाठात् पुंलिंगता स्थितस्येत्यर्थात् योज्यं अन्यथा कथं समानकर्तृकत्वं मानसञ्चेतः ज्योतिषिग्रहः ग्राहेणेवात्तमर्णवे अर्णः पानीयं यत्रास्तीति केशाद्वोऽन्यतरस्यामिति तत्रार्णसोलोपश्चेति भूमनि न्दाप्रशंसास्वित्यादौ वः सलोपश्चेति अर्णवे समुद्रे वर्त्तमानेन ग्राहेण कुंभीरादिना आत्तं गृहीतं आङ्पूर्व्वस्य दाञोऽचउप सर्गात्तः॥ ८३॥ ज०म०

समेत्यादि। वनान्तान् वनस्वरूपान् तत्समीपदेशान् वा दृष्ट्वा स्थितस्य मम मानसं ग्रहेण सूर्य्यादिना समाविष्टमिव आस्पदीकृ तमिव इत्यर्थः उपहितत्वात् समुद्रे ग्राहेण कुम्भीरादिना आत्तं गृहीतमिव अतिगभीरशोकमग्नत्वेऽपि कामपीडितत्वात् स्थित स्येत्यध्याहारेणैककर्तृकत्वे पूर्व्वकाले क्त्वाच् वनान्तान् कीदृशान् स्मरस्य गृहानिव ग्रहेः सूर्य्यादौ अन् जलजन्तौ घञ् निलयेऽलि जिस्वाभिधानात् गृहाः पुंसि च भूम्नेव निकाय्यनिलयालयाइत्य मरः आङ्पूर्व्वदाञः क्ते ग्यचस्त्वेति पत्वे तादेशःअर्णोजलं विद्यते अस्येति केशादित्वात् वः मनीषादित्वात् सलोपः मनएव मानसं स्वार्थे ष्णः केचित्तु मनएव जानातीति व्यवहारात् मनसएव दर्शनकर्तृत्वं विवचितमित्युक्त्वा स्थितस्येति नाध्याहरन्ति अन्तः प्रान्तेऽन्तिके नाशे स्वरूपेऽपि मनोहरइति विश्वः॥ ८३॥ भ०

वाताहतिचलच्छाखा नर्त्तकाइव शाखिनः। दुः सहाश्री परिक्षिप्ताः क्वणद्भिरलिगायकैः॥ ८४॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



वातेत्यादि। हा कष्टं एते शाखिनः नर्त्तकाइव शिल्पिनिष्वुन् दुःसहादुःखेन सह्यन्तइति ईषदित्यादिना खल् नर्त्तकैः साधर्म्यं माह वाताहतिचलच्छाखावाताहतिभिः चलन्त्यः शाखावाऊल तादृव येषांते अलयोभ्रमरागायकाइव गस्थकन् तैश्च परिक्षिप्ताः परिवेष्टिताइति॥ ८४॥

भ॰ वातेत्यादि। एते शाखिनोदुःसहादुःखेन सह्यन्ते ईषद्दुःसोरिति खल् हा विषादे नर्त्तकाइव नृत्यन्तीति नृत्खनरन्जइति षकः नृतादेः शिल्पिनि कषइति परः स्वमते शिल्पिविशेषोऽर्थाद्गम्यते नर्त्तकसाधर्म्यमाह वाताहतिचलच्छाखाः वातस्याहतिभिश्चलन्ती शाखा बाऊतुल्या येषां अलयोभ्रमराएव गाथकागायनास्तैः परिक्षिप्ताः परिवेष्टिताः गायन्तीति गोण्नट्थकाविति थकः गायतेरैतो लोपेइति वृत्तावुक्तत्वात् गैगाने इत्यस्यैव ग्रहणं नतु गाङः कणद्भिः शब्दायमानैः॥ ८४॥

एकहायनशारङ्गगती रघुकुलोत्तमौ। लवकौ शत्रुशक्तीनामृष्यमूकमगच्छतां॥ ८५॥

ज॰म॰ एकहायनेत्यादि। रघुकुलोत्तमौ रामलक्ष्मणौ ऋष्यमूकमगच्छतां गतवन्तौ लङि रूपं हायनः संवत्सरः सएकोयस्य शारंगस्य मृगस्य तस्येव गतिर्ययोः शीघ्रगामित्वात् ह्रस्वश्रीह्रिकालयोरिति हाधातोर्णुट् आतोयुक्तौ शत्रुशक्तीनां लवकौ अपनेतारौ प्रुसृल्वः समभिहारइति वुन् तत्समभिहारग्रहणं साधुकारित्वोपलक्षणार्थं॥ ८५॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



एकेत्यादि। एतद्वचनानन्तरं रघुकुलस्य उत्तमौ श्रेष्ठौ रामलक्ष्मणौ ऋष्यमूकं पर्व्वतं अगच्छतां कीदृशौ एकहायनशारङ्गगती एकोहायनोवत्सरोवयोयस्य तादृशस्य शारङ्गस्य हस्तिन इव मृगस्येव वा गतिर्गमनं ययोः शीघ्रगामित्वात् जहातेर्णनटि हायनोनिपातितः हाङोरूपमित्यन्ये शत्रुशक्तीनां लवकौ छेदकौ लुनातेः पुङ्गुवुड्ल्वोऽकः इत्यकः घ्रादेः साधुकारिण्यर्थेऽकइति परः शारङ्गश्चातके भृङ्गे कुरङ्गे च मतङ्गजे॥ ८५॥ भ०

तौ वालिप्रणिधी मत्वा सुग्रीवोऽचिन्तयत्कपिः। बन्धुना विगृहीतोऽहं भूयासं जीवकः कथं॥ ८६॥

तावित्यादि। तौ रामलक्ष्मणौ वालिनः प्रणिधी चरौ मत्वा सुग्रीवः कपिरचिन्तयत् चिन्तितवान् प्रणिधीयते नियुज्यते कार्य्येषु प्रणिधिः उपसर्गेघोःकिः बन्धुना भ्रात्रा विगृहीतो विरोधितः सन् कथं जीवकोभूयासमिति आशंसायां लिङ् जीवेराशिषिवुन्। इति निरुपपदकृदधिकारः॥ ८६॥ ज०म०

तावित्यादि। रामलक्ष्मणौ वालिनः प्रणिधी चरौ मत्वा सुग्रीवः कपिरचिन्तयत् बन्धुना वालिना विगृहीतो विरोधितोऽहं कथं जीवकोभूयासं प्रणिधीयते कर्म्मणि प्रयुज्यतेऽसाविति दासंज्ञकत्वात् किर्दोऽन्तर्गैरित्यनेन भावविहितोऽपि किः छन्दोः कभावइत्युक्तेरत्र कर्म्मणि बोध्यः केचित्तु कभावेऽमीइत्यस्मात् मण्डूकसुताधिकारादत्र कभावइत्यनुवर्त्तते वृत्तौ तु कारकानु भ०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



पदे शोलिपिकरप्रसादात् इत्याङः आशिषीति जीवतेरकः। इति निरुपपदाधिकारः॥ ८६॥

सशत्रुलावौ मन्वानौ राघवौ मलयं गिरिं। जगाम सपरीवारो व्योममायमिवोत्थितं॥ ८७॥

ज०म० इतः प्रभृति तत्रोपपदं सप्तमीस्थमिति अस्योपपदस्थानेन क्वतो दर्शयन्नाह सइत्यादि। ससुग्रीवः सपरीवारः सपरिकरः उपसर्गस्येति दीर्घः कपीनाममनुष्यत्वात् मलयं गिरिं जगाम राघवौ शत्रुलावौ शत्रून् लुनातीति कर्म्मण्यण् शत्रूणामुन्मूलकाविति मन्वानोऽवगच्छन् मनुबोधनप्रसादात्मनेपदिनस्तनादिभ्यउः व्योममायमिवोत्थितं व्योम आकाशं मिमीतइति क्वावामस्येत्यण् नभः परिच्छेत्तुमिवोत्थितं कियत्प्रमाणमस्येति॥ ८७॥

भ० अथ सोपपदाधिकारः। यस्मात् पराद्धातोः प्रत्ययास्तदुपपदं सइत्यादि। ससुग्रीवो राघवौ शत्रुलावौ शत्रूणां च्छेदकौ मन्वानः परीवारैः परिजनैः सह मलयं गिरिं जगाम व्योममायं आकाशस्य परिमाणं कुर्व्वाणमिव उत्थितं अतिदैर्घ्यादियमुत्प्रेक्षा शत्रून् लुनातीति व्योम मातीति च ढातृषण्यनञ्जित्कृदिति आतोयन् मनदङबोधे ङित्त्वान्म दित्त्वात्तनादिः परिपूर्व्वाद् ञोघङ् परेरिकारस्य दीर्घत्वमभिधानात्॥ ८७॥

शर्म्मदं मारुतिं दूतं विषमस्थः कपिद्विपं। शोकापनुदमव्यग्रं प्रायुङ्क्त कपिकुञ्जरः॥ ८८॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



शर्म्मदमित्यादि। कपिकुंजरः सुग्रीवः हनुमन्तं दूतं प्रायुङ्क्त प्रस्थापितवान् वृन्दारकनागकुंजरैरित्यादिना कर्म्मधारयः सः वृत्तान्तं ज्ञातुमित्यर्थात् प्रायुङ्क्त इति प्रोपाभ्यांयुजेरित्यात्मने पदं रुधादित्वात् श्नम कपिकुंजरः किम्भूतः विषमे दुर्गपर्व्वते तिष्ठतीति विषमस्थः सुपिस्थइति कः मारुतिं कीदृशं शर्म्म कल्याणं ददातीति शर्म्मदः आतोऽनुपसर्गेकइति कः श्रेष्ठत्वमाह कपिद्विपं कपिश्रेष्ठं द्वाभ्यां पिवतीति द्विपः कपिरयं द्विपइव उपमितं व्याघ्रेत्यादिना कर्म्मधारयः पुनः कीदृशं शोकापनुदं शोकमपनुदति तुन्दशोकयोरिति कः अव्यग्रं सुचित्तमित्यर्थः॥ ८८॥ ज॰म॰

शर्म्मदमित्यादि। कपिकुञ्जरः सुग्रीवोमारुतिं हनूमन्तं दूतं प्रायुङ्क्त प्रस्थापितवान् वृत्तान्तं ज्ञातुमित्यर्थात् कीदृशः विषमस्थः विषमे कृच्छ्रे तिष्ठतीति हनजनादिति डः एवम्भूतोऽपि महासत्वत्वादव्यग्रोऽव्याकुलः यद्वा विषमे दुर्गे स्थितः अतएव अव्यग्रः अक्षोभितमनाः कीदृशं मारुतिं शर्म्म ददातीति शर्म्मदं सुखदायकं पूर्व्ववत्कः शर्म्मशातसुखानिचेत्यमरः कपिद्विपं कपिश्रेष्ठं शोकमपनुदति शोकापनुदं कगृह्णाप्रीजुङइति कः कपिर्द्विपइव कपिः कुञ्जरइव गमकत्वात् विशेषणस्यापि परनिपातः द्वाभ्यां पिवतीति द्विपः पूर्व्ववत् डः कुञ्जोदन्तोविद्यतेऽस्येति मध्वादित्वात् रः गुञ्जकुञ्जे निकुञ्जेऽपि हनौ दन्तेऽपि दन्तिनामिति विश्वः मारुतस्यापत्यमिति वाह्वाद्यतइति ष्णिः आञ्जनेयोहनूमान् स्याद्धनुमानपि मारुतिरिति कोषः अव्यग्रमिति क्वचित् पाठः तादृशस्य दूतस्य योग्यत्वात् युजेर्घ्यां रुधादित्वात् श्नण् नणोन्तेऽणाविति नादेशः॥ ८८॥ भ॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० तमित्यादि । तं ऋष्यमूकं गिरिं आगत्य आगम्य कपिर्हनूमान् वीरौ रामलक्ष्मणौ अवोचत् कथितवान् गिरिं कीदृशं रम्यत्वात् मनोहरं हरतीति हरः पचादित्वादच् मनसो हरः मनोहरः कीदृशौ तौ वर्म्महरौ कवचधरौ पूर्व्ववदच् कपिः कीदृशः सुखाहरः सुखकारी अर्थान्तयोः पूर्व्ववदच् परे तु अवहने कर्म्मणः परात् हञोऽच् वयोबोधकवहने च आङ्पूर्व्वात्तु ताच्छील्यएवेत्याङः तन्मते मनोहरतीति मनोहरस्तं वहने तु भारहारइत्यादि बोध्यं वर्म्म हर्त्तुं क्षमौ वर्म्महरौ अच सम्भाव्यमानं वयो गम्यते तरुणावित्यर्थः सुखमाहर्त्तुं शीलमस्य सुखाहरः भिक्षुर्यतिरूपः भिक्षणशीलोवा सन्भिचार्थंसउः भिक्षार्हविग्रहः भिक्षायोग्यशरीरः भिक्षुकवेशपरिग्रहात् नतु वानरमूर्त्तिः विश्वासप्रदवेशइत्युक्तं भिक्षामर्हतीति भिक्षार्हः पचादित्वादच् ॥ ९१ ॥

बलिनावमुमद्रीन्द्रं युवां स्तम्बेरमाविव । आचक्षाथामितः कस्माच्छङ्करेणापि दुर्गमं ॥ ९२ ॥

ज०म० किमवोचदित्याह बलिनेत्यादि । युवां अमुं अद्रीन्द्रं कस्मात् कारणादितः प्राप्तौ इणगतावित्यस्माद्वर्त्तमानसामीप्ये भूते लट् स्यस् एतदाचक्षाथां कथयतं लोटि रूपं बलिनौ बलवन्तौ यत् शंकरेणापि महादेवेनापि दुर्गमं दुःखेन गम्यते काविव स्तम्बेरमाविव यथा मत्तद्विपौ प्राप्नुतस्तद्वत् स्तंबकरणयोरित्यच् कर्त्तरि हस्तिन्यभिधेये हस्तिसूचकयोरिति वचनात् शंकरइति शमि धातोरित्यच् ॥ ९२ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



बलीत्यादि। किमवोचदित्याह युवां अमुं अद्रीन्द्रं ऋष्यमूकं अ० कस्मात् कारणात् इयः प्राप्नुथः इणगतौ भूतसामीप्ये की अभिधानात् एतत् युवामाचक्षाथां कथयतं प्रार्थनायां गी अद्रीन्द्रं कीदृशं शङ्करेण महादेवेनापि दुर्गमं दुःखेन गम्यतइति ईषद्दुःसुरिति खल् अतएवात्र गमनात् युवां बलिनौ बलमस्ति ययोरिति नैकाजादिति इन् अत्रातिशयेन अत्यर्थौ बोध्यः। तथा च भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। संसर्गेऽस्ति विवक्षायां भवन्ति मतुवादयइति स्तम्बेरमाविव हस्तिनौ यथा प्राप्नुथस्तद्वत् स्तम्बेरमतइति पचादित्वादन् अभिधानात् सप्तम्यलुक् हस्तिन्येव रूढः शं कल्याणं करोतीति शङ्करः स्तकुष्टइति टः अभिधानात् संज्ञा गम्यते॥ ९२॥

व्याप्तं गुहाशयैः क्रूरैः क्रव्याद्भिः सनिशाचरैः।
तुङ्गशैलतरुच्छन्नं मानुषाणामगोचरं॥ ९३॥

उक्तष्टाधिकारः।

व्याप्तमित्यादि। दुर्गमत्वदर्शनाय इदमुच्यते कीदृशमद्रीन्द्रं ज०म० क्रव्यमपक्वमांसं भक्षयद्भिः सिंहादिभिः सनिशाचरैः राक्षससहितैर्व्याप्तं क्रव्येचेति विट् गुहाशयैः गुहायां शेरते इति शीङोऽधिकरणेऽच् तुंगाः उच्चाः शैलाः शिलायां भवाये तरवस्तैश्छन्नं व्याप्तं अतएव मानुषाणामगोचरं अगम्यं गोचरसंचरेत्यादिना निपातितः॥ ९३॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० व्याप्तमित्यादि। दुर्गमत्वं दर्शयन्नाह अद्रीन्द्रं कीदृशं क्रव्याद्भिः किरातादिभिः सिंहादिभिर्व्याप्तं क्रव्यं मांसमदन्तीति क्विप् क्रव्यशब्दाददः पक्के क्विप् अपक्केऽण्क्विपाविति परः स्वमते पक्कापक्कविशेषानुक्तौ न चतिरर्थानतिशयत्वात् कीदृशः गुहाशयैः गुहायां शेरतइति पचादित्वादन् शीङोऽधिकरणादनेति परसूत्रं क्रूरैर्निर्दयैः कठिनैर्वा सनिशाचरैः राक्षससहितैः पुनः कीदृशं तुङ्गशैलतरुच्छन्नं तुङ्गैः शैलैस्तरुभिश्च छन्नं सर्व्वतोव्याप्तं अतएव मानुषाणामगोचरं अगम्यं। द्विषन् वनेचराग्राणामित्यारभ्य चरादेष्टइत्यादिप्रकरणस्य प्रागुक्तत्वात् अत्र तत्त्यागइत्यतआह उक्तस्याधिकारइति॥ ९३॥

सत्वमेजयसिंहाढ्यान् स्तनन्धयसमत्विषौ। कथं नाडिन्धमान्मार्गानागतौ विषमोपलान्॥ ९४॥

ज०म० सत्वमित्यादि। युवामिमान् मार्गानागतौ सत्वमेजयसिंहाढ्यान् सत्वमेजयन्ति ये सिंहाः एजेः खश् अरुर्द्विषेति मुम् तैराढ्यान् व्याप्तान् सिंहग्रहणं तद्वद्धिंस्रोपलक्षणार्थं हिनस्तीति सिंहः पृषोदरादित्वाद्वर्णविपर्य्ययः नाडिन्धमानिति उच्चनीचाधिरोहणान्मुहुर्मुहुर्निश्वासैर्नाडिन्धमन्तीति नाडीमुष्ट्योश्चेति खश् खित्यनव्ययस्येति ह्रस्वः विषमोपलान् उन्नतपाषाणयुक्तान् स्तनन्धयसमत्विषौ बालवत्सुकुमारौ सामर्थ्यं पुनर्युवयोरचिन्त्यं स्तनं धयतः पिवतः नासिकास्तनयोरिति खश् अरुर्द्विषदिति मुम्॥ ९४॥

अथ खशाद्यधिकारः सत्वमित्यादि। युवां कथं इमान् मार्गान् आगतौ एतत् ब्रूतमिति वक्ष्यमाणश्लोकेनान्वयः कीदृशान्

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



सत्वमेजयसिंहाद्यान् सत्वान् प्राणिनएजयन्ति कम्पयन्ति भीषय न्तीति यावत् खश्रेजेरिति खश् खित्यव्याजिति मन् तादृशाये सिं हास्तैराढ्यान् व्याघ्रान् हिनस्तीति सिंहः पचादित्वादच् निपात नात् वर्णविपर्य्ययः नाडिन्धमान् मुहुर्मुहुर्नाडीं निःश्वासैर्धमन्ति उपतापयन्तीति नाडीमुष्टीस्तमेत्यादिना खश् ख्यादानपेत्या दिना धमोधमादेशः पूर्व्वेण मन् ह्रस्वस्य विषमोपलान् उन्नतानत प्रस्तरयुक्तान् युवां कीदृशौ स्तनन्धयसमलिषौ स्तनंधयति पिब तीति स्तनन्धयोबालकः पूर्व्ववत्खश् मन् च तेन समा लिट् दीप्ति र्ययोः एतेन सौकुमार्य्यं दर्शितं स्तनन्धयशब्देनार्थात् तद्दीप्तिरुप लक्ष्यते दीप्तौ तत्समत्वमुचितं परम्परया धर्म्मिसाम्यं धर्म्मसाम्ये वा गम्यते॥ ९४॥

उत्तीर्णौ वा कथं भीमाः सरितः कूलमुद्वहाः। आ सादितौ कथं ब्रूतं न गजैः कूलमुद्रुजैः॥ ९५॥

उत्तीर्णावित्यादि। कथं वा केनोपायेन युवां सरितोनदीरु त्तीर्णौ भीमास्त्रासकरी यतः कूलमुद्वहाः कूलमापूर्य्य वहन्त्यः उदिकूलइति खश् गजैः कूलमुद्रुजैः कूलं भिन्दद्भिः कथं नासा दितौ न व्यापादितौ इति ब्रूतं कथयतं॥ ९५॥ ज०म०

उत्तीर्णावित्यादि। कथं वा युवां सरितोनदीरुत्तीर्णौ तर णमपि गतिः तेन गत्यर्थाढेत्यादिना कर्त्तरि क्तः कीदृशीः कूलमु द्वहाः कूलान्यापूर्य्य वहन्ति कूलं तीरमपि जलानि प्रापयन्ति वा भ०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अतएव भीमास्त्रासकरीः गजैर्हस्तिभिः कथं वा युवां नासादितौ न प्राप्तौ न मारिताविति भावः कर्म्मणि क्तः कीदृशैः कूलमुद्रुजैः मत्ततया कूलं भिन्दद्भिः एतद्युवां ब्रूतं कथयतं उभयत्र कूला दुद्रुजुद्वहइति खश् खित्यव्याजिति मन्॥ ९५॥

रामोऽवोचद्धनूमन्तमावामभ्रंलिहं गिरिं। ऐव विद्वन् पितुः कामात् पान्तावल्पंपचान्मुनीन्॥ ९६॥

ज०म० रामइत्यादि। हनुर्वदनैकदेशः सोऽस्यास्तीति निन्दायां मतुप् अन्येषामपि दृश्यतइति दीर्घः हनूमान् हनुमानपीति विश्वदर्शनात् वैरूप्यं तस्य किल जातमात्रस्य आदित्यरथं गृह्णतो हनुद्वयं भग्नमिति श्रूयते तं रामोऽवोचत् उक्तवान् तत् किमित्याह हे विद्वन् यद्यमुं गिरिमावामैव आगतौ तत् पितुः कामादभिप्रायात् आङ्पूर्व्वादिणोलङि रूपं अभ्रंलिहमुच्चैस्तरं अभ्रंलेढीति वहाभ्रेलिहइति खश् किं कुर्व्वाणौ पान्तौ रचन्तौ मुनीन् अल्पं पचान् अल्पसन्तुष्टान् अल्पं पचन्तीति मितनखेचेति मितेत्यर्थ ग्रहणात् खश् चकारस्यानुक्तसमुच्चयार्थत्वाद्वा॥ ९६॥

भ० रामइत्यादि। रामोहनूमन्तं अवोचत् पर्व्वताघातभग्नत्वात् कुत्सिता हनूरस्यास्तीति निन्दायां मतुः हनूशब्दात् तन्वादेर्व्वा इति पाक्षिकऊप् उतोऽयुङ्रज्वादेरित्यस्य प्रत्युदाहरणे रज्वादौ तु हनुरिति क्वचित्पुस्तके दृश्यते तच्च लिपिकरप्रमादा

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



दिति केचित् नाम्नप्यर्थेऽचोर्धइति केचित् हनूमान् हनुमानपीति विश्वदर्शनाद्दैर्घ्यमेव किमुक्तवानित्याह हे विद्वन् आवां पितुः कामादभिलाषादमुं गिरिं ऐव आगतौ इणोघीव अदादित्वात् शपोलुक् अभ्रंलिहमाकाशं लेढि प्राप्नोतीति वृभृदृदृजीत्यादिना अभिधानादनाम्न्यपि खः खितीति मन् अभिधानात् गुणाभावः आवां कीदृशौ मुनीनां पान्तौ रचन्तौ पालरचणे शतुः कीदृशान् अल्पंपचान् स्वल्पसन्तुष्टान् दरिद्रान् वा घटीखारीत्यादौ मितनखमानादित्यत्रार्थस्यैव ग्रहणं तेनाल्पशब्दात् पचः खश् अल्पं यथा स्यात्तथा पचानिति केचित् मुनिरचणेन दुष्टहिंसाप्रवृत्तयोरावयोः कुतः सिंहादिभयं तादृशोस्य सरिदुत्तरणमपि नाशक्यमिति पूर्व्वप्रश्नेषु सर्व्वत्रोत्तरं सूचितं ॥ ९६ ॥

अमितम्पचमीशानं सर्व्वभोगीणमुत्तमं। आवयोः पितरं विद्धि ख्यातं दशरथं भुवि ॥ ९७ ॥

कः पुनः पिता यद।देशादागतावित्यतआह। अमितम्पचमित्यादि। आवयोः पितरं दशरथनामानं भुवि विख्यातं विद्धि जानीहि हुझल्भ्योहेर्धिः अमितंपचं महामन्त्रिणं पूर्व्ववत् खश् मुम् च ततोनञ्समासः ईशानमीशनशीलं स्वामिनमित्यर्थः ताच्छील्येत्यादिना चालश् सर्व्वभोगीणं सर्व्वसकलभोगाय हितं आत्मन्विश्वजनेति खः भोगशब्दोऽत्र शरीरवाची अट्कुप्वादिना णत्वं ॥ ९७ ॥ जं०म०

अमितमित्यादि। कः पिता यदादेशादत्रागतावित्याह आव भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



योः पितरं दशरथं विद्धि जानीहि ऊह्यसेऽहेर्धिः कीदृशं अमित
म्पचं प्रचुरान्नप्रदं घटीखारीत्यादिना खश् पश्चान्नञ्समासः ईशा
नं ऐश्वर्य्ययुक्तं ईशलङऐश्वर्य्ये शानः सर्व्वभोगाय सर्व्वशरीराय
हितं भुज्यतेऽनेनेति भोगः शरीरं ततोविकारसंघेत्यादिना हि
तार्थे ईनः श्रुर्णोऽदान्तेइत्यादावतद्वादित्यस्य योगविभागात्
ख्लं उत्तमं श्रेष्ठं भुवि ख्यातं पृथिव्यां प्रसिद्धं सर्व्वज्ञातत्वात्
॥ ९७ ॥

छलेन दयितारण्याद्रक्षसारुन्तुदेन नः। असूर्य्यम्पश्यया मूर्त्त्या हृता तां मृगयावहे ॥ ९८ ॥

ज०म० यदि पितुरादेशादागतौ किमत्र गमनेनान्वेषयथ इत्याह ।
छलेनेत्यादि । नोऽस्माकं दयिता अरण्याद्राक्षसेन हृता कीदृ
शेन अरुन्तुदेन मर्म्मस्पृशा विध्वरुषोस्तुददति खश् मुम् असूर्य्य
म्पश्यया आदित्यगोप्यया मूर्त्यां शरीरेणोपलक्षिता असूर्य्य
ललाटयोरिति खश् तां हृतां मृगयावहे गवेषयावः मृगअन्वे
षणे स्वार्थिकणन्तः युवयोः पौरुषान्वितत्वात् कथं हृतेत्याह
छलेन छद्मना ॥ ९८ ॥

भ० छलेनेत्यादि । पितुराज्ञया दण्डकागमनेऽपि कथं अत्राग
मनमित्याह अस्माकं दयिता अरण्याद्रक्षसा हृता कथं युव
योरग्रे हृतेत्याह छलेन छद्मना नतु बलात् कीदृशेन रक्षसा
अरुन्तुदेन मर्म्मस्पृशा घटीखारीत्यादिना खश् खित्यव्याजिति
मन् स्यादेः सोलोपः अस्मदएकत्वे वहुत्वविवक्षा तां हृतां मृगया

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



दहे अन्वेषयावः मृगतृष्णामार्गणे मार्गणमन्वेषणं मूर्त्त्या शरीरेणोपलक्षिता विशेषणे तृतीया कीदृश्या असूर्य्यम्पश्यया सूर्य्यमपि न पश्यन्त्या अतिगोप्ययेत्यर्थः पूर्व्वेण खश् स्थादानेत्यादिना द्वयोः पष्ठ्यादेशः सूर्य्येण सह समासोगमकत्वात्॥ ९८॥

प्रत्यूचे मारुतीराममस्ति वालीति वानरः। शमयेदपि संग्रामे योललाटन्तपं रविं॥ ९९॥

सं पुनः कस्य वेत्यतआह। प्रत्यूचेइत्यादि। रामं मारुतिः प्रत्यूचे प्रत्युक्तवान् अस्ति वालीतिनाम्ना कपीश्वरः यः संग्रामे युद्धे ललाटन्तपं सर्व्वेषामुपरि वर्त्तमानं पूर्व्ववत् खश् शमयेत् पराजयेदिति सम्भावने लिङ् वालिशब्दोनान्तः इदन्तस्य तथा च वाली वालिस्य कथ्यते इति शब्दभेदः॥ ९९॥ ज॰म॰

प्रत्यूचइत्यादि। मारुतिर्हनूमान् रामं प्रत्यूचे किमप्रत्यूचे इत्याह वालीति नाम्ना वानरोऽस्ति यः संग्रामे प्रवृत्ते रविं सूर्य्यमपि शमयेत् पराजयेत् शौर्य्यासम्भावनेति ली कीदृशं रविं ललाटन्तपं सर्व्वेषामुपरिवर्त्तिनं मध्याह्नकालीनमपि प्रचण्डमपीत्यर्थः यद्वा सूर्य्योऽपि चेत्तस्य ललाटं तपति तदा तमपि शमयेत् सुतरामेवान्यायकारिणमित्यर्थः घटीखारीत्यादिना खश्॥ ९९॥ भ॰

उग्रम्पश्येन सुग्रीवस्तेन भ्राता निराकृतः। तस्य मित्रीयतोदूतः संप्राप्तोऽस्मि वशम्वदः॥ १००॥

उग्रम्पश्येनेत्यादि। तेन भ्रात्रा उग्रंपश्यता पापं विजानता उग्रंपश्येत्यादिना निपातितं यस्य सुग्रीवो निराकृतोऽभिभूतस्तस्य ज॰म॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



हि दूतः प्राप्तोऽस्मि वशम्वदः वशमनुकूलं वदतीति वशम्वदः प्रियवशेवदःखच् कीदृशस्य मित्रीयतोमित्रमिच्छतः सुपआत्मनः क्यच्॥ १०० ॥

भ० उग्रमित्यादि। तेन भ्रात्रा वालिना सुग्रीवोनिराकृतः देशा न्निःसारितः कीदृशेन उग्रम्पश्येन पापं पश्यता उग्रदृष्टिना वा घटीखारीत्यादिना खश् तस्य सुग्रीवस्य दूतोऽहं सम्प्राप्तोऽस्मि आगतोऽस्मि कीदृशस्य मित्रीयतः आत्मनोमित्रमिच्छतः तथा भवन्तमेव क्योऽव्याद्यस्येति क्यः अवर्णस्य ईस्य ततः शहः वशमनु कूलं वदतीति वशम्वदः प्रियवशादित्यादिना खः अस्मीति क्रिया पदं अस्मदर्थेऽव्ययं वा॥ १०० ॥

प्रियम्वदोऽपि नैवाहं ब्रुवे मिथ्या परन्तप। सख्या तेन दशग्रीवं निहन्तासि द्विषन्तपं॥ १०१ ॥

ज०म० किन्तेन सख्येनेति चेदाह प्रियंवदइत्यादि। प्रियम्वदतया लोकोमिथ्या वदति अहं प्रियम्वदोऽपि पूर्ववत् खच् परंतप शत्रू णामुपतापद द्विषदिति खच् वाचंयमपुरन्दरौचेत्यमागमोनि पात्यते नैवाहं मिथ्या ब्रुवे वदामि तेन सुग्रीवेण सख्या मित्रेण दशग्रीवं निहन्तासि हनिष्यसि हन्तेर्लुटि रूपं कीदृशं द्विषन्तपं शत्रूणामुपतापयितारं पूर्ववत्खच्॥ १०१ ॥

भ० प्रियमित्यादि। किन्तेन मित्रेणेत्याह तेन सुग्रीवेण सख्या त्वं दशग्रीवं हन्तासि निहनिष्यसि हन्तेर्डौ कीदृशं द्विषन्तपं शत्रूणा मुपतापकं द्विभृदइत्यादिना द्विषच्छब्दात्तपोऽभिधानादसंज्ञा

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



यामपि खः मनीषादित्वात्तलोपे खित्यव्याजिति मन् किम्वा द्वेष्टीति द्विषः इगुपधज्ञाप्रीकिरः क इति कः तस्मात्तपः खः प्रियम्वदत्वान्मृषा ब्रवीषि चेदाह हे परन्तप शत्रूणामुपतापक प्रियम्वदोऽपि सन् नैव मिथ्या ब्रुवे वदामि परन्तपेति रामसम्बोधनात् द्विषन्तपमिति रावणविशेषणात् द्वयोः साम्यमुक्तं तेन तज्जयाय रामस्य मित्रान्तरापेक्षा युक्तेति भावः प्रियम्वद इति प्रियवशादिति खः परन्तपेत्यत्र द्विषन्तपवत् खः॥ १०१॥

वाचंयमोऽहमनृते सत्यमेतद्ब्रवीमि ते। एहि सर्व्वंसहं मित्रं सुग्रीवं कुरु वानरं॥१०२॥

वाचंयमइत्यादि। वाचंयमपुरन्दरौ चेत्यमागमो निपात्यते जं॰ म॰ तस्मात् सत्यमेतत् पूर्व्वोक्तं ब्रवीमि ते तुभ्यं तादर्थ्ये चतुर्थी यत एवं तस्मादेहि आगच्छ सुग्रीवं वानरं मित्रं कुरु कीदृशं सर्व्वंसहं सर्व्वं सहत इति पूःसर्व्वयोरिति खच्॥ १०२॥

वाचमित्यादि। न मिथ्या ब्रुव इति प्रागुक्तं दृढयन्नाह अहं अनृते असत्ये वाचंयमो मौनी तस्माद्दशग्रीवं निहन्तास्मि इति यदुक्तं एतत्तुभ्यं सत्यमेव ब्रवीमि तादर्थ्ये चतुर्थी तस्मात् एहि आगच्छ सुग्रीवं वानरं मित्रं कुरु कीदृशं सर्व्वंसहं सर्व्वकार्य्यक्षमं तृभृवृ इत्यादिना अभिधानादसंज्ञायामपि खः वाचंयम इति वाचा शब्दात् यमः पूर्व्ववत् खः खित्यव्याजिति मन् ह्रस्वश्च परे तु वाक्शब्दोपपदेन साधयन्ति॥ १०२॥ भ॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



सर्व्वंकषयशःशाखं रामकल्पतरुं कपिः। आदा याभ्रंकषं प्रायान्मलयं फलशालिनं॥ १०३॥

ज॰म॰ सर्व्वंकषेत्यादि। रामः कल्पतरुरिव यस्तमादाय गृहीत्वा कपिः प्रायात् गतः कीदृशं रामं सर्व्वंकषयशःशाखं सर्व्वं कषन्ति व्याप्नुवन्ति यानि यशांसि सर्व्वकूलेत्यादिना खश् तान्येव शाखा यस्य फलशालिनमभिमतफलसम्पादनात् अभ्रंकषमुच्चैस्तरं मलयं पूर्व्ववत् खच्॥ १०३॥

भ॰ सर्व्वमित्यादि। रामएव कल्पतरुः तमादाय कपिर्हनूमान् मलयं प्रायात् प्रगतः रामं कीदृशं सर्व्वं कषयन्ति व्याप्नुवन्ति सर्व्वं पापं नाशयन्ति वा यानि यशांसि तान्येव शाखायस्य तं फलशालिनं अभिमतफलसम्पादनात् मलयं कीदृशं अभ्रंकषं आकाशव्यापकं अत्युच्छ्रितत्वात् फलशालिनमिति मलयस्य विशेषणात् श्रमापहारकत्वं सूचितमिति केचित् प्रियवशाद्वयत्तीत्यादिना खः॥ १०३॥

मेघंकरमिवायान्तम्तं तु रामं क्षमान्वितः। दृष्ट्वा मेने न सुग्रीवोवालिभानुं भयङ्करं॥ १०४॥

ज॰म॰ मेघंकरमित्यादि। राममायातं दृष्ट्वा सुग्रीवोवालिनं भानुमिव भयंकरं भीतिजनकं न मेने न बुद्धवान् मेघर्त्तीत्यादिना खच् क्षमान्वितोम्लानोवालिभानुना पीडितत्वात् कीदृशं रामं मेघंकरं ऋतुमिव प्रावृट्कालमिव पूर्व्ववत् खच्॥ १०४॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



मेघमित्यादि। राममागतं दृष्ट्वा सुग्रीवो भानुमिव वालिनं भयङ्करं भीतिजनकं न मेने न मन्यतेस्म कीदृशः क्लमेनान्वितः ग्लानः रामं कीदृशं मेघङ्करं मेघोत्पादकं ऋतुमिव वर्षाकालमिव वर्षाकालस्य सूर्य्याच्छादकत्वेन क्लान्तश्रमभयापहारित्वात् साम्यं प्रियवशाद्भयर्त्तिमेघादिति खः॥१०४॥ भ०

उपाग्न्यकुरुतां सख्यमन्योन्यस्य प्रियङ्करौ। क्षेमङ्कराणि कार्य्याणि पर्य्यालोचयतां ततः॥१०५॥

उपाग्नीत्यादि। उपाग्नि अग्निसमीपे रामसुग्रीवौ सख्यमकुरुतां इतःप्रभृत्यावयोः सख्यमिति अन्योन्यस्य प्रियङ्करौ क्षेमप्रियमद्रेष्वण्चेति चकारात् खच् ततः सख्यकरणानन्तरं क्षेमङ्कराणि हितजनकानि यथा कार्य्याणि प्रत्यालोचयतां निरूपितवन्ताविन्यर्थः। पढपुटेत्यत्र चुरादिकाण्डे धातौ लोचृ पठ्यते तस्य लङि रूपं॥१०५॥ ज०म०

उपाग्नीत्यादि। रामसुग्रीवौ उपाग्नि अग्निसमीपे सख्यं मैत्रीं अकुरुतां घीतां अग्निसाक्षिकं सख्यमिति भावः अन्योन्यस्य प्रियङ्करौ प्रियं कुरुतइति क्षेमप्रियमद्रात्कुञ्वेति खः विकारसंघेति सखिशब्दात् भावे यः ततः सख्यानन्तरं परस्परस्य क्षेमङ्कराणि कुशलजनकानि कार्य्याणि पर्य्यालोचयतां निरूपितवन्तौ लोचृकभासीत्यस्य घ्यां रूपं पूर्व्ववत् खः॥१०५॥ भ०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



आश्वितम्भवमुत्क्रुष्टं वल्गितं श्वयितं स्थितं। बह्व मन्यत काकुत्स्थः कपीनां स्वेच्छया कृतं ॥ १०६ ॥

ज॰म॰ आश्वीत्यादि। आश्वितम्भवमशनं आश्विते भुवःकरणभावयो रिति खच् उत्क्रुष्टं किलकिलायितं वल्गितं धावनं तथा श्वयितं स्थितञ्च कपीनां स्वेच्छया कृतं एतत्काकुत्स्थोबह्वमन्यत श्लाघि तवान् पुण्यभाजइमे यदेषां स्वेच्छाविहारिणां चेष्टितं अस्माकन्तु शोकसन्तप्तानां न किञ्चिदस्तीति सर्व्वत्र भावे निष्ठा ॥ १०६ ॥

भ॰ आश्वितमित्यादि। आङ्पूर्व्वाद्श्वातेः क्त आश्वितस्यदृप्ते र्भोजनस्य भवनं आश्वितम्भवं-भावधेत्वाश्विताङ्गुवइति खः उत्क्रुष्टं शब्दकरणं वल्गितं गमनं श्वयितं श्वयनं पूशीधृषेत्यादिना गुणः स्थितं अवस्थानं दोषोमास्थामिति ङिः सर्व्वत्र भावे क्तः कपीनामे तत्सर्व्वं स्वेच्छया कृतं काकुत्स्थोबहु अमन्यत स्तुतवान् पुण्या एते स्वेच्छयैवं व्यवहरन्ति अस्माकन्तु शोकसन्तप्तानां न किञ्चि दस्तीति भावः स्वभावसिद्धत्वादाहार्य्यशोभारहितत्वात् प्रशंसा वा ॥ १०६ ॥

ततोवलिन्दमप्रख्यं कपिर्विश्वम्भराधिपं। सुग्रीवः प्राब्रवीद्रामं वालिनोयुधि विक्रमं ॥ १०७ ॥

ज॰म॰ ततइत्यादि। ततः कार्य्यालोचनानन्तरं सुग्रीवोऽब्रवीत् लङि ब्रुवईट् किमुक्तवान् वालिनोयुधि विक्रमं शौर्य्यमिति प्रधान

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कर्म्म राममित्यकथितं कीदृशं रामं बलिन्दमप्रख्यं विष्णुतुल्यं बलिं दमयतीति संज्ञायां भृतॄवृजीत्यादिना खच् अमन्तस्य मित्व ह्रस्वत्वे तथा विश्वं विभर्त्तीति विश्वम्भरा तस्या अधिपं अधिपातीत्यधिपः आतश्चोपसर्गइति कः ॥ १०७ ॥

ततइत्यादि। कार्य्यालोचनानन्तरं सुग्रीवः कपिर्युधि संग्रामे भ० वालिनोविक्रमं रामं प्राब्रवीत् रामं कीदृशं बलिन्दमप्रख्यं बलिं दमयतीति बलिन्दमस्तिविक्रमस्तेन तुल्यं तॄभृवृइत्यादौ ण्यन्त दमोग्रहणं अरिन्दमइत्युदाहरणे कर्म्मोपपदेन सूचितं केवलस्य दमेरन्तर्भूतण्यर्थत्वात् सकर्म्मकत्वमिति केचित् सकर्म्मकोऽपि दमिरिष्यतइति गोयीचन्द्रेणोक्ता दमित्वा परिसंघातानिति निदर्शितं विश्वं विभर्त्तीति विश्वम्भरा पृथ्वी पूर्व्ववत् खः तस्या अधिपं स्वामिनं अधिपातीत्यधिपः ह्वनजनादिति डः ॥ १०७ ॥

वसुन्धरायां कृत्स्नायां नास्ति वालिसमोबली। हृदयङ्गममेतत्त्वां ब्रवीमि न पराभवं ॥ १०८ ॥

इति खजधिकारः ॥

वसित्यादि। वसुन्धरायां पूर्व्ववत् खच् वालिना समोऽन्योबली ज०म० बलयुक्तोनास्तीति हृदयङ्गमं मम स्वानुभवं ब्रवीमि मम स्वानुभवं हि वस्तु हृदयङ्गममित्युच्यते तेन संज्ञायामित्यधिकृत्य गमश्चेति खच् न पुनस्त्वां पराभवमभिभवं ब्रवीमि ॥ १०८ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ॰ वस्वित्यादि। कृत्स्नायां समस्तायां वसुन्धरायां पृथिव्यां वालितुल्योबलवान् नास्ति वसु धरतीति तृभृवृइत्यादिना खः एतत्तु हृदयङ्गमं आत्मानुभूतमेव त्वां ब्रवीमि हृदयं गच्छतीति पूर्व्ववत् खः अनुभूतस्येयं संज्ञा न पुनस्त्वां पराभवं न ब्रवीमि तस्माद्भवतः पराभवं न त्वां वदामि तेन नास्ति वालिसमोबलीति प्रागनुभूतं कथितं न तु त्वत्तोऽधिकोऽयमिति सम्प्रति ज्ञापितं। इति खप्रधिकारः ॥१०८॥

दूरगैरन्तगैर्व्वाणैर्भवानत्यन्तगः श्रियः। अपि संक्रन्दनस्य स्यात् क्रुद्धः किमुत वालिनः ॥ १०९ ॥

ज॰म॰ एवम्पराक्रमोऽसौ तत्र किं त्वं करिष्यसीत्याह दूरगैरित्यादि। यतोभवान् क्रुद्धस्सन् संक्रन्दनस्यापि शक्रस्यापि नन्द्यादिभ्योल्युः वाणैः करणभूतैः दूरगैः दूरं गच्छन्तीति अन्तगैः कार्य्य समापकैः अन्तात्यन्तेत्यादिना डः श्रियोलक्ष्म्याः अत्यन्तगः विनाशयिता स्यात् अत्यन्तं पर्य्यवसानं गच्छतीति किं पुनर्वालिनोलक्ष्म्या अत्यन्तगोभवान्विनाशयितेति ॥ १०९ ॥

भ॰ दूरगैरित्यादि। रामं प्रोत्साहयन्नाह भवान् क्रुद्धः सन् संक्रन्दनस्य इन्द्रस्यापि श्रियोलक्ष्म्यावाणैरन्तगोभवेत् किं पुनर्वालिनः श्रियः सुतरामेतल्लक्ष्म्यानाशयिता स्यात् वाणैः कीदृशैः दूरगैर्दूरपातिभिः अन्तगैः कार्य्यसमापकैः दूरमन्तञ्च गच्छतीति हनजनाद्ङमादेर्डः दितिगर्भं संक्रन्दितवान् इति नन्द्यादित्वादनः॥ १०९ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



वरेण तु मुनेर्व्वाली सञ्जातो दस्युहा रणे। अवार्य्य प्रसरः प्रातरुद्यन्निव तमोपहः ॥ ११० ॥

वरेणेत्यादि। मुनेस्तु वरेण दस्युहः दस्यून् शत्रून् बध्यादिति आशिषि हनइति डः अतो रणे अवार्य्यप्रसरोऽनभिभवनीयगतिः सञ्जातः कइव तमोपहइव तमोपहः आदित्यः तमोऽपहन्तीति अपेक्लेशतमसोरिति डः प्रातः प्रभाते उद्यन् उद्गच्छन् उत्पूर्व्वादिणः शतरि इणो यण् अवार्य्यप्रसरस्तद्वदसावपि सर्व्वं वाक्यं सावधारणं भवतीति प्रातरप्युद्यन्नवार्य्यप्रसर एवेति तेन सर्व्वकाले अस्यावार्य्यप्रसरत्वं सिद्धं नतु प्रातरेवोद्यन्नवार्य्यप्रसरइति ॥ ११० ॥ 

वरेणेत्यादि। रामस्याध्यवसायं जिज्ञासुः पुनरपि वालिविक्रममाह मुनेर्व्वरेण तु दस्युहः सवाली रणेऽवार्य्यप्रसरः संजातः काले उद्यन् तमोपहः सूर्य्यइव दस्यून् शत्रून् हन्तीति हनजनादिति डः हन्तेराशिषिडइति परे तन्मते वाली दस्यून् बध्यादिति मुनेर्व्वरेण अवार्य्यप्रसरो जातः स्वमते आशीरर्थानुक्तौ न क्षतिः वरेण दस्युहन्तृत्वे आशीर्गम्यतएव अवार्य्योऽखण्डनीयः प्रसरो गतिर्यस्य सतथा सृगतौ अनि रूपं उत्पूर्व्वस्येणः शतरि उद्यन् तमोऽपहन्तीति पूर्व्ववत् डः तमःक्लेशार्थेभ्योऽपपूर्व्वहन्तेर्डइति परः ॥ ११० ॥ 

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अतिप्रियत्वान्न हि मे कातरं प्रतिपद्यते । चेतो
वालिबधं राम क्लेशापहमुपस्थितं ॥ १११ ॥

इति डाधिकारः ॥

ज॰म॰ अतीत्यादि । हे राम मदीयं चेतोवालिबधं कर्म्मीभूतमुपस्थितं प्राप्तं न हि प्रतिपद्यते नैव प्रत्येति यस्मात् कातरं व्याकुलं वालिनोऽतिबलयुक्तत्वात् कीदृशं बधं क्लेशापहं दुःखस्योन्मूलकं पूर्व्ववड्डः अतिप्रियत्वाद्वालिबधस्य यस्य हि यत्प्रियं तत्सिद्धमपि असौ न प्रत्येति ॥ १११ ॥

भ॰ अतीत्यादि । हे राम वालिबधस्यातिप्रियत्वात् मे मम चेतो वालिबधमुपस्थितमुपपन्नमपि न प्रतिपद्यते न प्रत्येति यतः कातरं वालिभयाद्व्याकुलं उपस्थितेऽपि प्रिये कातरस्य प्रतीतिर्नास्तीति भावः वालिबधं कीदृशं क्लेशापहं दुःखस्योन्मूलकं अतएवास्यातिप्रियत्वं क्लेशमपहन्तीति पूर्व्ववत् डः ॥ १११ ॥

शीर्षघातिनमायातमरीणां त्वां विलोकयन् । पति
घ्नीलक्षणोपेतां मन्येऽहं वालिनः श्रियं ॥ ११२ ॥

ज॰भ॰ उपस्थितोऽस्य बधइति कथं ज्ञायतइत्याह शीर्षेत्यादि । अरीणां शीर्षघातिनं कुमारशीर्षयोर्णिनिः निपातनात् शिरसः शीर्षभावः आयान्तं विलोकयन् वालिनः श्रियं पतिघ्नीलक्षणोपेतामहं मन्ये पतिं हन्ति यल्लक्षणं तेनोपेतामिवेतीवार्थोऽत्र द्रष्टव्यः अमनुष्यकर्तृकेचेति टक् गमहनेत्युपधालोपः होहन्तेरिति कुत्वं ॥ ११२ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



शीर्षेत्यादि। वालिवधस्योपस्थितत्वं दर्शयन्नाह आगतं त्वां विलोकयन्नहं वालिनः श्रियं पतिघ्नलक्षणोपेतां मन्ये श्रियो वालिपत्नीत्वेन निरूपणात् पतिहन्तृचिह्नयुक्तत्वात् वालिवधो गम्यते पतिं हन्तीति हनचरगष्टक् हनगमित्युङ्लोपः हनोक्तो घ्नः अमनुष्यकर्तृकाद्धन्तेष्टगिति परः त्वां किम्भूतं अरीणां शीर्षघातिनं शिरश्छेदिनं शयादित्वाच्छिन् कुमारशीर्षाभ्यां हन्तेर्णिन्निति परः उत्प्रेक्षावाचकोऽत्र मन्येशब्दः अन्यथास्थितस्यान्यथा कथनात्॥ ११२॥

शत्रुघ्नान्युधि हस्तिघ्नो गिरीन् क्षिप्यन्नकृत्रिमान्। शिल्पिभिः पाणिघैः क्रुद्धस्त्वया जय्योऽभ्युपायवान्॥ ११३॥

शत्रुघ्नानित्यादि। किंच युधि संग्रामे वाली त्वया जय्यः शक्यो जेतुं यदि युष्मदस्त्राणां शक्तिर्द्रष्टा ताञ्च द्रष्टुमिच्छामीति वक्ष्यमाणाभिप्रायः क्षय्यजय्यौ शक्यार्थे इत्ययादेशनिपातनं कीदृशः अभ्युपायवान् युद्धोपाययुक्तः किं कुर्व्वन् क्रुद्धः क्षिप्यन् गिरीन् दिवादित्वाच्छ्यन् अकृत्रिमान् देवनिर्मितान् शत्रुघ्नान् शत्रून् हन्तीति अमनुष्येति टक् हस्तिघ्न इव हस्तिघ्नः हन्तुं शक्तः शक्तौ हस्तिकपाटयोरिति सूत्रस्य मनुष्यकर्तृकार्थारम्भकत्वात् वाली चामनुष्यः शिल्पिभिर्युद्धकुशलैः वानरैः सह क्षिप्यन् सहार्थस्य गम्यमानत्वात् सहयोगे तृतीया पाणिघैः पाणिवादकैः ते हि हस्तियुद्धेऽन्यस्य वाद्यस्यासम्भवात् हस्तिमुखमेव वादयित्वा गिरीन् प्रहरणान् क्षिप्यन्ति पाणिघताडघौ शिल्पिनीति कर्त्तरि निपातनं ॥ ११३॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० शत्रुघ्नानित्यादि । प्रत्ययजनककर्म्मद्वारा रामविक्रमं ज्ञातुमिच्छन् महतामग्रतः साचात् स्वाभिप्रायकथनायुक्तत्वात् छलेन रामं स्तुवन्निवाह ईदृशोऽपि वाली त्वया जय्यः जेतुं शक्यः पय्यावद्येत्यादिना निपातः कीदृशः अभ्युपायवान् युद्धोपाययुक्तः क्रुध्यन् सन् गिरीन् चिप्यन् चिप्यैानु मुदि कीदृशान् अकृत्रिमान् देवनिर्म्मितान् एतेन स्वभावसिद्धमुच्छ्रितत्वं सूचितं शत्रुघ्नान् चिप्यमाणागिरयः शत्रुं घ्नन्ति शत्रुं हन्तुं गिरीन् चिपतीति भावः पतिघ्नवत् टक् पुनः कीदृशः हस्तिघ्नः हस्तिनं हन्तीति पूर्व्ववत् टक् हस्तिकपाटाभ्यां हन्तेः शक्तौ टगिति परः तेन हस्तिनं हन्तुं शक्त इत्यर्थः लभते अर्थादेव शक्तिर्गम्यते शिल्पिभिर्युद्धकुशलैर्वानरैरुपलचितः पाणिघैः पाणिवादकैः युद्धे तेषां वाद्यान्तराभावात् हर्षेण हस्तयुगमेव वादयन्ति विशेषणे तृतीया शिल्पिभिः सह गिरीन् चिप्यन् इति वा सम्बन्धः एतेन तत्सदृशास्तत्सहाया अपि सन्तीति सूचितं पाणिभ्यां पाणी हन्तीति पाणिघोनिपातनात् ॥ ११३ ॥

आढ्यङ्करणविक्रान्तोमहिषस्य सुरद्विषः । प्रियङ्करणमिन्द्रस्य दुष्करं कृतवान् वधं ॥ ११४ ॥

ज०म० आढ्य । अनाढ्यमाढ्यं करोत्यनेनेति आढ्यसुभगेत्यादिना करणे ख्युन् आढ्यङ्करणं विक्रान्तं यस्य वालिनः अनाढ्यः सन् विक्रान्तेनाढ्योभूतइत्यर्थः महिषस्य सुरद्विषोदुन्दुभेर्वधं मरणं यः कृतवान् दुष्करं कष्टसाध्यं प्रियङ्करणमिन्द्रस्य तुष्टिकरं अप्रियं प्रियङ्करोत्यनेनेति पूर्व्ववत् ख्युन् ॥ ११४ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



आढ्यमित्यादि। किञ्च वाली युधि महिषस्य देवशत्रोर्व्वधं कृतवान् कीदृशः अनाढ्यमाढ्यः क्रियते येन तादृशं विक्रान्तं विक्रमो यस्य सतथा अनाढ्यः सन्नपि विक्रमेणाढ्यो भूतइत्यर्थः नग्न पलितेत्यादिना खनट् बधं कीदृशं इन्द्रस्य प्रियङ्करणं प्रीङ्प्रीतौ कृगृञ्जाप्रीति कप्रत्यये प्रियः प्रीतिमान् महिषभयेन प्रागप्रियः प्रियः क्रियते अनेनेति पूर्व्ववत् खनट् प्रीतिजनकमित्यर्थः यद्वा इन्द्रोलोकानामप्रियआसीत् शत्रुबधाक्षमत्वात् पुनस्तत्शत्रुब धेन तु प्रियः क्रियतइत्यर्थः यतो दुष्करं कष्टसाध्यं एतेन इन्द्रा दप्यधिकोऽयं बलीति सूचितं॥ ११४॥

प्रियम्भावुकतां यातस्त्वं चिपन् योजनं मृतं। स्वर्गे प्रियम्भविष्णुश्च कृत्स्नं शक्तोऽप्यवाधयन्॥ ११५॥

प्रियमित्यादि। तमेवं सुरद्विषं मृतं पादाङ्गुष्ठेन योजनमध्वानं चिपन् चिपेत्तौदादिकस्योभयपदिनोरूपं प्रियम्भावुकतां यातस्त था स्वर्गे प्रियंभविष्णुश्चासीत् कर्त्तरिभुवइत्यनेनाढ्यादिषूपपदेषु खिष्णुच्खुकञौ शक्तोऽपि समर्थोऽपि कृत्स्नं लोकमित्यर्थात् अबा धयन् अपीडयन् बधसंयमनइति चौरादिकः तस्य शतरि रूपं सईदृशस्त्वया शक्योजेतुं यदि त्वदस्त्राणां सामर्थ्यं दृष्टमित्यभिप्रा येणाब्रवीत् सुग्रीवः॥ ११५॥

प्रियमित्यादि। तं मृतं महिषं पदाङ्गुष्ठेन योजनं अध्वानं चिपन् प्रेरयन् प्रियम्भावुकतां प्राप्तः प्राक् यस्याप्रियआसीत् दुष्टबधात् तस्यापि प्रियभावं प्राप्तः बाधितुं शक्तः समर्थोऽपि



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कृत्स्नं लोकं अबाधयन् अपीडयन् स्वर्गस्य प्रियआसीत् तस्यापि प्रियोभूतः भुवोघेखिष्णुखुकञावितिच्छ्यर्थे खिष्णुखुकञौ बधक् बन्धे किन्ताबुरादिः योजनशब्देनात्र योजनान्तरितदेशोलक्ष्य ते सदाख्यादित्याप्नावितियोजनात् द्वितीया एवं सुग्रीवः प्राब्र वीद्रामसमिति प्रागुक्तेन सम्बन्धः॥ ११५॥

जिज्ञासोः शक्तिमस्त्राणां रामोन्यूनधियः कपेः।
अभिनत् प्रतिपत्त्यर्थं सप्त व्योमस्पृशस्तरून्॥ ११६॥

ज॰म॰ रामोऽपि तदभिप्रायं विदन् यत्कृतवान् तदाह। जिज्ञासोरि त्यादि। अस्त्राणांशराणां शक्तिं जिज्ञासोः ज्ञातुमिच्छोः कपेः सु ग्रीवस्य न्यूनधियः स्वल्पबुद्धेः यतः प्रमाणान्तरेणापरिज्ञानात् प्र त्यक्षेण ज्ञातुमिच्छतीति प्रतिपत्त्यर्थं संप्रत्ययार्थं रामः सप्त तरून् तालान् पङ्क्त्या स्थितान् एकेन शरेणाभिनत् व्योमस्पृशः स्पृशो ऽनुदके क्विन्॥ ११६॥

भ॰ जिज्ञासोरित्यादि। यदि तवास्त्राणां भेदकत्वं दृष्टं स्यात्तदा त्वया तादृशोवाली जेतुं शक्यतइति सम्भाव्यतइति सुग्रीवाभिप्रा यं रामोऽपि ज्ञातवान् यतोन्यूनबुद्धेरतएवास्त्राणां शक्तिं ज्ञातु मिच्छोः कपेः सुग्रीवस्य प्रतिपत्त्यर्थं सम्प्रत्ययार्थं रामः सप्त तालान् अभिनत् भिदेर्ण्यो रुधादित्वात् श्नन् व्योमस्पृशः अत्युच्छ्रितानि त्यर्थः व्योम स्पृशन्तीति चास्त्वितिति क्विप् उदकवर्ज्जमुपपदात् स्पृशःक्विविति परः॥ ११६॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ततोवालिपशौ बध्ये रामर्त्विग्जितसाध्वसः। अभ्य
भून्निलयं भ्रातुः सुग्रीवोनिनदन् दधृक्॥ ११७॥

ततइत्यादि। ततस्तस्भेदादनन्तरं सुग्रीवोभ्रातुर्निलयम ज०म०
भ्यभूत् अभिभूतवान् कीदृशः दधृक् धृष्टः ऋत्विगित्यादिना निपा
तितं धृषेः क्विन् द्विर्व्वचनं क्विन्प्रत्ययस्य कुरिति कुत्वं खकारः चर्त्वं
ककारः यस्माद्वालिनि पशाविव बध्ये वधार्हे रामेण ऋत्विजा
याजकेन जितसाध्वसः अपनीतसाध्वसः तस्माद् धृक् ऋतौ यजति
ऋतुं वा यजति ऋतुप्रयुक्तोवा यजतीति ऋतुपूर्व्वाद्यजेः क्विन् यजा
दित्वात्संप्रसारणम् इदमृत्विक्शब्दनिर्व्वचनं रूढितस्तु याजयितृ
षु ब्राह्मणेषु क्विन्प्रत्ययस्य कुः निनदन् किलकिलाशब्दं कुर्व्वन्
॥११७॥

ततइत्यादि। प्रत्ययानन्तरं सुग्रीवोनिनदन् शब्दं कुर्व्वन् भ०
भ्रातुर्व्वालिनोनिलयं निवासं अभ्यभूत् अभिभूतवान् भूसुपि
वेति सेर्लुक् वालिनि पशाविव बध्ये सति रामेणैव ऋत्विजा याज
केन जितमपनीतं साध्वसं भयं यस्य येन वा सतथा अतएव द
धृक् धृष्टः ऋतौ यजतीति चास्तुसिति क्विप् यहस्यपाद्योरिति जिः
चङिति कङ् धृषप्रागल्भ्ये क्विपि दधृक् दद्दृग्भुह्वागित्यादिना
निपातः ऋत्विजा पशुरपि हन्यतइति भावः॥ ११७॥

गुहायानिरगाद्वाली सिंहोमृगमिव ब्रुवन्। भ्रा
तरं सुञ्जियः संख्ये घोषेणापूरयन्दिशः॥ ११८॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज॰म॰ गुहायाइत्यादि। तस्य शब्दमाकर्ण्य गुहायानिरगाद्वाली निर्गतः इणोगा लुङि गातिस्थेति सिचोलुक् भ्रातरं युवन् अभि गच्छन् युअभिगमने अस्यादादिकस्य वर्त्तमानसामीप्ये लटः शत रि उवङादेशे रूपं संख्ये युद्धे भियोयुङ् भीतेर्योक्ता कर्म्मणि षष्ठी भीतिं युञ्जन्नित्यर्थः युजेः पूर्व्ववत् क्विन् युजेरसमासइति नुम् संयोगान्तलोपः क्विन्प्रत्ययस्य कुः ङकारः कः कमिव सिंहोमृग मिव युवन् घोषेण दिशआपूरयन् दिशन्ति ताइति दिशः पूर्व्व वत् क्विन्॥११८॥

भ॰ गुहेत्यादि। सुग्रीवस्य शब्दं श्रुत्वा वाली गुहायाः सकाशात् निरगात् निर्गतः इणोगाङ्यां भूस्थापिवदेणइति सेर्लुक् सिंहो यथा मृगं यौति तद्वत् भ्रातरं युवन् आभिमुख्येन गच्छन् युल भिसर्पणे भविष्यत्सामीप्ये की अभिधानात् संख्ये युद्धे भियोयुङ् भयस्य प्रयोक्ता भयप्रदइत्यर्थः युजेः क्विप् युजिरोऽसेनुन्घा विति नुण् ङित्यादौ युजेःपृथक्ग्रहणात् प्राक्कुङ् स्नोर्नुः ङपेत्नम् नोरिति ङः स्वान्तस्य लुप् घोषेण शब्देन दिशआपूरयन् दिश वीति दिक् चासुसिति क्विप्॥११८॥

**व्यायच्छमानयोर्मूढोभेदे सदृशयोस्तयोः। वाण मुद्यतमायंसीदिक्ष्वाकुकुलनन्दनः॥११९॥**

ज॰म॰ व्यायच्छेत्यादि। तयोर्व्वालिसुग्रीवयोर्व्यायच्छमानयोः कल हायमानयोः सदृशयोः समानयोः भेदे पृथक्त्वे मूढोभ्रान्तः सन्

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



इक्ष्वाकुकुलनन्दनो रामोबाणमुद्यतं सज्जीकृतमायंसीत् उपसंहृतवान् समदाङ्भ्यायमोग्रन्थइति लङ्न भवति अकर्त्रभिप्रायत्वात् तत्र कर्त्रभिप्रायइति वर्त्तते आङोयमहनइत्यनेनापि न स्यात् सकर्म्मकत्वात् तत्राकर्म्मकादिति वर्त्तते समानपूर्व्वस्य दृशेः समानान्ययोश्चेत्युपसंख्यानात् त्यदादिष्वित्यादिना कञ् दृङ्गृश वतुष्विति समानस्य सभावः॥ ११९॥

व्यायेत्यादि। इक्ष्वाकुकुलनन्दनो रामस्तयोर्वालिसुग्रीवयो भेदे विवेचने मूढः भ्रान्तः सन् वालिबधायोद्यतं कृतसन्धानमपि बाणं सुग्रीवबधशङ्कया आयंसीत् संहृतवान् यमरमणमातइति इमषनै कीदृशयोस्तयोः व्यायच्छमानयोः कलहायमानयोः युध्यमानयोर्व्वा आत्माङ्गढाद्ढाच्चाहनयमइति न मं सदृशयोराकृत्या अन्योन्यं तुल्ययो' मूढत्वे हेतुरयं समानोदृश्यतइति त्यदादिना टक् समानेदं किमदइति समानस्य सादेशः॥ ११९॥

ऋष्यमूकमगात् क्लान्तः कपिर्मृगसदृग्द्रुतं। किष्किन्धाद्रिसदात्यर्थं निष्पिष्टः कोष्णमुच्छ्वसन्॥ १२०॥

ऋष्यमूकमित्यादि। कपिः सुग्रीवः किष्किन्धाद्रिसदा वालिना किं किं दधातीति किष्किन्धा गुहा आतो ऽनुपसर्गेकः पारस्करादिदर्शनात् पूर्व्वस्य सुडागमोमलोपः षत्वञ्च निपात्यते तदुपलक्षितोऽद्रिः किष्किन्धाद्रिः तत्र सीदतीति सत्सूद्विषेत्यादिना क्विप् तेनात्यर्थं निष्पिष्टत्वात् क्लान्तः सन् ऋष्यमूकं द्रुतमगात् समानोपपदात् दृशेः पूर्व्ववत्क्विन् कोष्णमीषदुष्णमुच्छ्वसन् कवञ्चोष्ण इति चकारात् कोः कादेशः॥ १२०॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० ऋष्येत्यादि । कपिः सुग्रीवः किष्किन्धाद्रिसदा वालिना अत्यर्थं निष्पिष्टः पीडितः अतएव क्लान्तः सन् कोष्णं ईषदुष्णं उच्छ्वसन् द्रुतं शीघ्रं ऋष्यमूकं अगात् गतवान् मृगसदृक् पलायने द्रुतगमनात् मृगतुल्यः क्विपि सदृक् सदृशवत् किखिभिर्व्वानरैभिरिष्यत इति इन्धेर्न्यन्तात् घञलनटइति अल् निपातनात् किखेः किष्का देशः किं किं दधातीति किष्किन्धेत्यन्ये किष्किन्धामूर्द्धन्यषकारवती यकारोपान्तापि किष्किन्ध्येति श्रीपतिः किष्किन्धा गुहा तदुपलक्षितोऽद्रिस्तत्र सीदतीति चासुक्षिति क्विप् ॥ १२० ॥

कृत्वा वालिद्रुहं रामो मालया सविशेषणं । अङ्गदस्वं पुनर्हन्तुं कपिनाह्वाययद्रणे ॥ १२१ ॥

ज०म० कृत्वेत्यादि । वालिद्रुहं सुग्रीवं वालिनं द्रुह्यतीति सत्सित्वा दिना क्विप् मालया सविशेषणं सचिह्नं कृत्वा भेदपरिज्ञानार्थं रामः अङ्गदस्वं वालिनं अङ्गदं सूतइति पूर्व्ववक्विन् ओसुपीतिः यणादेशः तं रणे हन्तुं कपिना सुग्रीवेणाह्वाययत् अभिभवं कारितवान् ह्वयतेर्हेतुमल्लिचि शाछेत्यादिना पुक् ॥ १२१ ॥

कृत्वेत्यादि । वालिद्रुहं सुग्रीवं वालिभेदज्ञानाय मालया सविशेषणं सचिह्नं कृत्वा रामोऽङ्गदस्वं वालिनं रणे हन्तुं कपिना सुग्रीवेण पुनराह्वाययत् आह्वानमकारयत् णोऽञ्जेरित्यादौ अखादनीक्रन्दायशब्दायह्वादेति वर्ज्जनात् ण्यन्तस्य कर्त्तुः कपेर्न कर्म्मत्वं शाछासाह्वेत्यादिना यन् अङ्गदं सूते जनयतीति चासुसित्यादिना क्विप् कव्याद्यनेकाचइति वत्वं वालिने द्रुह्यतीति पूर्व्ववत् क्विप् ॥ १२१ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



तयोर्व्वानरसेनान्योः संप्रहारे तनुच्छिदं। वालिनोदूरभाग्रामोवाणं प्राणादमत्यजत्॥ १२२॥

तयोरित्यादि। वानरसेनान्योः वानरस्वामिनोः एरनेकाच इति यण् संप्रहारे युद्धे प्रवृत्ते रामोवाणमत्यजत् वालिनस्तनुछिदं तनुं शरीरं छिनत्तीति पूर्ब्ववत् क्विप् छेचेति तुक् प्राणादं प्राणापहारिणं प्राणानत्तीति प्राणादं अदोनन्नइति विट् दूरभाक् दूरमवस्थितोरामोदूरं भजतइति भजोण्विः॥ १२२॥ ज०भ०

तयोरित्यादि। तयोर्व्वानरसेनानामीश्वरयोः संप्रहारे युद्धे प्रवृत्ते सति दूरभाक् दूरदेशस्थितोरामोवालिनस्तनुच्छिदं अतएव प्राणादं प्राणभच्चकं वाणं अत्यजत् क्षिप्तवान् सेनां नयति तनुं शरीरं छिनत्ति प्राणानत्तीति च त्रास्वमिति क्वप्रत्तेरनन्तलात् क्विविति परः दूरं भजतइति ढाङ्गजसहवहोविण्॥ १२२॥ भ०

वालिनं पतितं दृष्ट्वा वानरारिपुघातिनं। बान्धवाक्रोशिनोभेजुरनाथाः ककुभोदश॥ १२३॥

वालिनमित्यादि। रिपुघातिनं रिपून् हन्तुं शीलमस्येति सुप्यजातौ णिनिः तं वालिनं पतितं दृष्ट्वा वानरादश ककुभोदश दिशोभेजुः अनाथाः सन्तः स्वामिनोहतलात् बान्धवक्रोशिनोबान्धवादिव क्रोशन्तीति कर्त्तर्य्युपमानइति णिनिः॥ १२३॥ ज०म०

वालिनमित्यादि। वालिनं पतितं दृष्ट्वा वानरादश ककुभो दिशोभेजुः पलायितादृत्यर्थः रिपुघातिनं रिपुं हन्तीति ग्रहादि भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



त्माषिन् बान्धवाक्रोशिनः बान्धववत् आक्रोशन्तः क्रन्दन्तः कर्त्त रुपमाने णिनिति परः खमते ग्रहादित्वाणिन् इवार्थस्य गम्य मानत्वं अनाथाः वालिनाशेन स्वामिरहिताः ॥ १२३ ॥

धिग्दाशरथिमित्यूचुर्मुनयो वनवर्त्तिनः। उपेयु र्मधुपायिन्यः क्रोशन्त्यस्तं कपिस्त्रियः ॥ १२४।

ज०म० धिग्दाशरथिमित्यादि । येषां सत्यन्यस्थाने वृत्तौ च वनएव वर्त्तितुं शास्त्रतोनियमः ते वनवर्त्तिनोमुनयः व्रतइति णिनिः धिगिमं दाशरथिमित्यूचुः उक्तवन्तः येनानपराधेऽपि वालिनो वधं कृतमिति कपिस्त्रियस्त्र वालिनमुपेयुः मधुपायिन्यः आभी क्ष्णेन मधु पिवन्त्यः वहुलमाभीक्ष्ण्येइति णिनिः क्रोशन्त्योहा नाथेति रुदन्त्यः ॥ १२४ ॥

भ० धिगित्यादि। दाशरथिं रामं धिगिति वनवर्त्तिनो मुनयऊचुः महतामन्यासक्तघातित्वानौचित्यात् धिक्समयेत्यादिना दाश रथेर्द्वितीया वने वर्त्तन्तइति ग्रहादित्वात् णिन् कपिस्त्रियः क्रोश न्त्यो हा नाथेति क्रन्दन्त्यस्तं वालिनं उपेयुरुपगताः उपपूर्व्वस्येण श्चाउसि रूपं मधुपायिन्यः मधूनि पीतवत्यः ग्रहादित्वात् णिन् यन्ज्ञिःकृदिति यन् परमते तु आभीक्ष्ण्ये तु णिन् पुनःपुनर्म्मधु पिवन्ति स्मेत्यर्थः आभीक्ष्ण्यार्थस्य णिनोक्तत्वात् न द्वित्वं खमतेऽप्य भिधानादेव ॥ १२४ ॥

राममुच्चैरुपालभ्य शूरमानी कपिप्रभुः। व्रणवेदन या ग्लायन् साधुम्मन्यमसाधुवत् ॥ १२५ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



रामभित्यादि। कपिप्रभुर्वाली राममुच्चैर्महताशब्देनोपालब्ध उपालब्धवान् लभिरात्मनेपद्यनिट् तस्य लुङि झलोझलीति सिचो लोपः झषस्तथोर्धोधः झलाञ्जश्झशि शूरमानी शूरमात्मानं मन्यमानः आत्ममानेखश्चेति चकाराणिनिः व्रणवेदनया ग्लायन् ग्लानिमुपगच्छन् साधुम्मन्यं साधुमात्मानं मन्यमानं रामं तेनैव खश् तस्मिन् सार्व्वधातुके परतोदिवादिलाच्छ्यन् पूर्व्वपदस्य मुम् असाधुवदसाधुमिव असाधुना तुल्य वर्त्तते इति वतिः॥ १२५॥ ज०म०

राममित्यादि। व्रणवेदनया ग्लायन् कपिप्रभुर्व्वाली उच्चैः शब्देन राममुपालब्ध निन्दितवान् लभेस्लुनि झषस्ताब्धइसीति सेर्लोपः ढभात्तथोरिति तस्य धः झपझसोरिति भस्य बः शूर मानी आत्मानं शूरम्मन्यमानः अभिधानात् मन्यतेरात्मनोम नने णिन् यद्वा शूरसम्बन्धिमानोविद्यतेऽस्येति नैकाजादिति इन् वीराभिमानवानित्यर्थः शूरश्चासौ मानी चेति वा रामं कीदृशं साधुम्मन्यं साधुमात्मानं मन्यमानं भ्रातृवधूहरणेनोचितस्य दण्डस्यैव करणात् मन्यात्स्वार्थेइति खश् खित्वाद्गले दिवादिलात् श्यन् खित्यव्याजिति मन् असाधुवत् असाधुना तुल्यं असाचात् हननात् चत्साम्यइति चत् असाधुं यथा निन्दति तथोपालब्धेति वा॥ १२५॥ भ०

मृषासि त्वं हविर्याजी राघव च्छद्मतापसः। अन्यव्यासक्तघातित्वाद्ब्रह्मघ्नां पापसम्मितः॥ १२६॥



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० मृषाग्नीत्यादि। हे राघव त्वं छद्मना तापसः सत्वं मृषैव मिथ्यैव हविर्याजी हविषा करणेनेष्टवानसि न लोकप्राप्तभयइत्यभिप्रायः करणेयजइति भूते णिनिः इतःप्रभृति भूतइत्यधिक्रियते यतो ब्रह्मघ्नां पापसंमितः ब्रह्म हतवन्तइति ब्रह्मेत्यादिना क्विप् तेषां पापेन तुल्यः कुतः अन्यव्यासक्तघातित्वात् अन्यस्मिन् सुग्रीवे व्यासक्तं मां हतवान् कर्म्मणिहनइति णिनिः तत्र कुत्सितग्रहणं कर्त्तव्यमित्युक्तं यदि सुग्रीवेण विरोधः किं तवायातमिति कुत्सितहननं ॥ १२६ ॥

भ० मृषेत्यादि। हे राघव त्वं हविर्याजी मृषा स्वर्गादिफलावाप्तये हविषा करणेन इष्टवानिति मिथ्या ग्रहादित्वात् णिन् करणाद्यजेर्भूतेणिनिति परः स्वमते करणादिर्भूतकालस्य विशेषानुक्तेर्याद्गम्यते यतश्छद्मना तापसः तपस्वी न तु वस्तुतः अन्यव्यासक्तघातित्वात्त्वं ब्रह्मघ्नां ब्रह्माणं हतवतां पापसम्मितः पापेन सम्मितस्तुल्यः तुल्यपापाश्रयत्वात् पुरुषोऽपि तुल्यइत्युच्यते पापेन करणभूतेन ब्रह्मघ्नां तुल्यइत्यन्वयः अन्यस्मिन् सुग्रीवे व्यासक्तं हतवानिति ग्रहादित्वाण्णिन् कर्म्मणोहनःकुत्सायामिति परः हनस्तङ् खेर्हौघोघ्निति चेति घः तलस्ततोभावइति त्वं ब्रह्माणं हतवानिति चासुमिति क्विप् ब्रह्मभ्रूणवृत्राद्धनोभूतइति परः स्वमते अविशेषात् कालत्रयं प्राप्तमत्रातीतविवक्षा सदानोऽल्लोपइत्यकारलोपे हनोक्तोघ्नः ॥ १२६ ॥

पापकृत्सुकृतां मध्ये राज्ञः पुण्यकृतः सुतः। मामपापं दुराचार किं निहत्याभिधास्यसि ॥ १२७ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



तदेव दर्शयन्नाह पापेत्यादि। हे दुराचार मामपापं निहत्य जं०म० पापकृत् कृतकिल्विषः राज्ञोदशरथस्य पुण्यकृतः सुतः सुकृतां मध्ये किमभिधास्यसि वक्ष्यसि किं चेपि न किञ्चिदभिधातव्यमस्तीतिभावः सर्व्वत्र सुकर्म्मपापेत्यादिना क्विप्॥ १२७॥

पापेत्यादि। हे दुराचार अपापं मां निहत्य सुकृतां शोभन भ० क्रियावतां मध्ये किमभिधास्यसि किं वक्ष्यसि यतस्त्वं पुण्यकृतो दशरथस्य सुतः पुत्रोऽपि भूत्वा पापकृत् पापं सुष्ठु पुण्यञ्च कृतवानसि चासुसित्यादिना क्विप् पुण्यादेः कर्म्मणः सोऽस्त्युक्तः कर्त्तरि भूतइति परः स्वमतेऽविशेषात् सर्व्वं विवक्षितं॥ १२७॥

अग्निचित्सोमसुद्राजा रथचक्रचिदादिषु। अनलेष्विष्टवान् कस्मान्न त्वयापेक्षितः पिता॥ १२८॥

अग्निचिदित्यादि। कस्मात्त्वया पिता नापेक्षितः नानुवृत्तः येनैवं जं०म० कृतवानसीति कीदृशः अग्निचित् आहिताग्निः अग्निं चितवानिति अग्नौ चेरिति क्विप् सोमसुत् सोमं सुतवान् सोमयाजी सोमेसुञ इति क्विप् अनलेषु अग्निषु इष्टवान् रथचक्रचिदादिषु रथचक्रवच्चीयतइति कर्म्मण्यग्न्याख्यायामिति क्विप् आदिशब्दाच्छ्येनचिदादिग्रहणं अग्न्यर्थौहि तदाकारइष्टकाचयइत्युच्यते तद्द्वारेणाग्निरपि॥ १२८॥

अग्नीत्यादि। कथं त्वया पिता दशरथोराजा नापेक्षितः न भ० चिन्तितः नानुवृत्तोवा येनैवं कृतमिति भावः अग्निचित् आहिताग्निः सोमसुत् सोमयाजी रथचक्रचिदादिषु अग्निविशेषेषु

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



दृष्टवान् कृतयज्ञः अग्निं चितवान् सोमं सुतवान् रथचक्रवच्चीयते इति च न्यासुसित्यादिना क्विप् रथचक्रचिदादिष्वित्यादिशब्दात् श्येनचिदादिष्वपि अग्न्यर्थौरथचक्राद्याकारइष्टकारचनाविशेषः क्रियते तद्वारेणाग्निरपि रथचक्रचिदादितयाव्यपदिश्यते दृष्टवानिति यजेः क्तवतुः ग्रहस्वपाद्योरिति जिः ॥ १२८ ॥

**मांसविक्रयिणः कर्म्म व्याधस्यापि विगर्हितं । मां घ्नता भवताकारि निःशङ्कं पापदृश्वना ॥ १२९ ॥**

ज०म० मांसेत्यादि । मांसविक्रयिणः कुत्सितकर्म्मकारिणो व्याधस्यापि विगर्हितं निन्दितं कर्म्मणीनिर्विक्रियइति इनिः तत्र कुत्सितग्रहणं कर्त्तव्यमित्युक्तं निकृष्टकर्म्मकरणेनेति यज्ञवता पापदृश्वना पापं दृष्टवता दृशेः क्वनिप् नसंयोगाद्वमन्तादिति अल्लोपप्रतिषेधः कर्म्म अकारि कृतं कर्म्मणि लुङ् निःशङ्कं शङ्कां त्यक्त्वा किं कुर्व्वता मां घ्नता मारयता हन्तेः शतरि गमहनेत्युपधालोपः होहन्तेरिति कुत्वं ॥ १२९ ॥

भ० मांसेत्यादि । मांसविक्रयिणोव्याधस्यापि यद्विगर्हितं कर्म्म तत्त्वया मां घ्नता निःशङ्कं शङ्कां त्यक्त्वा कृतं पापदृश्वना पापं दृष्टवतापि पापानभिज्ञेन मांसोपजीविना व्याधेनापि अन्यासक्तस्य निष्प्रयोजनत्वाद्वानरस्य च हननं निन्द्यते भवता तु पापं जानतापि तत्कृतमिति भावः व्याधस्येति कर्त्तरि सम्बन्धविवक्षा यद्वा व्याधस्यापीदृशं कर्म्म लोकैर्व्विशेषेण निन्दितमित्यर्थः मांसविक्रयी

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ऽस्यास्तीति नैकाजादिति इन् विक्रीणातेर्भूते कुत्सायामिति परः तन्न साधु अत्र व्याधस्य मांसविक्रयणे कुत्साया अभावात् दृशेस्त्वा सुपित्यादिना क्वनिप्॥ १२९ ॥

बुद्धिपूर्व्वं ध्रुवन्न त्वा राजकृत्वा पिता खलं। सह युध्वानमन्येन योऽहिंनोमामनागसं ॥ १३० ॥

बुद्धिपूर्व्वमित्यादि। त्वत्पिता त्वां खलं असाधुचरितं ध्रुवन् जं०म० गच्छन् ध्रुगतिस्थैर्य्ययोरिति रुदादौ पठ्यते तस्य गतौ ज्ञानार्थे वर्त्तमानस्य शतरि विकरणलोपे उवङादेशे रूपं यन्न राजकृत्वा कस्य तवेत्यर्थात् राजनियुधिकृञ्ञइति क्वनिप् तत्तस्य बुद्धिपूर्व्वं ध्रुवमवश्यं तस्येति व्याख्याने कृत्प्रयोगे कर्म्मणि षष्ठ्या भवितव्यं यस्त्वं मामनागसमपापमन्येन सह युध्वानं अन्येन सुग्रीवेण सह योद्धुं प्रवृत्तं सहेचेति क्वनिप् अहिनः हिंसितवान् हिंसेर्लङि मध्यमपुरुषैकवचने श्नमि श्नान्नलोपे हल्ङ्यादिलोपे रुत्वे च रूपं॥ १३० ॥

बुद्धीत्यादि। खलं दुष्टचरितं त्वां पिता दशरथो यन्न राज भ० कृत्वा राजानं न कृतवान् तद्बुद्धिपूर्व्वं खलत्वविज्ञानपूर्व्वकमेव ध्रुवं निश्चितं त्वासुपित्यादिना कृञः क्वनिप् खस्यतन्पिति दीचोषीनामित्यादिना त्वादेशः क्वचिदपवादविषयेऽप्युत्सर्गोऽपि प्रवर्त्तत इति न्यायात् ढघेकृतीत्यस्य विषयेऽपि कर्म्मक्रियेत्यादिना द्वितीया केचित्तु ध्रुशिस्थैर्य्ये इत्यस्य शतरि ध्रुवन् धातूनामनेकार्थत्वात् ज्ञानार्थः पिता त्वा खलं ध्रुवन् यन्न राजकृत्वा अर्थात्तव तद्बुद्धि

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



पूर्व्वमित्याहुः अन्ये तु इति निषेधे आशब्दः स्मरणे पीडायां वा राजकत्वेत्यत्र तवेत्यर्थाद्गम्यते नञः प्रश्लेषात् अखलमिति मामित्यस्य वक्ष्यमाणस्य विशेषणमित्याहुः खलमाह यस्त्वं मां अहिनो हतवान् कीदृशं अन्येन सुग्रीवेण सह युध्यानं योद्धुं प्रवृत्तं युधेः पूर्व्ववत् क्वनिप् अनागसं अनपराधं अहिनइति हिंसिहिंसायां घ्याः सिप् रुधादित्वात् श्नम् ननोनलोप्यइति इदनुबन्धजन्यनकारस्य लोपः हसझ्रांदिसेरिति सेर्लोपः ॥ १३० ॥

**पञ्च पञ्चनखा भक्ष्या ये प्रोक्ताः कृतजैर्द्विजैः। कौशल्याज शशादीनां तेषां नैकोऽप्यहं कपिः ॥ १३१ ॥**

ज॰म॰ मांसार्थं हतइति चेदाह पञ्चपञ्चेत्यादि। हे कौशल्याज कौशल्याजात सप्तम्यां जनेर्डः ये पञ्च पञ्चनखाः शशकः शल्लकी गोधा खड्गी कूर्म्मश्च पञ्चमइति कृतजैः कृतयुगजातैः सप्तम्यां जनेर्डः द्विजैर्द्विजातैः अन्येष्वपि दृश्यतइति डः सप्तम्यामित्युपलक्षणं असप्तम्यामपि दृश्यते भक्ष्याः भक्षणीयाः प्रोक्ताः तेषामहमेकोऽपि न भाविता अहं कपिः तत्किमिति हतोऽहं त्वयेति ॥ १३१ ॥

भ॰ पञ्चेत्यादि। राजभिर्म्मांसाय मृगाहन्यन्तइति समानं निराकुर्व्वन्नाह हे कौशल्याज ये पञ्चनखाः पञ्च शशकः शल्लकी गोधा खड्गी कूर्म्मश्च पञ्चमइत्यादिवाक्येन कृतजैः सत्ययुगजातैर्द्विजैर्महर्षिभिर्भक्षणयोग्याः प्रोक्ताः कथिताः तेषां शशादीनां मध्ये अहं नैकोऽपि यतःकपिरहं अतोऽभक्ष्यत्वान्मम बधोव्यर्थएव कौशल्यायाः सकाशाज्जातः कृते जातः द्विर्ज्जातइति च हनजनादिति डः पैतृकधर्म्माग्राहितया कुत्सार्थं मातुरुत्कीर्त्तनं ॥ १३१ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कथं दुष्टः स्वयं धर्म्मे प्रजास्त्वं पालयिष्यसि। आत्मानुजस्य जिह्रेषि सौमित्रेस्त्वं कथन्न वा॥ १३२॥

कथमित्यादि। स्वयमात्मना धर्म्मे दुष्टः दुस्थः सन् अपदुःसुषुस्थइत्यौणादिकः कुप्रत्ययः कथं प्रजाः पालयिष्यसि नैवेति भावः उपसर्गेचसंज्ञायामिति जनेर्डः कथं वा सौमित्रेर्भ्रातुरात्मानुजस्य कनीयसः आत्मानमनुजात इत्यनौ कर्म्मणि इति डः न जिह्रेषि न लज्जसे॥ १३२॥ जं०म०

कथमित्यादि। त्वं कथं प्रजाः पालयिष्यसि अपि तु नैवेति भावः यतः स्वयमात्मनो धर्म्मे दुःस्थः दुःखेन तिष्ठतीति हनजनादिति डः दुष्टुरिति पाठे औणादिकः कुप्रत्ययः षलज्ञाभिधानात् प्रजायन्तइति प्रजालोकाः पूर्व्वेण डः स्त्रीत्वं संज्ञा चाभिधानात् आत्मानुजस्य सौमित्रेः कथं न वा जिह्रेषि न लज्जसे आत्मानमनुजातइति पूर्व्ववत् डः॥ १३२॥ भ०

मन्ये किञ्जमहं घ्नन्तं त्वामक्षत्रियजे रणे। लक्ष्मणाधिज दुर्वृत्तं प्रयुक्तमनुजेन नः॥ १३३॥

मन्यइत्यादि। किञ्जं त्वामहं कुतोऽपि जातं न राजजातं मन्ये पञ्चम्यामजाताविति डः घ्नन्तं मारयन्तं अक्षत्रियजे रणे क्षत्रियादजाते हे लक्ष्मणाधिज लक्ष्मणाग्रज नोऽस्माकमनुजेन भ्रात्रा प्रयुक्तं जातावपि दृश्यते अक्षत्रियजइति उपसर्गे च संज्ञायामित्युक्तं असंज्ञायामपि दृश्यते लक्ष्मणाधिजइति अनौकर्म्मणीत्युक्तं कर्म्मण्यपि दृश्यते अनुजइति सर्व्वत्रान्येष्वपि दृश्यतइति डः इत्युपपदाधिकारः॥ १३३॥ जं०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० मन्येइत्यादि। हे लक्ष्मणाधिज हे दुर्वृत्त दुश्चरित्र अहं त्वां किञ्जं कुतोऽपि जातं कुत्सितादा जातं मन्ये न तु राज्ञोजातं यतः अक्षत्रियजे क्षत्रियादजाते रणे मां घ्नन्तं मारयन्तं अस्माकमनुजेन कनिष्ठेन सुग्रीवेण प्रयुक्तं सर्व्वत्र हनजनादिति जनेर्डः परे तु विशेषसूत्राण्युक्ता अन्यत्रापि दृश्यतइत्यनेन तेषां प्रायिकत्वं बोधयन्ति तथाहि पञ्चम्यन्तादजातेर्डः इत्यस्य किञ्जइत्युदाहरणं जातेरपि अक्षत्रियजइत्युदाहृतं उपसर्गात् संज्ञायामित्यस्य प्रजास्त्वं पालयिष्यसीत्युदाहृतं असंज्ञायामपि अधिज इति कर्म्मणोऽमेरित्यस्य आत्मानुजस्य जिह्रेषीत्युदाहरणं अकर्म्मणोऽपि अनुजइति अतएव महाधिया वोपदेवेन विशेषेणोक्तः ॥१३३॥

**प्रत्यूचे वालिनं रामोनाकृतं कृतवानहं। यज्वभिः सुत्वभिः पूर्व्वैर्जरद्भिश्च कपीश्वर ॥ १३४ ॥**

ज०म० प्रत्यूचइत्यादि। रामोऽपि वालिनं प्रत्यूचे प्रत्युक्तवान् किमित्याह हे कपीश्वर पूर्व्वैर्जरद्भिर्वृद्धैः जीर्य्यतेरतृन् यज्वभिः याज्ञिकैः सुत्वभिः सोमयाजिभिः सुयजोर्ङ्वनिप् नाकृतं कृतवानहं अपि तु कृतमेव कृतवानहं निष्ठेति भूते क्तक्तवतू॥ १३४ ॥

भ० प्रत्यूचइत्यादि। रामोवालिनं प्रत्यूचे किं प्रत्युक्तवानित्याह हे कपीश्वर यज्वभिर्याज्ञिकैः सुत्वभिः सोमपीतिभिः पूर्व्वैर्जरद्भिर्वृद्धैर्मान्धातृप्रभृतिभिर्यन्न कृतं तदहं न कृतवान् दृष्टवानिति

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



आसुखिति वनिप् सुत्वानिति क्वनिप् खरुतनूपिति जीर्य्यतीति शतः जीनोजीर्णोजरन्नपीत्यमरः ॥ १२४ ॥

ते हि जालैर्गले पाशैस्तिरश्चामुपसेदुषां। ऊषुषां परदारैश्च सार्द्धं निधनमैषिषुः ॥ १२५ ॥

तेहीत्यादि। हि यस्मात्ते पूर्व्वदृष्टा जालैर्गले पाशैश्च तिरश्चां मृगपक्षिसरीसृपाणां तिरोऽञ्चतीति ऋत्विगित्यादिना क्विन् आमि अचइत्यलोपः तेषां निधनं विनाशमैषिषुः इष्टवन्तः इषेर्लुङि रूपं कीदृशं उपसेदुषां समीपमुपगतवतां तेषां समीपवर्त्तिनामुपद्रवकारित्वात् भाषायामिति क्वसुः परदारैश्च सार्द्धमूषुषां उषितवतां पूर्व्ववत्क्वसुः वसेर्यजादित्वात्संप्रसारणं ॥ १२५ ॥ जः मः

तेहीत्यादि। पूर्व्वोक्ते हेतुरयं हि यस्मात् तेऽपि पूर्व्वे दृष्टास्तिरश्चां पक्षिमृगादीनां जालैर्गले पाशैश्च निधनं ऐषिषुः इच्छन्ति स्म न केवलं तिरश्चां परदारैः परस्त्रीभिः सार्द्धं ऊषुषां कृतनिवासानाञ्च परदारैः सह वासमग्रिमश्लोके वक्ष्यति अतएव बध्यत्वप्रतिपादकं रूपद्वयमेव लभ्यस्ति उभयविशेषणमाह उपसेदुषां समीपमुपगतानां स्ववाह्यस्थितानामपीत्यर्थः केचित्तु परदारैः सार्द्धमूषुषामिति तिरश्चामित्यस्य विशेषणं बध्यत्वदर्शनायेत्याहुः तिरोऽञ्चतीति क्विप् सहसन्तिरइति तिर्य्यादेशः तिर्य्यगमुमूयगिति तिरश्चादेशः उपपूर्व्वसदष्टीपमवदिति क्वसुः वसोर्घसेकाजिति इम् धुर्दिष्यडीति दित्वं तृफलेति अतएत्वं खिलोपश्च वसोर्वःसेमपीति उः वसेः पूर्व्ववत् क्वसुः इम् च व्यथ भः



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ग्रहेति खेर्जिः ग्रहस्वपाद्योरिति प्रकृतेर्ज्जिः किलादिति षः इषु इच्छायां अन् व्यांसिः अनुस्थिदेः भूयोऽम् ॥ १२५ ॥

अहन्तु शुश्रुवान् भ्रात्रा स्त्रियं भुक्तां कनीयसा।
उपेयिवाननूचानैर्निन्दितस्त्वं लतामृग ॥ १२६ ॥

ज०म० अहमित्यादि। हे लतामृग हे शाखामृग अहं पुनः शुश्रुवान् श्रुतवान् पूर्ववत्क्वसुः यदुत भ्रात्रा कनीयसा भुक्तां स्त्रियं त्वमुपेयिवान् सन् अनूचानैर्वेदविद्भिर्निन्दितस्ततोमे नैव दोषः उपेयिवाननूचानइति उपेयिवानित्यादिना निपातितौ ॥ १२६ ॥

भ० अहमित्यादि। हे लतामृग शाखामृग अहं शुश्रुवान् किं शुश्रुवानित्याह कनीयसा कनिष्ठेन भ्रात्रा सुग्रीवेण भुक्तां स्त्रियं त्वमुपेयिवान् उपगतोऽसि अतएव अनूचानैर्व्वेदविद्भिस्त्वं निन्दितः तेन तव वधे मम दोषोनास्तीति भावः इणोतेरिणश्च पूर्व्ववत् क्वसुः द्वित्वं वसोर्घसेकाज्णातइमित्यत्र खिसहितस्यैकाचोग्रहणं तेन न ओरिम् इणस्तु इमि यिणोऽच्यणाविति यादेशः खेःकितिर्घः अनुपूर्व्ववृञः कानः वचोऽरे पूर्व्ववत् जिः अनूचानः प्रवचने साङ्गेऽधीती गुरोश्च यद्दत्यमरः। लता ज्योतिष्मती पृक्का शाखा वल्ली प्रियङ्गुष्विति विश्वः ॥ १२६ ॥

अन्वनैषीत्ततोवाली त्रपावानिव राघवं। न्यचिपच्चाङ्गदं यत्नात् काकुत्स्थे तनयं प्रियं ॥१२७॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अन्वेत्यादि। ततो रामवचनादनन्तरं वाली राघवमन्वनैषीत् अनुनीतवान् देव क्षम्यतां यदजानता मयोक्तमिति नयतेर्लुङित्यनेन भूतसामान्ये लुङ् त्रपावानिव यथा लज्जावान् कश्चिदनुनयति तद्वत् अङ्गदञ्च प्रियं तनयं काकुत्स्थे रामे न्यक्षिपत् न्यस्तवान् यत्नादादरात् क्षिपेरनद्यतने लङ् लकारप्रत्ययस्यातिङिति प्रतिषेधान्न तसंज्ञा॥ १३७॥ जं॰म॰

अन्वेत्यादि। ततो रामवाक्यानन्तरं वाली राघवमन्वनैषीत् अनुनीतवान् णीञ्प्रापणे भ्वादिः नेमेकाजिति इम्निषेधः अजवदेति त्रिः त्रपावानिव वस्तुतोऽमुगस्य भ्रातृवधूहरणेऽपि त्रपा नास्ति किन्तु यथा लज्जावान् कश्चिदनुनयति तद्वत् अङ्गदनामानं प्रियं पुत्रं काकुत्स्थे रामे यत्नात् न्यक्षिपत् समर्पितवान्॥ १३७॥ भ॰

म्रियमाणः ससुग्रीवं प्रोचे सद्भावमागतः। सम्भविष्याव एकस्यामभिजानासि मातरि॥ १३८॥

म्रियेत्यादि। सवाली म्रियमाणः सन् सद्भावं शोभनभावमागतः स सुग्रीवं प्रोचे किमित्याह अभिजानासि स्मरसि एकस्यां मातरि सम्भविष्यावः समभवावइत्यस्मिन्नर्थे अभिज्ञावचने लृडित्यनद्यतने लृट् अभिजानासीत्यभिज्ञावचनस्योपपदत्वात्॥ १३८॥ जं॰भ॰

म्रियेत्यादि। म्रियमाणः सन् सद्भावं प्राप्तो वाली सुग्रीवं प्रोचे ब्रूञ्ष्ठी वचोऽरे म्ङञ्ष्टीर्ध्वंसमिति शानः तौदादिकः शः रिङ्गिः श्नुधोरितीयः किमित्याह एकस्यां मातरि आवां यत्सम्भविष्यावः सम्भूतौ तदभिजानासि स्मरसि अतीत इति भूते तौ॥ १३८॥ भ॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अवसाव नगेन्द्रेषु यत्पास्यावो मधूनि च । अभिजानीहि तत्सर्वं बन्धूनां समयोह्ययं ॥ १३९ ॥

ज०म० अवेत्यादि । अभिजानीहि स्मर यन्नगेन्द्रेषु अवसाव उषितवन्तौ अत्राभिज्ञावचनस्य यच्छब्दसहितत्वात् न यदीत्यनेन ऌटि प्रतिषिद्धे लङेव भवति अत्र वासमात्रं स्मर्य्यते मधूनि च यत्पास्यावः तत्र पीतवन्तौ तत्सर्व्वमभिजानीहि अत्र विभाषासाकाङ्क्ष इति पक्षे ऌट् साकाङ्क्षता च प्रयोक्तुर्लक्ष्यलक्षणयोः सम्बन्धे तत्र वासो लक्षणं पानञ्च लक्ष्यमिति यस्माद्बन्धूनामयमेव समयः कालः ॥ १३९ ॥

भ० अवेत्यादि । नगेन्द्रेषु पर्व्वतश्रेष्ठेषु आवां अवसाव यच्च तत्र मधूनि पास्यावः पीतवन्तौ तत्सर्व्वं अभिजानीहि स्मर यस्मात् अयं बन्धूनां समयः नेदानीं वैरिचिन्ता युक्तेति भावः वानेकस्मार्य्य इति भूते विभाषया तौ वसौ निवासे घौ ॥ १३९ ॥

दैवं न विदधे नूनं युगपत्सुखमावयोः । शश्वद्बभूव तद्दुःस्थं यतो न इतिहाकरोत् ॥ १४० ॥

ज०म० दैवमित्यादि । नूनमवश्यं दैवमावयोः सुखं युगपदेककालं न विदधे न हि विहितवत् परोक्षे लिट् ञित्वात्तङ् आतो लोपः यतो यस्मात्तत् दैवं शश्वत् नित्यं दुःस्थमननुकूलं नोऽस्माकं बभूव तस्मादितिह एवमकरोत् ह इत्येवं कृतवान् यद्युगपदावयोः

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



सुखविधानं तद्दुःखं शश्वद्बभूव हाकरोदिति भूतानद्यतनप रोक्षे लिटि प्राप्ते हशश्वतोर्लङ्चेति लङ् चकारात् लिट् तत्र शश्व च्छब्दे उपपदे लिडेवेदाहृतः न लङ् हशब्दे लङेवन लिडपीति ॥१४०॥

दैवमित्यादि। नूनं निश्चितं दैवं कर्त्तृ युगपदेकदा नावयोः भ॰ सुखं विदधे चकार धाञ्षष्ठ्यां डस्येचीत्यादिना आलोपः यत स्तद्दैवं नोऽस्माकं शश्वन्नित्यं दुःखं प्रतिकूलं वभूव तस्मादिति प्रा गुक्तं युगपत् सुखाभावं अकरोत् हा विषादे ह पादपूरणे वा पारम्पर्य्यप्रसिद्धौ स्यादैतिह्यमितिहाव्ययमितिदर्शनात् पारम्प र्य्यप्रसिद्धिमकरोदिति केचित् इति लोकापवादागमयोरिति वर्द्ध मानवचनात् लोकापवादं भ्रातृवधूगमनरूपमकरोदिति केचित यत्तदोः परस्पराकाङ्क्षया तत इति गम्यते॥१४०॥

ददौ सदयितां भ्रात्रे मालाञ्चाग्र्यां हिरण्मयीं।
राज्यं सन्दिश्य भोगांश्च ममार व्रणपीडितः॥१४१॥

ददावित्यादि। सवाली दयितां ताराख्यां भ्रात्रे सुग्रीवाय ज॰म॰ ददौ मालां चाग्र्यां श्रेष्ठां हिरण्मयीं सुवर्णघटितां राज्यं स्वाम्य त्यादिद्रव्यप्रकृतिं सन्दिश्य दत्वा भोगांश्च राज्याङ्गानि ममार व्रणपीडितः तत्रापि परोक्षे लिट्॥१४१॥

ददावित्यादि। सवाली भ्रात्रे सुग्रीवाय दयितां स्वप्रियां भ॰ हिरण्मयीं स्वर्णमयीं स्वर्णघटितां मालाञ्च ददौ अग्र्यां श्रेष्ठा मित्युभयविशेषणं हिरण्यस्य विकारो हिरण्मय इति निपातनात्

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



मयट् यलोपश्च ततो राज्यं भोगांश्च सन्दिश्य दत्त्वा व्रणपीडितः सन् ममार मृतः॥ १४१॥

तस्य निर्व्वर्त्य कर्त्तव्यं सुग्रीवो राघवाज्ञया। किष्किन्ध्याद्रिगुहां गन्तुं मनः प्रणिदधे द्रुतं॥ १४२॥

ज०म० तस्येत्यादि। तस्य मृतस्य कर्त्तव्यं पिण्डोदकादिकरणीयं कृत्वा सुग्रीवो राघवाज्ञया गच्छ वर्षासमयमतीत्य शरद्यागमिष्यसीति आज्ञया किष्किन्ध्याद्रिगुहां गन्तुं मनः प्रणिदधे कृतवान् अत्रापि परोक्षे लिट्॥ १४२॥

भ० तस्येत्यादि। तस्य मृतस्य वालिनः कर्त्तव्यं कर्त्तुमुचितं पिण्डोदकदानादि निर्व्वर्त्य अङ्गदद्वारा स्वयञ्च यथायोग्यं निष्पाद्य राघवस्याज्ञया किष्किन्ध्यानाम्नीमद्रिगुहां द्रुतं शीघ्रं गन्तुं मनः प्रणिदधे चकार धाञ्धौ प्राग्वन्नोणइति णत्वं किष्किन्ध्याद्रिगुहेति सुमेरुपर्व्वतादिवत् एकार्थत्वे कर्म्मधारयः॥ १४२॥

नामग्राहं कपिभिरशनैः स्तूयमानः समन्तादन्वग्भावं रघुवृषभयोर्व्वानरेन्द्रो विराजन्। अभ्यर्णेऽम्भःपतनसमये पर्णलीभूतसानुं किष्किन्ध्याद्रिं न्यविशत मधुलीवगुञ्जद्द्विरेफं॥ १४३॥

इति भट्टिकाव्ये वालिवधो नामाधिकारकाण्डे षष्ठः सर्गः।

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



नामेत्यादि। वानरेन्द्रः सुग्रीवः किष्किन्ध्याद्रिं न्यविशत निवि ज०म०
ष्टवान् नेर्विंशइति तङ् अशनैः सुष्ठु कपिभिस्तूयमानः वर्त्तमाने
लट् तस्य कर्म्मणि विहितत्वात् लक्षणहेत्वोःक्रियायाइति शानच्
नामग्राहं नाम गृहीत्वा नाम्न्यादिशिग्रहोरिति णमुल् समन्तात्स
र्व्वतः विराजन् शोभमानः अत्र परस्मैपदसंज्ञकः शतः किं कृत्वा
रघुवृषभयोरन्वग्भावं अनुकूलोभूत्वा अन्वक् पूर्व्वाद्भवतेरन्यच्या
नुलोम्यइति णमुल् तदनुकूलवर्त्तित्वाद्विराजन् कदा न्यविशत
अभ्यर्णे निकटे अभ्रःपतनसमये प्रावृषीत्यर्थः पर्णलीभूतस्यानु
पर्णानि सन्ति येषामिति सिध्मादिपाठाल्लच् तदन्तादभूततद्भा
वे च्विः पर्णलीभूताः सानवएकदेशायस्याद्रेः मधुक्षीवामधुमत्ता
गुञ्जन्तोद्विरेफायत्र क्षीवइत्यत्रानुपसर्गात्फुल्लक्षीवकृशोल्लाघा
इति निपातितः क्षीवृमदइत्यस्मात् क्तप्रत्ययस्य लोपः इडभाव
श्च निपात्यते गुञ्जेर्लट् क्वचित्प्रथमासमानाधिकरणेऽपि शतृप्र
त्ययः। इति सोपपदकृतः॥१४३॥

इति भट्टिकाव्यटीकायां जयमङ्गलायामधिकारकाण्डे प्रथमः
परिच्छेदः। रामस्य सुग्रीवाभिषेकोनाम षष्ठः सर्गः॥

नामेत्यादि। वानरेन्द्रः सुग्रीवः किष्किन्ध्यया गुहाविशेषेणो भ०
पलक्षितमद्रिं न्यविशत प्रविष्टवान् शेविशप्रवेशे विपराजीति सं
कीदृशः अशनैरुच्चैः समन्तात् सर्व्वतोनामग्राहं नाम गृहीत्वा
कपिभिः स्तूयमानः कर्म्मणि शानः रतनोरिति यकि घोऽज्यऽरे
रघुवृषभयोरामलक्ष्मणयोः अन्वग्भावं अनुकूलोभूत्वा विराज
मानः उत्तरपदे वृषभादिशब्दः श्रेष्ठवाचकः स्वभावात् राम

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कार्य्यं त्यक्त्वा कुतोऽपि गृहं गतइत्याह अभ्रपतनसमये वर्षाकाले अभ्यर्णे समीपवर्त्तिनि सति तदा प्रयाणानौचित्यात् तयोराज्ञया गृहं गतइत्यर्थः अभ्यर्णइति अर्द्देःक्तान्तस्य समीपार्थे क्षुब्धस्वान्तेत्यादिना निपातः कीदृशमद्रिं पल्वलीभूताः सानवएकदेशाश्च यादृशं वेशन्तः पल्वलञ्चाल्पसरइत्यमरः च्विः कृभ्वस्तियोगे च्विः अकारस्य ईत्वञ्च मधुना क्षीवामत्तागुञ्जन्तोद्विरेफाभ्रमरा यत्र क्षीवृङ् दर्पे इत्यस्य क्तान्तस्य क्षीवः पूर्व्वेण निपातितः नाम ग्राहमिति कर्म्मरूपं नाम्न आदिशिग्रहिभ्यां णमिति परः स्मृतेऽभिधानात् किम्वा नाम्नोग्राहोग्रहणं यत्रेति स्तुतिक्रियाविशेषणं अन्वग्भावमिति आनुकूल्येऽन्वचोभुवश्चणमिति परः स्मृतेऽत्राप्यभिधानात् यद्वा रघुवृषभविषये अनुगताभावोयत्रेति दीप्तिक्रियाविशेषणं एतेन विनयित्वं दर्शितं। इति सोपपदकृदधिकारः ॥ १४३ ॥

भ० इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरतसेनविरचितायां मुग्धबोधिन्यां भट्टिटीकायामधिकारकाण्डे प्रथमपरिच्छेदः। काव्यस्य षष्ठः सर्गः ॥

ततः कर्त्ता वनाकम्पं ववौ वर्षाप्रभञ्जनः। नभः पूरयितारश्च समुन्नेमुः पयोधराः॥ १ ॥

ज०म० इतस्ताच्छीलिकं कृतमधिकृत्योच्यते ताच्छीलिकइत्युपलक्षणं तद्धर्म्मतत्साधुकारिष्वपि द्रष्टव्यं यतआक्वेस्तच्छीलतद्धर्म्मतत्साधुकारिष्विति तत्राधिक्रियते। ततइत्यादि. ततः प्रवेशानन्तरं

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



वर्षाप्रभञ्जनः प्रावृड्वातोववौ वाति स्म वागतिगन्धनयोरिति कर्त्ता वनाकम्पं साधु कुर्व्वन् तृन्निति तृन् नलोकेति षष्ठीप्रतिषेधः पयोधरामिघाश्च समुन्नेमुः समुन्नताः कीदृशानभःपूरयितारः तृन्॥१॥

अथ ताच्छीलिकाः कृतउच्यन्ते। ताच्छीलिकाइत्युपलक्षणं पर मते तच्छीलतद्धर्म्मतत्साधुकारिष्वर्थेषु तृनादिदर्शनात् स्वमते यद्यपि तृनादीष्णुादिविधायकसूत्रेषु तच्छीलाद्यर्थोनोक्तस्तथा पि ढ्येतृतीत्यादौ शीलार्थतृन्भव्यर्णार्थणिनीति ज्ञापकात् तृनि ष्णुादयः कतिचित्प्रत्यया अभिधानात् शीलाद्यर्थेष्वपि भवन्तीति बोध्यं उक्तं हि कृत्तद्धितसमासानामभिधानं नियामकमिति शीलाद्यर्थाकथनेऽपि नाधिका क्षतिः प्रकृतार्थस्य तद्बोधकत्वात् तथा हि ततः कर्त्ता वनाकम्पमित्यादौ वनस्य ईषत्कम्पकारित्वे नैव वायोः साधुत्वं गम्यते एवमन्यत्रापि। ततइत्यादि ततो ऽनन्तरं वर्षाकालसम्बन्धी प्रभञ्जनोवायुर्व्ववौ वहति स्म वालग मनहिंसयोः णवातोडौ कीदृशः वनानामीषत्कम्पनं कर्त्ता साधु कुर्व्वन् एतेन मान्द्यं सौगन्ध्यञ्च परमते साधुकारिणि तृन् स्वमते ईषत्कम्पकारित्वेनैव साधुत्वं गम्यते तृणकौघे इति तृन् ढ्येतृती त्यादौ शीलार्थतृन्निति शीलार्थइत्युपलक्षणं तेन तत्साधुकार्य्य स्यापि ग्रहणं शीलार्थतृन्नित्यत्र शीलाद्यर्थतृन्निति पाठं केचिद दन्ति किम्वा शीलार्थे तृन् वनानामीषत्कम्पकरणशीलइत्यर्थः अतएव कर्म्मणि न षष्ठी वर्षासु वायोरतिशयत्वं वर्णनीयमिति सम्प्रदायानुरोधात् वनानामाकम्पं कर्त्तेति केचित् पयोधरा



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



मेघाः समुन्नेमुः सम्यगुन्नताः परिवृद्धावभूवुः दिशोव्याप्तवन्तइत्य र्थः नमेरुपि तृफलेत्यादिना अतएलं खिलोपस्य पयोधरतीति पचादित्वादन् पयोधरतीति वाक्ये ढात्षस्यित्यस्य विषयाशङ्का चेत् तदा धरतीति धरः पयसोधरः पयोधरइति वाक्यं कीदृशाः नभआकाशं पूरयितारः पूरणशीलाः पूरकपूर्त्तौ पूर्व्ववत्॥१॥

तर्पणं प्रजनिष्णूनां शस्यानाममलं पयः। रोचिष्णवः सविस्फूर्ज्जामुमुचुर्भिन्नवद्धनाः॥२॥

ज०म० तर्पेत्यादि। घनाअमलं पयो मुमुचुः भिन्नवत् भिन्नाइव कीदृशं पयः तर्पणं शस्यानां तर्पणं तर्पयतीति कृत्यल्युटोवज्ञल मिति कर्त्तरि ल्युट् प्रजनिष्णूनां साधु प्रादुर्भवतां रोचिष्णवः साधु दीप्यमानाः सविस्फूर्जाः सवज्रनिस्वनाः अलंकृञित्यादिना इष्णुच्॥२॥

भ० तर्पेत्यादि। घनानिर्म्मलं पयोमुमुचुः त्यक्तवन्तः भिन्नवत् भग्ना इव यथा घटादयोभग्नाः सन्तोवज्ञजलं त्यजन्ति तद्वत् कीदृशं पयः प्रजनिष्णूनां प्रकृष्टजननशीलानां साधु प्रादुर्भवतां वा श स्यानां तर्पणं तृप्तिकारकं तर्पयतीति नन्द्यादित्वादनः परमते ऽत्रापि शीलार्थः कुकविकाव्यमिव नीरसस्य रमणीयमिति देश वर्णनायां श्लेषात् सस्यशब्दोदन्त्यद्वयवानित्येके तालव्याअपि दन्त्याः स्युः शस्यशूकरशालयइत्यन्ये घनाः कीदृशाः रोचि ष्णवोदीप्तिशीलाः साधु दीप्यमानावा सविस्फूर्ज्जावज्रनिर्घोष

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



सहिताः जिभ्राजभूसहेत्यादिना प्रपूर्व्वजनेरुचस्य इष्णुः क्षीस्फू
र्जावज्रनिर्घोषे सेमकात्सरोरिति अः ॥ २ ॥

निराकरिष्णवोभानुं दिवं वर्त्तिष्णवोऽभितः। अल
ङ्करिष्णवोभान्तस्तडित्वन्तश्चरिष्णवः ॥ ३ ॥

निरेत्यादि। भानुं निराकरिष्णवो निराकरणशीलाघनाः जं॰मं॰
पयोमुमुचुरिति योज्यं दिवमभितोवर्त्तिष्णवआकाशमभितो वर्त्त
नखभावाः पूर्व्वपश्चिमयोर्व्वर्त्तनहेतुत्वात् पर्य्यभिभ्यां सर्व्वोभया
र्थे तसिः अभितः परितइति द्वितीया तडित्वन्तः सविद्युतः अत
एव भान्तोदीप्यमानाः एवञ्च कृत्वा अलङ्करिष्णवोऽलङ्करणशी
लाइव दिशश्चरिष्णवः इतस्ततोगमनशीलाः पूर्व्ववदिष्णुच् ॥ ३ ॥

निरेत्यादि। कीदृशाघनाः भानुं निराकरिष्णवआच्छादकाइ भं॰
त्यर्थः दिवमभितआकाशस्योभयभागे पूर्व्वे पश्चिमे च वर्त्तन
शीलाः धिक्समयेत्यादिना अभियोगे द्वितीया तडित्वन्तोविद्युद्यु
क्ताः अतएव भान्तोदीप्यमानाः एवञ्चालङ्करिष्णवोदिवमिति
सम्बध्यते साधु भूषयन्तः चरिष्णवः इतस्ततोगमनशीलाः पूर्व्वेण
इष्णुः ढघेक्तीत्यादौ उदन्तवर्ज्जनात् न कर्म्मणि षष्ठी तडिच्छ
ब्दात् मोऽझयपादइतुः नदंतसाविति पदनिषेधात् न चपोऽवे
जवद्इत्यनेन तकारस्य दत्वं यद्यपि तडित्वान् वारिदोऽम्बु
भृदित्यमरेणोक्तं तथाप्यत्र विद्यमानतडिद्योगप्रतिपत्त्यर्थमुक्तं

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अत्र तु गोशब्दादिवद्रूढिरेव यद्वा तडिलन्तो मेघाः पयोमुमुचुः कीदृशाः घनानिविडाः ॥ ३ ॥

तान् विलोक्यासहिष्णुः सन् विललापोन्मदिष्णुवत्।
वसन् माल्यवति ग्लास्नू रामो जिष्णुरधृष्णुवत् ॥ ४ ॥

ज०म० तानित्यादि। तान् घनान्विलोक्य असहिष्णुरसहनशीलो रामः माल्यवति पर्व्वते वसन्विललाप उन्मदिष्णुवत् उन्मदनशीलः उन्मत्तवद्वत् पूर्व्ववदिष्णुच् ग्लास्नुः ग्लानशीलः जिष्णुर्जयशीलः अधृष्णुवदप्रगल्भइव शोकाभिभूतत्वात् ग्लाजिस्थश्चग्स्नुः धृष्णुरिति त्रसिगृधीत्यादिना क्नुः ॥ ४ ॥

भ० तानित्यादि। तान् घनान् विलोक्य असहिष्णुः सन् अक्षमाशीलो भवन् रामो माल्यवति पर्व्वते वसन् उन्मदिष्णुवदुन्मत्तवत् विललाप विलापं कृतवान् सन् पण्डितोऽपि उन्मदिष्णुरिव विललापेति वा योजना जिष्णुर्ज्जयशीलोऽपि अधृष्णुवत् अप्रगल्भइव ग्लास्नुः ग्लानिशीलः सहोन्मदिभ्यां पूर्व्वेण इष्णुः ग्लाम्लास्थेत्यादिना ग्लायतेः स्नुः ग्स्नुक्भूजेरिति जयतेः ग्स्नुक् त्रिपत्रसगृधेत्यादिना धृषः क्नुः ॥ ४ ॥

अमी कदम्बसंभिन्नः पवनः शमिनामपि। क्लमित्वं कुरुतेऽत्यर्थं मेघशीकरशीतलः ॥ ५ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



किं तद्विलपनमित्याह भ्रमीत्यादि। भ्रमी भ्रमणशीलः कदम्ब सम्भिन्नः कदम्बगन्धसंश्लिष्टः श्रमिनामपि श्रमणशीलानामपि क्लमित्वं कुरुते अत्यर्थं ग्लानिं कुरुते श्रमित्यष्टाभ्योघिनुण् नोदात्तोपदेशेत्यादिना उपधावृद्धिप्रतिषेधः ॥ ५ ॥ ज॰म॰

भ्रमीत्यादि। इतःप्रभृति एवं विललापेति पूर्व्वेण सम्बन्धः पवनः श्रमिनां श्रान्तिशीलानामपि क्लमित्वं मनसोग्लानिशीलत्वं कामहेतुकमित्यर्थात् अत्यर्थं अतिशयितं कुरुते कीदृशः भ्रमी भ्रमणशीलः मन्दत्वात् कदम्बपुष्पेण सम्भिन्नः सुरभीकृत इत्यर्थः मेघस्य शीकरैः शीतलः शीकरोऽम्बुकणाः स्मृताइत्यमरः भ्रम्यचाले शमुभ्यद्दर्शमे क्लमुभिर्ग्लानौ एभ्योग्रहादित्वात् णिन् जनवधःसेमइति ह्रस्वः ॥ ५ ॥ भ॰

संज्वारिणेव मनसा ध्वान्तमायासिना मया। द्रोहि खद्योतसम्पर्कि नयनामोषि दुःसहं ॥ ६ ॥

संज्वेत्यादि। मयैतत् ध्वान्तं तमो दुःसहं दुःखेन सह्यतइति मनसा करणभूतेन कीदृशेन संज्वारिणेव रोगशीलेनेव आयासिना आयासशीलेन मयेति द्रोहि अपकारशीलं ध्वान्तं खद्योतसम्पर्कि ज्योतिरिङ्गणसंसर्गशीलं नयनामोषि चक्षुर्मोषणशीलं संपृचानुरुधेत्यादिना सर्व्वे घिनुणन्ताः ॥ ६ ॥ ज॰म॰

संज्वेत्यादि। मया मनसा करणेन ध्वान्तं तमोदुःसहं दुःखेन सह्यते संज्वारिणेव रोगशीलेनेव आयासशीलेन ध्वान्तं कुतोदुःसहं इत्याह द्रोहि अपकारशीलं खद्योतसम्पर्कि ज्योतिरिङ्गणसं भ॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



सर्गशीलं नयनामोषि नेत्रापहारकं ज्वरोगे इ ईर्ष्यसुयतने ल्वङ् ञ्जिघांसे पृच्धीचसंपर्के मुषलुटने एभ्योग्रहादित्वात् णिन् पृचः कङ् निपातात् एभ्योघञन्तेभ्योऽस्त्यर्थे इन् वा॥ ६॥

कुर्व्वन्ति परिसारिण्योविद्युतः परिदेविनं। अभ्याघा तिभिरामिश्राश्चातकैः परिराटिभिः॥ ७॥

ज॰म॰ कुर्व्वन्तीत्यादि। एताविद्युतः परिदेविनं परिदेवनशीलं कुर्व्वन्ति मामित्यर्थात् कीदृश्यः परिसारिण्यः परिसरणशीलाः चातकैः पक्षिविशेषैः परिराटिभिः परिरटनशीलैः एवञ्चाभ्या घातिभिः अभिहननशीलैः दुःखोत्पादनात् आमिश्रायुक्ताः विद्यु तः पूर्व्ववद्विनुण्॥ ७॥

भ॰ कुर्व्वेत्यादि। विद्युतोऽर्थान्मां परिदेविनं विलापशीलं कुर्व्व न्ति परिसारिण्यः परिसरणशीलाः दुःखोत्पादकतया अभि हननशीलैः परितोरटनशीलैश्चातकैः पक्षिविशेषैर्युक्ताः स्तृगतौ देवृङ्देवने हनलौगतौ वधे रटवाचि एभ्यो ग्रहादित्वाण्णिन् वि पूर्व्वात् द्योततेः क्विप् विद्युत्॥ ७॥

ज॰म॰ संसर्गी परिदाहीव शीतोऽप्याभाति शीकरः। सो द्वुमाक्रीडिनोऽशक्याः शिखिनः परिवादिनः॥ ८॥

संसर्गीत्यादि। संसर्गी संसर्जनशीलः शीतोऽपि शीकरोविन्दुः परिदाहीव परिदहनशीलइवाभाति शिखिनश्च मयूराः सोढुम

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



शक्याः आक्रीडिनोनर्तनशीलाः परिवादिनः परिवदनशीला इव इवशब्दस्यात्र लुप्तोद्रष्टव्यः पूर्व्ववद्घिनुण्॥ ८॥

संसेत्यादि। शीकरः शीतोऽपि संसर्गसाधुकारी अपि सन् भ॰ परिदहनशीलइव आभाति शिखिनोमयूराः सोढुमशक्याः कीदृशाः आक्रीडनशीलाः परि सर्व्वतोवदनशीलाः साधुभाषिणोवा रञ्जोऽपषकानास्सिन्निनाविति ज्ञापकात् क्वति घिन् प्रत्ययोऽप्यस्तीति प्राप्तं तेन सृजेर्घ्निनि चजोःकगाविति गत्व घञन्ता दस्त्यर्थेइन् वा दहिक्रीडवदिभ्योग्रहादिलात् णिन्॥ ८॥

एताद्दैवानुरोधिन्योद्वेषिण्यइव रागिणं। पीडयन्ति जनं धाराः पतन्त्योऽनपकारिणं॥ ९॥

एतादित्यादि। एताधाराः पतन्त्योद्वेषिण्यइव द्वेषणशीलाइव ज॰भ॰ जनं रागिणं रागशीलं अनपकारिणमनपराधशीलं पीडयन्ति दैवानुरोधिन्यः भाग्यानुरोधात् प्रवर्त्तनशीलाः पूर्व्ववत् घिनुण् घिनुणि च रञ्जेरुपसंख्यानमित्यनुनासिकलोपः कृताननुनासिकनिर्द्देशाद्वा लोपनिपातनं॥ ९॥

एतादित्यादि। एताः पतन्त्योधाराः द्वेषशीलाइव अनप भ॰ कारशीलमपि जनं पीडयन्ति दैवानुरोधात् प्रवर्त्तनशीलाः रुधदिषक्षभ्योग्रहादिलात् णिन् रञ्जेः संसर्गिवत् घिनि रञ्जोऽपस केति नलोपः घञन्तनिष्पादितरागशब्दात् इन् वा॥ ९॥

कुर्य्याद्योगिनमप्येष स्फूर्जावान् परिमोहिनं। त्यागिनं सुखदुःखस्य परिक्षेप्यभसाम्ततुः॥ १०॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० कुर्य्यादित्यादि। एषस्तुरम्भसां जलानां परिक्षेपी परित्य जनशीलः कर्म्मणि षष्ठी योगिनमपि योगशीलमपि सुखदुःखस्य त्यागिनं त्यागशीलं कर्म्मणि षष्ठी परिमोहिनं परिमोहनशीलं कुर्य्यात् कीदृशः स्फूर्जावान् वज्रनिर्घोषयुक्तः पूर्व्ववद्धिनुण्॥१०॥

भ० कुर्य्यादित्यादि। एषोऽम्भसां परिक्षेपी परित्यागशीलस्तु तुर्य्योगिनं शास्त्रविधिना योगे साधुकारिणमपि सुखदुःखस्य त्यागशीलमपि परि सर्व्वतोमोहशीलं कुर्य्यात् यतः स्फूर्ज्जावान् वज्रनिर्घोषयुक्तः तेन कामस्य भयस्य चोत्पादात् केचित्तु योगि नं कान्तायुक्तं वज्रनिर्घोषेण सुखत्यागिनं कान्तालिङ्गनेन च दुःखत्यागिनमित्याहुः युजेः संसर्गिवत् घिन् घञन्तादिन् वा मु हिक्षिपिभ्यां ग्रहादिलाद्घिन्॥१०॥

विकत्थी याचते प्रत्तमविश्रम्भी मुहुर्ज्जलं। पर्ज्ज न्यञ्चातकः पक्षी निकृन्तन्निव मानसं॥११॥

ज०म० विकेत्यादि। चातको मानसं निकृन्तन्निव खण्डयन्निव प्रत्तं प्रदत्तं अचउपसर्गात्तः जलं याचतइति प्रधानं कर्म्म पर्ज्जन्यमि त्यकथितं विकत्थी विकत्थनशीलइव पर्ज्जन्योऽपि मह्यं जलं ददा ति इवशब्दोलुप्तोऽत्र द्रष्टव्यः अविश्रम्भी अविश्वासशीलः मानस खण्डनात् वैकत्थलसेति घिनुण्॥११॥

भ० विकेत्यादि। चातकः पक्षिविशेषोमम मानसं निकृन्तन्निव खण्डयन्निव व्योम्नि मुहुः पुनःपुनः प्रदत्तमपि जलं पर्ज्जन्यं मेघं याचते याचिर्द्विकर्म्मकः यतोऽविश्रम्भी अविश्वासशीलः तृषार्त्ता

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कुलत्वात् प्राप्तेऽपि जले जलं याचतइत्यर्थः विकत्थी श्लाघाशीलः कत्थङ्श्लाघे स्त्रम्भुङ्विश्वासे इन्त्यादिः आभ्यां ग्रहादित्वात् णिन् प्रपूर्व्वस्य दाञोग्यचस्त्ववेति तादेशः घृषुबेके इत्यस्यान्यप्रत्यये चव र्गतृतीयोनिपातश्चैणादिकइत्यर्ज्जुनदत्तः छतीप्रपछिदि मुचा दित्वात् नुणरधोमुचामिति नुण्॥ ११॥

प्रलापिनोभविष्यन्ति कदा न्वेतेऽपलापिणः। प्रमा थिनोवियुक्तानां हिंसकाः पापदर्दुराः॥ १२।

प्रलापीत्यादि। एते पापदर्दुराः पापास्ते दर्दुराश्चेत्या ज०म० क्रोशाभिधानं कदा नु अपलापिणोभविष्यन्ति अपलषणशीलाः व्यपगतकामाइत्यर्थः लषकान्तौ अपेचलषइति घिनुण् प्रला पिनः प्रलपनशीलाः प्रमाथिनः प्रमथनशीलाःचेतसामित्यर्थात् प्रेलपेत्यादिना घिनुण् अतएव वियुक्तानां मादृशां हिंसकाः हिंस नशीलाः इत्येवं विललाप निंदहिंसेत्यादिना वुञ्॥ १२॥

प्रलेत्यादि। एते पापदर्दुराः पापिनोभेकाः कदा अपलषण भ० शीलाः व्यपेतकामाभविष्यन्ति तदैव तत्प्रलापननिवृत्त्या दुःखानु त्पत्तिः पापशब्दश्चाक्रोशपूर्व्वककुत्साद्योतनाय प्रयुक्तः प्रलाप करणशीलाः प्रलापोऽनर्थकं वचः वियुक्तानां भार्य्याविरहिणां प्रमाथिनः साधुप्रमथनकारिणः यतोहिंसकाः हिंसाशीलाः लप लषमथिभ्योग्रहादित्वात् णिन् हिंसेः ष्टषकौघे इति ण्कः एवं बिललापेति सम्बन्धनीयमेतत्पर्य्यन्तं॥ १२॥



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



निन्दकोरजनिम्मन्यं दिवसं क्लेशकोनिशां। प्राट्
ष्यनैषीत् काकुत्स्थः कथञ्चित्परिदेवकः ॥ १३ ॥

ज०म० निन्देत्यादि। काकुत्स्थोदिवसं रजनिम्मन्यं रजनीमात्मानं मन्यमानं घनान्धकारित्वात् आत्ममानेखश् खित्यनव्ययस्येति ह्रस्वत्वं निशाञ्च प्रावृषि कथमप्यनैषीत् नीतवान् निन्दकः निन्दनशीलः नक्तंदिनस्येत्यर्थात् क्लेशकः क्लेशनशीलः परिदेवकः परिदेवनशीलः आत्मनइत्यर्थात् ॥ १३ ॥

भ० निन्देत्यादि। काकुत्स्थः प्रावृषि वर्षाकाले कथञ्चित् कथमपि दिवसं निशाञ्च अनैषीत् गमयामास कीदृशः निन्दकः निन्दाशीलः अर्थादात्मनः दिनरात्र्योर्व्वा दिवसं निशाञ्च निन्दकइति ये वदन्ति तन्मते ढघेक्ततीत्यादौ शीलार्थतृन्नित्य च तृन्नित्युपलचणं शीलार्थे णकस्यापि ग्रहणं तेन न षष्ठी क्लेशकः क्लेशशीलः परिदेवकः साधु देवनकारी सन् दिवसं कीदृशं रजनिम्मन्यं आत्मानं रजनिं रात्रिं मन्यमानं तत्तुल्यमिति यावत् घनान्धकारात् णिदिक्लिशिदेविभ्यः तृणकौघे इति णकः ॥ १३ ॥

अथोपशरदेऽपश्यत् क्रौञ्चानाञ्चेष्टनैः कुलैः।
उत्कण्ठावर्द्धनैः शुभ्रं रवणैरम्बरं ततं ॥ १४ ॥

ज०म० अथेत्यादि। अथानन्तरमुपशरदे शरत्समीपइत्यव्ययीभावे शरत्प्रभृतिभ्यइति समासान्तष्टच् तृतीयासप्तम्योर्वहुलमित्यमभावः क्रौञ्चानां कुलैस्ततं व्याप्तमम्बरं शुभ्रं शुक्लमपश्यत् दृष्टवान्

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



चेष्टनैः व्यापारशीलैः रवणैः शब्दनशीलैः अनयोश्चलनशब्दार्थत्वात् चलनशब्देत्यादिना युच् उत्कण्ठावर्द्धनैः उत्कण्ठावर्द्धनशीलैः अनुदात्तेतश्चेति युच् क्रौञ्चइति क्विन्प्रत्ययान्तत्वात् प्रज्ञादित्वादण्॥ १४ ॥

अथेत्यादि। अथानन्तरं उपशरदे शरत्कालस्य समीपे काकुत्स्थोऽम्बरमाकाशमपश्यत् कीदृशं क्रौञ्चानां पक्षिविशेषाणां कुलैः समूहैः ततं व्याप्तं अतएव शुभ्रं धवलं कीदृशैश्चेष्टनैः साधुचेष्टां कुर्व्वद्भिः उत्कण्ठायाभार्य्याविषयिकायावर्द्धनैः वृद्धिशीलैः साधूत्कण्ठावृद्धिकारिभिर्वा रवणैः साधुशब्दं कुर्व्वद्भिः चेष्टवृधिरुभ्योनन्द्यादित्वादनः वृधिरत्र ण्यन्तः शरदोऽव्ययीभावे शरदिपाडयइति अः त्रोप्तेयार्व्वेति पक्षे मप्रवृत्तिः क्रुङेव क्रौञ्चः स्वार्थे ष्णः ॥ १४ ॥ भ०

विलोक्य द्योतनं चन्द्रं लक्ष्मणं शोचनोऽवदत्।
पश्य दंद्रमणान् हंसानरविन्दसमुत्सुकान्॥ १५॥

विलोक्येत्यादि। चन्द्रं विलोक्य द्योतनं साधुद्योतमानं अनुदात्तेतश्चेति युच् शोचनः शोचनशीलः जुचङ्क्रम्येत्यादिना युच् रामो लक्ष्मणमवदत् पश्य हंसान् दन्द्रमणान् शनैर्द्रमणशीलान् द्रमेर्नित्यं कौटिल्यएव भवति नतु क्रियासमभिहारइत्युक्तं तदन्ताद्युच् अतोलोपः यस्यहलः अरविन्दसमुत्सुकान् प्रसितेति सप्तमीं विधाय सप्तमीति योगविभागात्सः॥ १५ ॥ ज०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० विलोक्येत्यादि । चन्द्रं विलोक्य रामो लक्ष्मणमब्रवीत् चन्द्रं कीदृशं द्योतनं द्योतमानं शोचनः शोकशीलो रामः किमुक्तवानि त्याह हंसान् त्वं पश्य कीदृशान् दंद्रमणान् कुटिलगमनशीलान् अरविन्देषु पद्मेषु समुत्सुकान् द्युतशुचयङ्लुगन्तद्रमिभ्यो नन्द्या दित्वादनः विपरीतदिशां देशानां गमनमिह वक्रं ॥ १५ ॥

कपिश्चङ्क्रमणोऽद्यापि नासौ भवति गर्द्धनः । कुर्व्वन्ति कोपनं तारा मण्डनं गगणस्य मां ॥ १६ ॥

ज०म० कपिरित्यादि । नासौ कपिः सुग्रीवोऽद्यापि चङ्क्रमणः शनैर्गम नशीलो न भवति यतो गर्द्धनोऽभिलाषशीलः स्त्रीष्वित्यर्थात् पूर्व्ववद्युच् ताराश्च मां कोपनं कोपनशीलं तद्विषयएव कुर्व्वन्ति कीदृ श्यः गगणस्य मण्डनाभूषणाः क्रुधमण्डार्थेभ्यश्चेति युच् ॥ १६ ॥

भ० कपिरित्यादि । असौ कपिः सुग्रीवोऽद्यापि कुटिलगतिशीलो न भवति नाना दिक्षु गमनं न करोतीत्यर्थः यतो गर्द्धनः अभि लाषशीलः अर्थाद्भोगेषु तारा मां कोपनं कोपशीलं कुर्व्वन्ति तद्विषयइत्यर्थात् कीदृश्यः गगणस्य मण्डनं साधुभूषाकारि ण्यः यङ्लुगन्तक्रमेर्गृधुकुपमण्डिभ्यश्च नन्द्यादित्वादनः वेदाः प्रमाणमित्यादिवत्सामान्योपक्रमान्मण्डनस्य क्लीवत्वमेकत्वञ्च किम्वा मामित्यस्य विशेषणं आकाशवासित्वाद्गगणभूषणं मामि त्यर्थः अहमाकाशवासी सोऽद्यापि गृहे तिष्ठतीति कोपहेतुः ॥ १६ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



नावैत्याप्यायितारं किं कमलानि रविं कपिः।
दीपितारं दिनारम्भे निरस्तध्वान्तसञ्चयं ॥१७॥

नावैत्येत्यादि। किमसौ कपिः रविं नावैति नावगच्छति कमलान्याप्यायितारं साधु वर्द्धयन्तं अनुदात्तेतश्चेति प्राप्ते नयइति प्रतिषिद्धे तृन्नेव भवति ततश्च नलोकेति षष्ठीप्रतिषेधः दिनारम्भे दीपितारं साधु दीप्यमानं पूर्व्ववद्युचि प्राप्ते सूददीपदीक्षेति प्रतिषेधः निरस्तध्वान्तसञ्चयं अपनीतान्धकारसंहतिकं किमसौ शरत्समयं नावैतीत्यर्थः ॥१७॥ ज०म०

नावैत्येत्यादि। किमसौ कपिरीदृशं सूर्य्यं नावैति शरत्कालमागतं किं न जानातीत्यर्थः कीदृशं रविं कमलानि आप्यायितारं पद्मवृद्धिं साधु कुर्व्वन्तं दिनारम्भे दीपितारं साधु दीप्यमानं अपनीतान्धकारसमूहं प्यायिदीपिभ्यां तृन्कौघेइति तृन् तृधेक्षतीत्यादौ शीलार्थस्योपलक्षणत्वान्न कर्म्मणि षष्ठी क्वचिदपवादविषयेऽप्युत्सर्गोऽपि प्रवर्त्ततइति वा द्वितीया ॥१७॥ भ०

अतीते वर्षुके काले प्रमत्तः स्थायुकोगृहे। गामुकोध्रुवमध्वानं सुग्रीवोवालिना गतं ॥१८॥

अतीत्यादि। वर्षुके वर्षणशीले काले अतीतेऽपि गृहे स्थायुकः स्थितिशीलः शरदि नागतत्वात् प्रमत्तः सन् सुग्रीवोवालिना गतं अध्वानं प्राप्तमार्गं ध्रुवमवश्यं गामुकः साधु गन्ता लषपतेत्युकन् नलोकेति षष्ठीप्रतिषेधः ॥१८॥ ज०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० अतीत्यादि। असौ सुग्रीवोवालिना गतमध्वानं यममार्गं ध्रुवं निश्चितं गामुकः साधु गमिष्यति यतः वर्षुके वृष्टिशीले काले अतीतेऽपि गृहे स्थायुकः स्थितिशीलः अतएव प्रमत्तः अनवहितः वृषस्यागमिभ्यः भूस्थाभूकमेति उकः ढघेक्कतीत्यादौ उकवर्ज्जं नात्र कर्म्मणि षष्ठी॥१८॥

जल्पाकीभिः सहासीनः स्त्रीभिः प्रजविना त्वया।
गत्वा लक्ष्मण वक्तव्योजयिना निष्ठुरं वचः॥१९॥

ज०म० जल्पेत्यादि। हे लक्ष्मण त्वया प्रजविना प्रकृष्टगमनशीलेन प्रजोरिनिः जयिना अभिभवनशीलेन जिदृक्षीत्यादिना इनिः सुग्रीवो निष्ठुरं वचोऽभिधातव्यः जल्पाकीभिः जल्पनशीलाभिः स्त्रीभिः सहासीनः जल्पभिक्षेति षाकन् षित्वात् ङीष् तन्मध्ये हि परुषमभिधीयमानः परिभवं मन्यतइति भावः॥१९॥

भ० जल्पेत्यादि। हे लक्ष्मण त्वया गत्वा सुग्रीवोनिष्ठुरं वचोवक्तव्यः कथनीयः सुग्रीवस्य गौणकर्म्मत्वात् गौणेयाचादयइति तत्रैव प्रत्ययः सुग्रीवः कीदृशः जल्पाकीभिर्ज्जल्पनशीलाभिः साधु जल्पन्तीभिर्व्वा स्त्रीभिः सह आसीनः उपविष्टः भिक्षजल्पकुट्टेति षाकः षित्वादीप् यासोऽस्येत्यनेन आसः शानस्य आईत्वं त्वया कीदृशेन प्रजविना प्रकृष्टवेगवता जयिना जययुक्तेन जुजिभ्यामनन्ताभ्यामस्त्यर्थे इन् किम्वा कृत्तद्धितसमासानामभिधानं नियामकमित्युक्तेस्तद्धितण्णादिवत् कृत्प्रत्ययाअपि क्वचित् सेताऽनितस्य

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भवन्ति तेन ग्रहादित्वात् णिनोणकारेत्त्वाविवक्षया वृद्ध्यभावे णु घूङ्इति गुणः परे तु शीलाचारसाधुषु जुजिप्रभृतितइन् वर्त्तमानइत्याङ्गः॥ १९ ॥

शैले विश्रयिणं चिप्रमनादरिणमभ्यमी। न्याय्यं परिभवी ब्रूहि पापमव्यथिनं कपिं॥ २०॥

शैलइत्यादि। कपिं चिप्रं गत्वा ब्रूहि इत्यकथितं कर्म्म न्याय्यं वचइति प्रधानं कर्म्म अस्य चातिस्पष्टार्थत्वादिदं तदिति न सन्दिष्टं अनादरिणमनादरशीलं कपिं कालातिक्रमणात् आङ्पूर्व्वाद्दृङ् अतएव पापं दुराचारं अव्यथिनं निर्भयशीलं नञ्पूर्व्वाव्यथिः शैले विश्रयिणं तत्र स्थितिशीलं विपूर्व्वः श्रयतिः त्वं चाभ्यमी अभिमुखगमनशीलः अभिपूर्व्वोऽमगत्यादिषु परिभवी साधु परिभवं जनयन् परिपूर्व्वोभवतिः अत्र सर्व्वत्र जिदृक्षीत्यादिना इनिः॥ २०॥ जं॰म॰

शैलइत्यादि। त्वं चिप्रमभ्यमी शीघ्रमाभिमुख्येन साधु गतः सन् परिभवी साधु परिभवं कुर्व्वन् न्याय्यं न्यायादनपेतं वचस्त्वं कपिं ब्रूहि कीदृशं कपिं शैले विश्रयिणं स्थितिशीलं अनादरिणं मयि अनादरशीलं पापं दुराचारं यतोऽव्यथिनं निर्दयशीलं श्रिदृश्रमभूव्यथानां प्रजविवत् तथा रूपाणि॥ २०॥ भ॰

स्पृहयालुं कपिं स्त्रीभ्योनिद्रालुमदयालुवत्। श्रद्धालुं भ्रामरं धारुं सद्रुमद्रौ वद द्रुतं॥ २१॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज॰म॰ स्पृहेत्यादि। स्त्रीभ्यः स्पृहयालुं कपिं साधु स्पृहयन्तं स्पृहिः स्वार्थिकण्यन्तोऽदन्तस्य अयामन्तेत्ययादेशः स्पृहेरीप्सितइति सम्प्रदानसंज्ञा द्रुतं वद ब्रूहि अदयालुवत् अदयनशीलइव निद्रालुं निद्राशीलं अस्मत्कार्य्येष्वनवधानत्वात् शयनीयएव सर्व्वदा स्थितत्वात्स्त्रीभिः सह श्रद्धालुं साध्वभिलषन्तं भ्रामरं भ्रमरैः कृतं चुद्राभ्रमरेत्यादिना अञ् मध्वित्यर्थात् नलोकेति षष्ठीप्रतिषेधः स्पृहिगृहीत्यादिना आलुच् श्रद्धालुत्वादेव धारुं साधु पिवन्तं भ्रामरमेव सद्रुं साधु सीदन्तं दाधेट्सिशदसदोरुः ॥ २१ ॥

भ॰ स्पृहेत्यादि। द्रुतं शीघ्रं त्वं कपिं वद विषादे पौनरुक्त्यं न दोषाय अतिदार्ढ्यार्थत्वात् कीदृशं स्त्रीभ्यः स्पृहयालुं स्पृहाशीलं साधु स्पृहयन्तं वा यस्मैदित्सेत्यादिना संप्रदानत्वं अदयावन्तमिव निद्रावन्तं भ्रमरैः कृतं भ्रामरं मधु ढघेकादिति ष्णः तत् धारुं साधु पिवन्तं तथापि तत्र श्रद्धालुं अभिलाषवन्तं एतेन पानासक्ततया प्रमत्तत्वं दर्शितं अद्रौ किष्किन्धापर्व्वते सद्रुं साधु सीदन्तं तिष्ठन्तमित्यर्थः एवं रामोलक्ष्मणमब्रवीदिति पूर्व्वेणान्वयः स्पृह क्लेशे पतिगृहिस्पृहीति आलुः निद्रादयाश्रद्धाशब्देभ्योगोढण मेधेत्यादिना निद्रादित्वादस्त्यर्थे आलुः निपूर्व्वद्राद यश्रत्पूर्व्व धाञ् इत्येतेभ्यः स्पृहयालुवदालुरिति परे धेट्सदिभ्यां शतसत् सिधेदोरुरिति रुः ॥ २१ ॥

ह्रमरोऽभङ्गुरप्रज्ञोगृहीत्वा भासुरं धनुः। विदुरोजित्वरः प्राप लक्ष्मणोगत्वरान् कपीन् ॥ २२ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



सृमेत्यादि। लक्ष्मणः कपीन् प्राप कीदृशः सृमरः साधु गन्ता जं०म० सृघस्यदःक्मरच् भङ्गुरा ये स्वयमेव भज्यन्ते भञ्जभासेति घुरच् तान् प्रजानातीति भङ्गुरप्रज्ञ इति कः विदुरः साधु वेदी विदि भिदिच्छिदेःकुरच् जित्वरः साधु जयशीलः इणनशजीत्यादिना क्वरप् गृहीत्वा धनुर्भासुरं भासनशीलं गत्वरान् गमनशीलान् कपीन् अस्थिरप्रकृतीनित्यर्थः गत्वरश्चेति निपातितं गमेः क्वर प्यनुनासिकलोपः॥ २२॥

सृमेत्यादि। लक्ष्मणो भासुरं दीप्तिशीलं धनुर्गृहीत्वा गत्व भ० रान् अस्थिरप्रकृतीन् तद्भयात् पलायमानान् वा कपीन् प्राप कीदृशः सृमरः साधु सरति गच्छतीति घसस्दः क्मरः भङ्गुरान् स्वयमेव भञ्जनशीलान् अर्थात् कपीन् प्रजानातीति इगुपज्ञाप्रीति कः यद्वा नञः प्रश्लेषात् अभङ्गुरा स्थिरा प्रज्ञा बुद्धिर्यस्य स तथा साधु वेत्तीति विदुरः जित्वरो जयशीलः भञ्जिभासिभ्यां मिङ्गा सभञ्ज इति घुरः कङ्घोःकभाव इत्युक्तेः कर्त्तरि विहितोऽपि घुरो भञ्जेः कर्मकर्त्तरि बोध्यः भज्यते स्वयमेवेति भङ्गुरः चजोःकगा विति गत्वं वेत्तेश्छिद्भिदिद इति कुरः जिगमिभ्यां क्वरप् इजी नित्यादिना क्वरप् मस्य तस्य स्वस्य तन्‌पिति॥ २२॥

तं जागरूकः कार्य्येषु दन्दशूकरिपुं कपिः। अकर्म्मं मारुतिर्दीप्रं नम्रः प्रावेशयद्गुहां॥ २३॥

तञ्जेत्यादि। तं लक्ष्मणं कपिर्मारुतिः गुहां प्रावेशयत् विशे जं०म० र्हेतुमण्यन्तात् लङि रूपं कार्य्येषु कृत्येषु जागरूकः सावधानः



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



जागरूकइति जागर्त्तेरूकः दन्दशूकरिपुं हिंस्रारिं यजजपेत्यादिना दंशेर्यङन्तादूकः लुपसदेत्यादिना यङ् दीप्रं साधु दीप्यमानं अकम्प्रं अकम्पनशीलं अभीरुमित्यर्थः नम्रः साधु प्रह्वीभूतः सर्व्वत्र नमिकम्पीत्यादिना रः॥२३॥

ज॰ तंजेत्यादि। कपिर्म्मारुतिर्हनूमान् तं लक्ष्मणं गुहां किष्किन्धां प्रवेशयामास प्रवेशोऽपि गतिभेदः तेन घोत्रैर्णेः शब्दासनगतीत्यादिना प्रयोज्यकर्त्तुः कर्म्मत्वं गुहेति भिदादित्वात् भीषिचिन्तीत्यादिना ङः स्त्रीत्वञ्च कीदृशोमारुतिः कार्य्येषु जागरूकः साधु सावधानः नम्रः साधु प्रह्वीभूतः तं कीदृशं दन्दशूकानां हिंस्राणां रिपुं अकम्प्रं अकम्पनशीलं निर्भयमित्यर्थः दीप्रं दीप्तिशीलं जागृयङन्तदन्शिभ्यां जागृयङन्तयजेत्यादिना ऊकः दन्शोनलोपो वेति यङलुकि नस्य लोपः नमजपेत्यादिना खेर्नुण् कम्पिदीपिणमिभ्यो हिंसदीपेत्यादिना रः॥२३॥

कम्राभिरावृत्तः स्त्रीभिराशंसुः क्षेममात्मनः। इच्छुः प्रसादं प्रणमन् सुग्रीवं प्रावदन्नृपं॥२४॥

ज॰म॰ कम्रेत्यादि। सुग्रीवः प्रावदन्नृपं लक्ष्मणं स्त्रीभिरावृतः परिवृतः सन् प्रणमन् ताभिः सहेत्यर्थः कम्राभिः कमनशीलाभिः पूर्व्ववद्रः आत्मनः क्षेमं कल्याणमाशंसुः प्रार्थयमानः सनाशंसभिक्षउः नलोकेति षष्ठीप्रतिषेधः इच्छुः प्रसादं प्रसादमिषणशीलः अपि मे स्वामी प्रसन्नः स्यादिति विन्दुरिच्छुरिति निपातनं॥२४॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कम्रेत्यादि। सुग्रीवो नृपं लक्ष्मणं प्रावदत् कम्राभिः कामु भ॰ कीभिः स्त्रीभिः परिवृतः सन् प्रणमन् अर्थात् ताभिः सह पूर्व्व वत् रः आत्मनः क्षेमं कुशलं आशंसुः इच्छुः सन्भिक्षाशंसउः अतएव तस्य प्रसादं इच्छुः साधु इच्छन् विन्दिच्छू इति निपातः ढघेक्कतीत्यादौ उदन्तवर्ज्जनात् न षष्ठी॥ २४॥

अहं स्वप्नक् प्रसादेन तव वन्दारुभिः सह। अभी रुरवसं स्त्रीभिर्भासुराभिरिहेश्वर॥ २५॥

अहमित्यादि। अहं तव प्रसादेन इह गुहायामवसं उषितवान् ज॰म॰ स्वप्नक् निद्रालुः चिन्ताभावात् स्वपितृषोर्नजिङ् वन्दारुभिर्व्वन्द नशीलाभिः सह शृवन्द्योरारुः अभीरुः अभयशीलः भियः क्रुक्लु कनौ भास्वराभिः भासनशीलाभिः ईश्वरः ईशनशीलः स्थेशभा सेति वरच्॥ २५॥

अहमित्यादि। किमुक्तवानित्याह हे ईश्वर तव प्रसादेनाहं भ॰ स्त्रीभिः सह इह गुहायां अवसं उषितवानस्मि अहं कीदृशः स्वप्नक् साधु स्वपन् स्वपतृषगृधधृषोर्नजिङिति नजिङ् अभीरुर्भय हीनः क्रुक्लुकौ भियइति क्रुः कीदृशीभिः स्त्रीभिः वन्दारुभिः प्रणा मशीलाभिः साधु स्तुतिं कुर्व्वाणाभिर्व्वा शृवन्द्यआरुः भास्वराभिः दीप्तिशीलाभिः साधु दीप्यमानाभिर्व्वा भासीशिभ्यां यायायभा स्कसेत्यादिना वरः॥ २५॥

विद्युन्नाशं रवेर्भासं विभ्राजं शशलाञ्छनं। राम प्रत्तेषु भोगेषु नाहमज्ञासिषं रतः॥ २६॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०भ० विद्युदित्यादि। रामप्रत्तेषु रामदत्तेषु भोगेषु रतः सक्तः नाहमज्ञासिषं नाहं ज्ञातवान् लुङि यमरमेत्यादिना सगिटौ विद्युन्नाशं द्योतनशीलाविद्युतः तासां नाशं रवेर्भासः भासनशीलादीप्तीर्व्विभ्राजं साधु दीप्यमानं शशलाञ्छनं चन्द्रं प्रावृडतिक्रान्ता शरदायातेति नाज्ञासिषमित्यर्थः सर्व्वत्र भ्राजभासेति क्विप् ॥ २६ ॥

विद्युदित्यादि। अहं रामेण प्रत्तेषु भोगेषु रतः आसक्तः सन् विद्युतां नाशं सूर्य्यस्य दीप्तिं साधु दीप्यमानं चन्द्रञ्च नाज्ञासिषं न ज्ञातवानस्मि शरदागमनं न ज्ञातवान् गृहे तिष्ठामीति भावः यमरमेति इमसनौ विभ्राजतइति क्विप् ॥ २६ ॥

एषशोकच्छिदोवीरान् प्रभो संप्रति वानरान्।
धरासमुद्रशैलानामन्तगान् प्रहिणोम्यहं ॥ २७॥

इति ताच्छीलिकाः समाप्ताः॥

ज०भ० एषइत्यादि। हे प्रभो एषोऽहं संप्रति वानरान्प्रहिणोमि प्रस्थापयामि कीदृशान् शोकच्छिदः शोकापनोदनशीलान् अन्येभ्योऽपि दृश्यतइति क्विप् वीरान् शूरान् धराशैलसमुद्राणां अन्तं गच्छन्ति ये तानन्तगान् अन्तात्यन्तेति डः धरा पृथ्वी धरासमुद्रशैलानामिति पाठान्तरं अत्र वह्वष्वनियमइति पूर्व्वनिपातः यथा वीणाशंखदुन्दुभयः। इति ताच्छीलिककृतः॥ २७॥

भ० एषइत्यादि। हे प्रभो एषोऽहं संप्रति वानरान् प्रहिणोमि

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



प्रेरयामि सैन्यानयनायेत्यर्थात् कीदृशान् शोकच्छिदः शोकापनोदनशीलान् न्यासुखिति क्विप् वीरान् समर्थान् अतएव पृथिवीसमुद्रपर्व्वतानामप्यन्तगान् अन्तं गच्छन्तीति हनजनादिति डः प्रभवतीति प्रभुः स्वयंशंविसंप्रादिति डुः प्राग्वन्नोणोन्तरदुर्गैरित्यादिना नुविकरणस्य णत्वं इत्येवं सुग्रीवः प्रावदन्नृपमिति पूर्व्वेण सम्बन्धः। इति ताच्छीलिका उक्ताः ॥ २७ ॥

राघवस्य ततः कार्य्यं कारुर्व्वानरपुङ्गवः। सर्व्ववानरसेनानामाश्वागमनमादिशत् ॥ २८ ॥

इतोविशेषाधिकाराभावात् निर्विशेषकृतोदर्शयन्नाह। राघेत्यादि। ततोऽभिधानानन्तरं वानरपुङ्गवः सुग्रीवः सर्व्ववानरसेनानामाशु शीघ्रमागमनमादिशत् आदिष्टवान् पुमांश्चासौ गौश्चेति गोरतद्धितलुकीति समासान्तष्टच् व्युत्पत्तिमात्रमेतत् पुङ्गवशब्दस्तु प्रधानमाचष्टे कारुः करोतीति उणादयो बहुलमिति औणादिकः कृपावाजीत्यादिना उण् एवमाशु कस्य कर्त्तेत्याह राघवस्य कार्य्यं ॥ २८ ॥ ज० म०

संप्रति निर्विशेषाः कृतउच्यन्ते राघवेत्यादि। तत्कथानन्तरं वानरश्रेष्ठः सुग्रीवः सर्व्वासां वानरसेनानां आशु शीघ्रं आगमनं आदिशत् आज्ञापयामास नाम्नयन्येतिकेति गमेर्डीः पुमांश्चासौ गौश्चेति गोरतार्थे इति षः व्युत्पत्तिमात्रमिदं पुङ्गवशब्दस्तूत्तरपदे प्रधानार्थः कीदृशः राघवस्य कार्य्यं कारुः भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कर्त्ता अभिधानात् नाम्न्यन्येतिकेत्यस्य क्वचिदसंज्ञायामपि प्रवृ त्तिरिति तेन उण् रधिगताविव्यस्मात् पूर्व्वेण उक् नञा निर्द्दिष्ट स्यानित्यत्वात् नेदित्पूजार्थाञ्चोरित्यस्याप्रवृत्तेर्हसुङ्नलोपः त स्यापत्यमिति ष्णः अभूङव्याप्तौ उण् आभ्रु॥ २८॥

वयमद्यैव गच्छामोरामं द्रष्टुं त्वरान्विताः। कार कामित्रकार्य्याणि सीतालाभाय सोऽब्रवीत्॥ २९॥

ज॰म॰ वयमित्यादि। आगमनमादिश्य सुग्रीवोऽब्रवीत् उक्तवान् वय मद्यैव गच्छामइति रामं द्रष्टुं रामं द्रच्यामइति त्वरान्विताः त्वरिताइत्यर्थः कीदृशावयं सीतालाभाय सीतां प्राप्स्यामइति कारकामित्रकार्य्याणि रावणवधादेः कार्य्यस्य कर्त्तारो भवि ष्यामइति गच्छामइति क्रियायां क्रियार्थायामुपपदे तुमन्ण्वुलौ भविष्यति काले स्यातां मित्रकार्य्याणीति अकेनोर्भविष्यदाधमर्ण्ये योरिति षष्ठीप्रतिषेधे द्वितीयैव स्यात् सीतालाभायेति भाववचना चेति क्रियायां क्रियार्थायामुपपदे भविष्यति घञ् तुमर्थाच्च भाववचनादिति चतुर्थी॥ २९॥

॰भ वयमित्यादि। आगमनमादिश्य ससुग्रीवइदमब्रवीत् आदि ष्टवान् कपीनित्यर्थात् किमुक्तवानित्याह वयमद्यैव रामं द्रष्टुं गच्छामः अद्यैवेत्यनेन तानरानयनमद्यैव कार्य्यमिति त्वरा सू चिता वक्तृत्वं सेनासाहित्यात् सीतालाभाय त्वरायुक्ताः तादर्थ्ये चतुर्थी मित्रस्य रामस्य कार्य्याणि रावणवधादीनि कारकाः

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कर्त्तारः क्वचिदपवादविषयेऽप्युत्सर्गोऽपि प्रवर्त्ततइति षष्ठीविषये द्वितीया ॥ २९ ॥

ततः कपीनां संघाताहर्षाद्राघवभूतये। पूरयन्तः समाजग्मुर्भयदाया दिशो दश ॥ ३० ॥

ततइत्यादि। आदेशादनन्तरं कपीनां संघाताः समाजग्मुः हर्षात् हर्षेण आदेशादानमेव हर्षहेतुः राघवभूतये अपि नाम राघवस्य संपत्स्यादिति समाजग्मुरित्यस्यां क्रियायां क्रियार्थाया मुपपदे भाववचनाच्चेति भविष्यति क्तिन् चतुर्थी इच पूर्व्ववत् पूरयन्तोव्याप्नुवन्तः दश दिशः भयदायाः भयं दास्यामइत्यस्यां क्रियायामुपपदे अण्कर्म्मणिचेत्यण् आतोयुक्॥ ३० ॥ ज॰म॰

ततइत्यादि। ततआदेशात् कपीनां संघाताः समूहा दश दिशः पूरयन्तो व्याप्नुवन्तो राघवस्य भूतये सम्पत्त्यर्थं हर्षादाजग्मुः किष्किन्धायामित्यर्थात् भयदायाः शत्रुभ्योभयं ददातीति मित्राणां भयं द्यन्ति खण्डयन्तीति वा स्वसव्यधेनतनदेति णः यन ञ्चिदिति यन्॥ ३० ॥ भ॰

सुग्रीवान्तिकमासेदुः साधयिष्यामइत्यरिं। करिष्यन्तइवाकस्माद्भुवनं निर्द्दशाननं ॥ ३१ ॥

सुग्रीत्यादि। अरिं शत्रुं सादयिष्यामोव्यापादयिष्यामइति सुग्रीवान्तिकमासेदुः आगताः लृट्शेषेचेति चकारात् क्रियार्थायामुपपदे भविष्यति लृट् आसेदुरिति क्रिया क्रियार्था अकस्मा ज॰म॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



दतर्कितं भुवनत्रयं निर्दशाननं रावणरहितं करिष्यन्तइव तथा विधमहासंरम्भदर्शनादुत्प्रेच्यते लृट् शेषे चेति लृट् अत्र क्रियायां क्रियार्थायां अन्यः शुद्धो भविष्यत्कालः शेषः॥ ३१॥

भ० सुग्रीवेत्यादि। वयमरिं साधयिष्यामः व्यापादयिष्याम इति एतदर्थं सुग्रीवस्यान्तिकं समीपमासेदुरागताः कपीनां संघाता इत्यनुषज्यते अकस्मादतर्कितं यथा स्यात्तथा भुवनं रावणशून्यं करिष्यन्तइव महापराक्रमदर्शनादुत्प्रेचेयं॥ ३१॥

कर्त्तास्मि कार्य्यमायातैरेभिरित्यवगम्य सः। काकुत्स्थपादपच्छायां शीतस्पर्शामुपागमत्॥ ३२॥

ज०म० कर्त्तेत्यादि। एभिरायातैर्वानरैः कार्य्यं सीतान्वेषणादि कर्तास्मि करिष्यामीति अवगम्य अनद्यतने भविष्यति लुट् सुग्रीवः काकुत्स्थपादपछायामुपागमत् पद्यन्तइति पादाः पदरुजेति कर्त्तरि घञ् तत्र भविष्यतीति निवृत्तं पादैः पिवतीति पादपो वृक्षः आतोऽनुपसर्गेकः काकुत्स्थः पादपइव समाश्रयणीय त्वात् तस्य छायां शीतस्पर्शां अनुद्वेजनकरीं स्पृश्यतइति स्पर्श स्तन्मात्रउच्यते अकर्त्तरि चेति घञ् ननु पदरुजेत्यादिना तत्र हि स्पृशउपतापइति वक्तव्यमित्युक्तं स्पृशतीति स्पर्शउपतापः॥ ३२॥

भ० कर्त्तेत्यादि। आगतैरेभिर्वानरैरहं कार्य्यं सीतान्वेषणादिरूपं कर्त्तास्मि करिष्यामि ध्रुवं रूपं इत्यवगम्य निश्चित्य सुग्रीवः काकुत्स्थपादपछायामुपागमत् रामान्तिकं गतवानित्यर्थः शीत

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



स्पर्शा दुःखहन्त्रीमित्यर्थः पद्यतइति कर्त्तरि घञ् पादोमूलं तेनपिबति सेकजलमिति पादपोवृक्षः छाया स्यादातपाभावे शोभा यामपि दृश्यते। अत्र लक्षणया समीपदेशवृत्तिः ॥ ३२ ॥

कार्य्यसारनिभं दृष्ट्वा वानराणां समागमं। अवै न्नाशं दशास्यस्य निर्वृत्तमिव राघवः ॥ ३३ ॥

इति निरधिकारकृत्।

कार्य्येत्यादि। राघवोवानराणां समागमं दृष्ट्वा कार्य्यसारनिभं सीतालाभतुल्यं सरति कालान्तरे तिष्ठतीति कर्त्तरि कारके संज्ञायामिति(?) घञ् दशास्यस्य रावणस्य नाशं विनाशं निर्वृत्तमिव निष्पन्नमिव अवैत् ज्ञातवान् अवपूर्व्वादिणो लङि रूपं। इति निरधिकाराः कृतः ॥ ३३ ॥ ज०म०

कार्य्येत्यादि। वानराणां समागमं दृष्ट्वा राघवोदशास्यस्य नाशं निर्वृत्तं निष्पन्नमिव अवैत् ज्ञातवान् अवपूर्व्वादिनो घ्या दिप्कोदृशं समागमं कार्य्यसारस्य सीतालाभस्य तुल्यं सरति कालान्तरमिति सारः कर्त्तरि घञ् नशेर्भावे घञ्। इति निरधि काराः कृतउक्ताः ॥ ३३ ॥ भ०

अतः परं घञधिकारः।

ततः कपिसमाचारमेकं निश्चायमागतं। उपाध्या यइवायामं सुग्रीवोऽध्यापिपद्दिशां ॥ ३४ ॥



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० अतःपरं भावे कर्त्तरि च कारकइत्यधिकृत्य कृदुच्यते। तत इत्यादि कपिसमागमनानन्तरं सुग्रीवः कपिसमाहारं कपिसमूहं दिशामायाममध्यापिपत् बोधितवान् अमुका अमुका दिक् ईदृशीति गतिबुद्धीत्यादिना समाहारस्य कर्म्मसंज्ञा आयामपरिज्ञानञ्चास्य वालिभयाद्दूरपरिभ्रमणात् एकनिश्रायमागतं एकराशितां प्राप्तं आयाममित्यर्थः निश्रायमिति परिमाणाख्यायामिति घञ् पश्चादेकशब्देन पूर्व्वकालैकेति सः कइव उपाध्यायइति उपेत्याधीयते अस्मादिति इङश्चेति घञ्॥ ३४॥

भ० अथाकर्त्तरि कारके कृतउच्यन्ते। ततइत्यादि कपिसमागमानन्तरं सुग्रीवः कपीनां समाहारं समूहं दिशामायामं दैर्घ्यं अध्यापिपत् अध्यापितवान् अस्यां दिशि एतत्पर्य्यन्तं गन्तव्यमिति ज्ञापितवान् आयामज्ञानञ्चास्य वालिभयेन दूरभ्रमणात् घोऽञोऽःशब्दाशनगतिज्ञेत्यादिना समाहारस्य प्रयोज्यस्य कर्म्मत्वं क्रीजीङोऽजेति इङ आत्वं ह्रीलीत्यादिना पण् उपाध्यायइव यथा गुरुरध्यापयति तथेत्यर्थः उपेत्याधीयतेऽस्मादिति घञलनटौऽघे इति घञ् कीदृशमायामं एकं निश्रायं ज्ञानं आगतं प्राप्तं अत्यभ्यासात् सर्व्वासां दिशां दैर्घ्यं सुग्रीवस्य ज्ञानारूढमित्यर्थः पूर्व्वेण घञ् एकोनिश्रायोनिश्चयोयस्येति कपिसमाहारस्य विशेषणं वा एतेनैकवाक्यता दर्शिता एवमागतं यमेर्घञि जनवधइत्यादिना पचे वृद्ध्यभावः॥ ३४॥

सजलाम्भोदसंरावं हनूमन्तं सहाङ्गदं। जाम्ववन्नीलसहितं चारुसंद्रावमब्रवीत्॥ ३५॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



सजेत्यादि। सुग्रीवो हनूमन्तमब्रवीत् सजलाम्भोदसंरावं स जलमेघस्येव संरावो यस्य हनूमतः उपसर्गेरुवइति घञ् सहाङ्गदं अङ्गदसहितं तथा जाम्बवं ऋक्षाधिपतिं नीलसहितमब्रवीत् जाम्बवशब्दोऽकारान्तोऽङ्गस्त्व्यः चारुसङ्गावं चारुगतिं समियुदुद्रुवइति घञ्॥ ३५॥ ज॰म॰

सजेत्यादि। सुग्रीवो हनूमन्तमब्रवीत् सजलस्य मेघस्येव संरावः शब्दो यस्य तं अतिगम्भीरस्वनमित्यर्थः पूर्व्वेण घञ् उपसर्गाद्रुवइति परः अङ्गदेन सह विद्यमानं जाम्बवता नीलेन च सहितं नीलसहितं जाम्बवञ्चाब्रवीदिति वा जाम्बवान् जाम्बवोऽपिचेति विश्वः चारुसंद्रावं मनोहरगतिं पूर्व्वेण घञ् समत्येभ्योद्रुवइति परः॥ ३५॥ भ॰

यात यूयं यमश्रायं दिशं नायेन दक्षिणां। विक्षावैस्तोयविश्रावं तर्ज्जयन्तो महोदधेः॥ ३६॥

यातेत्यादि। यूयं यात गच्छत यमश्रायं यमस्थानं अयत्येनमिति श्रिणीभुवोनुऽपसर्गइति घञ् कर्म्मणि कां दक्षिणां दिशं सामान्याभिधानाद्विशेषाभिधानं नायेन नीत्या सामादिना नीयतेऽनेनेति पूर्व्ववत्करण घञ् महोदधेस्तोयविश्रावं तोयध्वनिं तर्जयन्तोन्यक् कुर्व्वाणाः कैः विक्षावैः स्वैः शब्दैः उभयत्रापि वौ क्षुश्रुवइति कर्म्मणि घञ्॥ ३६॥ ज॰म॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० यातेत्यादि। यूयं दक्षिणां दिशं यात गच्छत यमस्यायं यमस्थानं अयत्येनमिति घञ् सामान्यविशेषभावात् पौनरुक्त्यभावः यमस्थानं न गन्तव्यमित्याशयो वा नायेन नीत्या सामदानादिना उपलक्षिता यूयमित्यर्थः करणत्वविवक्षा वा णीञः करणे घञ् महोदधेस्तोयस्य विरावं शब्दं विरावैः स्वीयशब्दैस्तर्ज्जयन्तः न्यक्कुर्व्वन्तः क्षुक्षुभ्यां घञ्॥ ३६॥

उन्नायानधिगच्छन्तः प्रद्रावैर्व्वसुधाभृतां। वनाभिलावान् कुर्व्वन्तः स्वेच्छया चारुविक्रमाः॥ ३७॥

ज०म० उन्नेत्यादि। वसुधाभृतां पर्व्वतानां उन्नायानुच्चयानुच्चलान्यधिगच्छन्तः जानन्तः अवोदोर्नियइति भावे घञ् कैः प्रद्रावैः प्रकृष्टगतिभिः प्रेद्रुस्तुस्रुवइति घञ् वनाभिलावान् वनविध्वंसान् निरभ्योःपूल्वोरिति भावे घञ् स्वेच्छया कुर्व्वन्तः चारुविक्रमाः असाधारणपराक्रमाः यात यूयमिति सम्बन्धः॥ ६७॥

भ० उन्नेत्यादि। प्रद्रावैः प्रकृष्टगमनैर्व्वसुधाभृतां पर्व्वतानां उन्नायान् उच्छ्रितलानि अधिगच्छन्तोजानन्तः यूयं यातेति पूर्व्वेणान्वयः वनाभिलावान् अरण्यविध्वंसान् स्वेच्छया कुर्व्वन्तः चारुविक्रमाः असाधारणशौर्य्याः उत्पूर्व्वणीञः प्रपूर्व्वद्रोरभिपूर्व्वलूञश्च भावे घञ्॥ ३७॥

सदोद्गारसुगन्धीनां फलानामलमाशिताः। उत्कारेषु च धान्यानामनभीष्टपरिग्रहाः॥ ३८॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



सदेत्यादि। सदा सर्व्वदा उद्गारे भक्षणानन्तरं श्वसनपूर्व्वके शब्दोच्चारणे यानि सुगन्धीनि फलानि तेषामलं पर्य्याप्तमाश्रिताः तृप्ताः गृशब्दइत्यस्मादुत्पूर्व्वादुन्योर्ग्रइति घञ् आङ्पूर्व्वादस्माते रादिकर्म्मणि क्तः कर्त्तरिचेति कर्त्तरि क्तः क्तप्रयोगे कर्म्मणि षष्ठी नलोकेति निषिद्धातः शेषषष्ठी उत्कारेषु च राशिषु धान्यानां क्षविक्षेपइत्यस्मादुत्पूर्व्वात् क्षधान्यइति कर्म्मणि घञ् अनभीष्ट परिग्रहाः अनभिलाषुकाइत्यर्थः॥ ३८॥ ज॰म॰

सदेत्यादि। सर्व्वदा उद्गारे सुगन्धिभिः फलैरलमत्यर्थं आश्रिताः तृप्ताः यूयं यातेति सम्बन्धः अशभोजनइत्यस्य आङ् पूर्व्वस्य तृप्त्यर्थेनाकर्म्मकत्वात् गत्यर्थाढेत्यादिना कर्त्तरि क्तः शीलादित्वात् वर्त्तमानेक्तइत्यन्ये तृप्त्यर्थानांवेति अधिकरणे षष्ठी उत्पूर्व्वात् गृशनिगरणे इत्यस्मात् गृगिशब्देइत्यस्माद्वा घञ् यद्युक्तं सदुद्गारेऽपि सुगन्धिं प्रकाशयति तदुद्गारसुगन्धि उद्गारः परिणामइत्यन्ये धान्यानामुत्कारेषु राशिषु अनभीष्टः परिग्रहोयेषां ते धान्यानभिलाषुकाइत्यर्थः किर आधारे घञ् किरो धान्ये इति परसूत्रं॥ ३८॥ भ॰

**संस्तावमिव शृण्वन्तश्छन्दोगानां महाध्वरे। शिञ्जितं मधुलेहानां पुष्पप्रस्तारशायिनां॥ ३९॥**

संस्तेत्यादि। मधुलेहानां भ्रमराणां पुष्पप्रस्तारशायिनां प्रस्तो ऽयज्ञइति घञ् शिञ्जितं शब्दं शृण्वन्तः यूयं यात छन्दोगानां ज॰म॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



महाध्वरे संस्तावमिव संभूयस्तवनमिव पाठध्वनिविशेषमिव वा यज्ञे समिस्तुवद्दति घञ्॥ ३९॥

भ॰ संस्तेत्यादि। मधुलेहानां भ्रमराणां शिञ्जितं शब्दं शृण्वन्तोयूयं यातेति सम्बन्धः यद्यपि भूषणानाञ्च शिञ्जितमित्यमरेणोक्तं तथापि शिजिरव्यक्ते शब्दे इतिधात्वर्थमात्रे तात्पर्य्यं छन्दोगानां वेदविदां महायज्ञे संस्तावमिव सम्यक्स्तवनमिव भावे घञ् पुष्पाणां प्रस्तारे समूहे शायिनां स्थितानां प्रपूर्व्वस्तृञो घञ्॥ ३९॥

आलोचयन्तो विस्तारमम्भसां दक्षिणोदधेः। स्वादयन्तः फलरसं मुष्टिसंग्राहपीडितं॥ ४०॥

ज॰म॰ आलोचेत्यादि। दक्षिणोदधेरम्भसां विस्तारं विस्तीर्णतां विपूर्व्वात् स्तृणातेः प्रथनेवावशब्दइति घञ् आलोचयन्तोनिरूपयन्तः इयानस्य विस्तारइति फलरसमास्वादयन्तः मुष्टिसंग्राहपीडितं मुष्टेः संग्राहेण हस्तेन पीडितं ग्रहेः शमिमुष्टाविति घञ् भावे मुष्टिविषये व्युत्पादितत्वात् मुष्टिग्रहणमभिव्यक्तार्थं ज्ञातव्यं॥ ४०॥

भ॰ आलोचेत्यादि। दक्षिणोदधेरम्भसां विस्तारं विस्तीर्णतां आलोचयन्तो निरूपयन्तो यूयं यातेति सम्बन्धः स्तृञोभावे घञ् मुष्टिसंग्राहेण मुष्टिबन्धेन पीडितं फलरसं आस्वादयन्तः यद्यपि संग्राहोमुष्टिबन्धइत्यमरमाला तथापि मुष्टिग्रहणमत्राभिव्यक्तार्थं संग्राहोमुष्टिरिष्यतइति हलायुधवाक्यादन्यत्रापि प्रवृत्तिदर्शनाद्वा॥ ४०॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



## कुलकं।

**न्याय्यं यद्यच्च तत्कार्य्यं पर्य्यायेणाविरोधिभिः। निशो पशायः कर्त्तव्यः फलोच्चायश्च संहतैः॥ ४१॥**

न्याय्यमित्यादि। यद्यच्च न्यायादनपेतं तत्कार्य्यमविरोधिभिर्यु ज०भ० ष्माभिः परिन्योनिण्योरिति घञ् पदार्थानामनपचारेणेत्यर्थः व्युपयोःशेतेःपर्य्यायइति घञ् पर्य्यायेण परिपाट्या परावनुपा त्ययइण इति भावे घञ् अनुपात्ययः पर्य्यायः निशोपशायः कर्त्तव्यः युष्माभिर्निशायामुपशायः पर्य्यायशयनं कर्त्तव्यं व्युपयोः शेतेःपर्य्यायइति घञ् फलोच्चायश्च संहतैः युष्माभिः कर्त्तव्यः हस्तादानइति घञ् हस्तादानंचादेयस्य प्रत्यासत्तिः॥ ४१॥

न्याय्यमित्यादि। यच्चयत्न्याय्यं न्यायादनपेतं तच्च तत्कार्य्यं भ० अविरोधिभिर्युष्माभिः पर्य्यायेण परिपाट्या क्रमेणेति यावत् नि शोपशायः निशायां शयनक्रिया कर्त्तव्या संहतैर्मिलितैः सद्भिः फलोच्चायः फलादानं कर्त्तव्यः वने हिंस्रादिभयान्मिलितैरेव गन्तव्यमिति भावः निपूर्व्वात्परिपूर्व्वाच्चेणउपपूर्व्वात् शीङःउत्पू र्व्वाच्चेश्च घञ् न्यायशब्दात् ढघेकादिति ष्यञः॥ ४१॥

**सीता रक्षोनिकायेषु स्तोककायैश्छलेन च। मृग्या शत्रुनिकायानां व्यावहासीमनाश्रितैः॥ ४२॥**

सीतेत्यादि। छलेन युष्माभिः सीता मृग्या रक्षोनिकायेषु ज०म० निवासेषु निवसन्त्यस्मिन्निति अधिकरणे निवासचित्तीत्यादिना घञ् आदेश्च ककारः स्तोककायैर्युष्माभिः चिन्वन्त्यस्माच्छुभमिति

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कायः शरीरे घञ् शत्रुनिकायानां अरिसमूहानां निचीयतइति निकायः संघेचानौत्तराधर्य्यइति कर्म्मणि घञ् आदेश्च ककारः तेषां सम्बन्धिनीं व्यावहासीं परस्परहसनं अनाश्रितैः व्यवपूर्व्वाद्धसेः कर्म्मव्यतीहारेणच्स्त्रियामिति स्त्रीलिङ्गे भावे णचं विधाय णचः स्त्रियामञ् न कर्म्मव्यतीहारइति वृद्धिप्रतिषेधः॥ ४२॥

भ० सीतेत्यादि। युष्माभिः स्तोककायैः स्वल्पदेहैः सद्भिः रक्षोनिकायेषु राक्षसनिवासेषु सीता मृग्या अन्वेषणीया च्छलेन न तु प्रकटेन मृगत्कङ्मार्गणे शत्रुनिकायानां शत्रुसमूहानां व्यावहासीं परस्परहसनं अनाश्रितैः उपहसतोऽपि शत्रोरुपहासं कार्य्यसिद्ध्यर्थमकुर्व्वद्भिरित्यर्थः व्यावहासी परस्परविचारणेति केचित् निचीयतेऽस्मिन्निति निकायोनिवासः समूहश्च चीयते सुखदुःखार्थमिति कायोदेहः स्वदैधावोदेत्यादिना घञि कायनिकायौ निपातितौ व्यवपूर्व्वहसेोव्यतीहारे णन् मूर्द्धन्यणकारइद्दृद्ध्यर्थः दन्त्यनकारस्तु स्वोर्युम्दान्तेइत्यादौ स्वध्वरणनइति चिन्त्यार्थः णनन्तात् स्वार्थेष्णः षिलात् स्त्रियामीप्॥ ४२॥

संराविणं न कर्त्तव्यं यावन्नायाति दर्शनं। संदृष्टायान्तु वैदेह्यां निग्राहो वोऽर्थवानरैः॥ ४३॥

ज०म० सांराविणमित्यादि। संरावणमभिव्याप्त्या भाषणं न कर्त्तव्यं युष्माभिः यावन्नायाति दर्शनं सीतायाइत्यर्थात् संपूर्व्वाद्रौतेरभिविधौ भावइत्युन् तदन्तादणि नुण् इत्यण् तस्मिन्निनणनपत्य

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



इति प्रकृतिभावः यस्मात्संदृष्टायां चैतस्यां वैदेह्यां अरेर्निग्राहः आक्रोशोऽभिभवलक्षणः वोयुष्माकमर्थवान् आक्रोशेऽवन्योर्ग्रह इति भावे घञ् ॥ ४३ ॥

सामित्यादि। यावद्दोदर्शनं नायाति न प्राप्नोति अर्थात् भ० सीता कर्त्री तावद्युष्माभिः सांराविणं अभिव्याप्य भाषणं कोलाहलरूपं न कर्त्तव्यं संपूर्व्वरलध्वनौ व्याप्तौ भावे णिन् णिनन्तात् स्वार्थेष्णः मन्वर्ज्जान्वर्म्मोचस्येनइत्यादिना संयोगात्परस्य इनन्तस्यापत्यष्णे नकारलोपाभावउक्तस्तेन असंयोगात् परस्य इनन्तस्यापत्यष्णे नकारलोपः स्यान्नत्वपत्यष्णे इति प्राप्तं तेनात्र नलोपाभावः देवीदासचक्रवर्त्ती तु णिनप्रत्ययोऽकारान्तः णिनन्तादित्यत्र णिनान्तादिति पाठइत्याह हि यस्मात् सम्यग्दृष्टायामेव वैदेह्यां अरेर्निग्राहआक्रोशोऽभिभवोवा युष्माकं स्वार्थको भवति ग्रहेर्भावे घञ् ॥ ४३ ॥

प्रग्राहैरिव पात्राणामन्वेष्या मैथिली कृतैः। ज्ञातव्या चेङ्गितैर्धर्म्यैर्ध्यायन्ती राघवागमं ॥ ४४ ॥

प्रग्रेत्यादि। पात्राणां भिक्षाभाजनानां प्रग्राहैरिव कृतैरन्वे ज०म० ष्या मैथिली भिक्षुकवेशैरिव युष्माभिरित्यर्थः ग्रहेः प्रेलिप्सायामिति भावे घञ् कर्म्मणि षष्ठी इङ्गितैर्धर्म्यैः चेष्टितैः कुलाङ्गनोचितैः ज्ञातव्या सा ध्यायन्ती रामागमं कुलाङ्गना ह प्रोषितभर्तृका सर्व्वदा भर्तुरागमनं ध्यायति ॥ ४४ ॥



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



०भ  प्रग्रेत्यादि। पात्राणां भिक्षाभाजनानां प्रग्राहैरिव प्रग्रहणै रिव कृतैर्भवद्भिः सीताऽन्वेष्या भिक्षुवेशैरपीत्यर्थः इवार्थोऽत्र सम्भावना प्राङ्ग्रहेर्भावे घञ् कथं सा ज्ञेयेत्याह धर्म्यैर्धर्म्मादनपे तैरिङ्गितैश्चेष्टितैर्ज्ञातव्या राक्षसगृहे ऽन्यस्यास्तादृशधर्म्मासम्भवात् कीदृशी राघवागमनं चिन्तयन्ती असाधारणं चिह्नमेतत् कुलस्त्री सदा स्वामिनः समागमं ध्यायति स्वधर्म्मञ्च न त्यज तीति भावः॥ ४४॥

वेदिवत्सपरिग्राह्या यज्ञियैः संस्कृता द्विजैः। दृश्या मासतमादह्नः प्रागनिन्दितवेशभृत्॥ ४५॥

ज०म०  वेदीत्यादि। यथा यज्ञियैर्यज्ञकर्म्मार्हैः द्विजैः ब्राह्मणैः वेदिः यज्ञस्थली सपरिग्राह्या परिगृहीता संस्कृता तथा साऽपि अति पवित्रत्वात् ग्रहेःपरौयज्ञइति यज्ञविषये घञ् मासतमादह्नः प्राग्दृश्या दर्शनार्हा मासस्य पूरणं यदहः नित्यंशतादिमासेत्या दिना तमडागमः अस्मादेव निपातनात् मासस्यासंख्यावाचित्वे डट् मासतमेऽह्नीति हेतुं दर्शयन्नाह तस्याः पूतत्वात्तदृदनिन्दि तवेशभृत् मैथिली मङ्गलमात्राभरणा दर्शनार्हा तां द्रष्टुं भवतां न चिरकालोभवतीति मासावधिना प्रेषिताः॥ ४५॥

भ०  वेदीत्यादि। मासतमात् मासपूरणादह्नः प्राक् सीता युष्माभि र्द्रष्टा मासावधिनैव भवन्तः प्रेष्यन्ते चिरकालो न कर्त्तव्यइति दृशेश्चदुङत्वात् दृभृजुषेत्यादिना क्यप् मासशब्दात् शतादिमास सम्वत्सरादिति पूरणे तमट् कीदृशी अनिन्दितवेशभृत् मङ्गल

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



मात्राभरणसत्त्वात् यथा यज्ञियैर्यज्ञकर्म्मार्हैर्द्विजैः सपरिग्राहा परिगृहीता वेदिस्तैः संस्कृता तथा सापि अतिपवित्रत्वात् पुरोहितैः संस्कृतत्वाच्च परेर्ग्रहोघञ् यज्ञविषये परेर्ग्रहो घञिति परः ढघेकादिति यज्ञशब्दात् अर्हतीत्यर्थे इयः ॥ ४५ ॥

नीवारफलमूलाशानृषीनप्यतिशेरते। यस्या गुणा निरुद्रावास्तां द्रुतं यात पश्यत ॥ ४६ ॥

नीवेत्यादि। यस्या गुणा ब्रह्मचर्य्यादयः ऋषीनप्यतिशेरते न्यक्कुर्व्वते तां द्रुतं यात पश्यत तत्र नीवारः अकृष्टपच्यधान्यं नीवृधान्य इति घञ् उपसर्गस्य घञीति दीर्घत्वं फलं मोचादि मूलं शालूकादि एतान्यश्नन्ति ये ऋषयः कीदृशा गुणाः निरुद्रावाः स्थिराः उदिश्रयतीति घञ् ॥ ४६ ॥ ज०म०

नीवारेत्यादि। यस्याः सीताया गुणाः शमदमादयोमुनीनपि अतिशेरते न्यक्कुर्व्वन्ति शीङ् अतिपूर्व्वः अतिक्रमे सकर्म्मकः स्वभावात् कीदृशाः निरुद्रावाः स्थिराः उत्पूर्व्वाद्द्रवतेर्घञ् कीदृशान् नीवारं तृणधान्यं फलमामलक्यादि मूलं शालूकादि अश्नतः तां यूयं द्रुतं पश्यत यात च निपूर्व्वात् वृञोघञ् अभिधानात् क्वचिदुपसर्गस्य घञन्ते दीर्घइति व्रतीहारइति दीर्घनिर्द्देशेन ज्ञापितं तेनैव दीर्घत्वं अतएवेदितानुण् अतएव पं इत्यादिवचनात् ज्ञापकेन कार्य्यसिद्धिः स्वयमेवोक्ता तृणधान्यानि नीवाराइत्यमरः इति सुग्रीवोऽब्रवीदित्यन्वयः ॥ ४६ ॥ भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



उच्छ्रायवान् घनारावोवानरं जलदारवं। दूरा
स्रावं हनूमन्तं रामः प्रोचे गजास्रवः ॥ ४७॥

ज०म० उच्चेत्यादि। रामोहनूमन्तं प्रोचे कीदृशः उच्छ्रायवानुन्नति
युक्तः पूर्ववद्घञ् घनस्येवारावोयस्य विभाषाङिरुसुवोरिति भावे
घञ् गजास्रवः गजगमनः पचे पूर्ववदप् कीदृशं दूरास्रावं दूरमा
स्रावउद्गमनं यस्य पूर्ववत् घञ्॥ ४७॥

भ० उच्चेत्यादि। रामोहनूमन्तं वानरं प्रोचे कीदृशः उच्छ्राय
वान् उन्नतिमान् महापुरुषलक्षणमेतत् उत्पूर्वात् श्रिञोघञ्
घनस्येवारावोध्वनिर्यस्य सतथा गजास्रवोगजगमनः वानरं
कीदृशं जलदारवं मेघशब्दं दूरास्रावं दूरदेशउत्प्लुतिकारिणं
आङ्पूर्वाभ्यां रुस्रुभ्यां घञलौ॥ ४७॥

अवग्राहे यथा वृष्टिं प्रार्थयन्ते कृषीवलाः। प्रार्थय
ध्वं तथा सीतां यात सुग्रीवशासनात्॥ ४८॥

ज०म० अवेत्यादि। अवग्रहोवर्षप्रतिबन्धः अवेग्रहइति पचे अप् यथा
अवग्रहे कृषीवलावृष्टिं प्रार्थयन्ते तथा प्रार्थयध्वं सीतां यूयं तस्या
दुर्लभत्वादत्यन्तादरणीयत्वाच्च यात सुग्रीवशासनात्॥ ४८॥

भ० अवेत्यादि। कृषीवलाः कृषकायथा अवग्राहे वृष्टिप्रतिबन्धे
वृष्टिं प्रार्थयन्ते तथा यूयं सीतां प्रार्थयध्वं अतिदुर्लभत्वात् यात
सुग्रीवशासनात् न तु मयाज्ञा क्रियतइति भावः गौरवख्यापना
यैकत्वेऽपि वहुत्वं लोकात् अन्यसहितत्वाद्वा अर्थत्कङ्याचने

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



श्वादृष्टिप्रतिबन्धे ग्रहोघञलादिति परः स्वमते घञलनटोऽघे इत्यस्य सर्व्वविषयत्वात् क्वचिग्रब्दात् गोदणमेघेति वलः नान्यस्त्वर्थैऽचोर्घः ॥ ४८ ॥

वणिक् प्रग्राहवान् यद्वत् काले चरति सिद्धये।
देशापेक्षास्तथा यूयं यातादायाङ्गुरीयकं ॥ ४९ ॥

वणिगित्यादि। तुला प्रगृह्यते येन सूत्रेण स प्रग्राहः प्रे वणिजामिति करणे घञ् स तुलासम्बन्धी विद्यते यस्य वणिजः संसर्गे मतुप् यथा तुलाप्रग्राहवान् तदुपलक्षितो वणिक्काले उचिते क्रयसिद्धये चरति तथा यूयं अङ्गुलीयं तुलासूत्रस्थानीयं चिह्नमादाय देशापेक्षाः तत्तद्देशस्थितास्तत्र हि चिह्नेन रामदूतादिति लक्ष्यन्ते ॥ ४९ ॥ जं०म०

वणिगित्यादि। यथा प्रग्राहवान् तुलासूत्रवान् वणिक् योग्ये काले क्रयविक्रयादिस्वक्रियासिद्ध्यर्थं चरति योग्यदेशमपेक्षते च तथा यूयमपि ममाङ्गुरीयकं तुलासूत्रतुल्यमादाय गृहीत्वा योग्ये काले देशापेक्षाः सीतानिवासदेशमपेक्षमाणायात गच्छत इति रामः प्रोचे इति सम्बन्धः अनेनैवाङ्गुलीयकेन चिह्नेन सीतया मद्दूता भवन्तो ज्ञास्यन्त इति भावः तुला प्रगृह्यते येन सूत्रेण तत्प्रग्राहउच्यते प्रपूर्व्वाद्ग्रहो वणिक् सम्बन्धे रज्जौ च घञलाविति परः स्वमते घञलनटोऽघे इत्यस्यापि विषयोदुर्निवारः ॥ ४९ ॥ भ०

अभिज्ञानं गृहीत्वा ते समुत्पेतुर्नभस्तलं। वाजिनः
स्यन्दने भानोर्व्विमुक्तप्रग्रहाइव ॥ ५० ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज॰म॰ अभीत्यादि। ते वानरानभस्तलमुत्पेतुः वाजिनइव विमुक्त प्रग्रहाः विमुक्तः प्रग्रहोनियमरज्जुर्येषामिति रश्मौ चेति विभाषा ग्रहणमनुवर्त्तते घञभावपक्षे ग्रहवृदृनिश्चिगमश्चेत्यप् स्यन्दने रथे भानोरादित्यस्य किं कृत्वा अभिज्ञानं गृहीत्वा चिह्नमङ्गुली यकमादाय ॥ ५० ॥

भ॰ अभीत्यादि। ते हनूमदादयोऽभिज्ञानं चिह्नमङ्गुरीयकं गृहीत्वा नभस्तलं आकाशं समुत्पेतुः यथा भानोः स्यन्दने रथे विमुक्तप्रग्रहाः शिथिलीकृतबन्धरज्जवोवाजिनोऽश्वानभीगच्छ न्ति तथा एतेनातिशीघ्रत्वं दर्शितं तलशब्दोऽत्र स्वरूपार्थः तलं स्वरूपाधरयोः खड्गमुष्टिचपेटयोरिति विश्वः प्रग्रहोऽनन्तोरज्जु वाचकः ॥ ५० ॥

उदक् शतवलिं कोट्या सुषेणं पश्चिमां तथा। दिशं प्रास्थापयद्राजा वानराणां कृतत्वरः ॥ ५१ ॥

ज॰म॰ उदगित्यादि। वानराणां राजा सुग्रीवः शतवलिं नाम वानरं वानराणां कोट्या सह उदगुदीचीं दिशं प्रास्थापयत् तिष्ठतेर्ण्य न्तस्य लङि रूपं उदीचीशब्दात्प्रथमान्ताद्दिशि वर्त्तमानादस्ता त्तिः तस्याञ्चतेर्लुक् लुक्तद्धितलुकीति स्त्रीप्रत्ययस्य लुक् तस्मिन्नि वृत्तौ भसंज्ञाभावादीत्वमपि निवर्त्तते तसिलादिस्तद्धित एधाच् पर्य्यन्तइत्यव्ययत्वे द्वितीयालुक् तथैव सुषेणं वानरं पश्चिमां दिशं प्रास्थापयत् कृतत्वरः त्वरितः ॥ ५१ ॥

भ॰ उदगित्यादि। वानराणां राजा सुग्रीवः कृतत्वरस्त्वरा न्वितः सन् शतवलिनामानं कपिं उदक् उत्तरस्यां दिशि प्रस्था

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



पयामास तथा सुषेणनामानं पश्चिमां दिशं प्रास्थापयत् वान राणां कोट्या सहेत्युभयत्र योज्यं घोऽऔञेःशब्दाशनगतीत्या दिना प्रयोज्यस्य कर्म्मत्वं प्रपूर्व्वस्य तिष्ठतेर्गत्यर्थत्वात् उदगिति उदक्शब्दाद्दिग्देशकालेइति सप्तम्याःस्तात् तस्य लुक् चात्पर त्वात् तदन्तस्याव्ययत्वं लोकोपचारात्॥ ५१॥

प्राचीं तावद्भिरव्यग्रः कपिभिर्व्विनतोययौ। अप्र ग्राहैरिवादित्योवाजिभिर्दूरपातिभिः॥ ५२॥

प्राचीमित्यादि॥ कपिभिस्तावद्भिरित्येककोटिसंघातैः सह ज°म° विनतः प्रणतः सुग्रीवइत्यर्थात् अव्यग्रः अनाकुलः प्राचीं पूर्वां दिशं ययौ यथा आदित्योवाजिभिरप्रग्राहैः मुक्तबन्धनैः करण भूतैः रश्मौचेति घञ् दूरयायिभिः॥ ५२॥

प्राचीमित्यादि। विनतनामा वानरोऽव्यग्रोऽनाकुलः स भ° तावद्भिः कोटिसंख्यातैः कपिभिः सह प्राचीं पूर्व्वां दिशं ययौ सुग्री वाज्ञयेत्यर्थात् यथा आदित्यः सूर्य्योऽप्रग्राहैर्मुक्तरज्जुभिर्दूर पातिभिर्व्वाजिभिरश्वैः सह प्राचीं याति तथा प्रग्राहोघञन्तोर ज्जुवाचकः अदितेरपत्यमिति गर्गादित्वात् ण्यः केचित्तु विन तोनम्रः सुग्रीवः प्राचीं ययावित्याहुस्तत्तु रामायणविरुद्धं ॥ ५२॥

ययुर्व्विन्ध्यं शरन्मेघैः प्रावारैः प्रवरैरिव। प्रच्छन्नं मारुतिप्रष्ठाः सीतां द्रष्टुं प्लवङ्गमाः॥ ५३॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



जं०म० ययुरित्यादि। मारुतिप्रष्ठाः हनूमदग्रेसराः सीतां द्रष्टुं विन्ध्य पर्व्वतं ययुः शरन्मेघैः प्रावारैरिव प्रावरणैरिव प्रच्छन्नं वृणोते राच्छादनइति घञ् प्रवरैः श्रेष्ठैः अनाच्छादने ग्रहेत्यादिना अप्॥५३॥

भ० ययुरित्यादि। प्लवङ्गमावानराः सीतां द्रष्टुं विन्ध्यपर्व्वतं ययुः प्लवेन गच्छतीति तृभृवृद्दजीत्यादिना खः कीदृशाः मारु तिर्हनूमान् प्रष्ठोऽग्रसरो येषां ते तथा प्रादग्रगेस्थस्य षत्वमभि धानात् मनीषादित्वाद्वा कीदृशं शरन्मेघैः प्रच्छन्नं प्रवरैः श्रेष्ठैः प्रावारैः प्रच्छदपटैरिव अभिधानात् प्राङ्पूर्व्वात् वृञआच्छा दने घञ् अन्यत्वाल्॥५३॥

परिभावं मृगेन्द्राणां कुर्व्वन्तोनगमूर्द्धसु। विन्ध्ये तिग्मांशुमार्गस्य चेरुः परिभवोपमे॥५४॥

जं०म० परीत्यादि। मृगेन्द्राणां सिंहानां परिभावमभिभवं कुर्व्वन्तः विन्ध्ये चेरुः भ्रान्ताः परौभुवोवज्ञानइति घञ् कीदृशे परि भवोपमे आदित्यमार्गस्य परिभवनं अत्युच्चत्वात् घञभावपक्षे अप्॥५४॥

भ० परीत्यादि। ते नगमूर्द्धनि गिरिशिखरे मृगेन्द्राणां सिंहानां परिभावं तिरस्कारं कुर्व्वन्तो विन्ध्ये चेरुः चरगतौ कीदृशे सूर्य्य वर्त्मनः परिभवइव तस्यात्युच्चत्वात् परिभवशब्देनात्र तत्कर्त्ता लक्ष्यते आदित्यमार्गस्य परिभवेणोपगता मा लक्ष्मीः शोभा यस्येति वा यद्वा तत्परिभवक्रिययैवात्र लोकभयदत्वेन साम्यं

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



विवर्चितं परिपूर्व्वाङ्ङुवो घञचौ स्वभावादवज्ञानार्थता न गच्छ तीति नगः ह्ननजनादिति डः ॥ ५४ ॥

भ्रेमुः शिलोच्चयांस्तुङ्गानुत्तेरुरतरान्नदान्। आशंसवोलवं शत्रोः सीतायाश्च विनिश्चयं॥ ५५ ॥

भ्रेमुरित्यादि। उत्पूर्व्वाच्चिनोतेः एरजित्यच् शिलाभिरुच्चयो येषां तान् शिलोच्चयान् भ्रेमुः भ्रमणक्रियायाव्याप्यत्वात्सकर्म्मकता नदान् अतरान् तरितुमशक्यान् उत्तेरुः उत्तीर्णवन्तः शत्रोर्लवमुच्छेदनं सीतायाश्च विनिश्चयं विनिर्णयमाशंसवः आशंसनशीलाः सनाशंसभिचउः तरलवौ च्छदोरविति अण्प्रत्यया न्तौ विनिश्चयइति ग्रहेरित्यप्॥ ५५ ॥ ज०म०

भ्रेमुरित्यादि। ते भीमान् भयदान् शिलोच्चयान् पर्व्वतान् भ्रेमुः तॄफलेत्यादिना अतएत्वं खिलोपश्च भ्रमणस्य गतिविशेषत्वात् सकर्म्मकता शिलाभिरुच्चयोऽट्टद्धिर्येषां उच्चीयतइति वा उच्चयस्त्रूपः शिलाभिरुच्चयः शिलोच्चयः अतरान् अन्यैस्तरितुमशक्यान् नदान् उत्तेरुः तॄतरेऽभिभवस्तुत्यां च्छतेणुःकिळ्शां शत्रोर्लवं छेदं आशंसवद्रुवः सीतायाविशेष्य निश्चयञ्च आशंसवः सन्भिचाशंसउः चितॄलूभ्योऽल्॥ ५५ ॥ भ०

आदरेण गमञ्चक्रुर्विषमेष्वप्यसंघसाः। व्याप्नुवन्तो दिशोऽन्यादान् कुर्व्वन्तः सव्यधान् हरीन्॥ ५६ ॥



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० ययुरित्यादि। मारुतिप्रष्ठाः हनूमदग्रेसराः सीतां द्रष्टुं विन्ध्य पर्व्वतं ययुः शरन्मेघैः प्रावारैरिव प्रावरणैरिव प्रच्छन्नं वृणोते राच्छादनइति घञ् प्रवरैः श्रेष्ठैः अनाच्छादने ग्रहेत्यादिना अप्॥ ५३॥

भ० ययुरित्यादि। प्लवङ्गमावानराः सीतां द्रष्टुं विन्ध्यपर्व्वतं ययुः प्लवेन गच्छतीति तृभृवृहजीत्यादिना खः कीदृशाः मारु तिर्हनूमान् प्रष्ठोऽग्रसरो येषां ते तथा प्रादग्रगेस्थस्य षत्वमभि धानात् मनीषादित्वाद्वा कीदृशं शरन्मेघैः प्रच्छन्नं प्रवरैः श्रेष्ठैः प्रावारैः प्रच्छदपटैरिव अभिधानात् प्राङ्पूर्व्वात् वृञआच्छा दने घञ् अन्यत्वात्॥ ५३॥

परिभावं मृगेन्द्राणां कुर्व्वन्तोनगमूर्द्धसु। विन्ध्ये तिग्मांशुमार्गस्य चेरुः परिभवोपमे॥ ५४॥

ज०म० परीत्यादि। मृगेन्द्राणां सिंहानां परिभावमभिभवं कुर्व्वन्तः विन्ध्ये चेरुः भ्रान्ताः परौभुवोवज्ञानइति घञ् कीदृशे परि भवोपमे आदित्यमार्गस्य परिभवनं अत्युच्चत्वात् घञभावपचे अप्॥ ५४॥

भ० परीत्यादि। ते नगमूर्द्धनि गिरिशिखरे मृगेन्द्राणां सिंहानां परिभावं तिरस्कारं कुर्व्वन्तो विन्ध्ये चेरुः चरगतौ कीदृशे सूर्य्य वर्त्मनः परिभवइव तस्यात्युच्चत्वात् परिभवशब्देनात्र तत्कर्त्ता लच्यते आदित्यमार्गस्य परिभवेणोपगता मा लक्ष्मीः शोभा यस्येति वा यद्वा तत्परिभवक्रिययैवात्र लोकभयदत्वेन साम्यं

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



विवचितं परिपूर्व्वाङ्गुवोघञलै स्वभावादवज्ञानार्थता न गच्छ तीति नगः हनजनादिति डः ॥ ५४ ॥

भ्रेमुः शिलोच्चयांस्तुङ्गानुत्तेरुस्तरान्नदान्। आशंसवोलवं शत्रोः सीतायाश्च विनिश्चयं ॥ ५५ ॥

भ्रेमुरित्यादि। उत्पूर्व्वाच्चिनोतेः एरजित्यच् शिलाभिरुच्चयो येषां तान् शिलोच्चयान् भ्रेमुः भ्रमणक्रियायाव्याप्यत्वात्सकर्म्मकता नदान् अतरान् तरितुमशक्यान् उत्तेरुः उत्तीर्णवन्तः शत्रोर्लवमुच्छेदनं सीतायाश्च विनिश्चयं विनिर्णयमाशंसवः आशंसनशीलाः सनाशंसभिच्चउः तरलवौच्छेदोरविति अणप्रत्यया न्तौ विनिश्चयद्गति ग्रहेरित्यप्॥ ५५॥ ज०म०

भ्रेमुरित्यादि। ते भीमान् भयदान् शिलोच्चयान् पर्व्वतान् भ्रेमुः तृफलेत्यादिना अतएत्वं खिलोपश्च भ्रमणस्य गतिविशेषत्वात् सकर्म्मकता शिलाभिरुच्चयोऽद्धिर्येषां उच्चीयतद्गति वा उच्चयस्तूपः शिलाभिरुच्चयः शिलोच्चयः अतरान् अन्यैस्तरितुमशक्यान् नदान् उत्तेरुः तृतरेऽभिभवस्तुत्यां च्छतोणुःकिळशां शत्रोर्लवं छेदं आशंसवद्वृवः सीतायाविशेष्य निश्चयञ्च आशंसवः सनभिचाशंसउः चितृलूभ्योऽल्॥ ५५॥ भ०

आदरेण गमच्चक्रुर्विषमेष्वप्यसंघसाः। व्याप्नुवन्तो दिशोऽन्यादान् कुर्व्वन्तः सव्यधान् हरीन्॥ ५६॥



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० आदेत्यादि। विषमेष्वपि प्रदेशेषु गमं गमनं चक्रुः आदरेणा नवज्ञया ग्रहेरित्यप् असंघसाः त्यक्ताहाराः उपसर्गेऽदइति अपि घञपोश्चेति अदेर्घस्लादेशः हरीन् सिंहान् सव्यधान् सप्र हारान् व्यधजपोरित्यप् सप्रहारत्वादन्यादान् परित्यक्ताहा रान् कुर्व्वन्तः नौणचेति निपूर्व्वाददेरण्प्रत्ययः तस्मिन्नदेर्न घस्लादेशः चकारादपि तत्र निघसः दिशोव्याप्नुवन्तः सर्व्वव्यापिनः ॥५६॥

म० आदेत्यादि। ते विषमेष्वपि देशेषु गमं चक्रुः रामस्य कार्य्यमि त्यादरेण न तु परस्य कार्य्यमित्यवज्ञया कीदृशाः असंघसाः सम्य गाहाररहिताः निरन्तरभ्रमणात् दिशोव्याप्नुवन्तः हरीन् सिंहान् सव्यधान् सप्रहारान् अतएवान्यादान् आहाररहि तान् कुर्व्वन्तः गमअदव्यधिभ्योऽल् घस्लदःसन्यल्घञीति अदे र्घसादेशः निपूर्व्वाददोनाम्न्यन्येतिक्केति णप्रत्ययः घञि तु घसा देशप्रसङ्गात् नेरदोणात्वाविति परः जेमनं लेपआहारोनिघसो न्याद इत्यपीत्यमरः॥ ५६॥

सञ्चेरुः सहसाः केचिदस्वनाः केचिदाटिषुः। संया मवन्तोयतिवन्निगदानपरेऽमुचन्॥ ५७॥

ज०म० सञ्चेरित्यादि। सहसाः सस्मिताः अस्वनास्तूष्णीकाः स्वनहसो र्वेत्यप् यतिवत् संयामवन्तः नियमवन्तः यमः समुपनिविषुचेति घञ् आटिषुः अटितवन्तः अटेर्लुङि रूपं अपरे निगदान्वचना न्यमुचन् नौगदेत्यादिना विकल्पेनापोविधानात् घञ्॥ ५७॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



सस्त्रेरित्यादि। केचिद्वानराः सहसाः सन्तस्त्रेरुः तृफलेति भ० अतएलं खिलोपश्च केचिदस्खलामौनिनः यतिवत्संयामवन्तः संयमिनः सन्तश्चाटिषुर्गतवन्तः अट गतौ चांसिः अनुस्त्रिद्देरिति अनउस् अपरे निगदान् अमुचन् अन्तःस्थितस्य शब्दस्य वहिर्निःसारणं मोचः तं कृतवन्तइत्यर्थः सहस्खननिगदाश्चलन्ताः संयामोघञन्तः॥ ५७॥

अथ क्रमादनिःक्वाणानराः चीणपणाइव। अमदाः सेदुरेकस्मिन्नितम्बे निखिला गिरेः॥ ५८॥

अथेत्यादि। अथ परिभ्रमणादनन्तरं क्रमेन परिश्रमेण अम ज०म० दाः गतहर्षाः मदोऽनुपसर्गइत्यप् अतएव निःक्वाणाः निश्शब्दाः क्वणोवीणायाञ्चेत्यपोविकल्पेन घञ् वीणादिविषयमेतत् क्वणेर्नि पूर्व्वादनुपसर्गाद्वीणादिविषयाच्च विकल्पेनाणप्रत्ययइत्युक्तं एकस्मिन् गिरेर्नितम्बे सेदुः निषण्णाः निखिलाः समस्तावानराः चीणपणाइव अर्थरहितानराइव पण्यन्तइति पणाः व्यवहाराय कृते पणे व्यवस्थाप्यन्ते नित्यं पणः परिमाणे इत्यप्॥ ५८॥

अथेत्यादि। भ्रमणानन्तरं ते निखिलाः सर्व्वे वानराः कस्य भ० चिद्गिरेर्नितम्बे सेदुर्निषण्णाः कीदृशाः क्रमेन श्रमेण निःक्वाणा निःशब्दाः अमदा हर्षरहिताः चीणपणानष्टधनाइव निःक्वाणे घञन्तः क्वणः शब्दमात्रे घञलौ सप्रादेरपि वीणाध्वनौ तु सप्रादेरेवेति परः स्वमते अभिधानं नियामकमित्युक्तेः सएव नियमः क्रमपणमदाश्चलन्ताः पण्यते व्यवह्रियतेऽनेनेति पणः पणोवं

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० आदेत्यादि। विषमेष्वपि प्रदेशेषु गमं गमनं चक्रुः आदरेण नवज्ञया ग्रहेरित्यप् असंघसाः त्यक्ताहाराः उपसर्गेऽदइति अपि घञपोश्चेति अदेर्घस्लादेशः हरीन् सिंहान् सव्यधान् सप्रहारान् व्यधजपोरित्यप् सप्रहारत्वादन्यादान् परित्यक्ताहारान् कुर्व्वन्तः नौणचेति निपूर्व्वाददेरण्प्रत्ययः तस्मिन्नदेर्न घस्लादेशः चकारादपि तत्र निघसः दिशोव्याप्नुवन्तः सर्व्वव्यापिनः ॥ ५६ ॥

भ० आदेत्यादि। ते विषमेष्वपि देशेषु गमं चक्रुः रामस्य कार्य्यमित्यादरेण न तु परस्य कार्य्यमित्यवज्ञया कीदृशाः असंघसाः सम्यगाहाररहिताः निरन्तरभ्रमणात् दिशोव्याप्नुवन्तः हरीन् सिंहान् सव्यधान् सप्रहारान् अतएवान्यादान् आहाररहितान् कुर्व्वन्तः गमश्रदव्यधिभ्योऽल् घस्लृदःसन्यल्घञीति अदेर्घसादेशः निपूर्व्वाददोनान्नयन्येतिक्वेति णप्रत्ययः घञि तु घसादेशप्रसङ्गात् नेरदोणालाविति परः जेमनं लेपआहारोनिघसोन्याद इत्यपीत्यमरः ॥ ५६ ॥

सञ्चेरुः सहसाः केचिदस्वनाः केचिदाटिषुः। संयामवन्तोयतिवन्निगदानपरेऽमुचन् ॥ ५७ ॥

ज०म० सञ्चेरित्यादि। सहसाः सस्मिताः अस्वनास्तूष्णीकाः स्वनहसोर्वेत्यप् यतिवत् संयामवन्तः नियमवन्तः यमः समुपनिविषुचेति घञ् आटिषुः अटितवन्तः अटेर्लुङि रूपं अपरे निगदान्वचनान्यमुचन् नौगदेत्यादिना विकल्पेनापीविधानात् घञ् ॥ ५७ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



सच्चेहरित्यादि। केचिद्वानराः सहषाः सन्तश्चेरुः तृफलेति भ०
अतएव खिलीपश्च केचिदस्खनामौनिनः यतिवत्संयामवन्तः
संयमिनः सन्तश्चाटिषुर्गतवन्तः अटगतौ चांषिः अनुखिद्देरिति
अनउस् अपरे निगदान् अमुचन् अन्तःस्थितस्य शब्दस्य वहिर्निः
सारणं मोचः तं क्षतवन्तइत्यर्थः सहस्खननिगदाअलन्ताः
संयामोघञन्तः॥ ५७॥

अथ क्रमादनिःक्वाणानराः चीणपणाइव। अम
दाः सेदुरेकस्मिन्नितम्बे निखिला गिरेः॥ ५८॥

अथेत्यादि। अथ परिभ्रमणादनन्तरं क्रमेन परिश्रमेण अम ज०म०
दाः गतहर्षाः मदोऽनुपसर्गइत्यप् अतएव निःक्वाणाः निश्शब्दाः
क्वणोवीणायाञ्चेत्यपोविकल्पेन घञ् वीणादिविषयमेतत् क्वणेर्नि
पूर्व्वादनुपसर्गाद्वीणादिविषयाच विकल्पेनाणप्रत्ययइत्युक्तं एक
स्मिन् गिरेर्नितम्बे सेदुः निषणाः निखिलाः समस्तावानराः चीण
पणाइव अर्थरहितानराइव पण्यन्तइति पणाः व्यवहाराय
क्षते पणे व्यवस्थाप्यन्ते नित्यं पणः परिमाणे इत्यप्॥ ५८॥

अथेत्यादि। भ्रमणानन्तरं ते निखिलाः सर्व्वे वानराः कस्य भ०
चिद्गिरेर्नितम्बे सेदुर्निषणाः कीदृशाः क्रमेन श्रमेण निःक्वाणा
निःशब्दाः अमदा हर्षरहिताः चीणपणानष्टधनाइव निःक्वाणो
घञन्तः क्वणः शब्दमात्रे घञलौ सप्रादेरपि वीणाध्वनौ तु सप्रा
देरेवेति परः स्वमते अभिधानं नियामकमित्युक्तेः सएव नियमः
क्लमपणमदाअलन्ताः पण्यते व्यवह्रियतेऽनेनेति पणः पणोव

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



राटमात्रे स्यान्मूल्ये कार्षापणे ग्रहे। क्रय्यशाकटिकाद्यूतव्यवहारे भृतौधनइति विश्वः ॥ ५८ ॥

ततः ससम्मदास्तत्र निरैक्षन्त पतत्त्रिणः। गुहा द्वारेण निर्यातः समजेन पशूनिव ॥ ५९ ॥

ज॰भ॰ ततइत्यादि। ततो विश्रामानन्तरं ते तत्र तस्मिन् पर्व्वते पतत्त्रिणः पक्षिणोनिरैक्षन्त ईक्षितवन्तः ईक्षेर्लङि रूपं कीदृशान् गुहाद्वारेण निर्यातः निर्गच्छतः निष्पूर्व्वाद्यातेः शत्रन्तस्य शसि रूपं ससंमदाः सहर्षाः प्रमदसंमदाविति निपातितं समजेन वृन्देन पशूनिव निर्यातः समुदोरजपशुष्वित्यप् ॥ ५९ ॥

भ॰ ततइत्यादि। उपवेशानन्तरं ते ससम्मदाः सहर्षाः सन्तस्तत्र पर्व्वते गुहाद्वारेण निर्यातोनिर्गच्छतः पतत्त्रिणः पक्षिणोनिरैक्षन्त दृष्टवन्तः समजेन-समूहेन निर्गच्छतः पशूनिव तद्वदतिस्थूलानित्यर्थः समदसमजावलन्तौ व्यजोरे इत्यादौ अलन्तवर्ज्जनान्नाजेर्व्यादेशः संप्राभ्यां मदोहर्षे समुञ्भ्यामजः पशुसंहप्रेरणयोरलिति परेषां विशेषसूत्रं निःपूर्व्वादीर्चेर्घो यातेः शतृः ॥ ५९ ॥

वीनामुपसरं दृष्ट्वा तेऽन्योन्योपह्वागुहां। प्राविशन्नाह्वप्रज्ञाश्चाहावमुपलिप्सवः ॥ ६० ॥

ज॰भ॰ वीनामित्यादि। वीनां पक्षिणामुपसरं नैरन्तर्य्येण निर्गमनं दृष्ट्वा उपसरइव उपसरनैरन्तर्य्यमात्रेणोपलक्षितत्वात् उपसरादि

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



स्त्रीगवीषु पुंगवानामभिगमनमुच्यते सच नैरन्तर्य्येण भवति प्र जनेसर्त्तेरित्यप् वानराअन्योन्योपह्वाः परस्परमाक्रान्तं येषां आगच्छतागच्छत प्रविशामइति क्तः संप्रसारणमित्यप् संप्रसा रणञ्च गुहां प्राविशन् प्रविष्टवन्तआह्वप्रज्ञाः युद्धप्रज्ञाः आह्व यते युद्धाय स्पर्द्धतेऽत्रेत्याङि युद्धइत्यप् संप्रसारणञ्च आहाव मुपलिप्सवः उदकाधारमुपलब्धुमिच्छवः निपानमाहावइति घञि संप्रसारणं निपात्यते वृद्धिरस्यैव अण्प्रत्यये त्ववृद्धिः॥ ६०॥

वीनामित्यादि। वीनां पक्षिणामुपसरं उपर्य्यधोगमनं दृष्ट्वा ते वानरागुहां प्राविशन् कीदृशाः अन्योन्यस्य उपह्वआक्रान्तं येषां ते तथा आह्वे युद्धे प्रज्ञाः पण्डिताः अतएव गुहाप्रवेशे निर्भयत्वं आहावमुदकाधारमुपलब्धुमिच्छवः उपसरोऽलन्तः अभिधानात् उपर्य्यधोगमनार्थः उपसरो हि स्त्रीगवीषु पुङ्गवा नामभिगमनमुच्यते सचोपर्य्यधोभावेन भवतीत्युपमानादिह उपसरशब्देन उपर्य्यधोगामित्वमुच्यतइति केचित् गर्भग्रहणा र्थोपसरणे सर्त्तेरणिति परसूत्रं तन्मते उपसरोगर्भार्थं ग्राम्य धर्म्माचरणं तच्च वह्निर्निःसरतां पक्षिणां सम्भवत्येव ऊर्लिहोमेऽ दने इत्यस्मादलघञौ उपसर्गेणान्यार्थता परेषां मते केञोरूपं अभ्युपनिविभ्योह्वेञोऽलृ्ऊस्येति तथा आङोयुद्धेह्वेञोऽलृ्ऊस्ये ति आङोनिपाने ऊस्येति तेषां सूत्रत्रयं॥ ६०॥

भ०

कुर्व्वन्तोह्वमाप्तानां पिपासाबधकाङ्क्षिणः। द्वारं तमोघनप्रख्यं गुहायाः प्राविशन् द्रुतं॥ ६१॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



राटमाने स्यान्मूल्ये कार्षापणे ग्रहे। क्रय्यशाकटिकाद्यूतव्यवहारे भृतौधनइति विश्वः॥ ५८॥

ततः ससम्मदास्तत्र निरैक्षन्त पतत्त्रिणः। गुहा द्वारेण निर्यातः समजेन पशूनिव ॥ ५९ ॥

ज॰ भ॰ ततइत्यादि। ततो विश्रामानन्तरं ते तत्र तस्मिन् पर्व्वते पतत्त्रिणः पक्षिणोनिरैक्षन्त ईक्षितवन्तः ईक्षेर्लङि रूपं कीदृशान् गुहाद्वारेण निर्यातः निर्गच्छतः निष्पूर्व्वाद्यातेः शत्रन्तस्य शसि रूपं ससंमदाः सहर्षाः प्रमदसंमदाविति निपातितं समजेन वृन्देन पशूनिव निर्यातः समुदोरजपशुष्वित्यप्॥ ५९ ॥

भ॰ ततइत्यादि। उपवेशानन्तरं ते ससम्मदाः सहर्षाः सन्तस्तत्र पर्व्वते गुहाद्वारेण निर्यातोनिर्गच्छतः पतत्त्रिणः पक्षिणोनिरैक्षन्त दृष्टवन्तः समजेन-समूहेन निर्गच्छतः पशूनिव तद्वदतिस्थूलानित्यर्थः समदसमजावलन्तौ व्यजोरे इत्यादौ अलन्तवर्ज्जनान्नाजेर्व्यादेशः संप्राभ्यां मदोहर्षे समुद्भ्यामजः पशुसंहप्रेरणयोरलिति परेषां विशेषसूत्रं निःपूर्व्वादीचेर्घो यातेः शतृः ॥ ५९ ॥

वीनामुपसरं दृष्ट्वा तेऽन्योन्योपह्वागुहां। प्राविशन्नाह्वप्रज्ञाश्चाहावमुपलिप्सवः ॥ ६० ॥

ज॰ म॰ वीनामित्यादि। वीनां पक्षिणामुपसरं नैरन्तर्य्येण निर्गमनं दृष्ट्वा उपसरइव उपसरनैरन्तर्य्यमात्रेणोपलक्षितत्वात् उपसरोहि

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



स्त्रीगवीषु पुंगवानामभिगमनमुच्यते सच नैरन्तर्य्येण भवति प्र जनेस्सर्त्तेरित्यप् वानराअन्योन्योपह्वाः परस्परमाक्रान्तं येषां आगच्छतागच्छत प्रविशामइति क्तः संप्रसारणमित्यप् संप्रसा रणञ्च गुहां प्राविशन् प्रविष्टवन्तआहवप्रज्ञाः युद्धप्रज्ञाः आह्व यते युद्धाय स्पर्द्धतेऽत्रेत्याङि युद्धइत्यप् संप्रसारणञ्च आहाव मुपलिप्सवः उदकाधारमुपलब्धुमिच्छवः निपानमाहावइति घञि संप्रसारणं निपात्यते वृद्धिरस्यैव अण्प्रत्यये त्वदृद्धिः॥ ६०॥

वीनामित्यादि। वीनां पक्षिणामुपसरं उपर्य्यधोगमनं दृष्ट्वा ते वानरागुहां प्राविशन् कीदृशाः अन्योन्यस्य उपह्वआक्रान्तं येषां ते तथा आहवे युद्धे प्रज्ञाः पण्डिताः अतएव गुहाप्रवेशे निर्भयत्वं आहावमुदकाधारमुपलब्धुमिच्छवः उपसरोऽलन्तः अभिधानात् उपर्य्यधोगमनार्थः उपसरो हि स्त्रीगवीषु पुङ्गवा नामभिगमनमुच्यते सचोपर्य्यधोभावेन भवतीत्युपमानादिह उपसरशब्देन उपर्य्यधोगामित्वमुच्यतइति केचित् गर्भग्रहणा र्थोपसरणे सर्त्तेरणिति परसूत्रं तन्मते उपसरोगर्भार्थं ग्राम्य धर्म्माचरणं तच्च वह्निर्निःसरतां पक्षिणां सम्भवत्येव ऊनिहोमेऽ दने इत्यस्मादलघञौ उपसर्गेणान्यार्थता परेषां मते केऽत्रोरूपं अभ्युपनिविभ्योक्केऽत्रोऽलृऊस्येति तथा आङोयुद्धेकेऽत्रोऽलृऊस्ये ति आङोनिपाने ऊस्येति तेषां सूत्रत्रयं॥ ६०॥ भ०

कुर्व्वन्तोह्वमाप्तानां पिपासाबधकाङ्क्षिणः। द्वारं तमोघनप्रख्यं गुहायाः प्राविशन् द्रुतं॥ ६१॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० कुर्व्वन्त्यादि। गुहां प्रविश्य तस्याः द्वारमपरं प्राविशन् आप्ता नां स्निग्धानां हवमाक्रानं कुर्व्वन्तः भावेऽनुपसर्गस्येत्यप् संप्रसा रणं च पिपासा पातुमिच्छा तस्यावधोऽपनयनं हनश्चवध इत्यप् वधादेशश्च तं काङ्क्षितुं शीलं येषामिति काचिमाचिकांचाया इत्यस्मात्सुप्यजातौ णिनिः इदितोनुम् साधुकारिणि वा कीदृशं द्वारं तमोघनप्रख्यं तमसोघनः मूर्त्तिः काठिन्यं तेन सदृशं मूर्त्तौ घनइति हन्तेरप्प्रत्ययो घनादेशश्च निपात्यते मूर्त्तिमत्तमइव द्वारमित्यर्थः॥ ६१॥

भ० कुर्व्वन्त्यादि। ते आप्तानां स्निग्धानां हवमाक्रानं कुर्व्वन्तो गुहा याद्वारं द्रुतं प्राविशन् कीदृशाः पिपासायास्तृष्णायावधं हननं काङ्क्षन्तीति ग्रहादित्वात् णिन् ताच्छील्ये आभीक्ष्ण्ये वा णिन्निति प रः सूमतेऽपि तदर्थता प्राप्यते यतो णिन्विधायकसूत्रे अर्थविशे षेणोक्तः किन्तु ढघेक्तीत्यादौ भव्यर्णार्थणिन्नित्युक्तं तेनाभिधाना दर्थविशेषेऽपि णिन् स्यादिति ज्ञापितं द्वारं कीदृशं तमोघनप्रख्यं तमसां घनेन काठिन्येन प्रख्यं सदृशं मूर्त्तिः काठिन्यमुच्यते तदु पचारात् मूर्त्तिमत्तयाइवेत्यर्थः मेघप्रख्यं तमश्च प्राविशन्निति केचित् हवमिति ऊलिह्वोमे इत्यस्यालन्तस्य रूपं धातूनामनेका र्थत्वात् आक्रानार्थता क्वेञोऽल् ऊश्च भावे नतूपसर्गादिपरः हन्ते रलि हनवधष्टीव्यलीति वधादेशः काठिन्यादौ हन्तेरल् घना देशश्चेति परः सूमते निपातः॥ ६१॥

तस्मिन्नन्तर्घणे पश्यन् प्रघाणे सौधसद्मनः। लौहो द्घनघनस्कन्धाललितापघनां स्त्रियं॥ ६२॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



तस्मिन्नित्यादि । द्वारमतिक्रम्य यः सावकाशप्रदेशः सोऽन्तर्घण इत्युच्यते तथा ह्यन्तर्हन्यते क्रोडीभवत्यस्मिन्निति अनुगतार्थत्वं अन्तर्घणोदेश इत्यन्तःपूर्व्वाद्धन्तेरप् घनादेशः घणादेशोवा ये णकारं पठन्ति यत्तु संज्ञीभूतोवाह्लीकेषु देशविशेष इत्युक्तं तत्संज्ञाशब्दमाश्रित्य तस्मिन्नन्तरे यत्सौधसद्म धवलगृहं तस्य प्रघाणे एकदेशे प्रघणः प्रघाणश्चेति निपातितं स्त्रियं ललितापघनां ललिताङ्गीमपश्यन् अपघनोऽङ्गमिति निपातनं लोहोद्घनघनस्कंधाः यस्मिन् स्थापयित्वा काष्ठादीनि संस्क्रियन्ते स उद्घनः आधानं तद्वत् घनः स्कन्धोयेषामिति उद्घनोऽत्याधानमिति निपातनं ॥ ६२ ॥ ज०म०

तस्मिन्नित्यादि । तस्मिन् गुहाभ्यन्तरे अन्तर्घणे द्वारसमीप सावकाशप्रदेशे यत् सौधसद्म धवलगृहं तस्य प्रघणे द्वारप्रकोष्ठाभ्यां वहिःप्रदेशे ललितापघनां मनोहरशरीरां स्त्रियं तेऽपश्यन् कीदृशाः लोहोद्घनघनस्कन्धाः यस्मिन् स्थापयित्वा काष्ठादिकं हन्यते स उद्घनः लोहस्य य उद्घनस्तद्वद्घनोनिविडः स्कन्धोयेषां ते तथा लोहवदुद्घनः काष्ठविशेष इत्यन्ये परमते अन्तर्हन्यते यस्मिन्नित्यन्तर्घणोऽभ्यन्तरदेश उच्यते अन्तरोहन्तेरलि देशे घनादेशः विभाषया णत्वं लभते मूर्द्धन्यान्तत्वे घणोऽलि रूपं दन्त्यान्तत्वे तु हन्तेर्निपातः परमते प्रकृष्टं हन्यते गम्यतेऽस्मिन्निति प्रघाणः प्राङ्गृहद्वारवाह्यपिण्डके हन्तेर्घञत्वौ घनादेशस्य पूर्व्वपदस्थान्निमित्तात् संज्ञायां णत्वं लभते घणोघञि रूपं प्रघाणप्रघणालिन्दावहिर्द्वारप्रकोष्ठके इत्यमरः परमते ऊर्द्धं हन्यते यस्मिन् स उद्घनः उदः मतिकाष्ठके हन्तेरल् घणादेशस्च लभते भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० कुर्व्वैत्यादि। गुहां प्रविश्य तस्याः द्वारमपरं प्राविशन् आप्तानां स्निग्धानां ह्वमाक्रानं कुर्व्वन्तः भावेऽनुपसर्गस्येत्यप् संप्रसारणं च पिपासा पातुमिच्छा तस्यावधोऽपनयनं हनश्चवध इत्यप् वधादेशश्च तं काङ्क्षितुं शीलं येषामिति काचिमाचिकांचाया इत्यस्मात्सुप्यजातौ णिनिः इदितोनुम् साधुकारिणि वा कीदृशं द्वारं तमोघनप्रख्यं तमसोघनः मूर्त्तिः काठिन्यं तेन सदृशं मूर्तौ घनइति हन्तेरप्रत्ययो घनादेशश्च निपात्यते मूर्त्तिमत्तमइव द्वारमित्यर्थः॥ ६१॥

भ० कुर्व्वैत्यादि। ते आप्तानां स्निग्धानां ह्वमाक्रानं कुर्व्वन्तोगुहायाद्वारं द्रुतं प्राविशन् कीदृशाः पिपासायास्तृष्णायावधं हननं काङ्क्षन्तीति ग्रहादित्वात् णिन् ताच्छील्ये आभीक्ष्ण्ये वा णिन्निति परः स्वमतेऽपि तदर्थता प्राप्यते यतो णिन्विधायकसूत्रे अर्थविशेषेनोक्तः किन्तु ढघेक्तीत्यादौ भव्यर्णार्थणिन्नित्युक्तं तेनाभिधानादर्थविशेषेऽपि णिन् स्यादिति ज्ञापितं द्वारं कीदृशं तमोघनप्रख्यं तमसां घनेन काठिन्येन प्रख्यं सदृशं मूर्त्तिः काठिन्यमुच्यते तदुपचारात् मूर्त्तिमत्तयाइवेत्यर्थः मेघप्रख्यं तमश्च प्राविशन्निति केचित् ह्वमिति ऊलिह्वोमे इत्यस्यालन्तस्य रूपं धातूनामनेकार्थत्वात् आक्रानार्थता क्रेन्नोऽल् ऊश्च भावे नतूपसर्गादिपरः हन्तेरलि हनवधश्चेत्यलीति वधादेशः काठिन्यादौ हन्तेरल् घनादेशश्चेति परः स्वमते निपातः॥ ६१॥

तस्मिन्नन्तर्वणे पश्यन् प्रघाणे सौधसद्मनः। लौहोद्घनघनस्कन्धाललितापघनां स्त्रियं॥ ६२॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



तस्मिन्नित्यादि। द्वारमतिक्रम्य यः सावकाशप्रदेशः सोऽन्तर्घण इत्युच्यते तथा ह्यन्तर्हन्यते क्रीडीभवत्यस्मिन्निति अनुगतार्थत्वं अन्तर्घणो देशइत्यन्तःपूर्व्वाद्धन्तेरप् घनादेशः घणादेशोवा येण कारं पठन्ति यत्तु संज्ञीभूतोवाह्लीकेषु देशविशेषइत्युक्तं तत्संज्ञा शब्दमाश्रित्य तस्मिन्नन्तरे यत्सौधसद्म धवलगृहं तस्य प्रघाणे एकदेशे प्रघणः प्रघाणश्चेति निपातितं स्त्रियं ललितापघनां ललिताङ्गीमपश्यन् अपघनोऽङ्गमिति निपातनं लोहोद्घनघन स्कंधाः यस्मिन् स्थापयित्वा काष्ठादीनि संस्क्रियन्ते सउद्घनः आधानं तद्वत् घनः स्कन्धोयेषामिति उद्घनोऽत्याधानमिति निपातनं॥ ६२॥ ज०म०

तस्मिन्नित्यादि। तस्मिन् गुहाभ्यन्तरे अन्तर्घणे द्वारसमीप सावकाशप्रदेशे यत् सौधसद्म धवलगृहं तस्य प्रघणे द्वारप्रकोष्ठा भ्यां वहिःप्रदेशे ललितापघनां मनोहरशरीरां स्त्रियं तेऽपश्यन् कीदृशाः लोहोद्घनघनस्कन्धाः यस्मिन् स्थापयित्वा काष्ठादिकं हन्यते सउद्घनः लोहस्य यउद्घनस्तद्वद्घनोनिविडः स्कन्धोयेषां ते तथा लोहवदुद्घनः काष्ठविशेषइत्यन्ये परमते अन्तर्हन्यते यस्मिन्नित्यन्तर्घणोऽभ्यन्तरदेशउच्यते अन्तरोहन्तेरलि देशे घनादेशः विभाषया णत्वं लभते मूर्द्धन्यान्तत्वे घणोऽलि रूपं दन्त्यान्तत्वे तु हन्तेर्निपातः परमते प्रकृष्टं हन्यते गम्यतेऽस्मि न्निति प्रघाणः प्राङ्गृहद्वारवाह्यपिण्डके हन्तेर्घञन्तो घनादेशश्च पूर्व्वपदस्थान्निमित्तात् संज्ञायां णत्वं लभते घणोघञि रूपं प्रघा णप्रघणालिन्दावहिर्द्वारप्रकोष्ठकेइत्यमरः परमते ऊर्द्ध हन्यते यस्मिन् सउद्घनः उदः प्रतिकाष्ठके हन्तेरल् घणादेशश्च लभते भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



निपातः निधाय तच्यते यत्र काष्ठे काष्ठं सउद्घनइत्यमरकोषे काष्ठ इत्युपलचणं घनः पूर्व्ववत् परमतेऽपहन्यतेऽनेनेत्यपघनो देहः अपादङ्गेहन्तेरल् घनादेशश्च स्वमते निपातः वस्तुतः अन्तर्घणादयोरूढाः व्युत्पत्तिस्तु यथा कथञ्चिदेव॥ ६२॥

**सा स्तम्बघ्नपदन्यासान् विघनेन्दुसमद्युतिः। परिघोरुभुजानाह हसन्ती स्वागतं कपीन्॥ ६३॥**

ज०म० सास्तमित्यादि। सा स्त्री हसन्ती कपीन् स्वागतं वचआह कीदृशी विघनेन्दुसमद्युतिः विहन्यते अभिभूयते अन्या द्युतिर्येन सविघनः करणेपोविदुष्वित्यप् घनादेशश्च सचेन्दुश्चेति सः तत्समा द्युतिर्य्यस्याः स्तम्बोहन्यते येन पादन्यासेन सस्तम्बघ्नः तृणकाष्ठादिः स्तम्बेकचइति करणे कः गमहनेत्युपधालोपः तादृशः पादन्यासो येषां कपीनामिति परिहन्यते येन परौघइत्यप् घादेशश्च परिघो अर्गलः तदनुकारिणोविपुलावाहवोयेषामिति॥ ६३॥

भ० सेत्यादि। सा हसन्ती स्वागतमिति कपीनाह कीदृशान् स्तम्बघ्नपदन्यासान् स्तम्बोहन्यते तृणकाष्ठादिकमुपमर्द्यते येन तादृशः पदन्यासोयेषां तान् हनचरगष्टगिति कर्त्तरि विहितष्टक् छन्दोः कभावइति अन्यत्र दृश्यते घेऽपि न चतिः हनगमित्युङ्लोपे हनो क्तोघ्नः स्तम्बघ्नस्तम्बघनः स्तम्बोयेन निहन्यते स्तम्बो गुच्छस्तृणादिन इत्यमरः परिघवदुरवो विपुलाभुजायेषां परिघोऽस्त्रविशेषः परमते परिहन्यतेऽनेनेति हन्तेर्डान्तस्य रूपं रूढशब्दोऽयं सा कीदृशी विघनेन्दुसमद्युतिः विगतोघनोमेघोयस्मात् तादृशस्य शरत्कालीनस्य चन्द्रस्येव दीप्तिर्यस्याः परमते हन्तेरल् मेघे घनादेशश्च स्वमते निपातः॥ ६३॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



पिप्रायाद्रिगुहोपघ्नानुद्घान् संघसमागतान्। फलै-
र्नानारसैश्चित्रैः स्वादुशीतैश्च वारिभिः ॥ ६४ ॥

पिप्रेत्यादि। तान्विविधैः फलैर्वारिभिश्च पिप्राय तर्पितवती अद्रिगुहोपघ्नान् अद्रिगुहैव उपघ्न आश्रयो येषां कपीनां उपघ्न आश्रयइत्यप् उपधालोपश्च निपात्यते संघसमागतान् समूहेनागतान् उद्घान् प्रशस्तान् संघोद्घौ गणप्रशंसयोरिति समुदोरुपपदयो र्हन्तेरपि टिलोपश्च निपात्यते ॥ ६४ ॥ ज॰म॰

पिप्रेत्यादि ॥ सा फलैर्वारिभिश्च तान् पिप्राय तर्पितवती कीदृशान् अद्रिगुहा उपघ्न आश्रयो येषां तान् उपादाश्रये हन्तेरल् घ्नश्चेति परः स्वमते हनचरगष्टगित्यस्य कर्त्तोःकभावइत्यन्यत्र प्रवृत्तिः अभिधानादाश्रयार्थता स्यादुपघ्नोऽन्तिकाश्रयइत्यमरः उद्घान् प्रशस्तान् परमते ऊर्द्धं हन्यते ज्ञायतइति उद्घःप्रशस्ते हन्तेरल् घादेशश्च स्वमते हनजनादित्यस्य कर्त्तोःकभावइत्यन्यत्र प्रवृत्तेर्गमादित्वात् घणेडः संघेन समूहेनागतान् संहननं संहन्यते वास्मिन्निति समोहन्तेरल् समूहे घादेशश्चेति परः स्वमते उद्घवत् फलैः कीदृशैः नानारसैः नानाविधरसयुक्तैः चित्रै रद्भुतैः वारिभिः कीदृशैः स्वादुशीतैः मधुरशीतलैः ॥ ६४ ॥ भ॰

निघानिघतरुच्छन्ने तस्मिंस्ते लब्धिमैः फलैः। तृप्ता-
स्तां भ्राजथुमतीं पप्रच्छुः कस्य पूरियं ॥ ६५ ॥

निघेत्यादि। तस्मिन्प्रघणे निघानिघैर्निमित्तानिमित्तैस्तरुभिः छन्ने निघोनिमित्तमिति निपूर्वाद्धन्तेरपि टिलोपे निपात्यते समा- ज॰म॰



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



निपातः निधाय तच्यते यत्र काष्ठे काष्ठं स उद्घनइत्यमरकोषे काष्ठ इत्युपलक्षणं घनः पूर्व्ववत् परमतेऽपहन्यतेऽनेनेत्यपघनो देहः अपादङ्गेहन्तेरल् घनादेशस्य स्वमते निपातः वस्तुतः अन्तर्घणादयोरूढाः व्युत्पत्तिस्तु यथा कथञ्चिदेव॥ ६२॥

**सा स्तम्बघ्नपदन्यासान् विघनेन्दुसमद्युतिः। परिघोरुभुजानाह हसन्ती स्वागतं कपीन्॥ ६३॥**

ज०म० सास्तमित्यादि। सा स्त्री हसन्ती कपीन् स्वागतं वचआह कीदृशी विघनेन्दुसमद्युतिः विहन्यते अभिभूयते अन्या द्युतिर्येन स विघनः करणेपोविदुष्वित्यप् घनादेशस्य स चेन्दुश्चेति सः तत्समा द्युतिर्य्यस्याः स्तम्बोहन्यते येन पादन्यासेन स स्तम्बघ्नः तृणकाष्ठादिः स्तम्बेकचइति करणे कः गमहनेत्युपधालोपः तादृशः पादन्यासो येषां कपीनामिति परिहन्यते येन परौघइत्यप् घादेशस्य परिघो अर्गलः तदनुकारिणोविपुलावाहवोयेषामिति॥ ६३॥

भ० सेत्यादि। सा हसन्ती स्वागतमिति कपीनाह कीदृशान् स्तम्बघ्नपदन्यासान् स्तम्बोहन्यते तृणकाष्ठादिकमुपमर्द्दते येन तादृशः पदन्यासोयेषां तान् हनचरगष्टगिति कर्त्तरि विहितष्टक् छन्दोः कभावइति अन्यत्र दृश्यते घेऽपि न चतिः हनगमित्युड्लोपे हनो कोघ्नः स्तम्बघ्नस्स्तम्बघनः स्तम्बोयेन निहन्यते स्तम्बोगुच्छस्तृणादिन इत्यमरः परिघवद्गुरवो विपुलाभुजायेषां परिघोऽस्त्रविशेषः परमते परिहन्यतेऽनेनेति हन्तेर्डान्तस्य रूपं रूढशब्दोऽयं सा कीदृशी विघनेन्दुसमद्युतिः विगतोघनोमेघोयस्मात् तादृशस्य शरत्कालीनस्य चन्द्रस्येव दीप्तिर्यस्याः परमते हन्तेरल् मेघे घनादेशश्च स्वमते निपातः॥ ६३॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



पिप्रायाद्रिगुहोपघ्नानुद्घान् संघसमागतान्। फलै नानारसैश्चित्रैः स्वादुशीतैश्च वारिभिः॥ ६४॥

पिप्रेत्यादि। तान्विविधैः फलैर्वारिभिश्च पिप्राय तर्पितवती अद्रिगुहोपघ्नान् अद्रिगुहैव उपघ्न आश्रयो येषां कपीनां उपघ्न आश्रय इत्यप् उपधालोपश्च निपात्यते संघसमागतान् समूहेनागतान् उद्घान् प्रशस्तान् संघोद्घौ गणप्रशंसयोरिति समुदोरुपपदयो हन्तेरपि टिलोपश्च निपात्यते॥ ६४॥ ज०म०

पिप्रेत्यादि॥ सा फलैर्वारिभिश्च तान् पिप्राय तर्पितवती कीदृशान् अद्रिगुहा उपघ्न आश्रयो येषां तान् उपादाश्रये हन्तेरल् घ्नश्चेति परः स्वमते हनचरगष्टगित्यस्य कर्त्तरिकभावइत्यन्यत्र प्रवृत्तिः अभिधानादाश्रयार्थता स्यादुपघ्नोऽन्तिकाश्रय इत्यमरः उद्घान् प्रशस्तान् परमते ऊर्द्ध्वं हन्यते ज्ञायतइति उदःप्रशस्ते हन्तेरल् घादेशश्च स्वमते हनजनादित्यस्य कर्त्तरिकभावइत्यन्यत्र प्रवृत्तेर्गमादित्वात् घणोडः संघेन समूहेनागतान् संहननं संहन्यते वास्मिन्निति समोहन्तेरल् समूहे घादेशश्चेति परः स्वमते उद्घवत् फलैः कीदृशैः नानारसैः नानाविधरसयुक्तैः चित्रै रङ्गुतैः वारिभिः कीदृशैः स्वादुशीतैः मधुरशीतलैः॥ ६४॥ भ०

निघानिघतरुच्छन्ने तस्मिंस्ते लब्धिमैः फलैः। तृप्ता स्तां भ्राजथुमतीं पप्रच्छुः कस्य पूरियं॥ ६५॥

निघेत्यादि। तस्मिन्प्रघणे निघानिघैर्निमित्तानिमित्तैस्तरुभिः छन्ने निघो निमित्तमिति निपूर्व्वाद्धन्तेरपि टिलोपे निपात्यते समा ज०म०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



रोहपरिणाहाभ्यां निमित्तमित्युच्यते ते कपयः लब्धिमैर्लाभनि र्वृत्तैः छितः क्तिः फलैस्तृप्ताः सन्तस्तां स्त्रियं भ्राजथुमतीं शोभावतीं पप्रच्छुः पृष्टवन्तः कस्येयं पूरिति छितोऽथुच् तदन्तान्मतुप् ॥ ६५ ॥

भ० निधेत्यदि । तस्मिन् सौधसद्मनः प्रघाणे ते वानरास्तां पप्रच्छुः तस्मिन् कीदृशे निघानिघैर्दैर्घ्यविस्ताराभ्यां तुल्यातुल्यैस्तरुभिर्वृत्ते च्छन्ने आवृते परमते निःशेषेण हन्यन्ते ज्ञायन्तेइति नेस्तुल्यारोहपरिणाहे हन्तेर्डॆघादेशश्च स्वमते घणोरूपं विष्वक्समेनिघ इत्यमरः ते कीदृशाः लब्धिमैर्लाभेन निर्वृत्तैः फलैस्तृप्ताः लभङ्गे ड्वषप्राप्तौ छितस्तस्मे त्रिमक् ढभात्तथोर्धः तां कीदृशीं भ्राजथु मतीं शोभावतीं टुभ्राजृन्दीप्तौ छितोऽथुर्भावे किं पप्रच्छुरित्याह कस्येयं पूरिति अग्रिमश्लोकेनाप्यन्वयः ॥ ६५ ॥

रक्षणं करोषि कस्मात्त्वं यत्नेनाख्यायतां शुभे ।
स्वप्ने निधिवदाभाति तव सन्दर्शनं हि नः ॥ ६६ ॥

ज०म० रक्षणमित्यादि । हे शुभे कस्माद्वा रक्षणं रक्षां करोषि एत द्यत्नेनादरेण नोऽस्माकमाख्यायतां उभयत्रापि यजयाचेति नङ् यस्मात्स्वप्ने निधिवत् निधिरिव तव संदर्शनमाभाति नोऽस्माकम तिदुर्लभत्वात् स्वप्नइति स्वपोनन् निधिरिति उपसर्गेघोःकिः ॥ ६६ ॥

रक्षणमित्यादि । हे शुभे कस्माद्वा त्वं रक्षणं रक्षां करोषि अर्थात् पूर्य्याः एतत् यत्नेनादरेणाख्यायतां कथ्यतां हि यस्मात् स्वप्ने निधिरिव तव सन्दर्शनं अतिदुर्लभत्वान्नोऽस्माकमाभाति अतः पर्व्वमननुभूतत्वात् एवं पृच्छामइति भावः स्वपरक्षयतेत्या

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



दिना सर्व्वत्र नङ् रचेर्णलं निधिरिति किर्ह्रोऽन्तर्गैरिति किः उखेचीत्यालोपः ॥६६॥

**ततोजलधिगम्भीरान् वानरान् प्रत्युवाच सा। इयं दानवराजस्य पूः सृष्टिर्व्विश्वकर्म्मणः॥ ६७॥**

ततइत्यादि। ततस्तस्मादनन्तरं सा प्रत्युवाच जलं धीयते अस्मिन्निति अधिकरणेचेति किः जलधिः समुद्रः तद्वद्गम्भीरान क्षोभ्यत्वात् इयं पूः दानवराजस्य विश्वकर्म्मणः सृष्टिः सृज्यतइति सृष्टिः कर्म्मणिस्त्रियांक्तिन्। इतः स्त्रीलिङ्गमधिकृत्योच्यते॥ ६७॥ ज०म०

ततइत्यादि। तदनन्तरं सा वानरान् प्रत्युवाच कीदृशान् जलधिवत् गम्भीरान् अक्षोभ्यान् जलानि धीयन्तेऽचेति ढाड्ठे इति किः किं प्रत्युवाचेत्याह दानवराजस्य इयं पूः विश्वकर्म्मणः सृष्टिः पूर्व्वं कस्य पूरिति स्वामिनःकर्त्तुश्च प्रश्नइत्युभयमुक्तं सृज्य तइति क्तिः क्तिस्त्यघेइति कर्म्मणि स्त्रियां क्तिः। इतः स्त्रीकृदधिकारः॥ ६७॥ भ०

**निहतस्य स्थितिं भिन्दन् दानवोऽसौ बलद्विषा। दुहिता मेरुसावर्णेरहं नाम्ना स्वयम्प्रभा॥ ६८॥**

निहेत्यादि। असौ दानवराजः स्थितिं मर्य्यादां भिन्दन् स्थागापापचोभावइति क्तिन् बलद्विषा इन्द्रेण निहतः यस्य चाहं दुहिता सपिता नाम्ना मेरुसावर्णिः अहञ्च नाम्ना स्वयंप्रभेति॥ ६८॥ ज०म०

निहेत्यादि। बलद्विषा इन्द्रेण असौ दानवराजोनिहतः भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



रोहपरिणाहाभ्यां निमित्तमित्युच्यते ते कपयः लब्धिमैर्लाभनि र्वृत्तैः ड्वितः क्त्रिः फलैस्तृप्ताः सन्तस्तां स्त्रियं भ्राजथुमतीं शोभावतीं पप्रच्छुः पृष्टवन्तः कस्येयं पूरिति ड्वितोऽथुच् तदन्तान्मतुप् ॥ ६५ ॥

भ० निघेत्यदि। तस्मिन् सौधसद्मनः प्रघाणे ते वानरास्तां पप्रच्छुः तस्मिन् कीदृशे निघानिघैर्दैर्घ्यविस्ताराभ्यां तुल्यातुल्यैस्तरुभिर्वृते स्छन्ने आवृते परमते निःशेषेण हन्यन्ते ज्ञायन्तेइति नेस्तुल्यारो हपरिणाहे हन्तेर्डोघादेशश्च स्वमते घर्णोरूपं विष्वक्समेनिघ इत्यमरः ते कीदृशाः लब्धिमैर्लाभेन निर्वृत्तैः फलैस्तृप्ताः लभड्वा ङ्षप्राप्तौ ड्वितस्त्रम्रे त्रिमक् ढभात्तथोर्धः तां कीदृशीं भ्राजथु मतीं शोभावतीं टुभ्राजृन्दीप्तौ ड्वितोऽथुर्भावे किं पप्रच्छुरित्याह कस्येयं पूरिति अग्रिमश्लोकेनाप्यन्वयः॥ ६५॥

रक्षणं करोषि कस्मात्त्वं यत्नेनाख्यायतां शुभे।
स्वप्ने निधिवदाभाति तव सन्दर्शनं हि नः॥ ६६॥

ज०म० रक्षणमित्यादि। हे शुभे कस्माद्वा रक्षणं रक्षां करोषि एत द्यत्नेनादरेण नोऽस्माकमाख्यायतां उभयत्रापि यजयाचेति नङ् यस्मात्स्वप्ने निधिवत् निधिरिव तव संदर्शनमाभाति नोऽस्माकम तिदुर्लभत्वात् स्वप्नइति स्वपोनन् निधिरिति उपसर्गेघोःकिः ॥६६॥

रक्षणमित्यादि। हे शुभे कस्माद्वा त्वं रक्षणं रक्षां करोषि अर्थात् पूर्य्याः एतत् यत्नेनादरेणाख्यायतां कथ्यतां हि यस्मात् स्वप्ने निधिरिव तव सन्दर्शनं अतिदुर्लभत्वान्नोऽस्माकमाभाति अतः पर्व्वमननुभूतत्वात् एवं पृच्छामइति भावः स्वपरक्षयतेत्या

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



दिना सर्व्वत्र नङ् रचेर्णलं निधिरिति किर्ह्रोऽन्तर्गैरिति किः उखेचीत्यालोपः ॥६६॥

ततोजलधिगम्भीरान् वानरान् प्रत्युवाच सा। इयं दानवराजस्य पूः सृष्टिर्विश्वकर्म्मणः ॥ ६७ ॥

ततइत्यादि। ततस्तस्मादनन्तरं सा प्रत्युवाच जलं धीयते अस्मिन्निति अधिकरणेचेति किः जलधिः समुद्रः तद्वद्गम्भीरान क्षोभ्यत्वात् इयं पूः दानवराजस्य विश्वकर्म्मणः सृष्टिः सृज्यतइति सृष्टिः कर्म्मणिस्त्रियांक्तिन्। इतः स्त्रीलिङ्गमधिकृत्योच्यते॥ ६७॥ ज०म०

ततइत्यादि। तदनन्तरं सा वानरान् प्रत्युवाच कीदृशान् जलधिवत् गम्भीरान् अक्षोभ्यान् जलानि धीयन्तेऽत्रेति ढाड्डे इति किः किं प्रत्युवाचेत्याह दानवराजस्य इयं पूः विश्वकर्म्मणः सृष्टिः पूर्व्वं कस्य पूरिति स्वामिनः कर्त्तुश्च प्रश्नइत्युभयमुक्तं सृज्य तइति क्तिः क्तिस्त्यघेइति कर्म्मणि स्त्रियां क्तिः। इतः स्त्रीकृदधिकारः॥ ६७॥ भ०

निहतस्य स्थितिं भिन्दन् दानवोऽसौ बलद्विषा। दुहिता मेरुसावर्णेरहं नाम्ना स्वयम्प्रभा॥ ६८॥

निहेत्यादि। असौ दानवराजः स्थितिं मर्य्यादां भिन्दन् स्थागापापचोभावइति क्तिन् बलद्विषा इन्द्रेण निहतः यस्य चाहं दुहिता सपिता नाम्ना मेरुसावर्णिः अहञ्च नाम्ना स्वयंप्रभेति॥ ६८॥ ज०म०

निहेत्यादि। बलद्विषा इन्द्रेण असौ दानवराजोनिहतः भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



यतः स्थितिं मर्य्यादां भिन्दन् त्यजन् अहं मेरुसावर्णिनाम्नोदुहिता कन्या नाम्ना च स्वयंप्रभा पितुरात्मनस्य प्रसिद्धनामोत्कीर्त्तनेन दानववधानन्तरमिन्द्रेणाहमिह नियुक्तेति किम्वदन्ती सूचिता तिष्ठतेः क्तिः दोषोमास्यामिति ङिः मर्य्यादाधारणा स्थितिरित्यमरः स्वयंप्रभेति स्वयं प्रभाति शोभतइति आतोऽन्तःश्रङ्गेरिति ङः स्वयमात्मना प्रभा यस्याइति वा॥ ६८॥

जूतिमिच्छथ चेत्तूर्णं कीर्त्तिं वा पातुमात्मनः। करोमि वोवहिर्यूतीन् पिधध्वं पाणिभिर्दृशः॥ ६९ ॥

ज०म० जूतिमित्यादि। यदि तूर्णं शीघ्रं जूतिं गमनमिच्छथ कीर्त्तिं वा आत्मनः पातुं रचितुं वः युष्मान् वहिर्यूतीन् वहिर्भूतान् जूति यूतीत्यादिना निपातितः तत्र यौतेर्जवतेश्च क्तिन् दीर्घत्वञ्च निपात्यते कीर्त्तिरपि कृत्संशब्दने स्वार्थिकोणिच् उपधायाश्चेतीत्वं तस्मात् क्तिन् अतः पाणिभिः दृशोदृग्यीः पिधध्वं छादयध्वं अपि पूर्व्वाद्धाञोलोटि द्विर्व्वचनेदधस्तथोश्चेति अभ्यासस्य भष्भावे श्नाभ्यस्तयोरित्याकारलोपे झलांजश्झशीति धातोर्द्दकारे वष्टि भागुरिरित्युपसर्गाकारलोपे च रूपं॥ ६९ ॥

भ० जूतिमित्यादि। यूयं चेत् यदि तूर्णं शीघ्रं जूतिं गमनमिच्छथ प्रभुकार्य्यं कृत्वा आत्मनश्च कीर्त्तिं पातुं रचितुमिच्छथ तदा पाणिभिर्हस्तैर्दृशश्चचूंषि पिधध्वं आच्छादयत ततोऽहं वोयुष्मान् वहिर्यूतीन् वहिर्देशे यूतिर्मिश्रणं येषां तादृशान् वहिर्गतानित्यर्थः जुगत्यां युलमिश्रणे सातिहेतीति जूतियूती भावत्यन्ते निपात्येते कृत्कृसंशब्दे क्तित्वाचुरादिः कीर्त्त्यते येति कर्म्मणि क्तिः

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कीर्त्तक्तवदिति कीर्त्तादेशः ञेर्लोपः अपिपूर्व्वात् धाञोगीध्वं व्वा दीरेदिः खेर्द्दत्वं आङ्गोरित्यालोपः झभान्तस्येति खेर्दस्य धत्वं झष् झषोरिति मूलधातोर्दत्वं वातोऽवाप्योरिति पचे अपेरतोलुक् ॥ ६९ ॥

व्रज्यावती निरुद्धाचान् विद्येवानुष्ठितक्रियान्।
निरचिक्रमदिच्छातोवानरांश्चंक्रमावतः॥ ७० ॥

व्रज्येत्यादि। सा व्रज्यावती प्रशस्तगमनवती व्रजयजोर्भावे क्यप् प्रशंसायां मतुप् वानरान्निरुद्धाचान् निरचिक्रमत् निष्का सितवती क्रमेर्ण्यन्तस्य लुङि सन्वल्लघुनीति सन्वद्भावात् सन्यत इतीत्वं दीर्घोलघोरिति न दीर्घत्वं संयोगपरस्य गुरुत्वात् अनु ष्ठितक्रियानाचरिततदुपदिष्टव्यापारान् कृञःशचेति शः सार्व्व धातुकेयक् रिङादेशस्य चङ्क्रमावतः कुटिलगतिमतः अःप्रत्य यादित्यकारः इच्छातइति वानराणामिच्छायाः इच्छेति निपा तितं इषेः शप्रयः छभावस्य निपात्यते विद्यासंज्ञायामिति क्यप् यथा विद्या अनुष्ठितक्रियान् कृतपुरस्वरणान् पुरुषानिच्छातोऽभी ष्टं सम्पादयति तद्वत्सेति॥ ७० ॥ ज०म०

व्रज्येत्यादि। सा व्रज्यावती प्रशस्तगतिमती वानरानिच्छातो निरचिक्रमत् निष्क्रामयामास यथा विद्या तत्त्वज्ञानं इच्छातः अनुष्ठितक्रियान् विहितध्यानधारणादीन् संसारान्निष्क्रामयति तद्वत् वानरानपि अनुष्ठितक्रियान् आचरिततदुपदिष्टव्यापा रान् यतोनिरुद्धाचान् आच्छादितदृशः सक्थ्यक्ष्णःषःस्वाङ्ग इति षः पचे जितेन्द्रियान् अचशब्दइन्द्रियवचनः चंक्रमावतः भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



यतः स्थितिं मर्य्यादां भिन्दन् त्यजन् अहं मेरुसावर्णिनाम्नोदुहिता कन्या नाम्ना च स्वयंप्रभा पितुरात्मनश्च प्रसिद्धनामोत्कीर्त्तनेन दानववधानन्तरमिन्द्रेणाहमिह नियुक्तेति किम्वदन्ती सूचिता तिष्ठतेः क्तिः दोषोमास्थामिति ङिः मर्य्यादाधारणा स्थितिरित्यमरः स्वयंप्रभेति स्वयं प्रभाति शोभतइति आतोऽन्तःअङ्गेरिति ङः स्वयमात्मना प्रभा यस्याइति वा ॥ ६८॥

जूतिमिच्छथ चेत्तूर्णं कीर्त्तिं वा पातुमात्मनः। करोमि वोवहिर्यूतीन् पिधध्वं पाणिभिर्दृशः॥ ६९ ॥

ज०म० जूतिमित्यादि। यदि तूर्णं शीघ्रं जूतिं गमनमिच्छथ कीर्त्तिं वा आत्मनः पातुं रक्षितुं वः युष्मान् वहिर्यूतीन् वहिर्भूतान् ऊतियूतीत्यादिना निपातितः तत्र यौतेर्जवतेश्च क्तिन् दीर्घत्वञ्च निपात्यते कीर्त्तिरपि कृत्संशब्दने स्वार्थिकोणिच् उपधायाश्चेतीत्वं तस्मात् क्तिन् अतः पाणिभिः दृशोदृष्टीः पिधध्वं छादयध्वं अपिपूर्व्वाद्धाञोलोटि द्विर्व्वचनेदधस्तथोश्चेति अभ्यासस्य भष्भावे श्नाभ्यस्तयोरित्याकारलोपे झलांजशझशीति धातोर्ईकारे वष्टि भागुरिरित्युपसर्गाकारलोपे च रूपं॥ ६९ ॥

भ० जूतिमित्यादि। यूयं चेत् यदि तूर्णं शीघ्रं जूतिं गमनमिच्छथ प्रभुकार्य्यं कृत्वा आत्मनश्च कीर्त्तिं पातुं रक्षितुमिच्छथ तदा पाणिभिर्हस्तैर्दृशश्चक्षूंषि पिधध्वं आच्छादयत ततोऽहं वोयुष्मान् वहिर्यूतीन् वहिर्देशे यूतिर्मिश्रणं येषां तादृशान् वहिर्गतानित्यर्थः जुगत्यां युमिश्रणे सातिहेतीति जूतियूती भावत्यन्ते निपात्येते कृत्संशब्दे क्तिचुरादिः कीर्त्यते येति कर्म्मणि क्तिः

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कीर्त्तक्षतइति कीर्त्तादेशः ञेर्लोपः अपिपूर्व्वात् धाञोगीष्वं ष्वा दीरेदिः खेर्दत्वं आद्योरित्यालोपः झभान्तस्येति खेर्दस्य धत्वं झप् झसोरिति मूलधातोर्दत्वं वातोऽवाप्योरिति पक्षे अपेरतोलुक् ॥ ६९ ॥

व्रज्यावती निरुद्धाक्षान् विद्येवानुष्ठितक्रियान्।
निरचिक्रमदिच्छातोवानरांश्चंक्रमावतः॥ ७० ॥

व्रज्येत्यादि। सा व्रज्यावती प्रशस्तगमनवती व्रजयजोर्भावे क्यप् प्रशंसायां मतुप् वानरान्निरुद्धाक्षान् निरचिक्रमत् निष्कासितवती क्रमेर्ण्यन्तस्य लुङि सन्वल्लघुनीति सन्वद्भावात् सन्यत इतीत्वं दीर्घोलघोरिति न दीर्घत्वं संयोगपरस्य गुरुत्वात् अनुष्ठितक्रियानाचरिततदुपदिष्टव्यापारान् कृञःशचेति शः सार्व्वधातुकेयक् रिङादेशश्च चङ्क्रमावतः कुटिलगतिमतः अःप्रत्ययादित्यकारः इच्छातइति वानराणामिच्छायाः इच्छेति निपातितं इषेः शप्रत्ययः छभावश्च निपात्यते विद्यासंज्ञायामिति क्यप् यथा विद्या अनुष्ठितक्रियान् कृतपुरश्चरणान् पुरुषानिच्छातोऽभीष्टं सम्पादयति तद्वत्सेति ॥ ७० ॥  ज०म०

व्रज्येत्यादि। सा व्रज्यावती प्रशस्तगतिमती वानरानिच्छातो निरचिक्रमत् निष्क्रामयामास यथा विद्या तत्त्वज्ञानं इच्छातः अनुष्ठितक्रियान् विहितध्यानधारणादीन् संसारान्निष्क्रामयति तद्वत् वानरानपि अनुष्ठितक्रियान् आचरिततदुपदिष्टव्यापारान् यतोनिरुद्धाक्षान् आच्छादितदृशः सक्थ्यक्ष्णःषःस्वाङ्ग इति षः पक्षे जितेन्द्रियान् अक्षशब्दइन्द्रियवचनः चंक्रमावतः  भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अन्धकारे कुटिलगतियुक्तान् पक्षे तीर्थादिचंक्रमणकारिणः व्रज गतौ भीव्रजयजविदेत्यादिना क्यप् ततोऽस्त्यर्थे प्रशंसायां वतुः विद ज्ञाने पूर्व्ववत् क्यप् क्रियतइति क्रिया कुःश्नस्येति श्नः ऋद्धिः श्रुध्वोरितीयः क्रमेर्ण्यन्तात् जिश्रिद्रुस्रुइत्यङ् खेःसन्वत् ख्यस्येत् खःस्येदरिति गुरुत्वान्न दीर्घः इषुइच्छायां तुलेर्ह्वेत्यादिना निपातः क्रमेर्यङन्तात् शंस्यादः यङोलुक् ततोवतुः ॥ ७० ॥

निष्क्रम्य शिक्षया तस्यास्त्रपावन्तो रसातलात्। ज्ञात्वा मासमतिक्रान्तं व्यथामवललम्बिरे ॥ ७१ ॥

ज०म० निष्क्रेत्यादि। तस्याः शिक्षया उपदेशेन गुरोश्चहलइत्यकारः तस्माद्रसातलान्निष्क्रम्य निर्गम्य त्रपावन्तः स्त्रियाउपदेशेन निष्क्रान्तावयमिति त्रपेति षिद्भिदादिभ्योऽङ् मासमतिक्रान्तं ज्ञात्वा वहिर्निर्गताः सन्तः व्यथां भयं भिदादित्वादङ् अवललम्बिरे वयं मासावधिना प्रेषिताः स च मासोविनैव कार्य्येणातिक्रान्तइति स्वामिनोभयं ॥ ७१ ॥

भ० निष्क्रेत्यादि। तस्याः स्वयम्प्रभायाः शिक्षया उपदेशेन रसातलात् निष्क्रम्य स्वयं निष्क्रमाशक्त्या त्रपावन्तोलज्जायुक्ताः सन्तः राज्ञा अवधित्वेन निश्चितं मासं अतिक्रान्तं ज्ञात्वा ते व्यथां राज्ञः सकाशाद्भयं अवललम्बिरे प्रापुः शिक्षेः सेमक्तात्सरोरिति अप्रत्ययः त्रपूषङ्लज्जायां षित्त्वात् भीषिचिन्तिपूजीत्यादिना ङः व्यथषमङ्दुःखेचालेभये घटादित्वात् पूर्व्वेण ङः यद्यपि कविकल्पद्रुमे घटादेः सानुबन्धत्वं दृश्यते तथापि पूर्व्वाचार्य्यक्रमदर्श

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



मात् मुग्धबोधस्य कविकल्पद्रुमात् प्राक् कृतत्वेन भीषिचिन्ती त्यादौ आत्वर्घटादेरित्यस्य न वैयर्थ्यं रुजामिति पाठे तेनैव भिदादित्वात् ङः ॥ ७१ ॥

चिन्तावन्तः कथाश्चक्रुरुपधाभेदभीरवः। अकृत्वा नृपतेः कार्य्यं पूजां लप्स्यामहे कथं ॥ ७२ ॥

चिन्तेत्यादि। उपधानमुपधा परीचा आतश्चोपसर्गइत्यङ् ज०भ० तत्परिशुद्धोहि भृत्यः कार्य्येषु नियुज्यते तदकरणादुपधाया भेदोऽभावः तस्माद्भीरवः चिन्तावन्तइति कर्त्तव्यतामूढाः कथां चक्रुः कृतवन्तः कीदृशमित्याह अकृत्वा नृपतेः कार्य्यं पूजां लप्स्या महे कथमिति नैवेत्यर्थः चिन्तादयः चिन्तिपूजीत्यादिना अङ न्ताः ॥ ७२ ॥

चिन्तेत्यादि। नृपतेः कार्य्यं अकृत्वा कथं वयं पूजां लप्स्यामहे भ० अपि तु अवज्ञाताएव भविष्यामइति कथां ते चक्रुः कीदृशाः उपधाभेदभीरवः राज्ञा धर्म्मादिभिर्भृत्यानां या परीचा क्रिय ते सोपधा तस्याभेदः कार्य्यासामर्थ्येन भङ्गः तद्भीरवः अतएव चिन्तावन्तः चिन्तिकथिपूजिभ्योभीषिचिन्तीत्यादिना ङः उप पूर्व्वात् धाञआतोऽन्तः अङ्गेरिति ङः उपधाधर्म्माद्यैर्यत्परीचण मित्यमरः ॥ ७२ ॥

प्रायोपासनया शान्तिं मन्वानोवालिसम्भवः। युक्ता योगं स्थितः शैले विवृण्वंश्चित्तवेदनां ॥ ७३ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अन्धकारे कुटिलगतियुक्तान् पक्षे तीर्थादिचंक्रमणकारिणः व्रज गतौ श्रीव्रजयजविदेत्यादिना क्यप् ततोऽस्त्यर्थे प्रशंसायां वतुः विद ज्ञाने पूर्ब्ववत् क्यप् क्रियतइति क्रिया कुःश्वेति शः रुद्रिः श्रुभ्रोरितीयः क्रमेर्ण्यन्तात् ञिश्रिद्रुस्रुइत्यङ् खेःसन्वत् स्वस्येत् स्वःस्येररिति गुरुत्वान्न दीर्घः इषुइच्छायां तुलेर्छेत्यादिना निपातः क्रमेर्यङन्तात् शंस्यादः यङोलुक् ततोवतुः ॥ ७० ॥

**निष्क्रम्य शिक्षया तस्यास्त्रपावन्तो रसातलात्। ज्ञात्वा मासमतिक्रान्तं व्यथामवललम्बिरे ॥ ७१ ॥**

ज॰म॰ निष्क्रेत्यादि। तस्याः शिक्षया उपदेशेन गुरोश्चहलइत्यकारः तस्माद्रसातलान्निष्क्रम्य निर्गम्य त्रपावन्तः स्त्रिया उपदेशेन निष्क्रान्तावयमिति त्रपेति षिद्भिदादिभ्योऽङ् मासमतिक्रान्तं ज्ञात्वा वहिर्निर्गताः सन्तः व्यथां भयं भिदादित्वादङ् अवललम्बिरे वयं मासावधिना प्रेषिताः स च मासोविनैव कार्य्येणातिक्रान्तइति स्वामिनोभयं ॥ ७१ ॥

भ॰ निष्क्रेत्यादि। तस्याः स्वयम्प्रभायाः शिक्षया उपदेशेन रसातलात् निष्क्रम्य स्वयं निष्क्रमाशक्त्या त्रपावन्तोलज्जायुक्ताः सन्तः राज्ञा अवधित्वेन निश्चितं मासं अतिक्रान्तं ज्ञात्वा ते व्यथां राज्ञः सकाशाद्भयं अवललम्बिरे प्रापुः शिक्षेः स्नेमक्तात्सरोरिति अप्रत्ययः त्रपूषङ्लज्जायां षित्वात् भीषिचिन्तिपूजीत्यादिना ङः व्यथषमङ्दुःखेचालेभये घटादित्वात् पूर्व्वेण ङः यद्यपि कविकल्पद्रुमे घटादेः सानुवन्धत्वं दृश्यते तथापि पूर्व्वाचार्य्यक्रमदर्श

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



मात् मुग्धबोधस्य कविकल्पद्रुमात् प्राक् कृतत्वेन भीषिचिन्ती त्यादौ आत्वर्घटादेरित्यस्य न वैयर्थ्यं रुजामिति पाठे तेनैव भिदादित्वात् ङः ॥ ७१ ॥

चिन्तावन्तः कथाञ्चक्रुरुपधाभेदभीरवः। अकृत्वा नृपतेः कार्य्यं पूजां लप्स्यामहे कथं ॥ ७२ ॥

चिन्तेत्यादि। उपधानमुपधा परीक्षा आतश्चोपसर्गइत्यङ् तत्परिशुद्धोहि भृत्यः कार्य्येषु नियुज्यते तदकरणादुपधाया भेदोऽभावः तस्माद्भीरवः चिन्तावन्तइति कर्त्तव्यतामूढाः कथां चक्रुः कृतवन्तः कीदृशमित्याह अकृत्वा नृपतेः कार्य्यं पूजां लप्स्यामहे कथमिति नैवेत्यर्थः चिन्तादयः चिन्तिपूजीत्यादिना अङन्ताः ॥ ७२ ॥ जं॰भ॰

चिन्तेत्यादि। नृपतेः कार्य्यं अकृत्वा कथं वयं पूजां लप्स्यामहे अपि तु अवज्ञाताएव भविष्यामइति कथां ते चक्रुः कीदृशाः उपधाभेदभीरवः राज्ञा धर्म्मादिभिर्भृत्यानां या परीक्षा क्रियते सोपधा तस्याभेदः कार्य्यासामर्थ्येन भङ्गः तद्भीरवः अतएव चिन्तावन्तः चिन्तिकथिपूजिभ्योभीषिचिन्तीत्यादिना ङः उपपूर्व्वात् धाञआतोऽन्तः अङ्गेरिति ङः उपधाधर्म्माद्यैर्यत्परीक्षणमित्यमरः ॥ ७२ ॥ भ॰

प्रायोपासनया शान्तिं मन्वानोवालिसम्भवः। युक्त्वा योगं स्थितः शैले विवृण्वंश्चित्तवेदनां ॥ ७३ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० प्रायइत्यादि । उपासनेति ण्यासश्रन्थोयुच् प्रायेण उपवासेनोपासना अनशनेनासनमित्यर्थः तया शान्तिं कल्याणं मन्वानोऽवगच्छन् उपायान्तराभावात वालिसम्भवोऽङ्गदः योगश्चित्तवृत्तिनिरोधः तं युक्ता संवध्य शैले स्थितः चित्तवेदनां चित्तपीडां विदृखन् घट्टिविदिवन्दिभ्योयुग्वक्तव्यइति युच्॥ ७३ ॥

भ० प्रायइत्यादि । वालिसम्भवोऽङ्गदोयोगं चित्तवृत्तिनिरोधं युक्ता आत्मना सह संवध्य शैले स्थितः किं कुर्व्वन् प्रायेण उपवासेन उपासनया स्थित्या तस्य सेवया वा तदाचरणरूपया शान्तिं कल्याणं मरणं वा मन्वानः मन्यमानः प्रायश्चानशने मृत्यौ तुल्यवाऊल्ययोरपि । शान्तिः शमेऽपि कल्याणे इति च विश्वः जिलासङउपवेशे उपपूर्व्वोऽयं सेवायामपि ञोषिश्रन्थिग्रन्थीत्यादिना अनः चित्तवेदनां मनःपीडां विदृखन् प्रकाशयन् विदेः पूर्व्वेण अनः ॥ ७३ ॥

प्रस्कन्दिकामिव प्राप्तोध्यात्वा ब्रूते स्म जाम्ववान् ।
धिक् शालभञ्जिकाप्रख्यान् विषयान् कल्पनारुचीन् ॥ ७४ ॥

ज०म० प्रस्केत्यादि । त्वया का क्रिया कर्त्तव्येत्यन्यैः पृष्टः सन् जाम्ववान् ध्यात्वा विचिन्त्य ब्रूते स्म प्रस्कन्दिकामिव रोगविशेषमिव प्राप्तोयातः उत्साहाभावात् रोगाख्यायांण्वुल्वऊलं शालभञ्जिका क्रीडाविशेषः संज्ञायामिति ण्वुल् नित्यंक्रीडेत्यादिना सः तत्प्रख्याविषयारूपादयः अतितुच्छत्वात् अतस्तान् धिक् किन्तु कल्पनारुचीन् कल्पनीयान् ॥ ७४ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



प्रस्कन्देत्यादि। त्वया किं कार्य्यमित्यन्यैः पृष्टोजाम्बवान् स्वापतिर्धीत्वा ब्रूते स्म उक्तवान् प्रस्कन्दिकां क्षयरोगं प्राप्तइव उत्साहाभावात् स्कन्दिरशोषणेगत्यां नाम्न्यन्येतिकेति रोगार्थे एकः स्त्रीलमभिधानात् काप्यनाशीरिति अतद्वलं किं ब्रूते स्म इत्याह विषयान् रूपादीन् धिक् यतः शालभञ्जिका नागरक्रीडाविशेषस्तत्तुल्यान् भन्जोधौमोटने प्रस्कन्दिकावत् संज्ञायां एकः तुल्यलमाह कल्पनया विकल्पवशेन पचे स्वयं रचनया रुचिरभिलाषो यत्र तान् एतेन सर्व्वेषां काल्पनिकलमिति वेदान्तमतं दर्शितं क्षपेर्य्यन्तात् जीषियन्थोति अनः क्षपः क्लृपः॥ ७४॥ भ०

यां कारिं राजपुत्रोऽयमनुतिष्ठति तां क्रियां। अहमप्यनुतिष्ठामि सोऽप्युक्तैवमुपाविशत्॥ ७५॥

यामित्यादि। अयं राजपुत्रोऽङ्गदोयाङ्कारिं क्रियामनुतिष्ठति तां क्रियां अहमप्यनुतिष्ठामि विभाषाख्यानपरिप्रश्नयोरिञ्चेति करोतेरिञ् पचे क्वञःशचेति शः सोऽप्येवमुक्ता उपाविशत् अनशनेन स्थितः॥ ७५॥ ज०म०

यांकेत्यादि। विषयाणां काल्पनिकलेन जीवनं विफलमिति यां कारिं क्रियां अयं राजपुत्रोऽङ्गदोऽनुतिष्ठति करोति अहमपि तां क्रियां प्रायोपासनां अनुतिष्ठामि इत्युक्त्वा सोऽपि जाम्बवान् उपाविशत् अनशने स्थितः क्वञः प्रश्नाख्याने निरिति निः॥ ७५॥ भ०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज॰म॰ प्रायइत्यादि। उपासनेति ण्यासश्रन्थोयुच् प्रायेण उपवासे नोपासना अनशनेनासनमित्यर्थः तया शान्तिं कल्याणं मन्वानो ऽवगच्छन् उपायान्तराभावात वालिसम्भवोऽङ्गदः योगश्चित्त वृत्तिनिरोधः तं युक्त्वा संबध्य शैले स्थितः चित्तवेदनां चित्तपीडां विवृण्वन् घट्टिविदिवन्दिभ्योयुग्वक्तव्यइति युच्॥ ७३ ॥

भ॰ प्रायइत्यादि। वालिसम्भवोऽङ्गदोयोगं चित्तवृत्तिनिरोधं युक्त्वा आत्मना सह संबध्य शैले स्थितः किं कुर्व्वन् प्रायेण उप वासेन उपासनया स्थित्या तस्य सेवया वा तदाचरणरूपया शान्तिं कल्याणं मरणं वा मन्वानः मन्यमानः प्रायस्त्वानशने मृत्यौ तुल्यवाऊल्ययोरपि। शान्तिः शमेऽपि कल्याणे इति च विश्वः ञिलासङ्गउपवेशे उपपूर्व्वोऽयं सेवायामपि ण्योषिश्रन्थिग्र न्थोत्यादिना अनः चित्तवेदनां मनःपीडां विवृण्वन् प्रकाशयन् विदेः पूर्व्वेण अनः॥ ७३ ॥

प्रस्कन्दिकामिव प्राप्तोध्यात्वा ब्रूते स्म जाम्बवान्।
धिक् शालभञ्जिकाप्रख्यान् विषयान् कल्पनारुचीन्
॥ ७४ ॥

ज॰म॰ प्रस्केत्यादि। त्वया का क्रिया कर्त्तव्येत्यन्यैः पृष्टः सन् जाम्ब वान् ध्यात्वा विचिन्त्य ब्रूते स्म प्रस्कन्दिकामिव रोगविशेषमिव प्राप्तोयातः उत्साहाभावात् रोगाख्यायांण्वुल्वऊलं शालभञ्जि का क्रीडाविशेषः संज्ञायामिति ण्वुल् नित्यंक्रीडेत्यादिना सः तत्प्रख्याविषयारूपादयः अतितुच्छत्वात् अतस्तान् धिक् किन्तु कल्पनारुचीन् कल्पनीयान्॥ ७४ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



प्रस्कैत्यादि। त्वया किं कार्य्यमित्यन्यैः पृष्टोजाम्बवान् स्वचप तिर्थीला ब्रूते स्म उक्तवान् प्रस्कन्दिकां क्षयरोगं प्राप्तइव उत्सा हाभावात् स्कन्दिरशोषणेगत्यां नाम्न्यन्येतिक्कैति रोगार्थे ण्कः भ० स्त्रीलमभिधानात् काम्यनाशीरिति अतद्रूलं किं ब्रूते स्म इत्याह विषयान् रूपादीन् धिक् यतः शालभञ्जिका नागरक्रीडाविशेष स्तत्तुल्यान् भञ्जोधीमोटने प्रस्कन्दिकावत् संज्ञायां ण्कः तुल्यल माह कल्पनया विकल्पवशेन पचे स्वयं रचनया रुचिरभिलाषो यत्र तान् एतेन सर्वेषां काल्पनिकत्वमिति वेदान्तमतं दर्शितं क्षपेर्य्यन्तात् जीषिग्रन्थीति अनः क्षपः कूपः॥ ७४॥

यां कारिं राजपुत्रोऽयमनुतिष्ठति तां क्रियां। अह मप्यनुतिष्ठामि सोऽप्युक्तैवमुपाविशत्॥ ७५॥

यामित्यादि। अयं राजपुत्रोऽङ्गदोयाङ्कारिं क्रियामनुतिष्ठ जं०म० ति तां क्रियां अहमप्यनुतिष्ठामि विभाषाख्यानपरिप्रश्नयोरिञ्चे ति करोतेरिञ् पचे कृञःशचेति शः सोऽप्येवमुक्ता उपाविशत् अनशनेन स्थितः॥ ७५॥

यांकेत्यादि। विषयाणां काल्पनिकत्वेन जीवनं विफलमिति भ० यां कारिं क्रियां अयं राजपुत्रोऽङ्गदोऽनुतिष्ठति करोति अह मपि तां क्रियां प्रायोपासनां अनुतिष्ठामि इत्युक्ता सोऽपि जाम्ब वान् उपाविशत् अनशने स्थितः कृञः प्रश्नाख्याने निरिति निः॥ ७५॥



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



उवाच मारुतिर्वृद्धे संन्यासिन्यत्र वानरान्। अहं
पर्य्यायसंप्राप्तां कुर्व्वे प्रायोपवेशिकां॥ ७६॥

ज°म° उवाचेत्यादि। मारुतिर्व्वानरानुवाच वृद्धे जाम्बवति संन्यासिनि अनशनवति अहमप्यत्र शैले पर्य्यायेण परिपाट्या सम्प्राप्तां प्रायोपवेशिकां अनशनं कुर्व्वे पर्य्यायार्हेत्यादिना ण्वुल्॥ ७६॥

भ° उवाचेत्यादि। मारुतिर्हनूमान् वानरान् उवाच किमुवाचेत्याह अत्र जाम्बवति वृद्धे संन्यासिनि त्यक्ताहारे सति अहमपि पर्य्यायेण क्रमेण प्राप्तां प्रायेण उपवासेन उपवेशिकां स्थितिं कुर्व्वे प्रायः स्याद्भोजनत्यागः सन्न्यासोऽनशनं स्मृतमिति हलायुधः उपपूर्व्वाद्विशेः पर्य्यायेणकइति परः स्मते त्यभावेत्यादौ स्त्र्यणक इत्यनेन स्त्रियां भावे ण्कः स्यादिति ज्ञापितं॥ ७६॥

अभावे भवतां योऽस्मिन् जीवेत्तस्यास्त्वजीवनिः।
इत्युक्त्वा सर्व्वएवास्थुर्व्वध्वा योगासनानि ते॥ ७७॥

ज°म° अभावइत्यादि। अभावे विनाशे भवतां योऽस्मिन् लोके जीवेत् तस्यास्त्वजीवनिः धिग्जीवितं आक्रोशे नञ्यनिः एवमुक्त्वा सर्व्वएव अस्थुः स्थिताः तिष्ठतेर्गातिस्थेति सिचोलुक् बध्वा योगासनानि विरचय्य पद्मासनादीनि॥ ७७॥

भ° अभावइत्यादि। भवतामभावे विनाशेऽस्मिन् लोके योजीवेत् तस्याजीवनिर्म्मरणं धिग्जीवनं वास्तु नञोऽन्याक्रोशेस्त्रीति अनिः इत्युक्त्वा सर्व्वएव ते वानरायोगासनानि पद्मासनानि बद्धा अस्थुः स्थिताः तिष्ठतेर्घ्रा भूस्थेति सेर्लुक् अनउस् उस्थेचीत्या लोपः॥ ७७॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अक्लेश्यमसिनाग्न्यन्तं कबन्धबधमभ्यधुः। धिङ्नः प्रपतनं घोरं क्लेदान्तत्वमनाथवत्॥ ७८॥

अक्लइत्यादि। इतः स्त्रीलिङ्गभावं निवर्त्य कृदुदाह्रियते। ज०म० कबन्धबधं योजनवाहोर्व्वधमभ्यधुः अभिहितवन्तः अभिपूर्व्वोधा अभिधाने वर्त्तते कीदृशं अक्लेश्यं प्रयासरहितं कस्मात् असिना सुखमरणात् तच्चाग्न्यन्तं अन्ते तस्याग्निरभूत् अस्माकं धिक् प्रपतनं विनाशं दुःखेन घोरत्वात् क्लेदान्तत्वं अन्ते पूतीभावन्त यत्रास्ति अर्शआदित्वादच् अनाथवत् अनाथानामिव अक्लेश्य प्रपतनशब्दौ भावसाधनौ कृत्यल्युटोवऊत्वमिति॥ ७८॥

स्त्रीलिङ्गकृदधिकारं निवर्त्त्य कृदुच्यते। अक्लेश्यमित्यादि भ० ते कबन्धस्य योजनवाहोर्व्वधं मरणं अभ्यधुः उक्तवन्तः अभिपूर्व्व धाञश्चां रूपं अस्युरितिवत् कीदृशं असिना अक्लेश्यं क्लेशाजनकं खड्गेन शीघ्रहननात् नातिदुःखदमित्यर्थः अग्न्यन्तं दाहेन अग्निर न्तोऽवसानं यत्र अतएव परकालेऽपि न दुःखदमिति भावः अना थवत् नाथरहितानामिव नोऽस्माकं प्रपतनं मरणं धिक् इत्यप्य भ्यधुरिति सम्बन्धः यतोघोरं उपवासदुःखवाऊल्यात् क्लेदान्तत्वं दाहाभावात् क्लेदएवान्ते यस्य तस्य भावः क्लेदान्तत्वं तद्विद्यते ऽस्येति अर्शआदित्वादः क्लेदस्यान्तत्वं यत्रेति वा क्लेदमन्त भूतं त्वचति संवृणोतीति गमादित्वाड्डः इति वा अस्माकं प्रप तनं क्लेदान्तत्वञ्चेत्युभयं धिक् घोरत्वादिह परत्र चेति केचित् न क्लिश्नातीत्यक्लेश्यः हस्ष्यासोरिति ढभावविहितोघ्यण् कृद्धोःक भावइत्युक्तेरत्र कर्त्तरि स्यात् यदा क्लेश्यं क्लेशः भावे घ्यण् न वि

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



पतते क्लेश्यं यत्रेति विग्रहः प्रपतनमिति भावे घञ्जल्लनटोऽघे इत्य नट् ॥ ७८ ॥

ततोमन्दगतः पक्षी तेषां प्रायोपवेशनं । अशनीय मिवाशंसुर्म्महानायादशोभनः ॥ ७९ ॥

ज॰म॰ ततइत्यादि । ततोऽभिहितानन्तरं महान् पक्षी सम्पातिनामा जटायुभ्राता आयात् आगतः मन्दगतोमन्दगमनः नपुंसके भावे क्तः आहिताग्नित्वात्परनिपातः तेषां यत्प्रायोपवेशनं तदशनीय मिव भोजनीयमिव कृत्यल्युटोवहुलमिति कृत्यः आशंसुः आशंस नशीलः अशोभनः शोभारहितः दावाग्निना लुष्टशरीरत्वात् ल्युड्वे ति भावे ल्युट् कर्म्मणि च येनेत्येतत्परिहृत्योदाहृतत्वात् ॥ ७९ ॥

भ॰ ततइत्यादि । तदनन्तरं महान् पक्षी सम्पातिनामा तत्रा यात् आगतः यातेर्व्वां रूपं कीदृशः मन्दगतः मन्दं गतं गमनं यस्य गमेर्भावे क्तः येषां वानराणां यत् प्रायोपवेशनं तत् अशनीय मिव स्वभक्ष्यमिव तृप्तिजनकत्वात् आशंसुः आशंसनशीलः भावे ऽनट् अनीयस्य कर्त्तोःकभावइत्युक्तेः करणे वानीयः तदा अशनीयं भोजनसाधनं अशोभनः शोभारहितः सूर्य्यतेजसा दग्धपक्षत्वात् नन्द्यादित्वात्कर्त्तरि अनः न विद्यते शोभनं यस्ये ति वा भावेऽनट् ॥ ७९ ॥

देहनश्चनतुण्डाग्रं तं विलोक्याप्लुभाकरं । पापगो चरमात्मानमशोचन् वानरामुह्नः ॥ ८० ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



देहेत्यादि। वृश्च्यते येन तुण्डाग्रेण करणाधिकरणयोश्चेति करणे ल्युट् देहस्य व्रश्चनमिति कर्मयोगात्षष्ठी देहव्रश्चनं तुण्डा ग्रं यस्य तं विलोक्य वानरा अशुभाकरं पापस्योत्पत्तिस्थानं आकरद्रवाकरः पुंसि संज्ञायां घः तत्र हि करणाधिकरणयो रिति वर्त्तते एवं उत्तरत्रापि चात्मानं पापगोचरं पापविषयं पापविषये पतितावयमिति मुहुरशोचन् शोचितवन्तः गोचर सञ्चरेत्यधिकरणे निपातितः॥ ८०॥ ज॰म॰

देहेत्यादि। तं पक्षिणं विलोक्य वानराः पापगोचरं पाप विषयमात्मानं मुहुर्व्वारं वारं अशोचन् पापविषयोस्मदात्मेति सर्व्वे ऊचुरित्यर्थः कीदृशं पक्षिणं देहव्रश्चनतुण्डाग्रं वृश्चति अने नेति व्रश्चनं करणेऽनट् देहस्य व्रश्चनं तुण्डाग्रं यस्य तं यद्वा देहं वृश्चति छिनत्तीति देहव्रश्चनं कभावेऽमी इति वचनात् कर्त्तरि अनट् नन्द्यादित्वाद्वा अनः अशुभाकरं अशुभस्य पापस्य आक रमुत्पत्तिस्थानं आकुर्व्वन्त्यस्मिन्निति संज्ञायामल् गावश्चरन्त्य स्मिन्निति गोचरोऽलन्तः स्वभावात् प्रत्यासन्नवाची॥ ८०॥ भ॰

जटायुः पुण्यकृत्यची दण्डकारण्यसञ्चरः। कृत्वा राघवकार्य्यं यः स्वरारूढोऽग्निसंस्कृतः॥ ८१॥

जटेत्यादि। कृत्वा राघवकार्य्यं अग्निसंस्कृतः अग्निना कृत संस्कारः स्वः स्वर्गमारूढः जटायुः पुण्यकृत् संचरत्यस्मिन्निति संचरः पूर्व्ववत् निपातितः दण्डकारण्यं संचरोऽवस्थानं यस्येति ॥ ८१॥ ज॰म॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ॰ जटेत्यादि। जटायुः पक्षी पुण्यकृत् पुण्यं कृतवान् चासुमिति क्विप् खस्थतन् कीदृशः दण्डकारण्यं सञ्चरः स्थानं यस्य सतथा सञ्चरत्यस्मिन्नित्याधारेऽल् योराघवकार्य्यं सीताहरणविज्ञाप नादिकं कृत्वा अग्निना संस्कृतः कृतसंस्कारः सन् स्वः स्वर्गमारूढः गत्यर्थाढेत्यादिना रुहेः कर्त्तरि क्तः होढः ढभादिति धः ष्टुभि रिति ढः ढ्रोढ्रीति ढलुक् दीर्घश्च ॥ ८१ ॥

**नरकस्यावतारोऽयं प्रत्यक्षोऽस्माकमागतः। अचे ष्टायदिहान्यायादनेनात्स्यामहे वयं॥ ८२ ॥**

ज॰म॰ नरेत्यादि। अवतीर्य्यते येन कर्म्मणेति अवेस्तॄस्त्रोर्घञ् सएवायं नरकस्यावतारः प्रत्यक्षोऽस्माकमागतः यद्यस्माद्वयमचेष्टाः निस्बलाः अनेन पक्षिणा अन्यायादयुक्त्या नीयते अनेनेनि निपूर्व्वा दिणः अध्यायन्यायेति निपातनात् घञ् अत्स्यामहे भक्षयिष्यामहे कर्म्मणि ऌट्॥ ८२ ॥

भ॰ नरेत्यादि। नरकमवतरति येनाधर्म्मेण सएव प्रत्यक्षद्व्रि ययाह्योऽयं पक्षिरूपोऽस्माकमागतः रूपकालङ्कारोवा पक्षि विशेषणं वा अवपूर्व्वात्तरतेः करणे घञ् नरकस्येति कर्म्मणि षष्ठी यद्यस्मात् इह प्रदेशे अनेन पक्षिणा अन्यायादनौचित्यायु क्त्या वा वयमत्स्यामहे भक्षणीयाः यतोऽचेष्टाश्चेष्टारहिताः नीयतेऽनेनेति न्यायः निपूर्व्वादिणः करणे घञ् अदःकर्म्मणि ती ॥ ८२ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



हृदयोदङ्कसंस्थानं कृतान्तानायसन्निभं। शरीराखनतुण्डाग्रं प्राप्यामुं शर्म्म दुर्लभं॥ ८३॥

हृदेत्यादि। अमुं पक्षिणं प्राप्य कीदृशं हृदयोदङ्कसंस्थानं उदञ्चते आकृष्यते अनेनेति उत्पूर्व्वादञ्चतेरुदङ्कोदकइति घञ् निपात्यते हृदयस्योदङ्कः संदंशः तत्संस्थानं तत्सदृशं कृतान्तानायसन्निभं यमजालतुल्यं तत्प्रविष्टस्य दुःखेन निर्गमत्वात् जालमानायइति नयतेराङ्पूर्व्वात्करणे घञ् निपात्यते आखन्यते येन तुण्डाग्रेण खनोघच् शरीरस्याखनं तादृक् तुण्डाग्रं यस्येति प्राप्य शर्म्म सुखं दुर्लभं कृच्छ्लभ्यं ईषदित्यादिना खल् अत्र करणाधिकरणयोश्चेति निवृत्तं तयोरेव कृत्यक्तखलर्था इति योज्यं उपसर्गात् खलघञोरिति प्राप्तस्य नुमः नसुदुर्भ्यामिति प्रतिषेधः॥ ८३॥ ज॰म॰

हृदेत्यादि। अमुं पक्षिणं प्राप्य अस्माकं शर्म्म सुखं दुर्लभं दुःखेन लभ्यतइति ईषद्दुःसेोरिति खल् अमुं कीदृशं हृदयोदङ्कसंस्थानं हृदयमुदच्यते ऊर्द्धमाकृष्यते येन तादृशं संस्थानमाकृतिर्यस्य तं ऊर्द्धहृदयाकृतिमित्यर्थः हृदयोद्वेजकाकृतिमिति वा उत्पूर्व्वादञ्चतेः करणे घञ् चजोः कुगाविति कत्वं गत्यर्थस्याञ्चतेः सेमक्तत्वाभावात् अङ्कधातोरूपमित्यन्ये कृतान्तानायसन्निभं यमजालसदृशं जाले प्रविष्टस्य दुःखेन निर्गमइति भावः आनीयतेऽनेनेति आनायोजालं करणे घञ् आनायः पुंसि जालं स्यादित्यमरः शरीराखनतुण्डाग्रं आखन्यते समन्ताद्विदार्य्यते येन तदाखनं करणेऽल् शरीरस्याखनं तुण्डाग्रं यस्य तं आखरेति पाठे खनोडडरेति डरः॥ ८३॥ भ॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० जटेत्यादि। जटायुः पक्षी पुण्यकृत् पुण्यं कृतवान् ञासुञिति क्विप् स्वस्ततन् कीदृशः दण्डकारण्यं सञ्चरः स्थानं यस्य सतथा सञ्चरत्यस्मिन्नित्याधारेऽल् योराघवकार्य्यं सीताहरणविज्ञाप नादिकं कृत्वा अग्निना संस्कृतः कृतसंस्कारः सन् खः स्वर्गमारूढः गत्यर्थाढेत्यादिना रुहेः कर्त्तरि क्तः होढः ढभादिति धः ष्टुभि रिति ढः ढ्रोर्ढीति ढलुक् दीर्घश्च ॥ ८१ ॥

नरकस्यावतारोऽयं प्रत्यक्षोऽस्माकमागतः। अचे ष्टायदिहान्यायादनेनात्स्यामहे वयं॥ ८२॥

ज०म० नरेत्यादि। अवतीर्य्यते येन कर्म्मणेति अवेस्तृस्त्रोर्घञ् सएवायं नरकस्यावतारः प्रत्यक्षोऽस्माकमागतः यद्यस्माद्वयमचेष्टाः निश्चलाः अनेन पक्षिणा अन्यायादयुक्त्या नीयते अनेनेनि निपूर्व्वा दिणः अध्यायन्यायेति निपातनात् घञ् अत्स्यामहे भक्षयिष्यामहे कर्म्मणि लृट्॥ ८२ ॥

भ० नरेत्यादि। नरकमवतरति येनाधर्म्मेण सएव प्रत्यक्षइन्द्रि यग्राह्योऽयं पक्षिरूपोऽस्माकमागतः रूपकालङ्कारोवा पक्षि विशेषणं वा अवपूर्व्वात्तरतेः करणे घञ् नरकस्येति कर्म्मणि षष्ठी यद्यस्मात् इह प्रदेशे अनेन पक्षिणा अन्यायादनौचित्यायु क्त्या वा वयमत्स्यामहे भक्षणीयाः यतोऽचेष्टाश्चेष्टारहिताः नीयतेऽनेनेति न्यायः निपूर्व्वादिणः करणे घञ् अदःकर्म्मणि ती ॥ ८२ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



हृदयोदङ्कसंस्थानं कृतान्तानायसन्निभं। शरीराखनतुण्डाग्रं प्राप्यामुं शर्म्म दुर्ल्लभं॥ ८३॥

हृदेत्यादि। अमुं पक्षिणं प्राप्य कीदृशं हृदयोदङ्कसंस्थानं उदञ्चरते आकृष्यते अनेनेति उत्पूर्व्वादञ्चतेहृदङ्कोदकइति घञ् निपात्यते हृदयस्योदङ्कः संदंशः तत्संस्थानं तत्सदृशं कृतान्तानायसन्निभं यमजालतुल्यं तत्प्रविष्टस्य दुःखेन निर्गमत्वात् जालमानायइति नयतेराङ्पूर्व्वात्करणे घञ् निपात्यते आखन्यते येन तुण्डाग्रेण खनोघच् शरीरस्याखनं तादृक् तुण्डाग्रं यस्येति प्राप्य शर्म्म सुखं दुर्लभं कृच्छ्रलभ्यं ईषदित्यादिना खल् अत्र करणाधिकरणयोश्चेति निवृत्तं तयोरेव कृत्यक्तखलर्था इति योज्यं उपसर्गात् खलघञोरिति प्राप्तस्य नुमः नसुदुर्भ्यामिति प्रतिषेधः॥ ८३॥ ज॰म॰

हृदेत्यादि। अमुं पक्षिणं प्राप्य अस्माकं शर्म्म सुखं दुर्लभं दुःखेन लभ्यतइति ईषद्दुःसोरिति खल् अमुं कीदृशं हृदयोदङ्कसंस्थानं हृदयमुदच्यते ऊर्द्ध्वमाकृष्यते येन तादृशं संस्थानमाकृतिर्यस्य तं ऊर्द्ध्वहृदयाकृतिमित्यर्थः हृदयोद्वेजकाकृतिमिति वा उत्पूर्व्वादञ्चतेः करणे घञ् चजोः कुघिण्ण्यतोरिति कत्वं गत्यर्थस्याञ्चतेः सेमकत्वाभावात् अङ्कधातोरूपमित्यन्ये कृतान्तानायसन्निभं यमजालसदृशं जाले प्रविष्टस्य दुःखेन निर्गमइति भावः आनीयतेऽनेनेति आनायोजालं करणे घञ् आनायः पुंसि जालं स्यादित्यमरः शरीराखनतुण्डाग्रं आखन्यते समन्ताद्विदार्य्यते येन तदाखनं करणेऽल् शरीरस्याखनं तुण्डाग्रं यस्य तं आखरेति पाठे खनोडडरेति डरः॥ ८३॥ भ॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ईषदाढ्यङ्करोऽप्येष न परत्राप्यशुभक्रियः। अस्मान्
त्तुमितोऽभ्येति परिम्लानो बुभुक्षया॥ ८४॥

ज०म० ईषदित्यादि। य एष अस्मानत्तुमितः प्रदेशादभ्येति आगच्छति सपरत्र परलोके ईषदाढ्यङ्करोऽपि अनाढ्यैरीषदाढ्योऽपि न कृतः अशुभेन कर्म्मणेत्यर्थात् कर्तृकर्म्मणोश्च भूकृञोरिति च्व्यर्थे कर्म्मोपपदात्करोतेः खल् यतः परिम्लानोबुभुक्षया योहि कर्म्मणाशुभेन ईषदाढ्यङ्करोऽपि न कृतः सकथं न बुभुक्षया पीड्यते परिम्लायतीति कर्त्तरि बहुलवचनात् ल्युट् निष्ठान्तोवा संयोगादेरित्यादिना निष्ठानत्वं अशुभक्रियः सलक्षोहाभिरतत्वात्॥ ८४॥

भ० ईषदित्यादि। एषपक्षी बुभुक्षया परिम्लानः सन् अत्तुं भक्षयितुं इह प्रदेशे अभ्येति आभिमुख्येनागच्छति इतइति पाठे स्वस्थानादित्यर्थः न एष परत्र परलोके ईषदाढ्यङ्करोऽपि भविष्यति अनाढ्योऽयमीषदाढ्योऽपि न करिष्यते केनचित् कर्म्मणेत्यर्थः किम्वा यस्मात् परलोके ईषदाढ्योऽपि न कृतः शुभकर्म्मणार्थात् तेनायं बुभुक्षया म्लानः परलोके शुभकर्म्मणा यद्याढ्यः कृतः स्यात् तदा बुभुक्षया न पीडितः स्यादित्यर्थः ईषद्दुःसोरिति खल् खित्करणेन कर्तृकर्म्मणोर्व्यवधानमपि प्राप्तं तच्च ईषदाढ्यम्भवमित्युदाहरणेन स्पष्टीकृतं करोतेरिहाभूतप्रादुर्भावार्थत्वात् च्व्यर्थोलभ्यते परे तु सुदुरीषत्सु कर्तृकर्म्मभ्यामभूततद्भावे भूकृञः खलभावकर्म्मणोरित्याहुः अशुभक्रियः अशुभकर्म्मा परद्रोहित्वात् परिम्लानइति कभावेऽसीति कर्त्तर्य्यनट् किम्वा गत्यर्थाढेत्यादिना

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कर्त्तरि क्तः सुब्धाद्योदित्यादिना नत्वं इत्येवमब्रोचन् वानरा मुङ्करित्यन्वयः ॥ ८४ ॥

संप्राप्य वानरान् पक्षी जगाद मधुरं वचः। के यूयं दुरुपस्थाने मनसाप्यद्रिमूर्द्धनि॥ ८५ ॥

इति क्ष्दधिकारः।

संप्रेत्यादि। वानरान् संप्राप्य पक्षी जगाद गदितवान् के यूयं अद्रिमूर्द्धनि पर्व्वतशिरसि दुरुपस्थाने दुःखेनोपस्थातुं शक्ये मनसापि किं पुनः शरीरेण आतायुद्य तत्रापि ईषदादयोऽनुवर्त्तन्ते कर्टकर्म्मणोरिति न स्मर्य्यते। इति क्ष्दधिकारः॥ ८५ ॥ ज०म०

संप्राप्येत्यादि। वानरान् संप्राप्य पक्षी मधुरं वचोजगाद किन्तदित्याह के यूयमद्रिमूर्द्धनि पर्व्वतशिखरे स्थिताः मनसापि दुरुपस्थाने दुःखेनैवोपस्थातुं शक्ये किं पुनः शरीरेण आतोऽनोऽ दरिद्रइति क्नः। इति क्ष्दधिकारः॥ ८५ ॥ भ०

आत्मनः परिदेवध्वे कुर्व्वन्तोरामसंकथां। समानोदर्य्यमस्माकं जटायुच्च स्तुथादरात्॥ ८६ ॥

इतः प्रकीर्णकश्लोकानाह। आत्मेत्यादि आत्मनः परिदेवध्वे शोचथ तेवृदेवृदेवनइति भौवादिकः शसि नसंयोगाद्वमन्तादि त्यलोपोन भवति जटायुच्च समानोदर्य्यं भ्रातरमस्माकं समानोदरे शयितइति यत् आदरात्मस्तुथ प्रस्तुतिं कुरुथ जढायुः ज०म०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



पुण्यकृदित्यादिना रामसत्कथाञ्च कुर्व्वन्तः अतः के यूयमिति । ८६ ॥

भ॰ अथ प्रकीर्णकाः। आत्मेत्यादि। यूयं आत्मनः परिदेवध्वे विलपथ देवृङ् देवने रामस्य संकथां कुर्व्वन्तोऽस्माकं समानोदर्य्यं सहोदरं जटायुञ्च आदरेण स्तुथ जटायुः पुण्यकृदित्यादिना तत्स्तुतिं कुरुथ अतः के यूयमिति पूर्व्वेणान्वयः सम्बन्धः समानोदरे शयितइत्यर्थे ढघेकादिति यः रूपनामेति विकल्पविधानात् न समानस्य सादेशः॥ ८६ ॥

शङ्काधवित्रवचनं प्रत्यूचुर्व्वानराः खगं। वयं शत्रुलवित्रेषोर्दूतारामस्य भूपतेः॥ ८७॥

ज॰म॰ शंकेत्यादि। धुनोत्यपनयत्यनेनेति धवित्रं अर्त्तिलूधूइत्यादिना करणे इत्रः किमयं करिष्यतीति शङ्कया धवित्रं वचनं यस्य तं खगं वानराः प्रत्यूचुः शत्रुलवित्रादिषवोवाणायस्य रामस्य भूपतेस्तस्य वयं दूताः पूर्व्ववदित्रं कृत्वा सः॥ ८७॥

भ॰ शङ्केत्यादि। वानराः खगं प्रत्यूचुः कीदृशं किमयं खगः करिष्यति इत्येवंरूपायाः शङ्कायाधवित्रं अपनयनकारकं वचनं यस्य तादृशं किमित्याह वयं रामस्य भूपतेर्दूताः कीदृशस्य शत्रूणां लवित्राश्छेदकरणानि इषवोयस्य धूञ्गिकम्पे लूञ्गिछिदिश्राभ्यां लूधूखनेति करणे इत्रः॥ ८७॥

केनापि दौष्कुलेयेन कुल्यां माहाकुलीं प्रियां। हृतां माहाकुलीनस्य तस्य लिप्सामहे वयं॥ ८८॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



केनेत्यादि। तस्य रामस्य प्रियां केनापि दौष्कुलेयेन हृतां ज०म
दुष्कुलस्यापत्यमिति दुष्कुलाड्ढञ् कुल्यां कुले साध्वीं तत्र साधु
रिति यत् माहाकुलीं माहाकुलीनस्येति महाकुलस्यापत्यमिति
महाकुलादञ्खञाविति अञ्खञौ लिप्सामहे वयं लब्धुमिच्छा
महे॥॥ ८८॥

केनेत्यादि। तस्य रामस्य प्रियां वयं लिप्सामहे लब्धुमि भ०
च्छामः लभेः सनिमिमीत्यादिना इस् खिलोपश्च स्यादेरिति
सोलोपः झपूझसोरिति पत्वं प्रियां कीदृशीं केनापि दौष्कुलेयेन
दुष्कुलोत्पन्नेन हृतां दुष्कुलशब्दात् अत्यादित्वात् ण्येयः निष्प
तन्यदतिवत् मूर्द्धन्यः कुल्यां कुले साध्वीं ढघेकादिति यः माहा
कुलीं महाकुलात् जनकात् जातां वाक्याद्यतइति शिवादित्वात्
ष्णः तस्य कीदृशस्य महाकुलीनस्य महाकुलोत्पन्नस्य परमते
महाकुलादपत्यार्थे णीनः ततः शिवादित्वात्ष्णः किम्वा महा
कुलाद्दशरथाज्जातइत्यर्थे ढघेकादिति णीनः॥ ८८॥

त्रिंशत्तममहर्यातं मत्वा प्रत्यागमावधिं। अकृ
तार्थाविषीदन्तः परलोकमुपास्महे॥ ८९॥

त्रिंशदित्यादि। त्रिंशतः पूरणं विंशत्यादिभ्यइति तमट् त्रिंश ज०म०
त्तमं यदहः तत्प्रत्यागमावधिं प्रत्यागमनस्यावधिं यातं अतीतं
मत्वा अकृतार्था अनिष्पादितप्रयोजना विषीदन्तो विषादं गच्छन्तो
वयं परलोकमुपास्महे प्रायोपवेशनेन म्रियामहे॥ ८९॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० त्रिंशदित्यादि । राज्ञा अस्माकं प्रत्यागमनस्यावधित्वेन लि खितं त्रिंशतः पूरणं दिनं यातं गतं मत्वा वयं अकृतार्था अनिष्पा दितस्वप्रयोजनाः सन्तः विषीदन्तो विषादं कुर्व्वन्तः प्रायोपवेश नया परलोकं उपास्महे गन्तुमिच्छामः त्रिंशच्छब्दात् विंशत्या दिभ्यैति तमट् ॥ ८९ ॥

म्रियामहे न गच्छामः कौशल्यायनिवल्लभां । उप लभ्यामपश्यन्तः कौमारीं पततां वर ॥ ९० ॥

एते प्रकीर्णकाः ।

ज०म० म्रियेत्यादि । हे पततां पक्षिणां वर म्रियामहे न गच्छामः कौमारीं अकृतपूर्व्वदारपतिं लब्धवतीं कौमारापूर्व्ववचनइति साधुः कौशल्यायनिवल्लभां कौशल्याया अपत्यं कौशल्यायनी रामः कौशल्यकार्म्मार्य्याभ्यांचेति फिञ् फस्यायनादेशः तस्य वल्लभां दृष्टां उपलभ्यां प्रशस्तां पोरदुपधादिति यत् उपात्प्रशंसा यामिति यत्प्रत्यये नुम् अपश्यन्तोऽनुपलभमानाः । एते प्रकी र्णकाः ॥ ९० ॥

भ० म्रियेत्यादि । हे पततां वर पक्षिणां श्रेष्ठ वयं म्रियामहे न तु गच्छामः अर्थात् प्रभुपार्श्वं यतः कौशल्यायनिवल्लभां रामप्रियां अपश्यन्तः कौशल्याया अपत्यमिति नडादित्वात् ष्णायनः ततः स्वार्थेष्णिः कीदृशीं उपलभ्यां स्तुत्यां पूशकसहेति यः उपात्स्तुता विति नुण् कौमारीं जितकार्त्तिकेयभार्य्यां अतिरूपवतीमित्यर्थः कुमारस्य कार्त्तिकेयस्य पत्नी कुमारी पत्न्यामपालकान्तादिति ङीप् स्कन्दोमन्दमतिर्व्विवाहविमुखोधत्तेकुमारव्रतमिति काल्प

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



निक्तं नतु प्रकृतं देवसेना नामेन्द्रकन्या कार्त्तिकेयस्य पत्नी प्रसिद्धा तथाहि शतक्रतो रूपवती देवसेनेति वै सुता। सा महेन्द्रेण रत्यर्थं भार्य्यार्थे नोपपादितेति स्कन्दपुराणीयं वचनममरकोषटीकायां मधुमाधवेन धृतं अथोपयन्त्रा सदृशेन युक्तां स्कन्देन साक्षादिव देवसेनामिति कालिदासः कुमारीं जयतीति ढघेकादिति ष्णः णित्तेत्रिः यथोर्लोपः षित्त्वादीप् किम्वा कौ पृथिव्यां मारीं माया लक्ष्म्या रीर्गतिर्यस्यां लक्ष्मीरूपामित्यर्थः एतेनादरातिशयउक्तः मा लक्ष्मीश्च प्रकीर्त्तिता धने रा रीर्गतिः ख्याता रोदने च प्रकीर्त्तिता इति चैकाक्षरकोशः वह्निप्रेयसी इत्युदाहरता धृतःक इत्यस्य व्यभिचारोदर्शितः तेनात्र काभावः किम्वा कुमारएव कौमारः स्वार्थे ष्णः कौमारस्य भार्य्यां रामस्य प्रथमपत्नीमित्यर्थः एतेनाप्यादरातिशयउक्तः अन्ये तु कुमारात् प्रथमपत्न्यां ष्णइत्याहुः स्वमतेऽपि प्रथमपत्नीत्वमर्थाद्गम्यते तथाहि कुमारशब्देन अकृतदारपरिग्रहउच्यते तदूढात्वेन प्रथमपत्नीत्वं। एते प्रकीर्णकाः॥ ९०॥

जगाद वानरान् पक्षी नाध्यगीढ्वं ध्रुवं स्मृतीः। यूयं सङ्कुटितुं यस्मात् कालेऽस्मिन्नध्यवस्यथ॥ ९१॥

इतः क्षितिशेषमधिकृत्याह जगेत्यादि। ध्रुवं अवश्यं स्मृतिं ज॰म॰ स्मृतिशास्त्रं नाध्यगीढ्वं नाधीतवन्तइति पक्षी वानरान् जगाद विभाषालुङ्लृङोरिति विभाषागाङादेशः गाङ्कुटादिभ्य

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



इति षिचोङित्त्वं घुमास्थेतीत्वं धिचेति सिचोलोपः इणःषीद्‌ध्व मिति मूर्द्धन्यः यस्माद्यूयमस्मिन् काले संकुटितुं अवसातुमध्यवस्यथ अभिप्रायं कुरुथ कुटादित्वात् ङित्त्वं॥ ९१॥

भ० अथ क्विदतिदेशाधिकारः। पाणिनिमते कुटादिसूत्रसमूहैः क्वानुबन्धत्वातिदेशात् स्वमते त्वगुणाधिकारः। जगेत्यादि। सम्पाती वानरान् जगाद किमित्याह ध्रुवं निश्चितं उत्प्रेक्षे वा यूयं स्मृतीर्धर्म्मसंहितानाध्यगीढ्वं नाधीतवन्तः इङश्चाध्वं गीङ्‌ष्ठी थ्योर्व्वेति गीरादेशः धत्वान्न णुः धेसलोपोवेति सेर्लुक् टीठी ढीधोढीति धस्य ढः यस्मादस्मिन् काले संकुटितुं मर्त्तुं यूयं अध्यवस्यथ इच्छथ कुटशिकौटिल्ये प्रभुकार्य्यं त्यक्त्वा मरणमेवात्र कौटिल्यं धातोरनेकार्थत्वाद्वा कुटाणुत्रीञ्जितीति नियमादगुणत्वं अध्यवपूर्व्वस्य षोयनाशे इत्यस्य यन्योतश्यमादीति ओकारलोपः ॥ ९१॥

नायमुद्विजितुं कालः स्वामिकार्य्याद्भवादृशां। हृत भार्य्ये च्युते राज्याद्रामे पर्य्युत्सुके भृशं॥ ९२॥

ज०म० अयमेवावसितुं कालइति चेदाह नायमित्यादि। भवादृशां युष्मद्विधानां स्वामिकार्य्यादुद्विजितुं नायं कालः विजइडिति ङित्त्वं किमिति न भवतीति चेदाह राज्याच्च्युते भ्रष्टे रामे निर्व्वासितत्वात् तत्रापि हृतभार्य्ये भृशमत्यर्थं पर्य्युत्सुके सीतायां॥ ९२॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



नायमित्यादि। भवादृशां युष्मद्विधानां सत्पुरुषाणां स्वामिकार्य्यात् उद्विजितुं चलितुं नायं कालः समयः कुतइत्याह राज्याच्युते भ्रष्टे रामे तत्रापि हृतभार्य्ये भृशमत्यर्थं पर्य्युत्सुके च सति तुभार्य्या युष्मद्वचनेन त्रातुमित्यर्थात् विजेर्णुर्निमीत्यगुणत्वं॥ ९२॥ भ०

यत्नं प्रोर्णुवितुं तूर्णं दिशं कुरुत दक्षिणां। प्रोर्णुवित्रीं दिवस्तत्र पुरीं द्रक्ष्यथ काञ्चनीं॥ ९३॥

यत्नमित्यादि। दक्षिणां दिशं प्रोर्णुवितुं आच्छादयितुं तुमुन् तूर्णं शीघ्रं यत्नं कुरुत तस्यान्दिशि पुरीं द्रक्ष्यथ काञ्चनीं प्राणिरजतादिभ्योऽञ् प्रोर्णुवित्रीं अभिव्यापिनीं तृचि रूपं दिवआकाशस्य कर्म्मणि षष्ठी विभाषोर्णोरिति ङित्त्वपक्षे उवङ् अङित्त्वपक्षे च गुणः कुरुतेति सार्व्वधातुकमपिदिति ङित्त्वे विकरणस्य गुणो न भवति तस्य चार्द्धधातुकत्वात् अङित्त्वे धातोर्गुणः अतउत् सार्व्वधातुकमपिदिति ङित्त्वे विकरणस्य गुणो न भवति॥ ९३॥ ज०म०

यत्नमित्यादि। दक्षिणां दिशं प्रोर्णुवितुं आच्छादयितुं तूर्णं शीघ्रमेव यूयं कुरुत तत्र दिशि काञ्चनीं स्वर्णनिर्म्मितां पुरीं द्रक्ष्यथ कीदृशीं दिवआकाशस्य प्रोर्णुवित्रीं अभिव्यापिकां कर्म्मणि षष्ठी ङिदिर्व्वोर्णोरिति ङित्त्वादगुणत्वे अुभ्वोरित्युव् पक्षे गुणः काञ्चनस्य विकारइत्यर्थे विकारसंघेति ष्णः वर्द्धोऽकिज्भरुसइति दृशेश्चकारस्य रः॥ ९३॥ भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



लङ्कां नाम्ना गिरेर्मूर्द्ध्नि राक्षसेन्द्रेण पालितां। निर्जित्य शक्रमानीता ददृशुर्यां सुरस्त्रियः॥ ९४॥

ज०म० लङ्कामित्यादि। याम्पुरीं नाम्ना लङ्कां सुरस्त्रियोददृशुः दृष्टवत्यः असंयोगाल्लिट्किदिति कित्त्वं तां यातेति वक्ष्यमाणेन सम्बन्धः गिरेः सुवेलस्य मूर्द्ध्नि स्थितां राक्षसेन्द्रेण पालितामिति दुर्गमत्वमाख्यातं शक्रं निर्जित्य सुरस्त्रियश्चानीताइति च राव णस्य माहात्म्यं॥ ९४॥

भ० लङ्कामित्यादि। यां पुरीं नाम्ना लङ्कां सुरस्त्रियोददृशुः तां द्रक्ष्यथेति पूर्व्वेण सम्बन्धः किन्त्वोढीपमिति कित्वादगुणत्वं गिरेः सुवेलस्य मूर्द्ध्नि स्थितां आश्लेषाधारसम्बन्धात् स्थितामिति लभ्यते राक्षसेन्द्रेण रावणेन पालितां रक्षितां सुरस्त्रियः कीदृश्यः शक्र मिन्द्रं निर्ज्जित्यानीताः राक्षसेन्द्रेण इत्यनुषञ्जनीयं एतेन तस्य वीर्य्यमपि ज्ञापितं॥ ९४॥

वभूव याधिशैलेन्द्रं म्रदित्वेवेन्द्रगोचरं। कुषित्वा जगतां सारं सैका शङ्के कृता भुवि॥ ९५॥

ज०म० वभूवेत्यादि। अधिशैलेन्द्रं शैलेन्द्रस्य सुमेरोरुपरि सप्तम्यर्थे ऽव्ययीभावः इन्द्रगोचरमिन्द्रनिलयममरावत्याख्यं म्रदित्वेव तिरस्कृत्येव वभूव इन्धिभवतिभ्यां चेति कित्त्वं जगतां सारङ्कु षित्वा निष्कुष्य सैका भुवि कृता निर्म्मितेत्यहं शङ्के तां यात म्रदि त्वाकुषित्वेति नक्त्वासेडिति कित्त्वप्रतिषेधे प्राप्ते मृडमृदेत्यादि ना कित्त्वं॥ ९५॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



बभूवेत्यादि। या पुरी शैलेन्द्रस्य सुमेरोरुपरि इन्द्रस्य गोचरं विषयं अमरावत्याख्यं मृदित्वा अभिभूय बभूव अधिशैलेन्द्रं सुरालयं वा सप्तम्यर्थेऽव्ययीभावः अहमेवं शङ्के तर्कयामि जगतां सारमुत्कृष्टभागं कुषित्वा आकृष्य सैवैका भुवि कृता निर्म्मिता विश्वकर्म्मणेत्यर्थात् सेमक्षुधकुषेत्यादौ क्षुधादिवर्ज्जनात् कित्त्वं ॥ ९५ ॥ भ०

अमृडित्वा सहस्राक्षं क्लिशित्वा कौशले निजे। उदित्वालम्भिरं यत्नात् सैका धात्रा विनिर्म्मिता॥ ९६ ॥

अमृडीत्यादि। सहस्राक्षमिन्द्रममृडित्वा असुखिनं कृत्वा निजैः आत्मीयैः कौशलैः चिरं क्लिशित्वा प्रयत्नं कृत्वा उदित्वा अभिधायालम्पर्य्याप्तमेवं करिष्यामीति यत्नात् महता प्रयासेन सैका धात्रा विनिर्मिता पूर्व्ववत्कित्त्वं ॥ ९६ ॥ ज०म०

अमृडीत्यादि। सहस्राक्षं इन्द्रं अमृडित्वा असुखिनं कृत्वा निजे आत्मीये कौशले नैपुण्ये चिरं क्लिशित्वा क्लेशमनुभूय अलं पर्य्याप्तमेवमेवं करिष्यामीत्युदित्वा कथयित्वा चिरकालेन यत्नात् सैका धात्रा निर्म्मिता इत्यपि अहं शङ्क इत्यनेनान्वयः मृडशपसैादे वसोरस्येतीम् क्लिशयुञ्चोपतापे पूक्लिशऽदितइति वेम् क्लिशूगशोविरोधे इत्यस्य तु वेमूदित्यादिना वदेवाचि सर्व्वत्र सेमक्षुधेत्यादिवर्ज्जनात् कित्त्वं वदेर्यजादित्वाज्जिः कुशलस्य भावः कर्म्म वेति विकारसंघेति ष्णः ॥ ९६ ॥ भ०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



मुषित्वा धनदं पापोयां गृहीत्वावसद्द्विषन्। तां हृदित्वेव शक्रेण यात लङ्कामुपेक्षितां॥ ९७॥

मुषित्वेत्यादि। मुषित्वा धनदमैश्रवणं तस्मात्पुरं पुष्पकञ्च विमानमपहृतं पापः पापाचरणात् यां गृहीत्वा अवसत् उषितः द्विषन् शत्रुः शक्रेण हृदित्वेवोपेक्षितामवधीरितां हृदविदेति कित्त्वं तत्र चत्वारि एतत्कित्यनुवर्त्तते॥ ९७॥

भ० मुषीत्यादि। धनदं कुवेरं मुषित्वा वञ्चित्वा ततएव यां लङ्कां गृहीत्वा पापः कुत्सिताचारोद्विषन् शत्रूरावणोऽवसत् तां यूयं यात गच्छत कीदृशीं शक्रेण इन्द्रेण हृदित्वा क्रन्दित्वेव उपेक्षितां त्यक्तां न तु पारयित्वेति भावः मुषगलुटने लघिरहृदरोदे यु क्तेवोहसादेरित्यादिना कित्त्वादगुणत्वं ग्रहेः सेमचुधेत्यादिना कित्त्वात् ग्रहस्वपाद्योरिति जिः ग्रहेरिमोर्घदति दीर्घत्वं॥ ९७॥

विदित्वा शक्तिमात्मीयां रावणं विजिघृक्षवः। उक्तं पिपृच्छिषूणां वोमास्मभूत सुषुप्सवः॥ ९८॥

ज०म० विदीत्यादि। आत्मीयां शक्तिं सामर्थ्यं विदित्वा पूर्ववत्कित्त्वं रावणं विजिघृक्षवः विगृहीतुमिच्छवः सुषुप्सवः शयितुमिच्छवो मास्मभूत न प्रमत्ताभवतेत्यर्थः रावणस्य वलीयस्त्वादिदमुक्तं मया वोयुष्माकम्पिपृच्छिषूणां प्रष्टुमिच्छूनां अच हृदविदेति सनः कित्त्वे सम्प्रसारणं प्रच्छेः किरस्च पञ्चभ्यदतीड़ागमः॥ ९८॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



विदित्वेत्यादि। आत्मीयां शक्तिं सामर्थ्यं विदित्वा ज्ञात्वा रावणं जि॰म॰
विजिघृक्षवो विरोधयितुमिच्छवः यूयं मुमुक्षवः शयितुमिच्छवोमा अभूत आलस्यात् अनवधानाश्च न भवतेत्यर्थः रावणस्य मायावित्त्वादलवत्त्वाच्च एतत्सर्वं पिपृच्छिषूणां प्रष्टुमिच्छतां वोयुष्माकं इति मया उक्तं एतेनापृष्टभाषणेऽनौचित्यं परिहृतं सम्बन्धविवक्षया षष्ठी विद ज्ञाने युक्तोऽवदिति कित्त्वं ग्रह उपादाने सन् नेत्युगुहयश्चेदिति अनिम् ग्रहस्वपप्रच्छां जिरिति जिः णुशीनिशीत्यमुणत्वं ढोढः अभान्तस्येति घलं पढोःकइति कः किरादिति षः समुमिचेति उः प्रच्छेःसनि त्रिङपठित्यादिना इम् ॥ ९८ ॥

नाविविदिषुमभ्येति सम्पद्रुरुदिषुं नरं। किं मुमुषिषुवद्यात द्विषोनापचिकीर्षया ॥ ९९ ॥

नावीत्यादि। वेदितुं ज्ञातुमिच्छुर्यो न भवति तं नरमविविदिषुं जि॰म॰
रुरुदिषुं रोदितुमेषणस्वभावं सम्पद्विभूतिर्नाभ्येति नागच्छतीति शेमयोक्तमिति योज्यं किन्न यात न गच्छत मुमुषिषुवत् चौरवदित्यर्थः पूर्ववत्कित्त्वं द्विषः शत्रोरपचिकीर्षया अपकर्त्तुमिच्छया इकोझलोति कित्त्वे गुणो न भवतीति अज्झनगमांसनीति दीर्घः चतईङ्क्षातोः ॥ ९९ ॥

नावीत्यादि। सम्पत् सम्पत्तिरविविदिषुं वेदितुं ज्ञातुमनिच्छुं भ॰
रुरुदिषुं अनध्यवसायात् रोदनेच्छुं नरं पुरुषं न अभ्येति न

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अभिगच्छति तेन ज्ञापनार्थं प्रब्रवीमि वदति वक्ष्यमाणेन सम्बन्धः द्विषः शत्रोरपचिकीर्षया अपकारेच्छया मुमुषिषुवत् चौरवत् यूयं किं न यात तदैव सीतादर्शनसम्भवात् युङोऽवदत्यादिना विदरुदमुषः सनः कित्त्वादगुणत्वं हन्त्रः सनि ग्रीऽज्झनिङ्गमामिति दीर्घः णुर्नानिमीत्यगुणत्वे च्छदिरणाविति दूर् र्वनच्त यीति दीर्घः संस्यादइति अः ॥ ९९ ॥

वुभुत्सवोद्रुतं सीतां भुत्सीढ्वं प्रब्रवीमि वः। मा च भुद्ध्वं मृषोक्तं नः कृषीढ्वं स्वामिने हितं ॥ १०० ॥

ज०म० वुभुत्सेत्यादि। वुभुत्सवो ज्ञातुमिच्छवः यदि सीतां बुधेस्सनन्ताद्धलन्ताचेति कित्त्वं एकाचइति भष्भावः तदा द्रुतं तां भुत्सीध्वं जानीतेति वो युष्मान् ब्रवीमि लिङ्सिचाविति कित्त्वं मृषोक्तं मिथ्योक्तं नोऽस्माकं मा च भुद्ध्वं न जानीत अपितु सत्यं झलोझलीति सिचो लोपः झलांजश्झशि कित्त्वं पूर्व्ववत् अतो यूयं स्वामिने रामाय हितं कृषीढ्वं कुरुत उश्चेति कित्त्वं इणः षीध्वमिति मूर्द्धन्यः ॥ १०० ॥

भ० वुभुदित्यादि। सीतां वुभुत्सवो वोद्धुमिच्छवो यूयं द्रुतं शीघ्रमेव भुत्सीध्वं जानीत इति वो युष्मान् अहं प्रकृष्टं ब्रवीमि अस्माकमुक्तं वचनं मृषा मिथ्या मास्म भुद्ध्वं न जानीत अपितु सत्यमेव अस्मदएकत्वे वा वहुत्वमभिधानात् स्वामिनो रामस्य हितं कृषीढ्वं कुरुत समार्थैनेत्यादिना षष्ठी स्वामिने इति पाठे शक्तार्थवषडिति चतुर्थी वुध्यीङ्वेदने सनि णुर्नानिमीत्यगुणत्वं झभान्त

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



स्येति भत्वं अन्यत्र ध्वाः सीध्वं इगुङ्मेढोति कित्त्वाद्गुणत्वं अपर च माधोगेऽमोऽभावः झस्खादिति सेर्लोपः हत्रो ध्वाःसीध्वं पूर्व्व वत् कित्त्वं टीढोढोधोढिति धस्य ढत्वं ॥।१००॥

समगध्वं पुरः शत्रोर्म्मोदयध्वं रघूत्तमं। नोपायध्वं भयं सीतां नोपायंस्त दशाननः ॥ १०१ ॥

समेत्यादि। इदमहमाशंसे यदुत शत्रोः रावणस्य पुरः अग्रतः समगध्वं सङ्गताभवत आशंसायां भूतवच्चेति लुङ् समोगम्ह च्छीति तङ् वागमइति सिचः कित्त्वे अनुदात्तेत्यनुनासिकलोपः ह्रस्वादङ्गादिति सिचोलोपः मोदयध्वं रघूत्तमं हर्षयत तत्का र्य्यकरणात् मा च भयमुपायध्वं सूचयत भयं माकार्ष्टेत्यर्थः आङोयमहनइति तङ् यमोगन्धनइति सिचः कित्त्वे अनुनासिक लोपः गन्धनं सूचनं अन्यथा युष्मासु गम्भितभयेषु नियतमसौ दशाननः सीतामुपायंस्त स्वीकृतवान् स्यात् तस्य दुर्वृत्तत्वात् आशंसायां भूतवच्चेति अनिष्टाशंसायां लुङ् उपाद्यमःस्वीकरण इति तङ् स्वीकरणञ्चात्र विवाहनमुक्तं विभाषोपयमइति अकित्त्वपक्षे रूपं ॥ १०१ ॥　　ज०म०

समेत्यादि। इदमहमाशंसे यत् शत्रोरावणस्य पुरोऽग्रतो यूयं समगध्वं सङ्गताभवत अभिधानादाशंसायां टी आशंसायां भूतसामान्यविहितास्येति परः समोगम्हच्छेति मं इगुङ्मटीत्या दिना सेःकित्त्वात् वनतनाद्यनिमामिति मलोपः झस्खादिति सिलोपः रघूत्तमं रामं यूयं मोदयध्वं हर्षयत तत्कार्य्यकरणात्　　भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भयं न उपायध्वं न सूचयत न कुरुतेत्यर्थः यमःसूचनइति टेः कित्वात् मलोपः आत्मनेपदाधिकारमध्ये यमःसूचनइत्यस्य करणादेव सूचनार्थे यमआत्मनेपदं किम्वा उपयमोविवाह इत्यनेन सं तत्र विवाहः स्वीकारः उपायमः स्वीकरणइति पर सूत्रं यमःसूचनेवाद्वाहे इत्यत्रापि उद्वाहः स्वीकारः स्वीकरणं वेति परसूत्रं स्वीकारार्थेन परिणयोऽपि गम्यते तदा भयं न उपायध्वं न स्वीकुरुत दशाननः सीतां न उपायंस्त विवाहेन न स्वीकृतवान् न स्वीकरोतु वा अत्राप्याशंसायां टी वाद्वाहइति कित्वाभावपक्षे मलोपाभावः इत्येवं जगाद वानरान् पक्षीत्य न्वयः॥ १०१॥

ततः प्रास्थिषताद्रीन्द्रं महेन्द्रं वानराद्रुतं। सर्व्वे किलकिलायन्तो धैर्य्यञ्चाधिषताधिकं॥ १०२॥

ज०म० ततइत्यादि। ततः सम्पातिवचनानन्तरं सर्व्वे वानरा महेन्द्रं पर्व्वतं प्रास्थिषत प्रस्थितवन्तः धैर्य्यञ्चाधिकमाधिषत आहितवन्त आत्मनि तिष्ठतेर्द्दधातेश्च स्थाघ्वोरिच्चेति कित्त्वमिलञ्च तिष्ठतेः समवप्रविभ्यःस्थइति तङ् किलकिलायन्तः किलकिलाध्वनिं कुर्व्वाणाः अव्यक्तानुकरणेत्यादिना डाच् तदन्तात् लोहितादि डाज्भ्यःक्यष् वाक्यषइति परस्मैपदं॥ १०२॥

भ० ततइत्यादि। सम्पातिवचनानन्तरं सर्व्वे वानरा महेन्द्रं पर्व्वतं प्रास्थिषत प्रस्थितवन्तः द्रुतं शीघ्रं मुहुरिति पाठे किलकिलायन्त इत्यनेन सम्बन्धः प्रपूर्व्वात्तिष्ठतेः प्रतिज्ञानिर्णयेत्यादिना संस्था

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



शङिरिति ङिरगुणत्वञ्च नाम्नोऽदनमदृश्यम् अधिकां धैर्य्यञ्च आत्मनि आधिषत आहितवन्तः धाञोऽनिम्च्यन्तेत्यादिना सं अन्यत् पूर्ववत् कीदृशाः क्ष्वेलितिशायन्तः क्ष्वेलितशब्दं कुर्व्व न्तः नैकाचोऽव्यक्तानुकरणादिति डाच् द्वित्वञ्च डाह्लोहितादेरिति क्यष् पञ्च ॥ १०२ ॥

निकुञ्जे तस्य वर्त्तित्वा रम्भे प्रक्ष्वेदिताः परं। मणि रत्नाधिशयितं प्रत्युदैक्षन्त तोयधिं ॥ १०३ ॥

निकुञ्जइत्यादि। तस्य पर्व्वतस्य निकुञ्जे लतादिपिहितस्थाने ज॰म॰ वर्त्तित्वा स्थित्वा नक्त्वावेडिति क्त्वाप्रतिषेधः परं प्रक्ष्वेदिताः उच्चैरव्यक्तशब्दं कुर्व्वाणाः निष्ठाशीङिति कित्वप्रतिषेधः तोयधिं प्रत्युदैक्षन्त दृष्टवन्तः लङि रूपं कीदृशं मणिरत्नाधिशयितं तोऽधिकरणेचेति क्तः पूर्व्ववत्कित्वप्रतिषेधः कीदृशं मणिरत्नाधि शयितं मणिर्यद्रत्नमिति स्त्रीरत्नादावपि रत्नशब्दस्य दृष्टत्वात् एकपदव्यभिचारे विशेषणविशेष्यभावः तत्राधिशयितमवस्थान मित्यर्थः ॥ १०३ ॥

निकुञ्जइत्यादि। तस्य पर्व्वतस्य निकुञ्जे लतादिपिहितस्थाने भ॰ रम्यत्वात् वर्त्तित्वा स्थित्वा परमतिशयेन प्रक्ष्वेदिताऽव्यक्तशब्दं कर्तुमारब्धावानरास्तोयधिं समुद्रं प्रत्युदैक्षन्त दृष्टवन्तः की दृशं मणिरत्नाधिशयितं मणिरत्नैर्मणिश्रेष्ठैरधिशयितं अधिष्ठितं कर्म्मक्रियेत्यादिना अधिपूर्व्वशीङआधारस्य कर्म्मत्वात् कर्म्मणि क्तः आधारेक्तइति केचित् आञिक्ष्विदकूजने मेद्यादिक्तइति

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कर्त्तरि क्तः भावादिकेवेति पक्षे इम् उभयत्र पूङ्धृषेत्यादिना गुणः वर्त्तितेत्यत्र क्षेमचुषेत्यादिना कित्त्वनिषेधात् गुणः॥ १०३॥

अमर्षितमिव घ्नन्तं तटाद्रिं सलिलोर्म्मिभिः। श्रिया समग्रं द्युतितं मदेनेव प्रलोठितं॥ १०४॥

ज०म० अमेत्यादि। सलिलोर्म्मिभिः कल्लोलैः तटाद्रीन् तटस्थान् पर्व्वतान् घ्नन्तं प्रत्युदैक्षन्त अमर्षितमिव मृषेस्तितिक्षायामिति कित्त्वप्रतिषेधः पश्चात् नञ्समासः श्रिया हेतुभूतया समग्रं संपूर्णं द्युतितमिति कर्त्तरि निष्ठा यदि वा श्रिया कर्तृभूतया द्युतितं शोभितं अत्रेत्यध्याहृत्य तमैक्षन्तेति योज्यं एवञ्च कृत्वा उदुपधादित्यादिना भावे निष्ठायां विकल्पेन कित्त्वप्रतिषेधात् कित्त्वमुदाहृतं मदेनेव मत्ततयेव श्रिया हेतुभूतया प्रलोठितं घूर्णितुमारब्धं आदिकर्म्मणि निष्ठायामकित्त्वमुदाहृतं॥ १०४॥

भ० अमेत्यादि। तोयधिं प्रत्युदैक्षन्तेत्यत्रान्वयः सलिलोर्म्मिभिर्जलवेगैस्तटाद्रीन् तटसम्बन्धिनः पर्व्वतान् घ्नन्तं अमर्षितमिव क्रुद्धमिव पूङ्धृषेत्यादिना क्षमार्थमृषेर्गुणः पश्चान्नञ्समासः ऊर्म्मिः स्त्रीपुंसयोर्व्वीच्यां प्रकाशे वेगभङ्गयोरिति मेदिनी वीचिवाचित्वेऽत्र सलिलपदं स्वरूपकथनार्थं श्रिया हेतुभूतया समग्रं सम्पूर्णं यथा स्यात्तथा द्युतितं शोभमानं गत्यर्थाढेति कर्त्तरि क्तः दीपितुमारब्धं वा तदा भावादिकेवोदुपधात्वतइति पक्षे गुणाभावः मदेन मत्ततयेव प्रलोठितं घूर्णितुमारब्धं सदाचञ्चलत्वात् आदिकेक्तः पूर्व्वेण पक्षे गुणः॥ १०४॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



पूतं शीतैर्नभस्वद्भिर्ग्रन्थित्वेव स्थितं रुचः। गुम्फित्वेव निरस्यन्तं तरङ्गान् सर्व्वतोमुङ्कः॥ १०५॥

पूतमित्यादि। नभस्वद्भिर्व्वायुभिः शीतैः पूतं पवित्रीकृतं पूङ्श्चेति विकल्पेनेट् अतएव पक्षे पूत्वः क्त्वानिष्ठयोः कित्वप्रतिषेधोऽत्र न भवति तत्र श्वेडित्यनुवर्त्तते रुचो दीप्तीर्ग्रथित्वेव संदर्भ्येव स्थितं लोपधात्यफान्ताद्वेति कित्वप्रतिषेधपक्षे रूपं सर्व्वतस्तरङ्गान् गुम्फित्वेव निरस्यन्तं क्षिपन्तं नोपधाद्विति विकल्पेन कित्वप्रतिषेधः पक्षेऽस्याध्याहृत्य तमैक्षन्तेति योज्यं॥ १०५॥ जं०म०

पूतमित्यादि। शीतैः शीतलैर्नभस्वद्भिर्व्वायुभिः पूतं पवित्रीकृतं तोयधिं प्रत्युदैक्षन्तेत्यनेन सम्बन्धः पूङ्क्लिशश्चेति इटोऽभावपक्षे पूङ्शीधृषेत्यादौ सेमग्रहणान्न गुणः नभःशब्दान्मोऽभ्रमत्स्यपादत इति वतुः नदंतसाविति पदत्वनिषेधात् सोर्व्विःफदत्यस्य पदान्तविषयत्वात् विसर्गाभावः रुचो दीप्तीर्ग्रन्थित्वेव स्थितं सर्व्वत्र दीप्तिमत्वात् उत्प्रेक्षेयं ग्रन्थकिगपन्देभे पफान्तादुति विकल्पेनाकित्वात् नलोपाभावः सर्व्वत्र तरङ्गान् गुम्फित्वेव मुङ्कः पुनःपुनर्निरस्यन्तं क्षिपन्तं गुन्फग्रग्रन्थे पूर्व्वेण पक्षे कित्वात् हसुङ्लोपदृति नलोपः॥ १०५॥ भ०

वञ्चित्वाप्यम्बरं दूरं स्वस्मिंस्तिष्ठन्तमात्मनि। तृष्णिलेवानिशं स्वादु पिबन्तं सरितां पयः॥ १०६॥



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज॰म॰ वञ्चीत्यादि। स्थित्यनतिक्रमादम्बरं दूरम्वञ्चित्वातिक्रम्य वञ्चिलुञ्चीति कित्त्वप्रतिषेधः तस्मिन्नात्मनि स्वरूपे तिष्ठन्तं अम्भ नश्छव्यप्रशानिति नकारस्य रुत्वं पूर्व्वस्य त्वनुनासिकादेशः तृषि त्वेव तृषितइव भूत्वा तृषिमृषीत्यादिना प्रतिषेधः नत्वक्लिन्नत्वा स्वादुत्वात् सरिताम्पयः स्वादु पिवन्तं अनिशमजस्रं॥ १०६॥

भ॰ वञ्चित्वेत्यादि। पुनः कीदृशं तोयधिं अम्बरमाकाशं वञ्चित्वापि अतिक्रम्यापि स्वस्मिन् स्वकीये आत्मनि स्वरूपे तिष्ठन्तं मर्य्यादानतिक्रमात् तृष्णयाऽऽत्तोऽपि भूत्वा तां नातिक्रामतीति भावः वञ्चुगत्यां तृषमृषकृषेत्यादिना विकल्पेनाकित्त्वात् नलोपाभावः तृषित्वेव अनिशं सततं स्वादु मधुरं सरितां पयोनदीनां जलं पिवन्तं स्वजलस्य क्षारत्वात् जिहृषापिपासायां पूर्व्वेण कित्त्वादगुणत्वं॥ १०६॥

**द्युतित्वा शशिना नक्तं रश्मिभिः परिवर्द्धितं। मेरोर्जेतुमिवाभोगमुच्चैर्दिद्योतिषुं मुहुः॥ १०७॥**

भ॰ द्युतीत्यादि। शशिना नक्तं रात्रौ द्युतित्वा दीप्तिमता भूत्वा रश्मिभिः परिवर्द्धितं वृद्धिं नीतं सन्तं तोयधिं मेरोराभोगमहत्त्वं जेतुमिव मुहुरुच्चैर्दिद्योतिषुं वर्द्धितुमिच्छुमित्यर्थः अनेकार्थत्वाद्धातूनां द्युतित्वा दिद्योतिषुमिति रलोव्युपधादिति कित्त्वाकित्त्वे तच व्युकारोपधादिकारोपधाच्च रलन्ताद्धलादेर्धातोः परौ क्त्वासनौ वा न कितौ भवतइति सूत्रार्थः॥ १०७॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



द्युतिलेत्यादि। पुनः कीदृशं तोयधिं शशिना नक्तं रात्रौ भ० द्युतिला दीप्तिमता सता रश्मिभिः परिवर्द्धितं वृद्धिं नीतं द्युतल्वङ् दीप्तौ व्युङोऽवोहसादेरिति वा कित्त्वाद्गुणाभावः मेरोराभोगं परिपूर्णतां जेतुमिव ततउच्चैरधिकं मुञ्जः पुनःपुनः दिद्योतिषुं द्योतनमिच्छन्तं उच्चैर्भूत्वा द्युतिमिच्छन्तं वा धातोरनेकार्थतया उच्चैरूर्द्ध्वं वर्द्धितुमिच्छन्तमिति केचित् द्युतेः सनि द्युत्स्वाप्यो रिति खेर्ज्जिः पूर्व्वेण पक्षे कित्त्वाभावात् गुणः ॥ १०७ ॥

विलोक्य सलिलोच्चयानधिसमुद्रमभ्रंलिहान् भ्रम न्मकरभीषणं समधिगम्य चाधः पयः। गमागमसहं द्रुतं कपिवृषाः परिप्रैषयन् गजेन्द्रगुरुविक्रमं तरस्तु गोत्तमं मारुतिं ॥ १०८ ॥

इति भट्टिकाव्येऽधिकारकाण्डे द्वितीयः काव्यस्य सप्तमः सर्गः ॥ ७ ॥

विलोक्येत्यादि। कपिवृषाः कपिमुख्या मारुतिं हनूमन्तं द्रुतं ज०म० परिप्रैषयन् व्यसर्ज्जयन् परिप्रपूर्व्वादिषुगतावित्यस्मात् हेतुमण्य न्तात् लङिरूपं किं कृत्वेत्याह विलोक्य सलिलोच्चयान् सलिलो र्म्मीन् ऊर्द्ध्वचीयतइत्येरच् अधिसमुद्रं समुद्रस्योपरि अभ्रंलि हान् दूरमुच्छ्रितान् अधश्च पयः समधिगम्य ज्ञात्वा कीदृशं भ्रम न्निर्मकरैर्भीषणं भयानकं भीषयतीति नन्द्यादित्वाल्ल्युः गमागम सहं गमनागमनयोग्यं मारुतिं गजेन्द्रस्येव गुरुर्विक्रमो यस्य

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



तरस्तगेषु वानरेषूत्तममिति सप्तमीति योगविभागात्सः । इति
ङित्त्वातिदेशाधिकारः ॥ १०८ ॥

इति भट्टिकाव्यटीकायां जयमङ्गलायामधिकारकाण्डे द्विती
यः परिच्छेदः काव्यस्य सीतान्वेषणः सप्तमः सर्गः ॥

भ० विलोक्येत्यादि अधिसमुद्रं समुद्रस्योपरि सलिलोच्चयान्
तरङ्गान् अभ्रंलिहान् अत्युच्छ्रितान् विलोक्य अधश्च पयोजलं
भ्रमद्भिरितस्ततो गच्छद्भिर्मकरैर्जलजन्तुविशेषैर्भीषणं भयानकं
समधिगम्य ज्ञात्वा भयात् स्वयं गन्तुमशक्ताः कपिवृषाः कपि
श्रेष्ठामारुतिं हनूमन्तं द्रुतं परिप्रैषयन् व्यसर्ज्जयन् परिप्रपूर्व्वा
दिषगताविति्यस्मात् प्रेरणे ण्यन्तात् सो मारुतिं कीदृशं गमने
चागमने च समर्थं गजेन्द्रस्येव ऐरावतस्येव गुरुर्व्विक्रमो यस्य तं
अतएव तरस्तगेषु वानरेषु उत्तमं श्रेष्ठं ऊर्द्ध्वं चीयतइत्यल्
उच्चयः अधिसमुद्रमिति सप्तम्यर्थेऽव्ययीभावः अभ्रंलिहानिति
तृभृहृदजीत्यादिना अभिधानादसंज्ञायामपि खः गुणाभावोऽ
प्यभिधानात् भीषणमिति नन्द्यादित्वादनः कभावेऽमी इत्यनेन
वा अनट् । इति किदतिदेशाधिकारः ॥ १०८ ॥

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभर
तसेनविरचितायां मुग्धबोधिन्यां भट्टिटीकायां अधिकारकाण्डे
सप्तमः सर्गः ॥

अगाधत ततो व्योम हनूमानुरुविक्रमः । अत्यशे
रत तद्वेगं न सुपर्णोऽर्कमारुतः ॥ १ ।

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



आत्मनेपदमधिकृत्याह। अगाधतेति ततोविसर्जनानन्तरं हनूमान् समुद्रलङ्घनाय व्योमाकाशमगाधत प्रस्थितवान् गाधृ प्रतिष्ठालिप्सयोरित्यस्मात्सङ् अनुदात्तङितइति अनुदात्तेत्वादा त्मनेपदं उरुविग्रहः कामरूपित्वात् तदानीमुत्पादित विपुलकायः तस्य चोत्पततोवेगं गरुडादित्यपवनाः नात्यशेरत नातिशयित वन्तः ङित्त्वात्सङ् शीङोरुट् शीङः सार्व्वधातुके गुणः॥१॥ ज०म०

आत्मनेपदाधिकारः स च स्वमते साधिकारः। अगेत्यादि ततः प्रेषणानन्तरं हनूमान् समुद्रलङ्घनाय व्योम आकाशमगा धत प्रस्थितवान् गाधृङ्गोप्रतिष्ठालिप्सयोः ङित्त्वात्तवस्तः पसे इति सं अगाहतेति पाठे ङगाहृविलोडे इत्यस्मात् घो उरुवि ग्रहः कामरूपित्वात्तदानीमुत्पादितमहाशरीरः सुपर्णार्कमा रुतागरुडसूर्य्यवायवोऽपि तस्य हनूमतोवेगं न अत्यशेरत नाति चक्रमुः शीङ्खञ्जिस्वप्ने सानुबन्धत्वादादादिकः ङानुबन्धात्सं शीङोरेणुरिति गुणः सान्तोरमिति रम् सान्तोऽदनतइति अत् शोभनानि पर्णानि पचायस्य हिरण्मयत्वात् ससुपर्णः॥१॥ भ०

अभायत यथार्केण सुप्रातेन शरन्मुखे। गम्यमानं न तेनासीदगतं क्रामता पुरः॥२॥

अभेत्यादि। यथा अर्केण सुप्रातेन सुप्रभातेन नीहाराद्य भावात् शोभनं प्रातरनेनेति सुप्रातः सुश्वेति समासान्तनिपातनं ज०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



शरन्मुखे शरदारम्भे अभायत दीप्यते स्म भावकर्म्मणोरिति भावे तङ् तद्वत्तेनाभायत पुरोऽग्रतो यदर्केण गम्यमानमवष्टभ्यमानं वर्त्मेत्यर्थात् कर्म्मण्यात्मनेपदं तेन हनूमता क्रामता गच्छता शिति क्रमइति दीर्घत्वं नागतमासीत् अपितु सर्व्वमेव गतमिति ॥ २ ॥

भ० अभेत्यादि। शरन्मुखे शरदारम्भे सुप्रातेन सुप्रभातेनार्केण यथा अभायत दीप्यते स्म तथा तेन हनूमता अभायतेति सम्बन्धः भातेर्भावे घञ् शोभनं प्रातरस्येति सोःस्वःप्रातर्भ्याँङइति परः स्वमते प्रातरेव प्रातं स्वार्थेऽण्ः व्यटेर्लोपइति टिलोपः तेन समासः पुरोऽग्रतोऽर्केण गम्यमानं वर्त्मेत्यर्थात् क्रामता गच्छता तेन हनूमता अगतं नासीत् किन्तु गतमेव तेजसा वेगेन च हनूमतः सूर्य्य साम्यमुक्तं गमेः कर्म्मणि क्तः ॥ २ ॥

वियति व्यत्यतन्वातां मूर्त्ती हरिपयोनिधी। व्यत्यैतां चोत्तमं मार्गमर्केन्द्रेन्दुनिषेवितं ॥ ३ ॥

ज०म० वियेत्यादि। हरिपयोनिधी हनूमत्समुद्रौ मूर्त्ती स्वदेहौ वियत्याकाशे व्यत्यतन्वातां व्यतिविस्तारितवन्तौ तनोतेर्लङ् कर्त्तरि कर्म्मव्यतीहारइत्यात्मनेपदं उत्तमञ्च मार्गं अर्केन्द्रेन्दुनिषेवितं व्यत्यैतां व्यतिगतवन्तौ इणः परस्य लङ् कर्म्मव्यतीहारइत्यात्मनेपदं प्राप्तं नगतिहिंसार्थेभ्यइति गत्यर्थत्वात् प्रतिषिद्धं तेन तसस्तामादेशः तत्र हरेर्गच्छतः पुरतोयस्मिन्वियत्प्रदेशे स्व मूर्त्तिं विस्तारितुमवसरोभविता तत्र पयोनिधिरूर्म्मिभिः स्वमूर्तिं वितस्तार पयोनिधेश्च वेलातटङ्गच्छतोयत्र स्वमर्त्तिं वितस्तार

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



तथा पयोनिधेर्यन्मार्गं गन्तुमवसरोऽभविता हरिरुत्पत्य तं मार्गं गन्तुमैच्छत् यच्च हरेर्मार्गं गन्तुमवसरोऽभविता तं मार्गं पयोनिधिरभ्रंलिहैरूर्मिभिरैच्छत् यत्र यत्क्रियावसरे क्रियां करोति स तत्र तत्क्रियाकारीत्युपचर्य्यते यथा देवदत्तसाध्यां क्रियां यज्ञदत्तः कुर्व्वन् तत्कारीत्युच्यते ततश्चेतरेणेतरसम्बन्धिन्याः क्रियायाः करणात् अन्यतरसम्बन्धिन्याश्चेतरकरणात्सम्भवति कर्म्मव्यतीहारः॥ २॥

वियतीत्यादि। हरिपयोनिधी हनूमत्समुद्रौ वियत्याकाशे भ॰ मूर्त्ती स्वदेहौ व्यत्यतन्वातां अन्योन्यं विस्तारितवन्तौ तन्दुर्व्विस्तृतौ व्यतीहारे गतिहिंसेत्यादिना तं सूर्य्येन्दुचन्द्रनिषेवितं अतएव उत्तमं मार्गं आकाशं तौ व्यत्येतां परस्परं जग्मतुः व्यतीहारे गतिहिंसाशब्दार्थहसान्येति गत्यर्थाद्विवर्ज्जनात् न व्यतीहारे तं दूणाभ्यां रूपं॥ ३॥

व्यतिजिग्ये समुद्रोऽपि न धैर्य्यन्तस्य गच्छतः। अगच्छत्रास्य न गतं प्रचण्डोऽपि प्रभञ्जनः॥ ४॥

व्यतीत्यादि। तस्य हरेर्गच्छतः स्वदेहस्याल्पतां कर्त्तुं योऽवसरो ज॰म॰ भावी तत्र समुद्रोनातिशयधैर्य्यं कृतवान् तेन तस्य धैर्य्यं न जितं तदानीं तस्योद्धतकल्लोलत्वात् अपिशब्दाच्च हनूमानपि समुद्रस्य शान्तत्वं कर्त्तुं योऽवसरोऽभावी तत्र नातिशयधैर्य्यं कृतवान् तेन तस्य धैर्य्यं वा न जितं तदानीं तस्य विपुलकायत्वात् तदेवं हनूमतः समुद्रो हनूमानपि समुद्रस्य धैर्य्यं न व्यतिजिग्ये नाभिबभूव

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



एकवचनस्य प्रत्येकाभिसम्बन्धात् कर्म्मव्यतीहारे पूर्व्ववदात्मनेपदं सँज्ञिटोर्ज्जेरिति कृत्वं तस्य हनूमतोगतं गमनं प्रचण्डोऽपि महान् प्रभञ्जनोवायुर्न व्यत्यगच्छत् न प्राप्तवान् ॥ ४ ॥

भ० व्यतीत्यादि । गच्छतस्तस्य हनूमतोधैर्य्यं समुद्रोऽपि न व्यतिजिग्ये नाभिभूतवान् निर्भयत्वात् अपिशब्दात् सोऽपि समुद्रस्य धैर्य्यं न व्यतिजिग्ये उद्वेगात् चोभेऽपि मर्य्यादालङ्घनात् एकवचनेऽपि उभयोरुभयापेक्षित्वाद्व्यतीहारः जेर्गिःसन्लिटोरिति ग्यादेशः प्रचण्डोऽपि प्रभञ्जनोवायुरस्य हनूमतोगतं गमनं न अगच्छत् न प्राप्तवान् तस्यातिवेगत्वात् अस्येति स्वभावक्तेति भावक्तेन योगे कर्त्तरि षष्ठी ॥ ४ ॥

व्यतिघ्नतीं पथिघ्नन्तीं राक्षसीं पवनात्मजः । जघान आविश्य वदनं निर्यान् भित्त्वोदरं द्रुतं ॥ ५ ॥

ज०म० तस्यातिजवेन गच्छतः पथि राक्षसी संप्राप्ता तामसौ व्यापादितवानित्याह व्यतीत्यादि हनिष्याम्येनमिति राक्षस्यायोवधकरणावसरः तत्र घ्नन् यः कश्चित्प्राप्तः तस्यैनां हनिष्यामीति योवधकरणावसरः तत्र घ्नतीन्तदेवमितरेतरक्रियाकरणेन व्यतिघ्नतीं राक्षसीं नगतीत्यादिना हिंसार्थत्वादात्मनेपदप्रतिषेधः तां पवनात्मजोहनूमान् जघान कथं वदनमाविश्य उदरम्भित्त्वा द्रुतं निर्यान् निर्गच्छन् यातेःशतरि रूपं ॥ ५ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



व्यतीत्यादि। पवनात्मजो हनूमान् गच्छन्नेव पथि संप्राप्तां रा भ॰
क्षसीं जघान किं कुर्व्वन् द्रुतं वदनं प्रविश्य उदरं भित्त्वा विदार्य्य
निर्यान् निर्गच्छन् याते: शतृ: कीदृशीं घ्नन्तं जनं व्यतिघ्नतीं अन्योन्यं
घ्नतीं हिंसार्थवर्ज्जनात् व्यतीहारेऽपि न मं॥ ५॥

अन्योन्यं स्म व्यतियुतः शब्दान् शब्दैस्तु भीषणान्।
उदन्वाननिलोद्धूतो म्रियमाणा च राक्षसी॥ ६॥

अन्योन्यमित्यादि। अन्योन्यमित्यन्योन्यस्येत्यर्थः कर्म्मव्यती ज॰म॰
हारे सर्व्वनाम्नो द्वे भवतोऽसमासवच्च बहुलं यदा नासमासवत्
तदा पूर्व्वपदस्योत्तरपदस्य च प्रथमैकवचने स्त्रीनपुंसकयोराम
भावइति वक्तव्यं अन्योन्यस्य सम्बन्धिभिः शब्दैः उदन्वद्राक्षसौ श
ब्दान् भीषणानात्मीयान् व्यतियुतः स्म मिश्रितवन्तौ युमिश्रणइ
त्यस्माल्लट् स्मइति भूते लट् इतरेतरेत्यादिना कर्म्मव्यतीहार
आत्मनेपदप्रतिषेधः तत्रोदन्वतः शब्दकरणाद्योभीषणशब्दमि
श्रणावसरोभावी तत्र राक्षसी म्रियमाणा शब्दान् भीषणानुदन्व
च्छब्दैर्युयाव राक्षस्याः शब्दकरणाद्योभीषणशब्दमिश्रणावसरो
भावी तत्रोदन्वाननिलोद्धूतः शब्दान् भीषणान् राक्षसीशब्दैर्यु
याव॥ ६॥

अन्योन्यमित्यादि। तदानीं हनूमद्वेगेनानिलोद्धूतउदन्वान् म॰
समुद्रः म्रियमाणा राक्षसी उभावेतौ शब्दैर्भीषणान् शब्दान् अ
न्योन्यं व्यतियुतः स्म संमिश्रितवन्तौ युमिश्रणे कीस्मेनातीतइति
की अन्योन्यार्थे इत्युक्ते व्यतीहारेऽपि मं अन्योन्यार्थइति ज्ञाप



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कात् व्यतीहारेऽन्योन्यादयोमनीषादित्वान्निपातिताः उदकस्य वतौ लोकोपचारादुदनादेशः उदन्शब्दोऽप्यस्ति उक्तं हि पदादयः पृथक्शब्दादित्येके इति॥ ६॥

न्यविक्षत महाग्राहसङ्कुलं मकरालयं। सैकाव ह्वनां कुर्व्वाणा नक्राणामाश्रितम्भवं॥ ७॥

ज॰म॰ न्यवीत्यादि। महद्भिर्ग्राहैः सङ्कुलं मकरालयं समुद्रं न्यविक्षत प्रविष्टवती नेर्व्विशइत्यात्मनेपदंशलइगुपधादनिटः क्सः वह्ननां नक्राणामेकापि सती स्वाश्रितम्भवं सुष्ठु दृप्तिं कुर्व्वाणा आश्रितेभुव इति भावे खच्॥ ७॥

भ॰ न्यवीत्यादि। राक्षसी एकापि सती वह्ननां नक्राणां कुम्भीराणां आश्रितम्भवं सुष्ठु दृप्ततां महाशरीरत्वात् कुर्व्वाणा मकरालयं समुद्रं न्यविक्षत प्रविष्टवती विपराजीत्यादिना निपूर्व्वविशतेर्म्म हशषोऽनिमिजुङ्इति सक् कीदृशं महद्भिर्ग्राहैर्जलजन्तुभिः संकुलं व्याप्तं आङ्पूर्व्वोऽश्नातिस्तृप्त्यर्थः भावधेत्वाश्रिताद्भुव इति खः॥ ७॥

कृतेनोपकृतं वायोः परिक्रीणानमुत्थितं। पित्रा संरक्षितं शक्रात्समैनाकाद्रिमैक्षत॥ ८॥

ज॰म॰ कृतेत्यादि। हनूमान् समुद्रादुत्थितं मैनाकाद्रिमैक्षत वायोरुपकृतमुपकारकृतेन प्रत्युपकारेण परिक्रीणानं परिक्रयं विचि

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



न्तं परिव्ययेभ्यः क्रियद्व्यकर्त्रभिप्रायविषयं आत्मनेपदं पित्रा वायुना रक्षितं सकाशात् तेन हि पक्षछेदकाले महता वेगेन समुद्रं नीत्वा रक्षितइति श्रूयते॥ ८॥

तमेदित्यादि। सहनूमान् समुद्रादुत्थितं मैनाकनामानमद्रिं ऐक्षत दृष्टवान् ईचङ्दर्शने ङानुबन्धात्मं कीदृशं सकाशात् पक्षछेदयतात् पित्रा वायुना संरक्षितं अतएव वायोरुपकृतं उपकारं कृतेन प्रत्युपकारेण परिक्रीणानं परिवर्त्तयन्तं विपराजीति परिपूर्व्वक्रीञोमं सानः॥ ८॥ भ०

खं पराजयमानोऽसावुन्नत्या पवनात्मजं। जगादाद्रिर्विजेषीष्ठामयि विश्रम्य वैरिणं॥ ९॥

खमित्यादि। असावद्रिः उन्नत्या उन्नततया खमपराजयमानोऽभिभवन् पवनात्मजं जगाद मयि विश्रम्य स्थित्वा वैरिणं शत्रुं विजेषीष्ठाः त्वमभिभूयाः आशिषि लिङ् उभयत्रापि विपराभ्यांजेरिति तङ्॥ ९॥ ज०म०

खमित्यादि। असौ अद्रिः पवनात्मजं जगाद कीदृशः सन् उन्नत्या उच्चतया खमाकाशं पराजयमानः अभिभवन् विपराजीति सं किं जगादेत्याह मयि विश्रम्य विश्रामं कृत्वा वैरिणं विजेषीष्ठाः अभिभूयाः आशिषि पूर्व्ववन्मं॥ ९॥ भ०

फलान्यादत्स्व चित्राणि परिक्रीडस्व सानुषु। साधु संक्रीडमानानि पश्य वृन्दानि पक्षिणां॥ १०॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० फलानीत्यादि। चित्राणि नानाविधानि फलानि आदत्स्व गृहाण आङो दोनास्यविहरण इत्यात्मनेपदं सानुषु ममैकदेशेषु परिक्रीडस्व विहर पक्षिणाञ्च वृन्दानि साधु शोभनं अनुक्रीडमानानि विहरन्ति सन्ति पश्य उभयत्र क्रीडानुसम्परिभ्यश्चेति तङ्। १०॥

भ० फलेत्यादि। चित्राणि अद्भुतानि फलानि त्वमादत्स्व गृहाण आदाञोऽस्वास्यप्रसारे इति मं आमन्त्रणे गी आङोरित्यालोपः मम सानुषु एकदेशेषु परिक्रीडस्व विहर पर्य्यन्ववाङः क्रीडइति मं पक्षिणां वृन्दानि पश्य कीदृशानि साधु शोभनं अनुक्रीडमानानि विहरन्ति पूर्व्ववन्मं॥ १०॥

क्षणं भद्रावतिष्ठस्व ततः प्रस्थास्यसे पुनः। न तत्संस्थास्यते कार्य्यं दक्षेणोरीकृतं त्वया॥ ११॥

ज०म० क्षणमित्यादि। हे भद्र कल्याण क्षणमवतिष्ठस्व ततः पश्चात् स्थास्यसे यास्यसि यच्च कार्य्यं करणीयं दक्षेणानलसेन त्वया ऊरीकृतमङ्गीकृतं न च संस्थास्यते अपितु निष्पत्स्यतएवेत्यर्थः सर्व्वत्र समवप्रविभ्यस्थः इति तङ्॥ ११॥

भ० क्षणमित्यादि। हे भद्र कल्याणयुक्त त्वं क्षणं अवतिष्ठस्व ततः पुनः प्रस्थास्यसे यास्यसि दक्षेण अनलसेन त्वया ऊरीकृतं अङ्गीकृतं कार्य्यं न च संस्थास्यते न नाशं गमिष्यति सम्पत्स्यतएवेति भावः प्रतिज्ञानिर्णयेत्यादिना अवसंप्रपूर्व्वतिष्ठतेर्मं॥ ११॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



त्वयि नस्तिष्ठते प्रीतिस्तुभ्यं तिष्ठामहे वयं। उत्तिष्ठमानं मित्रार्थे कस्त्वां न वक्तु मन्यते॥१२॥

त्वयीत्यादि। त्वयि विषये अस्माकं प्रीतिरस्ति तेन संशये अस्माभिरन्यो निर्णेता नान्वेषणीयः किन्तु नोऽस्माकं प्रीतिरेव निर्णयं पश्यन्ती त्वयि तिष्ठते प्रकाशनस्थेयाख्ययोश्चेत्यात्मनेपदं विवादपदनिर्णेता स्थेय उच्यते तुभ्यन्तिष्ठामहे वयमिति त्वयि विषये अस्माकं चेतोवर्त्तत इति स्वाभिप्रायं तुभ्यं तिष्ठामहे स्वाभिप्रायं निवेदयाम इत्यर्थः अत्र प्रकाशनञ्च स्वाभिप्रायकथनं श्लाघहुङ्स्थाशपां ज्ञीप्स्यमान इति सम्प्रदानसंज्ञायां चतुर्थी कस्मादेवं मां श्लाघय इति चेदाह उत्तिष्ठमानं यतमानं उदोऽनूर्द्ध्वकर्म्मणीत्यात्मनेपदं कस्त्वां न वक्तुमन्यते न श्लाघते॥१२॥ ज॰म॰

त्वयीत्यादि। त्वयि नोऽस्माकं प्रीतिस्तिष्ठते निश्चयेनास्ति तद्विषयेऽस्माकं प्रीतिरस्ति न वेति सन्देहे अस्माभिरन्यो निर्णेता नान्वेषणीयः किन्त्वस्माकं प्रीतिरेव त्वां निर्णेतारं करोतीति निर्णयार्थोऽत्र स्थाधातुः त्वमस्मदाश्रितो न वेत्यत्र त्वद्विषये प्रीतिर्निर्णयं करोतीत्यन्ये वयं तुभ्यं तिष्ठामहे स्थित्वा स्वाभिप्रायं प्रकाशयामः प्रकाशार्थोऽत्र स्थाधातुः यस्मैदिशेत्यादिना सम्प्रदानत्वं प्रतिज्ञानिर्णयेत्यादिना मं अत्र प्रकाशः स्वाभिप्रायकथनं कथं मह्यं श्लाघसे इत्याह मित्रार्थे रामार्थे उत्तिष्ठमानं यतमानं त्वां कोन वक्तुमन्यते न श्लाघते अपि तु सर्व्व एव उदोऽनूर्द्ध्वेहेइति मं॥१२॥ भ॰

ये त्वर्घ्यमुपतिष्ठन्ते मन्त्रैः सन्ध्यात्रयं द्विजाः। रक्षोभिस्तापितास्तेऽपि सिद्धिं ध्यायन्ति तेऽधुना॥१३॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० यद्दत्यादि। ये द्विजामन्त्रैः करणभूतैः सूर्य्यमुपतिष्ठन्ते प्रत्युपासते उपान्मन्त्रकरणद्रत्यात्मनेपदं सन्ध्यात्रयं त्रिसन्ध्यं अत्यन्तसंयोगे द्वितीया तेऽपि रक्षोभिस्त्रापिताः उपद्रुताः अधुना ते शिद्धिं ध्यायन्ति किंपुनरहं यस्ते पितुः सुहृत् तदेव दर्शयन्नाह ॥ १३ ॥

भ० यद्दत्यादि। ये द्विजाब्राह्मणामन्त्रैः करणभूतैः सन्ध्यात्रयं व्याप्य सूर्य्यमुपतिष्ठन्ते उपासते मन्त्रेणोपादिति मं तेऽपि द्विजार घोभिस्त्रापिताउपद्रुताः सन्तः अधुना इदानीं तव शिद्धिं ध्यायन्ति चिन्तयन्ति अहन्तु तव पितुः सुहृत् सुतरां तथेति भावः यद्वा द्विजानुकूलत्वादपि त्वं श्लाघ्यद्रति भावः सन्ध्यात्रयमिति सदा ध्यादीति द्वितीया ॥ १३ ॥

अव्यग्रमुपतिष्ठस्व वीर वायोरहं सुहृत्। रवि र्वितपतेऽत्यर्थमाश्वस्य मयि गम्यतां ॥ १४ ॥

ज०म० अव्येत्यादि। हे वीर अव्यग्रमनाकुलं मय्युपतिष्ठस्व सन्निहितोभव अकर्म्मकाच्चेत्यात्मनेपदं यतोवायोस्तव पितुरहं सुहृत् रविरत्यर्थं वितपते दीप्यते उद्विभ्यामित्यात्मनेपदं तच्चाकर्म्म कादिति वर्त्तते तस्मादाश्वस्य विश्रम्य गम्यतां ॥ १४ ॥

भ० अव्येत्यादि। हे वीर अव्यग्रमनाकुलं यथा स्यात्तथा त्वमुपतिष्ठस्व सन्निहितोभव अढादिति मं यतोऽहं वायोस्तव पितुः सुहृन्मित्रं विश्रामौचित्यं दर्शयति रविरत्यर्थं वितपते दीप्यते वुत्तपद्रति मं अढत्वात् अतएव मयि आश्वस्य प्राणनिर्वृतिं प्राप्य त्वया गम्यतां ॥ १४ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



तीव्रमुत्तपमानोऽयमशक्यः सोढुमातपः। आघ्नान
इव सन्दीप्तैरलातैः सर्व्वतोमुखः॥ १५॥

तीव्रेत्यादि। तीव्रं सुष्ठु उत्तपमानोदीप्यमान आतपः सोढु जं०म
मशक्यः पूर्व्ववदात्मनेपदं अलातैः उल्मुकैः सन्दीप्तैः सर्व्वत
आघ्नानइव ताडयन्निव आङोयमहनइत्यविवक्षितकर्म्मकत्वा
दात्मनेपदं गमहनेत्युपधालोपः होहन्तेरिति कुत्वं॥ १५॥

तीव्रेत्यादि। पुनर्व्विश्रामौचित्यमाह तीव्रमुत्तपमानोदीप्य भ०
मानोऽयमातपः सोढुं न शक्यः पूर्व्ववन्मं सन्दीप्तैरलातैरङ्गारै
र्मुहुर्व्वारं वारं सर्व्वत आघ्नानइव ताडयन्निव आत्माङ्गढादढा
घाहनयमइति मं अविवक्षितकर्म्मत्वात् अङ्गारोऽलातमुल्मुकमि
त्यमरः आलातैरिति पाठे स्वार्थे ष्णः विद्यादलातमालातमिति
द्विरूपकोषः॥ १५॥

संशृणुष्व कपे मत्कैः सङ्गच्छस्व वनैः शुभैः। समा
रन्त ममाभीष्टाः सङ्कल्पास्त्वय्युपागते॥ १६॥

संशृणुष्वित्यादि। हे कपे संशृणुष्व आकर्णय समोगमृच्छीत्यादि जं०म०
विवक्षितकर्म्मकत्वादात्मनेपदं शुभैः शोभमानैः इगुपधलक्षणः
कः वनैर्म्मत्कैः मत्स्वामिकैः अहं स्वामी येषामिति सएषां ग्रामणी
रिति कः प्रत्ययोत्तरपदयोश्चेति मदादेशः सङ्गच्छस्व सङ्गतो
भव पूर्व्ववदात्मनेपदं समारन्त ममाभीष्टाइति ममाभिप्रेताये

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



सङ्कल्पा अभिप्रायाः कदा नु मे सुहृत्तया वा कश्चिदेष्यति यस्या हमुपयोगी स्यामिति ते समारन्त आगताः त्वय्युपागते सति अर्त्तं लुङि पूर्व्ववदात्मनेपदं सर्तिशास्त्यर्तिभ्यश्चेत्यङि ऋदृशोऽङि गुणः आङजादीनाम् भावविषयस्य प्रयोगः ॥ १६ ॥

भ० समित्यादि। हे कपे संशृणुष्व आकर्ण्य मत्कैर्मत्स्वामिकैः शुभैः शोभमानैर्निर्भयत्वेन कल्याणयुक्तैर्श्रावनैः सह सङ्गकस्य सङ्ग तोभव अहं स्वामी येषामिति विकारसंघेत्यादिना कः रमे मानी त्यर्थे वा त्वयि उपागते सति ममाभीष्टावाञ्छिताः सङ्कल्पा अभि प्रायाः सुहृद्दर्शनादिरूपाः समारन्त सङ्गतवन्तः ऋगतौ सर्व्वत्र समोगम्यृच्छइत्यादिना मं ओःसुर्धेइति सुः जिस्य वत्यस्येत्यादिना अर्त्तेर्ङः ऋदृशोऽर्णुरिति गुणः ॥ १६ ॥

केन संविद्रते वायोर्मैनाकाद्रिर्यया सखा। यत्ना दुपाह्वये प्रीतः संह्वयस्व विवचितं ॥ १७ ॥

ज०म० नचैवमिथ्या वायुर्मे सुहृदित्याह केनेत्यादि। वायोर्मैनाकाद्रिर्य था सखेति के न संविद्रते न जानन्ति वेत्तेः पूर्व्ववदात्मनेपदं वेत्तेर्वि भाषेति रुट् तस्मात्प्रीतः सन् अहं यत्नादुपाह्वये भवन्तमाकथामि ततः संह्वयस्व कथय विवचितमभिप्रेतं निसमुपविभ्योह्वइत्यकर्त्त्रं भिप्राये लट् लोटोरात्मनेपदं ततोऽकर्म्मत्वादिति निवृत्तं सामा न्येन विधानं ॥ १७ ॥

भ० केनेत्यादि। मत्पितुः सखा त्वमसीति किं प्रमाणमित्याशङ्क्याह मैनाकाद्रिर्व्वायोर्यथा सखा तथा के जनान संविद्रते न जानन्ति

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अपि तु सर्व्वएव समोगमृच्छेति मं अविवक्षितकर्म्मत्वात् मान्तो रमिति रम् अतएवाहं प्रीतः सन् यत्नादुपाकृथे लामाकृथास्ति लमपि विवक्षितं वक्तुमिष्टं संकृथ संकथय इति जगादाद्रिरिति सम्बन्धः निसंव्युपकृइति मं ॥ १७ ॥

द्यामिवाकृयमानन्तमवोचद्भूधरं कपिः। उपकुर्व्वन्तमत्यर्थं प्रकुर्व्वाणोऽनुजीविवत् ॥ १८ ॥

द्यामित्यादि। द्यामिवाकाशमिवाकृयमानं महत्तया स्पर्द्धमानं स्पर्द्धायामाङ्इत्यात्मनेपदं अत्यर्थमुपकुर्व्वन्तं आतिथ्येन तमीदृशं भूधरमवोचत् कपिः प्रकुर्व्वाणः सेवमानोऽनुजीविवत् भृत्यवत् गन्धनेत्यादिना सेवने तङ् ॥ १८ ॥ ज॰म॰

द्यामित्यादि। कपिर्हनूमान् तं भूधरं मैनाकं पर्व्वतं अवोचत् उक्तवान् कीदृशं द्यामाकाशमाकृयमानमिव महत्त्वेन स्पर्द्धमानमिव स्पर्द्धायामाङ्इति मं अत्यर्थमुपकुर्व्वाणमुपकारोद्यतं कीदृशः कपिः अनुजीविवत् भृत्यवत् प्रकुर्व्वाणः सेवमानः स्वच नावक्षेपणेत्यादिना सेवायां मं ॥ १८ ॥

कुलभार्य्यां प्रकुर्व्वाणमहं द्रष्टुं दशाननं। यामि त्वरावान् शैलेन्द्र मा कस्यचिदुपस्कृथाः ॥ १९ ॥

कुलेत्यादि। अहं दशाननं द्रष्टुं यामि कुलभार्य्यां प्रकुर्व्वाणं कुलनारीमभिगच्छन्तं तस्यां सहसा प्रवर्त्तमानमित्यर्थः माह ज॰म॰



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



सिक्ये तङ् त्वरावान् त्वरायुक्तः अतः शैलेन्द्र मा कस्यचिद्दशनपानादिकस्य उपस्कृथाः अतिशयवन्तमाकार्षीरित्यर्थः माङिलुङ् प्रतियत्ने तङ् तनादिभ्यस्तथासोरिति सिचोलुक् उपात्प्रतियत्न इति सुट् कस्यचिदिति कृञः प्रतियत्नइति कर्म्मणि षष्ठी ॥ १९ ॥

भ० कुलेत्यादि। किमवोचदित्याह हे शैलेन्द्र अहं त्वरायुक्तः सन् दशाननं द्रष्टुं यामि कीदृशं कुलभार्य्यां कुलपालिकां प्रकुर्व्वाणं साहसेनाभिगच्छन्तं तस्यां साहसात्प्रवर्त्तमानमित्यर्थः सूचनावक्षेपणेत्यादिना साहसे मं कुलस्त्री कुलपालिकेत्यमरः अतएव कस्यचित् मा उपस्कृथाः कस्यापि द्रव्यस्य भोज्यस्य पेयस्य वा मदर्थे प्रतियत्नं न कुरु पूर्व्वेण प्रतियत्ने मं सतोगुणान्तराधानं प्रतियत्नः उत्कर्षसमीहा प्रतियत्नमिति केचित् सम्परैः सुमुपादिति सुम् झस्स्वाज्झसीति सेर्लोपः कस्यचिदिति समार्थैर्नेत्यादिना कर्म्मणि षष्ठी एधोदकस्योपस्कुरुतइत्युदाहरता प्रतियत्ने कृञः कर्म्मणि न द्वितीया इति सूचितं गुणोत्कर्षे कृञः कर्म्मणि षष्ठीति परः ॥ १९ ॥

योऽपचक्रे वनात्सीतामधिचक्रे न यं हरिः। विकुर्व्वाणः स्वरानद्य बलं तस्य निहन्म्यहं ॥ २० ॥

ज०म० योऽपेत्यादि। यः सीतामपचक्रे अभिबभूव अवक्षेपणे तङ् वनादिति वनमुपगम्य ल्यब्लोपे कर्म्मणि पञ्चमी यं हरिरिन्द्रोनाधिचक्रे न प्रसेहे अधेःप्रसहनइति तङ् तस्य बलं दशाननस्य सामर्थ्यं

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कीदृशं स्वरान् विकुर्व्वाणं विविधान् स्वरान् कुर्व्वाणं वेःशब्दकर्म्म णइति तङ् तस्य दशाननस्य बलं निहन्मि ॥ २० ॥

यद्दृत्यादि। योवनात् सीतामपचक्रे प्रतिभूतवान् सूचना वक्षेपणेत्यादिना अवक्षेपणे मं सूचनेममिति केचित् तदापकारं प्रयुज्य हिंसां सूचयतीत्यर्थः वनादिति हेतौ पञ्चमी वनं प्रा प्येति यवर्थे वा हरिरिन्द्रोयं नाधिचक्रे नाभिभूतवान् अधेः शक्ताविति मं शक्तिरभिभवः तस्य दशाननस्य बलं शक्तिमदहमद्य निहन्मि कीदृशः स्वरान् विविधान् कुर्व्वाणः द्वितीयान्तपाठे यमित्यस्य विशेषणं शब्दढाढादेरिति मं ॥ २० ॥ भ०

विकुर्व्वे नगरे तस्य पापस्याद्य रघुद्विषः। विनेष्ये वा प्रियान् प्राणानुदानेष्येऽथवा यशः ॥ २१ ॥

विकुर्व्वइत्यादि। तस्य रघुद्विषोरामशत्रोः पापस्य नगरे पुर्य्यां अहमद्य विकुर्व्वे विविधं चेष्टे अकर्म्मकाच्चेति तङ् तत्र विकु र्व्वाणोयदि वा प्रियानपि प्राणान् स्वाम्यर्थे विनेष्ये अपनेष्यामि संमाननेत्यादिना व्यये तङ् यतोधर्म्मादिषु विनियोगोव्ययः यशो वा उदानेष्ये ऊर्द्धं नेष्यामि तस्यापकारकरणात् अत्रोत्सञ्जने तङ् उत्सञ्जनमुत्क्षेपणं ॥ २१ ॥ ज०म०

विकुर्व्वइत्यादि। तस्य पापाचारस्य रघूणां रामादीनां द्विषोरावणस्य नगरे लङ्कायां अहमद्य विकुर्व्वे विविधं चेष्टे शब्दढाढादेरिति अकर्म्मकत्वान्मं तत्र च विकुर्व्वाणोऽहं प्रिया भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



नपि प्राणान् वा विनेष्ये स्वाम्यर्थे त्यक्ष्यामि ज्ञानार्थेऽक्षेपदृत्यादिना व्ययार्थे मं व्ययो धर्म्मादिषु विनियोगः अथवा यश उदानेष्ये ऊर्द्धं नेष्यामि पूर्व्वेण क्षेपणे मं ॥ २१ ॥

विनेष्ये क्रोधमथवा क्रममाणोऽरिसंसदि। इत्युक्त्वा खे पराक्रंस्त तूर्णं हनुर्नभस्वतः ॥ २२ ॥

ज०म० विनइत्यादि। यदि वा क्रोधमात्मनोविनेष्ये अपनेष्यामि कर्त्तृस्थेचेति तङ् कर्त्तृस्थस्य क्रोधकर्म्मणोऽशरीरत्वात् अत्र व्ययोन सम्भवतीति अरिसंसदि शत्रुसभायां क्रममाणः अप्रतिबन्धेन प्रवर्त्तमानः वृत्तिसर्गेत्यादिना वृत्तौ तङ् वृत्तिरप्रतिवन्धः इत्येवमुक्त्वा हनुर्नभस्वतः वायोस्तनयः खे तूर्णं पराक्रंस्त शीघ्रमुत्प्लेहे उपपराभ्यामित्यनेन सर्गे तङ् सर्गउत्साहः ॥ २२ ॥

भ० विनेष्यइत्यादि। अथवा क्रोधं विनेष्ये अपनेष्यामि शत्रुहननात् यस्मामूर्त्तढादिति मं अमूर्त्तमशरीरं कर्त्तृस्थादुक्तकर्म्मकादिपूर्व्वनीञआत्मनेपदमिति विद्यासागरः स्वमतेऽपि शब्दढाढादेरित्यतोमण्डूकप्लुत्या वेरित्यनुवर्त्तते इति वाच्यं क्रोधं विनयतइत्युदाहरणदर्शनात् अन्ये तु विपूर्व्वत्वं न वदन्ति तन्न साधु विगणय्य नयन्ति पौरुषं विहितक्रोधजयाजिगीषवइत्यादिदर्शनात् किं कुर्व्वन् अरिसंसदि शत्रुसभायां क्रममाणः अप्रतिबन्धेन चेष्टमानः वृत्त्युत्साहेत्यादिना मं वृत्तिरप्रतिबन्धः इत्येवमुक्त्वा नभस्वतोवायोः सूनुः पुत्रोहनूमान् खे आकाशे तूर्णं शीघ्रं परा

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



क्रंस्त उत्साहं चकार पूर्व्वेणोत्साहे मं आस्फालनरूपोऽत्रोत्साहः स्तुक्रमोऽमे इति नेम् ॥ २२ ॥

परीक्षितुमुपाक्रंस्त राक्षसी तस्य विक्रमं। दिवमाक्रममाणेव केतुताराभयप्रदा ॥ २३ ॥

परीत्यादि। तस्य हनूमतोविक्रमं शौर्य्यं परीक्षितुं राक्षसी उपाक्रंस्त उत्सेहे पूर्व्ववत्तङ् दिवमाक्रममाणेव यथा केतुः स्वर्भानुः तारा नभस्युद्गच्छति भयङ्करा आङउद्गमनइति तङ् तत्र हि ज्योतिरुद्गमनइत्युक्तं केतुतारायास्य ज्योतिःस्वभाववात् ॥ २३ ॥ ज०म०

परीत्यादि। तस्य हनूमतोविक्रमं शौर्य्यं परीक्षितुं राक्षसी उपाक्रंस्त उत्सहते स्म पूर्व्ववन्मं दिवमाकाशमाक्रममाणा उद्गमपूर्व्वकं प्राप्नुवती केतुस्वभावा तारेव भयप्रदा भयं प्रददातीति हनजनादिति डः आङोभोद्गमइति मं आक्रामति धूमः खमित्यत्र उद्गमोन विवक्ष्यते किन्तु व्याप्तिमात्रं ॥ २३ ॥ भ०

जले विक्रममाणायाहनूमान् शतयोजनं। आस्यं प्रविश्य निरगादणूभूयाप्रचेतितः ॥ २४ ॥

जलइत्यादि। विक्रममाणयाः पद्भ्यां विचरन्त्याः वेःपादविहरणइति तङ् जलग्रहणात् गतिविशेषन्दर्शयति आस्यं शतयोजनं शतं योजनानि यस्य प्रमाणतः तदणूभूय सूक्ष्मीभूय प्रविश्य ज०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



निरगात् निर्गत उदरं विदार्य्येत्यर्थात् अप्रचेतितः अविज्ञातः ॥ २४ ॥

भ० जलइत्यादि। जले विक्रममाणायाः पद्भ्यां विहरन्त्याराक्षस्याः शतयोजनमास्यं प्रविश्य हनूमान् अणूभूय सूक्ष्मीभूय अप्रचेतितस्तया अपरिज्ञातः सन् निरगात् निर्गतः कर्णपथेनेत्यर्थात् उदरं भित्त्वेत्यन्ये तत्तु रामायणविरुद्धं शतं योजनानि प्रमाणतोयस्येति विग्रहः वेःपद्भिरिति मं पद्भिरिति वङ्गलनिर्देशेन पादमात्रस्य करणत्वे वेःक्रमोसमिति बोध्यं न तु साधु विक्रमते वाजीत्युदाहरणदर्शनात् वङ्गपादकरणत्वं वाच्यं वेःपद्भ्यामिति कातन्त्रसूत्रे डिलसुपलक्षणंतेन तन्मते साधु विक्रमते वाजीत्यादिसिद्धं॥ २४ ॥

द्रष्टुं प्रक्रममाणोऽसौ सीतामम्भोनिधेस्तटं। उपाक्रंस्ताकुलं घोरैः क्रममाणैर्निशाचरैः ॥ २५ ॥

ज०म० द्रष्टुमित्यादि। असौ हनूमान् सीतां द्रष्टुं प्रक्रममाणः आरभमाणः आदिकर्म्म यथा भोक्तुं प्रक्रमतेइति उदधेस्तटमुपाक्रंस्त गन्तुं आरब्धवानित्यर्थःततश्च प्रोपयोरादिकर्म्मणि समानार्थत्वात् प्रोपाभ्यांसमार्थाभ्यामिति तङ् घोरैः रौद्रैः निशाचरैराकुलं व्याप्तं तटं क्रममाणैः इतस्ततोगच्छद्भिः अनुपसर्गाद्वेति तङ् ॥ २५॥

भ० द्रष्टुमित्यादि। असौ हनूमान् निर्गतः सन् सीतां द्रष्टुं प्रक्रममाणआरभमाणउदधेस्तटमुपाक्रंस्त गन्तुमारभते स्म यद्यपि

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भोक्तुमुपक्रमते इत्यादावारम्भमात्रमुपक्रमेरर्थस्तथापीह गमना रम्भोवाच्यः लाक्षणिकत्वात् द्रष्टुमित्यस्यानुषङ्गेन अम्भोनिधेस्त टमुपाक्रंस्तेति वा प्रोपादारम्भेइति सं घोरैर्भयानकैर्निशाचरै राकुलं व्याप्तं क्रममाणैरितस्ततोगच्छद्भिः वागैरिति सं॥ २५ ॥

आत्मानमपजानानः शशमात्रोऽनयद्दिनं। ज्ञा स्ये रात्राविति प्राज्ञः प्रत्यज्ञास्त क्रियापटुः ॥ २६ ॥

आत्मेत्यादि। मा कश्चिद्ज्ञासीदिति तथाविधमात्मानं शरी रमवजानानः अपन्हुवानः अपक्रवेज्ञइति तङ् योहि शशमात्रो भूत्वा स्थितः तेन कथमात्मा लोके नापलपितः स्यात् अनयद्दि नं अगमयद्दिवसं ज्ञास्ये रात्राविति प्रत्यज्ञास्त प्रतिज्ञातवानि त्यर्थः सम्प्रतिभ्यामनाध्यानइत्यात्मनेपदं लुङोभवति आत्मान श्चोत्कण्ठनं ज्ञास्येइत्यकर्म्मकाचेत्यकर्म्मकक्रियावचनत्वादात्मने पदं प्राज्ञः क्रियापटुरिति बुद्धिकौशलं कर्म्मकौशलञ्च दर्शयति ॥ २६ ॥ ज०म०

आत्मानमित्यादि। असौ शशमात्रः शशपरिमाणोभूत्वा दिनमनयत् गमयामास दघ्नमात्रद्वयषट्मानेइति मात्रट् कथं तथाविधस्याल्पकायत्वमित्याह आत्मानमपजानानः अपन्हुवानः निन्हवेज्ञइति सं रात्रावहं ज्ञास्येइति प्रत्यज्ञास्त प्रतिज्ञातवान् संप्रतेरस्मृताविति सं ज्ञास्येइति अढादिति सं अविवक्षितकर्म्म त्वात् जिज्ञ्यन्तेत्यादिना वा प्राज्ञः क्रियापटुरिति पदद्वयेन बुद्धिकौशलं क्रियाकौशलञ्च दर्शितं ॥ २६ ॥ भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



संजानानान् परिहरन् रावणानुचरान् बहून्।
लङ्कां समाविशद्रात्रौ वदमानोऽरिदुर्गमां॥ २७॥

ज०म० सञ्जेत्यादि। रावणस्यार्थेषु कार्य्येषु ये चरन्तीति चरेष्टः तान् बहून् सञ्जानानान् चेतयतः परिहरन् अनाध्याने तङ् रात्रौ लङ्कां समाविशत् प्रविष्टवान् अरिदुर्गमां राक्षसदुर्गमां वदमानोभासमानः भासनोपसम्भाषेत्यादिना आत्मनेपदं॥ २७॥

भ० समित्यादि। असौ हनूमान् रात्रौ लङ्कायां समाविशत् प्रविष्टवान् कीदृशः वदमानः शोभमानोवदन् शोभोपलक्षितं शोभाहेतुकं वा यथा स्यात्तथा कथयन् वा ज्ञानयत्नप्रलोभेवद इति सं ज्ञानपदेन ज्ञानपूर्व्वकत्वात् शोभाप्युच्यतइति कातन्त्र टीकायां व्याख्यातत्वात् प्रकाशनादौ वदइति क्रमदीश्वरसूत्र दर्शनाच्च शोभा च वदत्यर्थस्य लक्षणभावेन हेतुभावेन वा विशेषणं न तु तन्मात्रं वाच्यमिति न्यासः बहून् रावणस्यानुचरान् सेवकान् परिहरन् कीदृशान् संजानानान् चेतयमानान् संप्रतेरस्मृताविति सं कीदृशीं लङ्कां अरिदुर्गमां शत्रुभिर्दुष्प्रापां॥ २७॥

कश्चिन्नोपावदिष्टासौ केनचिद्व्यवदिष्ट न। शृण्वन् संप्रवदमानाद्रावणस्य गुणान् जनात्॥ २८॥

ज०म० कश्चिदित्यादि। असौ प्रविष्टः सन् न कश्चिदुपावदिष्ट उपसान्त्वितवान् उपसम्भाषायां तङ् केनचिद्व्यवदिष्ट न न भाषितवान् विमतौ तङ् विमतिर्नानामतिः संशृण्वन् आकर्णयन् जनात् प्रवद

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



मानात् रावणस्य सम्बन्धिनोगुणान् सम्भूय भाषमाणान् व्यक्त वाचामित्यात्मनेपदं जनानां व्यक्तवाक्यं ॥ २८ ॥

किञ्चिदित्यादि। असौ हनूमान् प्रविष्टः सन् न किञ्चिदुपा वदिष्ट न किञ्चिदलोभनवाक्यं भाषते स्म ज्ञानयत्नेत्यादिना प्रलोभे मं केनचित् सह न व्यवदिष्ट नानामतिपूर्व्वकं विचित्रं न भाषते स्म विमतिपूर्व्वकं विचित्रकथनमत्र वदत्यर्थः विमतिव्यक्त सहोक्त्योरिति विमतौ मं संप्रवदमानात् सम्भूय व्यक्तं भाषमाणात् जनात् रावणस्य गुणान् ध्वण्वन् पूर्व्वेण व्यक्तसहोक्तौ मं ॥ २८ ॥ भ०

जल्पितोत्क्रुष्टसङ्गीतप्रनृत्तस्मितवल्गितैः। घोष स्यान्ववदिष्टेव लङ्का पूतक्रतोः पुरः ॥ २९ ॥

जल्पीत्यादि। पूतक्रतोरिन्द्रस्य या पूः तस्या अमरावत्याः सम्बन्धिनो घोषस्यान्ववदिष्टेव लङ्का अनुशब्दः सादृश्ये सदृशं वादं कृतवती तैर्जल्पितादिभिः उभयत्रापि जल्पितादिघोषस्य तुल्यत्वात् लङ्केति तत्स्थोजनउच्यते तेन व्यक्तवाग्विषयत्वात् अनोरकर्म्मकादिति तङ् तत्र व्यक्तवाचामिति अनुवर्त्तते न समुच्चारणइति ॥ २९ ॥ ज०म०

जल्पितइत्यादि। लङ्का जल्पितादिभिः पूतक्रतोरिन्द्रस्य पुरो ऽमरावत्याघोषस्य शब्दस्य अन्ववदिष्टेव सदृशभाषणं कृतवतीव उभयत्रापि जल्पितादिघोषणानां तुल्यत्वात् अनुशब्दः सदृशभाषणद्योतकः तद्गतजनानां भाषणेन तद्भाषणमुक्तमुच्यते अनोरकर्म्मकादिति मं अनुपूर्व्वादकर्म्मकाद्वदेरुक्तौ व्यक्तवाचामात्मनेपदमिति भ०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



केचित् तन्मते लङ्काशब्देन लक्षणया लङ्कास्थितजन उच्यते व्यक्त वाचामिति तु वोपदेवेन नाङ्गीकृतं अनोरकर्म्मकइति कातन्त्रसूत्रेऽपि व्यक्तवाचामित्यस्य सम्बन्धो नाङ्गीकृतः जल्पितं व्यक्तभाषणं उत्क्रुष्टमाक्रान्तं सङ्गीतं सम्यक् गानं प्रनृत्तं नर्त्तनशब्दः स्मितं हास्यशब्दः वल्गितं मत्तवचनं ॥ २९ ॥

**ऐद्विप्रवदमानैस्तां संयुक्तां ब्रह्मराक्षसैः। तथाव गिरमाणैश्च पिशाचैर्मांसशोणितं ॥ ३० ॥**

म०ज० ऐदित्यादि। तां ब्रह्मराक्षसैः संयुक्तां हनूमानैत् जगाम दूणोलङि रूपं विप्रवदमानैः परस्परविरुद्धार्थाभिधायिभिः विप्रलापात्मके व्यक्तवाचां समुच्चारणे विभाषाविप्रलापइति तङ् तथा पिशाचैर्मांसशोणितमवगिरमाणैः भक्षयद्भिः संयुक्तां गिरतेरभ्यवहारार्थत्वादवाद्ग्रइति तङ् मांसशोणितमिति जातिरप्राणिनामित्येकवद्भावः ॥ ३० ॥

भ० ऐदित्यादि। हनूमान् तां लङ्कां ऐत् गतवान् दूणोर्घ्यां रूपं कीदृशीं ब्रह्मस्वरूपैस्तत्सम्बन्धिभिर्व्वा राक्षसैः संयुक्तां कीदृशैः विप्रवदमानैः सम्भूय विरुद्धप्रलापिभिः एको याट्टक् वदति अपरस्ताट्टक् न वदति वितण्डां कुर्व्वद्भिरित्यर्थः तद्योगेवेति मं तद्योगइति तयोः पूर्व्वोक्तयोः विमतिव्यक्तसहोक्त्योर्योगे युगपत्प्रवृत्तौ विमतिरिह विरुद्धप्रलापमात्रं तथा पिशाचैः संयुक्तां कीदृशैर्मांसशोणितञ्चावगिरमाणैर्भक्षयद्भिः अवाद्गिरतेरिति मं मांस

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



शोणितमिति समाहारद्वन्द्वः पिशितमश्नातीति पिशाचोमणीषा दित्वाल्लब्धवान् ॥३०॥

यथास्वं सङ्गिरन्ते स्म गोष्ठीषु स्वामिनोगुणान्।
पानशौण्डाः पथः क्षीवावृन्दैरुदचरन्त च ॥३१॥

यथेत्यादि। ब्रह्मराक्षसाः पिशाचाश्च यथास्वमात्मीयस्य स्वामिनोगुणान् गोष्ठीषु गोष्ठीमध्ये सङ्गिरन्ते स्म अभ्युपगतवन्तः समः प्रतिज्ञानइति तङ् पानशौण्डाः पानासक्ताः क्षीवामत्ताः सन्तः पथोमार्गानुदचरन्त उत्क्रम्य गच्छन्ति स्म उदश्चरःसकर्म्मका दिति तङ् वृन्दैरिति सम्भूयेत्यर्थः ॥३१॥ ज॰म॰

यथेत्यादि। ब्रह्मराक्षसाः पिशाचाश्च यथास्वं स्वीयस्य स्वामिनोगुणान् गोष्ठीषु गोष्ठीमध्ये सङ्गिरन्ते स्म अभ्युपगतवन्तः समः प्रतिज्ञायामिति मं पाने शौण्डाआशक्ताः अतएव क्षीवाः मत्ताः सन्तः वृन्दैः सम्भूय पथोमार्गान् उदचरन्त उत्क्रम्य जग्मुः उच्चरःसढादिति मं ॥३१॥ भ॰

यानैः समचरन्तान्ये कुञ्जराश्वरथादिभिः। संप्रायच्छन्त वन्दीभिरन्ये पुष्पफलं शुभं ॥३२॥

यानैरित्यादि ॥ अन्ये यानैः कुञ्जरादिभिः समचरन्त सञ्चरन्ते स्म समस्तृतीयायुक्तादिति तङ् अन्ये वन्दीभिरानीताभिः सम्प्रदाने तृतीया अशिष्टव्यवहारतृतीयाचतुर्थ्यर्थे भवतीति वच ज॰म॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



नाइन्दीभ्यइत्यर्थः पुष्पफलं शोभनं सम्प्रायच्छन्त ददति स्म दान स्यसाचेच्चतुर्थ्यर्थइति तङ् पुष्पफलमिति जातेरेकवद्भावः॥ ३२ ॥

भ० यानैरित्यादि। अन्ये कुञ्जरादिभिर्यानैः समचरन्त सञ्चरन्ते स्म समस्त्येति मं अन्ये शुभं शोभनं पुष्पं फलञ्च वन्दीभिः हठहृतस्त्रीभिः संप्रायच्छन्त संप्रददुः सन्दानोभेऽधर्म्मेनित्यमिति संप्रदाने तृतीया वन्दीभिः सह विहरणेच्छया ताभ्योददुरित्यधर्म्मः दानःसाचेच्चर्य्यर्थे इति मं सेत्यनेन समस्त्येत्यस्मात् ची आकृष्यते ॥ ३२ ॥

कोपात्काश्चित्प्रियैः प्रत्तमुपायंसत नासवं। प्रेम जिज्ञासमानाभ्यस्ताभ्योऽशपन्त कामिनः॥ ३३ ॥

ज०म० कोपादित्यादि। काश्चित् स्त्रियः कोपात् अन्यस्त्रीगमनजनितात् आसवं मद्यविशेषं नोपायंसत न स्वीकृतवत्यः विभाषोपयमइत्यकित्त्वपक्षे रूपं उपायमः स्वीकरणइति तङ् पाणिग्रहणपूर्व्वस्य स्वीकरणस्य तत्र स्थितत्वादौपचारिकमत्र स्वीकरणं द्रष्टव्यं समुदाङ्भ्योयमोग्रन्थइति वा तङ् स्वदाङ्पूर्व्वस्य यमआदानार्थत्वात् अवसरप्राप्तन्तु सूत्रद्वयमुदाहृतं स्यात् प्रियैः प्रत्तन्दत्तं अचउपसर्गात्तः प्रेम जिज्ञासमानाभ्यः किमस्मासु प्रेमास्ति वा न वेति कृतकोपप्रकाशेन ज्ञातुमिच्छन्तीभ्यः ज्ञाश्रुस्मृदृशांसनइति तङ् ताभ्यायोषिद्भ्यः कामिनः अशपन्त न मे त्वदन्या प्रियास्तीति त्वदीयशरीरस्पर्शनेन शपथञ्चक्रुः शपाउपलम्भने इत्यात्मने

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



यदं वाचा उपलक्षनं शरीरस्पर्शनं स्लाघह्नुङित्यादिना सम्प्रदान संज्ञायां चतुर्थी तासां ज्ञापयितुमिष्यमाणलात्॥ २३॥

कोपादित्यादि। काश्चित् स्त्रियः कोपात् सपत्नीसङ्गजनितात् प्रियैः प्रत्तं प्रदत्तमासवं मद्यविशेषं नोपायंसत न स्वीकृतवत्यः उपयमोविवाहइति सं विवाहः स्वीकारः उपायमः स्वीकरणे इति क्रमदीश्वरसूत्रदर्शनात् यमःसूचनेवाढ़दाहइति सेः कित्त्वा भावपचे मलोपाभावः अत्राप्युद्वाहः स्वीकारः स्वीकरणेचेति परसूत्रदर्शनात् उपयमोविवाहइत्यत्र विवाहः पाणिग्रहणमे वेति चेत् अिन्त्यन्तपिवेत्यादौ अग्न्योत्समायमइति फलवल्क त्तरि उपाङ्पूर्व्वान्मं प्रत्तमिति ग्यचस्तवेति दात्रः ते तादेशः अ न्यासु प्रियस्य स्नेहोऽस्ति न वेति सन्दिह्य कृतकोपेन प्रेम ज्ञातुमि च्छन्तीभ्यस्ताभ्यः स्त्रीभ्यः कामिनोऽशप्सत न मेऽन्या प्रियास्तीति ज्ञापनार्थं शपथं चक्रुः शपथाक्रोशगंत्यनुकारे शपेति सं मिथ्यानिरा सार्थं ज्ञापनमिह शपथः वाचा शरीरस्पर्शनमिति पाणिनीयाः यस्मैदित्सेत्यादिना संप्रदानत्वं सृष्टशननुज्ञेति ज्ञामं॥ २३॥ भ॰

प्रादिदृक्षत नोनृत्यं नाशुश्रूषत गायनान्। रामं सुस्मूर्षमाणोऽसौ कपिर्व्विरहदुःखितं॥ २४ ॥

प्रादीत्यादि। असौ कपिर्लङ्कायां नोनृत्यं प्रादिदृक्षत गाय नान् गायकान् गस्थकन् युच नाशुश्रूषत न श्रोतुमिष्टवान् किमि ति रामं विरहदुःखितं सुस्मूर्षमाणः स्मर्तुमिच्छन् सनन्तेभ्यः पूर्व्व वदात्मनेपदं अज्झनगमांसनीति दीर्घत्वं उदोष्ठ्यपूर्व्वस्येत्युत्वं ॥ २४॥ ज॰भ॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० प्रादीत्यादि। असौ कपिर्लङ्कायां नृत्यं नटनं न प्रादिदृक्षत न द्रष्टुमिच्छति स्म गायनान् नाभ्यशुश्रूषत न श्रोतुमिच्छति स्म तद्गीतश्रवणेन गायनश्रवणमुपचर्य्यते यतोऽसौ विरहेण दुःखितं रामं सुस्मूर्षमाणः स्मर्त्तुमिच्छन् सर्व्वत्र सृदृशननुज्ञेत्यादिना सनि मं एुर्नानिमीत्यगुणत्वं दृशः शक्षाजिति षङ् षढोःकःसे श्रुस्मृधातोर्धोऽज्झनिङ्गमामिति दीर्घः स्मरतेर्ऋदिरणावुरित्युर् गायतेर्गोणनट्थकाविति णनट्॥ ३४॥

अनुजिज्ञासते वाथ लङ्कादर्शनमिन्दुना। तमोपहविमुक्तांशुपूर्व्वस्यां दिश्युदैयत॥ ३५॥

ज०म० अन्वित्यादि। अथैतस्मिन्प्रस्तावे इन्दुना चन्द्रेण उदैयत उदितं इणोभावे लङि रूपं पूर्व्वस्यां दिशि पूर्णेनेति दर्शयति दृश्यते यत् दर्शनं रूपं लङ्कायारूपमनुजिज्ञासतेव पूर्व्वेण प्राप्तस्यात्मनेपदस्य नानोर्ज्ञ इति प्रतिषेधः तमोपहास्तमोविध्वंसमानाः विमुक्ताः प्रेरिताअंशवोयस्मिन् उदयइति॥ ३५॥

भ० अन्वित्यादि। अथानन्तरमिन्दुना पूर्व्वस्यां दिशि उदैयत उदितं इणोभावे घी पूर्व्वस्यां दिशीत्युपादानेन इन्दोः पूर्णत्वं सूचितं कृष्णपक्षः सूचितोवा किङ्कुर्व्वता लङ्कायायद्दर्शनं हनूमतेत्यर्थात् तदनुज्ञातुमनुमन्तुमिच्छतेव चन्द्रोदये सत्येव हनूमता लङ्का द्रष्टव्येति तत्र तदनुमतिरुत्प्रेक्ष्यते अन्ये तु दृश्यतइति दर्शनं रूपं लङ्कायारूपं ज्ञातुमिच्छतेवेत्याह सृदृशननुज्ञेत्यत्र

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अनुवर्त्तनान्न सं तमोपहा अन्धकारविध्वंसका विमुक्ताः प्रेरिता अंशवो यत्रेत्युदयक्रियाविशेषणं यद्यपि परमते क्तान्तस्य पूर्वनिपातो दृश्यते तथापि विमुक्तशब्दस्यात्र न पूर्वनिपातोगमकत्वात् अत एव दैक्यं सोऽन्वयेष्वतीत्युक्तं केचित्तु हन्तेर्भावेक्विप् तमोपहनाय विमुक्ता अंशवो यत्रेत्याहुः ॥ ३५ ॥

आशुश्रूषन् समैथिल्यावार्त्तां हर्म्म्येषु रक्षसां। शीयमानान्धकारेषु समचारीदशङ्कितः ॥ ३६ ॥

आश्वित्यादि। सकपिर्मैथिल्याः सीतायावार्त्तामाशुश्रूषन् श्रोतुमिच्छन् प्रत्याङ्भ्यां श्रुवइत्यात्मनेपदप्रतिषेधः रक्षसां हर्म्म्येषु गृहेषु समचारीत् सङ्क्रान्तवान् अतोलान्तस्येति वृद्धिः शीयमानान्धकारेषु अपगच्छत्तमस्सु शद्लृशातने शदेःशितइति तङ् पाघ्रेति शीयादेशः अशङ्कितः शङ्कारहितः ॥ ३६ ॥ जं०म०

आश्वित्यादि। हनूमान् मैथिल्यावार्त्तामाश्रोतुमिच्छन् रक्षसां हर्म्म्येषु सौधगृहेषु समचारीत् संचरति स्म तृतीयायोगाभावात् समस्त्येति न सं व्रजवदेति व्रिः सृदृशनतुञ्जेत्यादावाङ्वर्ज्जनान्न सं कीदृशेषु शीयमाना अपगच्छन्तोऽन्धकारा येभ्यः शदोऽपि ममिति सं अशङ्कितः निर्भयः कर्त्तरि क्तः अकर्म्मकत्वात् भावे क्तोवा शङ्काजाताऽस्येति इतोऽस्य जातइति इतोवा ॥ ३६ ॥ भ०

शतसाहस्रमारक्षं मध्यगं रक्षसां कपिः। ददर्श यं हतान्तोऽपि म्रियेतासाद्य भीषणं ॥ ३७ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० शतेत्यादि । मध्यमं मध्यप्रकोष्ठगतं आरक्षं गोपकं शतसाहस्रं रक्षसां लक्षमात्रं ददर्श विलोकितवान् शतसहस्रं परिमाणमस्येति शाण्वतेः संख्यापूर्व्वपदानां तदन्तग्रहणमलुकीति वचनात् शतमानविंशतिकेत्यादिना अणि संख्यायाः संवत्सरेत्युत्तरपदवृद्धिः भीषणं भयानकं आसाद्य प्राप्य कृतान्तोऽपि यमोऽपि म्रियेत प्राणान् सन्त्यजेत् म्रियतेर्लुङ्लिङोश्चेति तङ् तत्र हि शितइत्यनुवर्त्तते ॥ ३७ ॥

भ० शतेत्यादि । कपिर्मध्यगं मध्यकोष्ठगतं रक्षसामारक्षं ददर्श शतसाहस्रं शतसहस्रं परिमाणमस्येति विकारसंघेत्यादिना तदस्य परिमाणमित्यर्थे ष्णः सुपञ्चालादित्वादुत्तरपदे वृद्धिः यं भीषणं भयङ्करं आसाद्य प्राप्य कृतान्तोऽपि म्रियेत प्राणान् त्यजति किमुतान्यः विधिनिमन्त्रणेत्यादिना सम्भावनायां लो म्रुङष्टीबोसमितिमं ॥ ३८ ॥

अध्यासिसिषमाणेऽथ वियन्मध्यं निशाकरे । कासाञ्चक्रे पुरी सौधैरतीवोद्भासिभिः सितैः ॥ ३८ ।

ज०म० अथेत्यादि । अथ निशाकरे चन्द्रमसि वियन्मध्ये अध्यासितुमारोढुमिच्छति सति पूर्व्ववत्सनइत्यात्मनेपदं आस्तेरनुदात्तत्वमात्मनेपदनिमित्तं तेनैव सनन्तादपि भवति अत्र सनि इटि कृते अजादेर्द्वितीयस्येति द्विर्व्वचनं पुरी लङ्का कासाञ्चक्रे शोभते स्म सौधैः सौधानां ज्योत्स्नयोद्भास्यमानत्वात् आम्प्रत्ययवदिति तङ् ॥ ३८ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अधीत्यादि। अथानन्तरं निशाकरे चन्द्रे आकाशस्य मध्य मध्यासितुमारोढुमिच्छति सति पुरी लङ्का सौधैर्गृहविशेषैः कासाञ्चक्रे शुशुभे काशृङ्कुशब्दइत्यस्यानेकार्थत्वात् दीप्त्यर्थता काशृङ्दीप्तौ दन्त्यान्तोऽस्तीति विद्यासागरः केचित्तु काशाञ्चक्रइति तालव्यशकारवान् पाठः काशृङ्द्युतावित्यस्य रूपं वदन्ति ॥ ३८॥ भ०

इन्दुञ्चषकसंक्रान्तमुपायुङ्क्त यथामृतं। प्रयुञ्जानः प्रियावाचः समाजानुरतोजनः॥ ३९ ॥

इन्दुमित्यादि। एवं शोभितायां लङ्कायां समाजानुरतः पानगोष्ठीरतोजनः चषकसंक्रान्तं मद्यभाजने प्रतिविम्बेन संक्रान्तमिन्दुमुपायुङ्क्त उपभुक्तवान् प्रतिविम्बावच्छिन्नस्य मद्यस्योपलक्ष्यमाणत्वादेवमुक्तं यथाऽमृतं अमृतमिव प्रियाअनुकूला वाचः प्रयुञ्जानः अभिदधानः प्रोपाभ्यामिति तङ्॥ ३९ ॥ ज०म०

इन्दुमित्यादि। एवं शोभितायां लङ्कायां समाजानुरतः पानगोष्ठीरतोजनश्चषकसंक्रान्तं मद्यपात्रे प्रतिविम्बेन सङ्गतं चन्द्रमुपायुङ्क्त दर्शनादिक्रियाव्याप्यं चकार चन्द्रस्योपयोगोदर्शनादिरूपएव जयमङ्गलायान्तु चन्द्रमुपायुङ्क्त वुभुजे चन्द्रशब्देन तत्प्रतिविम्बावच्छिन्नमद्यभागस्य लक्षितत्वात् यथामृतमिवेत्युक्तं किं कुर्व्वन् यथामृतं तद्वत् प्रियावाचः प्रयुञ्जानः पीयतामित्याद्यनुकूलवाचोऽभिदधानः युजिरउद्यमइति मं महाकाव्योचितं मधुपानवर्णनमिदं ॥ ३९ ॥ भ०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



संदष्टवानइवोत्कण्ठामुपाभुङ्क्त सुरामलं। ज्योत्स्नायां विगलन्मानस्तरुणो रक्षसां गणः ॥ ४० ॥

ज॰म॰ संदष्टवानइत्यादि। रक्षसां तरुणो गणः उत्कण्ठां प्रियासु संस्मरणं संदष्टवानइव समुत्तेजयन्निव समः स्नुवइति तङ् ज्योत्स्नायां सुरां अलमत्यर्थमुपाभुङ्क्त अभ्याहृतवान् भुजोनवनइति तङ् विगलन्मानः ॥ ४० ॥

भ॰ संदष्टवानइत्यादि। तरुणो युवा रक्षसां गण उत्कण्ठां प्रियाभिलाषं संदष्टवानइव समुत्तेजयन्निव ज्योत्स्नायां सुरां मदिरां अलमत्यर्थं उपाभुङ्क्त भक्षितवान् सुरापानादेव विगलन्मानः अपगतमानः संदष्टः भुजोऽशनेइति मं उत्कण्ठोक्ताऽनवाप्तौ योऽभिलाषस्तदवाप्त्येइति ॥ ४० ॥

मध्वपाययत स्वच्छं सोत्पलं दयितान्तिके। आत्मानं सुरताभोगविस्रम्भोत्पादनं मुहुः ॥ ४१ ॥

ज॰म॰ मध्वेत्यादि। कीदृशं मधु स्वच्छत्वात् सोत्पलतया सुरभित्वात् शोभनं जातं यतः स्वयमात्मानं मुहुरपाययत पायितवत् णेरणाविति तङ् दयितान्तिके दयितस्य समीपे सुरताभोगः सुरतविमर्दः तत्र विस्रम्भः तस्योत्पादनं जनकं उत्पादयतीति कृत्यल्युटो बहुलमिति कर्त्तरि ल्युट् ॥ ४१ ॥

भ॰ मध्वित्यादि। रक्षसां गणो दयितान्तिके रमणीसमीपे आत्मानं मधु मुहुर्व्वारं वारं अपाययत जिन्ह्यन्तपिबेति मं यद्वा

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



मध्वेव कर्तृभूतमात्मानं अपाययत् निस्पृहमपि रक्षोगणं सुरापानमकारयत् मधुगुणादेव पानात् अर्द्धेऽऔघेइति मं अऔ स धुनः कर्मत्वात् मधु कीदृशं स्वच्छं निर्म्मलं सोत्पलं प्रियाकर्णोत्पल प्रतिविम्बात् सौरभाय प्रक्षिप्तोत्पलं वा सुरताभोगे सुरतविमर्द्दे विस्रम्भस्य विश्वासस्य उत्पादनं जनकं कभावेऽसीति कर्त्तरि अनट् भावेऽनटि रूपकालङ्कारोवा नन्द्यादित्वाद्वाऽनः उत्पादनक्षम मिति पाठस्तु सुगमएव ॥ ४१ ॥

अभीषयन्त ये शक्रं राक्षसारणपण्डिताः। अवि स्मापयमानस्तान् कपिराटीद्गृहाद्गृहं ॥ ४२ ॥

अभीत्यादि। एवं रक्षस्सु यथायथं चेष्टमानेषु ये राक्षसा ज०म० रणपण्डिताः संग्रामविज्ञाः शक्रमभीषयन्त भीषितवन्तः भीस्म्योर्हेतुभयइति तङ् भियोहेतुभये षुक् भयग्रहणमुपलक्षणं तेन स्मयतेरपि भवति तानसौ कपिरविस्मापयमानः विस्मयमकारयन् नित्यं स्मयतेरित्यात्वं गृहाद्गृहमाटीत् गतवान् लुङि रूपं ॥ ४२ ॥

अभीषयन्तेत्यादि। रणे पण्डिताः कुशलाये राक्षसाः श भ० त्रून् अभीषयन्त त्रासितवन्तः तान् अविस्मापयमानः विस्मितान् कारयन् मधुपानाद्यासक्ततया तैरविज्ञातइति भावः असौ कपिर्गृहात् एकस्मात् गृहमपरमाटीत् जगाम भीभीष्वेति औ मं भीषादेशस्य अत्र घाद्धर्थइत्यनुवर्त्तते अत्र ध्यर्थोभयं

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



तत्तु राक्षसकर्तृतएव लिङः ञिभ्योर्घाद्यर्थैमश्चेति ङौ इकार लोपं मश्च अटेथ्यां सिः ॥ ४२ ॥

**सीतां दिदृक्षुः प्रच्छन्नः सोऽगर्द्धयत राक्षसान् । अवञ्चयत मायाश्च स्वमायाभिर्नरद्विषां ॥ ४३ ॥**

ज॰म॰ सीतामित्यादि । सकपिः सीतां दिदृक्षुः सीतान्द्रष्टुमिच्छुः प्रच्छन्नः राक्षसानगर्द्धयत व्यामोहयत् स्वमायाभिश्च नरद्विषां मायाश्च अवञ्चयत अतिसंहतवान् गृधिवञ्च्योः प्रलम्भनइति तङ् ॥ ४३ ॥

भ॰ सीतामित्यादि । सीतां दिदृक्षुर्द्रष्टुमिच्छुः प्रच्छन्नो गुप्तः सकपिः राक्षसान् अगर्द्धयत व्यामोहयत् स्वमायाभिर्नरद्विषां राक्षसानां मायाश्च अवञ्चयत वृथा चकार प्रतारैवञ्चिगर्द्धैरिति मं प्रतारोविसम्वादनं मिथ्याख्यानमिति केचित् ॥ ४३ ॥

**अपलापयमानस्य शत्रूंस्तस्याभवन्मतिः । मिथ्या कारयते चारैर्घोषणां राक्षसाधिपः ॥ ४४ ॥**

ज॰म॰ अपेत्यादि । तस्य कपेः शत्रून् राक्षसान् अपलापयमानस्य न्यक्कुर्वतः विभाषालीयतेरित्याले लियःसंमानेत्यादिना शालिनी करणेन्यग्भावने आत्मनेपदं मतिरभवत् कीदृशीत्याह मिथ्या कारयतइति अयं राक्षसाधिपतिश्चारैर्दण्डवाहकैः यां घोषणां पुनः पनः कारयति जागृत जागृतेति तां मिथ्या कारयते येना

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



हमविज्ञातएव प्रविष्टः मिथ्योपपदात्कृञोऽभ्यासइति तङ् अभ्यासस्य पुनःपुनःकरणं ॥ ४४ ॥

अपेत्यादि। शत्रून् राक्षसान् अपलापयमानस्य वञ्चयमानस्य तस्य कपेरित्थं मतिरभवत् मिथ्याररिति लियोर्ङा पूजाभिभवे च लापेरिति चकारात् प्रतारे मं कीदृशी मतिरित्याह राक्षसाधिपोरावणस्थारैर्घोषणां मिथ्या कारयते जागृत जागृतेत्युच्चैर्घुष्टं मिथ्यैव चारैः कारयति तां कर्त्तुं चरान् पुनःपुनः प्रयुङ्क्ते निष्कलमेव येनाहमविज्ञातएव भ्रमामि मिथ्याकारैरभ्यासइति मं अभ्यासः पौनःपुन्यं चरएव चारः स्वार्थे ष्णः ॥ ४४ ॥ भ०

गूहमानः स्वमाहात्म्यमटित्वा मन्त्रिसंसदः। नृभ्योऽपवादमानस्य रावणस्य गृहं ययौ ॥ ४५ ॥

गूहेत्यादि। स्वमाहात्म्यं स्वपराक्रमं गूहमानः आवृण्वन् ऊदुपधायागोहइत्यूत्त्वं स्वरितजितइति तङ् अटित्वा मन्त्रिसंसदः शुकसारणादिगृहाणि गत्वा रावणस्य गृहं ययौ कीदृशस्य नृभ्योऽपवदमानस्य कुप्यतः असूयतीवा अपाद्वदइति तङ् नृभ्यइति क्रुधद्रुहेति सम्प्रदानसंज्ञायां चतुर्थी ॥ ४५ ॥ ज०म०

गूहेत्यादि। असौ स्वमाहात्म्यं स्वपराक्रमं गूहमानः संवृण्वन् मन्त्रिणां संसदो गृहाणि अटित्वा गत्वा रावणस्य गृहं ययौ कीदृशस्य नृभ्योऽपवादमानस्य असूयतः ज्ञिन्त्यन्तपिवेत्यादिना अपवादैर्मं यस्मैदित्सेत्यादिना असूयार्थेन संप्रदानत्वं गुहञ्ज भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



संवृतौ उभयपदी णुर्धूङ्इति गुणः गुहोणोत्वरित्योकारस्य ऊत्वं॥४५॥

दिशो द्योतयमानाभिर्दिव्यनारीभिराकुलं। श्रिय मायच्छमानाभिरुत्तमाभिरनुत्तमां॥४६॥

ज०म० कीदृशं गृहमित्याह। दिश इत्यादि द्योतयमानाभिः भासय मानाभिः णिचश्चेति तङ् दिव्यनारीभिः उत्तमाभिः प्रधाननायि काभिराकुलं व्याप्तं श्रियमनुत्तमामतिशयवतीं आयच्छमानाभिः स्वीकुर्व्वाणाभिः समुदाङ्भ्यइति तङ्॥४६॥

भ० दिश इत्यादि। कीदृशं गृहं ययौ दिव्यनारीभिर्दिवि भवाभिः स्त्रीभिराकुलं व्याप्तं कीदृशीभिः दिशो द्योतयमानाभिः भासयमा नाभिः ण्यन्तत्वादुभयपदं उत्तमाभिः श्रेष्ठाभिः अनुत्तमां अत्यु त्कृष्टां श्रियं आयच्छमानाभिः स्वीकुर्व्वाणाभि र्निन्ण्यन्तेत्यादिना आङ्पूर्व्वयमोमं न विद्यते उत्तमं यस्यादिति विग्रहः उत्तमोऽनु त्तमं विद्यादिति द्विरूपकोषः॥४६॥

नित्यमुद्यच्छमानाभिः स्मरसम्भोगकर्म्मसु। जाना नाभिरलं लीलाकिलकिञ्चितविभ्रमान्॥४७॥

ज०म० नित्येत्यादि। स्मरसम्भोगकर्म्मसु कामोपभोगक्रियासु नित्य मुद्यच्छमानाभिः पूर्व्ववत्तङ् लीलाः स्त्रीणां शृङ्गारचेष्टाविशेषाः

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



तथा चोक्तं लीला: सलीला: किलकिञ्चितानि विव्वोकमाप्यायित विभ्रमाणि। विच्छित्तमाकुट्टमितेचितानि योज्यानि तज्ज्ञैः सुकुमार नृत्यद्‌ति लक्षणञ्चैषां नृत्यशास्त्रे॥ ४७॥

नित्यमित्यादि। कीदृशीभि: सुरतसम्भोगकर्म्मसु कामोप भोगक्रियासु नित्यमुद्यच्छमानाभिः उद्यमं कुर्व्वतीभिः जिन्व्यन्ते त्यादिना उत्पूर्व्वयमोमं लीलाकिलकिञ्चितविभ्रमान् शृङ्गार चेष्टाविशेषान् अलमत्यर्थं जानानाभि: पूर्व्ववत् अगिन्नोमं प्रिया नुकरणे लीलावेशभाषाविचेष्टितैः क्रोधाश्रुहर्षभीत्यादेः सङ्करः किलकिञ्चितं विभ्रमस्त्वरया काले भूषास्थानविपर्य्ययः ईदृशी भिर्दिव्यनारीभिराकुलं गृहं ययाविति सम्बन्धः॥ ४७॥ भ॰

स्वं कर्म्म कारयन्नास्ते निश्चिन्तोयाञ्झषध्वजः। स्वार्थं कारयमाणाभिर्यूनोमदविमोहितान्॥ ४८॥

स्वङ्कैत्यादि। स्वमात्मीयं मोहनादिकर्म्म दिव्यनारीः कार यन् अनुष्ठापयन् एषझषध्वजः कामदेवः निश्चिन्तआस्ते ताभिरा कुलमिति योज्यं हृक्रोरन्यतरस्यामिति द्विकर्म्मकता यूनः स्वार्थं स्वप्रयोजनं मैथुनाख्यङ्कारयमाणाभिः आकुलं तान् हनूमानिति वक्ष्यमाणेन सम्बन्धः कीदृशान् मदविमोहितान् मधुपानमद परवशान् ताभिः॥ ४८॥ ज॰म॰

स्वमित्यादि। या दिव्यनारीः स्वं कर्म्म मोहनादि कारयन् झषध्वजः कामोनिश्चिन्तोनिराकुलः सन्नास्ते यासां कामएवास्ति भ॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



न चिन्ता तद्विरोधिनी ताभिराकुलं गृहं यथा घोऽन्नैरित्या दिना प्रयोज्यस्य कर्म्मत्वं मदेन विमोहितान् यूनस्तरुणान् स्वार्थं स्वप्रयोजनं कारयमाणाभिः ण्यन्तस्योभयपदित्वात् शब्दशानौ दर्शितौ ॥ ४८ ॥

कान्तिं स्वां वहमानाभिर्यजन्तीभिः स्वविग्रहान् ।
नेत्रैरिव पिवन्तीभिः पश्यतां चित्तसंहतीः ॥ ४९ ॥

ज०म० कीदृशाभिरित्याह कान्तिमित्यादि । स्वाङ्कान्तिं शोभां वहमानाभिः यजन्तीभिः स्वविग्रहान् ददतीभिः कामिभ्यः तत्र स्वङ्कर्म्मेति णिचस्येत्यस्य विषयः कान्तिं स्वां स्वविग्रहानिति स्वरितेतइत्यस्य विषयः विभाषोपपदेनप्रतीयमानइति विभाषात्मनेपदं इत्यात्मनेपदाधिकारः शेषभूतत्वात्परस्मैपदविधानमाह नेत्रैरिति पश्यतां चित्तसंहतीः चित्तसन्दोहान् पिवन्तीभिरिव गृह्णन्तीभिरिव शेषात्कर्त्तरि परस्मैपदं ॥ ४९ ॥

भ० कान्तिमित्यादि । स्वां कान्तिं वहमानाभिः धारयन्तीभिः वहोऽङ्‌प्रापणे ञिन्‌ण्यन्तपिवेति फलवत्कर्त्तरि मं मन्मथेनार्पिता छाया सैवकान्तिरिति स्मृता । स्वविग्रहान् स्वदेहान् यजन्तीभिः कामिभ्योददतीभिः यजैञ्देवार्चादानसङ्गतिकृतौ ञिन्‌ण्यन्तेत्यादौ ञिद्धातोः फलवत्कर्त्तर्य्यात्मनेपदस्यानित्यत्वं नित्यत्वे हि नवशःपमेइत्यनेन ञिद्धातोरुभयपदकथनमनर्थकं स्यात् फलवत्कर्त्वनियमितात्मनेपदादन्यत्र परस्मैपदस्य गम्यमानत्वात्

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



टीदृशमिति नियमादन्यत्र किं परस्मैपदं नगम्यते तेनात्र यजेः फलवत्कर्त्तर्य्यपि परस्मैपदं फलवत्कर्त्तरि आत्मनेपदमेव अन्यत्रोभयपदमिति नवशःपमेञ्जितइत्यस्य साफल्यमिति चेत् क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशतइति न्यायात् नवशःपमेञ्जितइत्यनेनोभयपदित्वं विद्यासागरस्तु फलवत्त्वाविवक्षायां पदं संस्कृत्य पश्चात् स्वशब्दादिसम्बन्धात् वाक्ये क्रियाफलस्य कर्त्रन्वयोगम्यतइत्याह अपरे तु कर्त्रभिप्रायेऽपि क्रियाफले विभाषोपपदेन प्रतीयमानइति सूत्रेण पक्षे आत्मनेपदाभावमाहुः। इत्यात्मनेपदाधिकारः अथ परस्मैपदमुच्यते । पश्यतां जनानां चित्तसमूहान् नेत्रैरिव पिबन्तीभिः स्त्रीभिराकुलं गृहं ययावित्यन्वयः पापाने नवशःपमे इति पं प्रष्टः॥ ४९ ॥

ताहनूमान् पराकुर्व्वन्नगमत् पुष्पकं प्रति। विमानं मन्दरस्याद्रेरनुकुर्व्वद्दिवश्रियं॥ ५० ॥

ताइत्यादि। तादिव्यनारीः पराकुर्व्वन्नपक्षिपन् अगमत्पुष्पकम्प्रति पुष्पकविमानं प्रति येन पुष्पकविमानेन जगाम कीदृशं मन्दरस्याद्रेः श्रियमनुकुर्व्वदिव अनुपराभ्यांकृञः कर्त्रभिप्राये चात्मनेपदस्य प्राप्तत्वात् ॥ ५० ॥ ज०म०

ताइत्यादि। हनूमान् तादिव्यनारीः पराकुर्व्वन् विक्षिपन् पुष्पकनामानं विमानं प्रति लक्षीकृत्य अगमत् कीदृशं मन्दरनाम्नोऽद्रेः श्रियमनुकुर्व्वदिव स्वश्रिया सदृशीकुर्व्वदिव कृञोञित्त्वादुभयपदप्राप्ते चेपंपरेति पं ताइत्यत्र तान् इति पठित्वा यान् यूनः म०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



स्वार्थं कारयमाणाभिराकुलं गृहं ययौ तान् पराकुर्व्वन्निति तृतीयश्लोकेनान्वयोजयमङ्गलायामुक्तः व्योमयानं विमानोऽस्त्री त्यमरः॥५०॥

तस्मिन् कैलाससङ्काशं शिरःशृङ्गं भुजद्रुमं। अभिक्षिपन्तमैक्षिष्ट रावणं पर्व्वतश्रियं॥५१॥

ज०म० तस्मिन्नित्यादि। तस्मिन् विमाने रावणमैक्षिष्ट कैलाससङ्काशं कैलासतुल्यं शिरःशृङ्गं शिरांसि शृङ्गाणीव यस्य भुजद्रुमं भुजा द्रुमाइव यस्य तं पर्व्वतस्य श्रियोऽभिक्षिपन्तं अभिभवन्तं अभिप्रत्यतिभ्यःक्षिपइति परस्मैपदं तस्य स्वरितेत्त्वात् कर्त्त्रभिप्रायआत्मनेपदं प्राप्तं॥५१॥

भ० तस्मिन्नित्यादि। हनूमान् तस्मिन् विमाने रावणमैक्षिष्ट दृष्टवान् कीदृशं कैलाससङ्काशं कैलासतुल्यं तुल्यतां दर्शयति शिरांसि शृङ्गाणीव यस्य भुजाश्च द्रुमाइव यस्य तादृशं अन्येषां पर्व्वतानां श्रियं अभिक्षिपन्तं अभिभवन्तं घेपमित्यादौ प्रत्यभ्यतिक्षिपेति सं कैलासेति केलिःप्रयोजनमस्येति विकारसंघेत्यादिना ण्ये कैलः आस्यतेऽस्मिन्नित्यासः पश्चात् कर्म्मधारयः कैलीनां समूहः कैलं पूर्व्ववत्ष्णः तस्यासइति वा॥५१॥

प्रवहन्तं सदामोदं स्वप्नं परिजनान्वितं। मघोने परिम्लापयन्तमारमन्तं परंस्मरे॥५२॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



प्रवत्यादि। सदामोदं कस्तूरिकादिपरिमलम्प्रवहन्तं प्राद्वहइति परस्मैपदं स्वरितेत्त्वात् सुप्तं शयने संविष्टं परिजनान्वितं पारिपार्श्विकाधिष्ठितं मघोने इन्द्राय परिमृष्यन्तं असूयन्तं परेर्मृषइति परस्मैपदं मृषेः स्वरितेत्त्वात् क्रुधद्रुहेति सम्प्रदानसंज्ञायां चतुर्थी स्मरे कामे परमत्यर्थं आरमन्तं सक्तिं कुर्व्वाणं व्याङ्परिभ्योरमइति परस्मैपदं रमेरनुदात्तेत्त्वात्॥ ५२॥ ज०म०

प्रवहन्तमित्यादि। कीदृशं रावणं सन्तमुत्कृष्टं आमोदं कस्तूरिकादिपरिमलं सदा सर्व्वदा वा आमोदं प्रवहन्तं घेपमित्यादौ प्रवहेति पं सुप्तं शयानं परिजनैः पारिपार्श्विकैरन्वितं मघोने इन्द्राय परिमृष्यन्तं असूयन्तं घेपमित्यादौ परिमृषेति पं यस्मै दित्सेत्यादिना संप्रदानत्वं स्मरे कामे परमत्यर्थं आरमन्तं क्रीडन्तं घेपमित्यादौ व्यापरिरमइति पं॥ ५२॥ भ०

व्यरमत् प्रधनाद्यस्मात्परित्रस्तः सहस्रदृक्। क्षणं पर्य्यरमत्तस्य दर्शनात्पवनात्मजः॥५३॥

व्यरेत्यादि। यस्माद्रावणात्सहस्रदृगिन्द्रः परित्रस्तः भीत्रार्थानामित्यपादाने पञ्चमी प्रधनात् युद्धात् व्यरमत् उपरतव्यापारोऽभूत् व्याङ्परिभ्योरमइति परस्मैपदं जुगुप्साविरामप्रमादार्थानामपादाने पञ्चमी तस्य दर्शनान्मारुतात्मजः हनूमान् क्षणं पर्य्यरमत् तुष्टिमानभवदित्यर्थः साधु रावणेति पूर्व्ववल्लङः परस्मैपदं॥ ५३॥ ज०म०

.CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० व्यरमदित्यादि। सहस्रदृगिन्द्रो यस्मात् रावणात् परित्रस्तो भीतः सन् प्रधनात् युद्धात् व्यरमत् उपरतोऽभूत् यतोऽपायेत्यादिना भीविरामयोरपादानं पूर्व्ववत्यं सहस्रदृगिति पदोपन्यासो युक्तः परित्रस्तस्य सर्व्वत्र प्रेरितनेत्रत्वात् तस्य दर्शनात् मारुतात्मजो हनूमान् चणं पर्य्यरमत् तुष्टोऽभवत् पूर्व्ववत्यं॥ ५३॥

उपारंसीच्च संपश्यन् वानरस्तं चिकीर्षितात्। रम्यं मेरुमिवाधूतकाननं श्वसनोर्म्मिभिः॥ ५४॥

ज०म० उपेत्यादि। तं रावणं पश्यन् वानरः चिकीर्षितात्कर्तुमिष्टात् सीतान्वेषणादुपारंसीत् निवृत्तः उपाच्चेत्यधिकृत्य विभाषाकर्म्मकादिति लुङः परस्मैपदं तस्य मेरोरिव रम्यत्वात् यदाह मेरुमिव श्वसनोर्म्मिभिः वातसमूहैः आधूतकाननं प्रचलितवनं मेरुं तथा श्वसितकल्लोलैः आधूतानि शिरांस्याननानि च यस्येति॥५४॥

भ० उपेत्यादि। वानरस्तं रावणं संपश्यन् चिकीर्षितात् कर्त्तुमिष्टात् सीतान्वेषणादपि उपारंसीत् निवृत्तः घेपमित्यादौ वाङ्परमइति पचे पं यमरमेति इमुसनौ मेरुवत् रम्यं श्वसनोर्म्मिभिर्निश्वासवेगैराधूतानि ईषत्कम्पितानि काननानि गृहाणि येन कानि शिरांसि आननानि च यस्येति वा मेरुपचे श्वसनोर्म्मिभिर्व्वायुवेगैराधूतानि काननानि वनानि यत्र उर्म्मिस्तरङ्गे पीडायां वेगे सङ्गप्रकाशयोः। काननं विपिने गेहे परमेष्ठिमुखेऽपि चेति विश्वः कं शिरोऽम्बुनोरित्यमरः॥ ५४॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



दृष्ट्वा दयितया साकं रहीभूतं दशाननं। नाच
सीतेत्युपारंस्त दुर्म्मना वायुसम्भवः॥५५॥

दृष्ट्वेत्यादि। रहीभूतम्विजनस्थं दशाननं अरुर्मनश्चचुरि त्यादिना चौ सलोपः दयितया साकं दृष्ट्वा नाच सीतेति कृत्वा उपारंस्त विमनानिवर्त्तते स्म विभाषाकर्म्मकादिति तङ् वायु सम्भवो हनूमान्॥५५॥ ज०म०

दृष्ट्वेत्यादि। दयितया साकं सह रहीभूतं विजनदेशस्थं दशाननं दृष्ट्वा अत्र सीता नास्तीति ज्ञात्वा दुर्म्मना दुःखितचित्तो वायुसम्भवो हनूमान् उपारंस्त निवर्त्तते स्म तस्माद्देशादित्यर्थात् पूर्ववत् पचे मं अरहसि रहसि भवन्तमिति मनश्चचुरित्यादिना सलोपः॥५५॥ भ०

ततः प्राकारमारोहत् चपाटानविबोधयन्। ना
योधयत्समर्थोऽपि सीतादर्शनलालसः॥५६॥

ततइत्यादि। ततउत्तरकालं प्राकारमारोहत् आरूढ वान् चपाटान् राचसान् अविबोधयन् अचेतयन् णिचश्चेत्या त्मनेपदे प्राप्ते बुधयुधेत्यादिना वा लटः परस्मैपदं बुधेरणौ सकर्म्मकस्य चित्तवत्कर्तृकत्वात् हनूमतश्चित्तवत्त्वात् तत्र ह्यकर्म्म काये तेषामन्वितवत्कर्तृत्वार्थमुपादानमित्युक्तं तान्नायोधयत् समर्थोऽपि न संग्रामितवान् यतः सीतादर्शनलम्पटः अणावकर्म्म ज०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कादित्यनेन उभयत्रापि लङः परस्मैपदं युधेरेकस्याचित्तव त्कर्तृकत्वात्॥ ५६॥

भ० ततइत्यादि। ततोऽनन्तरं हनूमान् प्राकारमारोहत् आरूढ वान् किङ्कुर्व्वन् क्षपाटान् राक्षसान् अविबोधयन् अचेतयन् समर्थोऽप्यसौ तान् नायोधयत् यतः सीतायादर्शने लालसोमहाभिलाषोऽस्य ण्यन्तादुभयपदे प्राप्ते कम्यान्नार्थेङित्यादिना पं॥ ५६॥

अध्यासीद्राघवस्याहं नाशयेयं कथं शुचः। वैदेह्या जनयेयं वा कथमानन्दमुत्तमं॥ ५७॥

ज०म० अध्येत्यादि। राघवस्याहं कथं केन प्रकारेण शुचं शोकं नाशयेयं कथं वा वैदेह्याः सीतायाआनन्दं जनयेयमिति हनूमान ध्यासीत् चिन्तितवान् ध्यैचिन्तायामित्यस्य लुङि रूपं नशिजन्योरकर्मकत्वात् अणावित्यनेन लिङः परस्मैपदं नबुधेत्यादिना जनिजृषित्यादिना जनेर्मित्संज्ञायां ह्रस्वत्वं॥ ५७॥

भ० अध्येत्यादि। अहं राघवस्य शुचः शोकान् केन प्रकारेण नाशयेयं कथं वा वैदेह्याः सीतायाउत्तममानन्दं जनयेयं इति हनूमान् अध्यासीत् चिन्तितवान् ध्यैचिन्तायां एचोऽशित्या यमरमेति इमसनौ ण्यन्तनशजनाभ्यां कम्यान्नार्थइत्यादिना पं जनेर्घटादिजनीति ह्रस्वः॥ ५७॥

दृष्ट्वा राघवकान्तान्तां द्रावयिष्यामि राक्षसान्। तस्याहि दर्शनात्पूर्व्वं विक्रमः कार्य्यनाशकृत्॥ ५८॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



दृष्ट्वेत्यादि। द्रुयमसाविति राघवस्य कान्तां दृष्ट्वा द्रावयिष्यामि राक्षसान् पलाययिष्यामि अत्र अणावित्यनेन नवुधेत्यादिना तस्याकर्म्मकस्य चिन्तवत्कर्त्तृकत्वात् हि यस्मात् तस्याः सीतायाः दर्शनात्पूर्व्वं विक्रमः कार्य्यस्य सीतादर्शनरूपस्य नाशकृत्॥ ५८॥ ज॰म॰

दृष्ट्वेत्यादि। तां राघवस्य कान्तां सीतां दृष्ट्वा अहं राक्षसान् द्रावयिष्यामि पलायनपरान् करिष्यामीति पूर्व्ववत्त्वं हि यस्मात् तस्य राघवस्य कान्तायाः दर्शनात् पूर्व्वकालं विक्रमः कार्य्यस्य सीतादर्शनस्य नाशमभावं करिष्यति इत्थं चिन्तयन्निति वक्ष्यमाणश्लोकेनान्वयः॥ ५८॥ भ॰

चिन्तयन्नित्यमुत्तुङ्गैः प्रावयन्तीं दिवं वनैः। अशोकवनिकामारादपश्यत् स्तवकाचितां॥ ५९॥

चिन्तेत्यादि। इत्थं पूर्व्वोक्तप्रकारेण चिन्तयन्नारात्समीपे अशोकवनिकामपश्यत् उत्तुङ्गैरुच्चैर्व्वनैर्दिवमाकाशं प्रावयन्तीं व्याप्नुवानां वुधयुधेत्यादिना तिप् प्रवतेरकर्म्मकस्यान्वितवत्त्वात् स्तवकाचितां अशोकपुष्पस्तवकैः छन्नां॥ ५९॥ ज॰म॰

चिन्तेत्यादि। इत्थं पूर्व्वोक्तप्रकारेण चिन्तयन् आरात् समीपे ऽशोकवनिकां अपश्यत् कीदृशीं उत्तुङ्गैरुच्चैर्व्वनैर्दिवमाकाशं प्रावयन्तीं व्याप्नुवतीं पूर्व्ववत् पं नगैरिति पाठे नगैर्वृक्षैरित्यर्थः स्तवकैः पुष्पगुच्छकैराचितां व्याप्तां॥ ५९॥ भ॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



तां प्राविशत्कपिव्याघ्रस्तरूनचलयन् शनैः। अत्रा
सयन्वनेशयान् सुप्तान् शाखासु पक्षिणः॥ ६०॥

ज०म० तामित्यादि। तामशोकवनिकां कपिव्याघ्रः कपिर्व्याघ्रइव शनै
र्मन्दं प्राविशत् तरूनचलयन् अकम्पयन् चलेरकर्म्मकत्वाच्चित्तव
त्कर्त्तृकाद्णावित्यनेन च,लटःपरस्मैपदं ननिगरणेत्यादिना तद्धि
तत्र सकर्म्मकार्थं अचित्तवत्कर्त्तृकार्थञ्चेत्युक्तं वनशयान् पक्षिणः
शाखासु सुप्तान् अत्रासयन् अणावित्यनेन परस्मैपदं वने शेरत
इति अधिकरणे शेतेरित्यच् शयवासवासिष्वित्यादिना सप्तम्या
विभाषाअलुक्॥ ६०॥

भ० तामित्यादि। कपिव्याघ्रः कपिश्रेष्ठोहनूमान् तामशोकवनिकां
शनैर्मन्दं प्राविशत् किङ्कुर्व्वन् तरून् अचलयन् अकम्पयन् पूर्व्ववत्
पं घटादित्वात् ह्रस्वः वनेशयान् वनचरान् शाखासु सुप्तान्
पक्षिणोऽत्रासयन् कम्पान्नार्थेऽङित्यादिना अजिप्राणिघाढादिति
पं वनेशेते इति पचादित्वादन् अभिधानात् सप्तम्याअलुक् असमा
सेऽपि न चतिः अकालवाचिनः शयवासवासिषु इति सप्तम्याअलु
गिति परः एओमुद्धाअवणमिनिआविलह्र इति वचनात् नेइत्य
स्य लघुत्वं गुरुत्वे जिह्वाकष्टं वनशयानिति केचित् पठन्ति अकाल
वाचिनइत्यादि परस्यचस्यानित्यत्वेन विभक्तिलोपात्॥ ६०॥

अवादयुः शनैर्यस्यां लतां नर्त्तयमानवत्। नाया
सयन्त संत्रस्ताक्टतवोऽन्योन्यसम्पदः॥ ६१॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अवादित्यादि। यस्यामशोकवनिकायां वायुर्वातः शनैर्मन्द मवात् वाति स्म तामाटेति वक्ष्यमाणेन सम्बन्धः लतां नर्त्तयमान वत् नृत्तमिव कारयन् नृतिस्खलने वर्त्तते ततश्च निगरणेत्यादिना परस्मैपदं प्राप्तं नपादम्मीत्यादिना प्रतिषिद्धं ऋतवोऽन्योन्यं सम्प दं परस्परस्य विभूतिं नायासयन्त नोपपीडयन्ति स्म सन्त्रस्ता रावणात् आङ्पूर्व्वाद्यसेः चित्तवत्कर्तृकत्वात् अणावित्यादिना परस्मैपदं प्राप्तं नपादम्मीत्यादिना प्रतिषिद्धं॥ ६१॥ ज॰म॰

अवादित्यादि। यस्यामशोकवनिकायां वायुः शाखाभङ्गभ यात् शनैर्मन्दं अवात् वाति स्म तां प्राविशदिति पूर्व्वेण तामाटेति वक्ष्यमाणेन वा सम्बन्धः लतां नर्त्तयमानइव ञिनन्यन्तेत्यनेन फलवत्कर्त्तरि मं फलवत्कर्तृत्वाभावे तु नृतेः कर्म्मार्थत्वात् परस्मै पदं स्यादिति पुरुषोत्तमः यत्र रावणात् संत्रस्ताभीताऋतवो वसन्तादयः परस्परसमृद्धीर्न आयासयन्त न पीडयन्ति स्म अञि प्राणिघाढाचेति पे प्राप्ते पूर्व्ववन्मं॥ ६१॥ भ॰

ज्योत्स्नामृतं शशी यस्यां वापीर्व्विकसितोत्पलाः।
अपाययत सम्पूर्णः सदा दशमुखाज्ञया॥ ६२॥

ज्योत्स्नेत्यादि। यस्यां रावणाज्ञया शशी सदा संपूर्णः सन् ज्योत्स्नामृतं वापीरपाययत पायितवान् निगरणार्थत्वात्तिपि प्राप्ते नपादम्मीत्यादिना प्रतिषिद्धे णिचश्चेति तङ्॥ ६२॥ ज॰म॰

ज्योत्स्नेत्यादि। यस्यां रावणाज्ञया सदा सम्पूर्णः शशी भ॰



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज्योत्स्नाद्रूपममृतं वापीर्ह्रदीर्घिका अपाययत पायितवान् अन्नार्थत्वात् पे प्राप्ते पूर्व्ववन्मं शाच्छासाह्वेत्यादिना यन् अतएव विकसितानि उत्पलानि यासु तास्तथा ज्योतिरस्यास्तीति ज्योत्स्ना निपातनात्॥ ६२॥

प्रादमयन्त पुष्पेषुं यस्यां वन्द्यः समाहृताः। परिमोहयमाणाभीराक्षसीभिः समावृताः॥ ६३॥

ज॰म॰ प्रादेत्यादि। यस्यां वन्द्यः समाहृताः समानीताः पुष्पेषुं कामम् आदमयन्त शमितवत्यः तन्मतस्याचरणात् कीदृश्यः परिमोहयमाणाभिः व्यामोहयन्तीभिः राक्षसीभिः परिवृताः दमिपरिमुह्योः अणावित्यादिना प्राप्तस्य परस्मैपदस्य नपादमीत्यादिना प्रतिषेधे णिचश्चेत्यात्मनेपदं॥ ६३॥

भ॰ प्रादेत्यादि। यस्यामशोकवनिकायां समाहृतास्वानीताएकत्र कृतावा वन्द्योहठहृताः स्त्रियः पुष्पेषुं कामं प्रादमयन्त प्रशमितवत्यः अतिदुःखात् यतः परिमोहयमाणाभिर्व्यामोहयन्तीभी राक्षसीभिः समावृताः परिवृताः दमुपरिमुहोरञ्जि प्राणिधाढा चेति पे प्राप्ते पूर्व्ववन्मं॥ ६३॥

यस्यां वासयते सीतां केवलं स्म रिपुः स्मरात्। न त्वरोचयतात्मानं चतुरोवृद्धिमानपि॥ ६४॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



यस्यामित्यादि। रिपुर्दशाननः स्मरात्कामाद्धेतोः केवलं निष्फलं यस्यां सीतां वासयते स्म वासितवान् न लरोचयत् आत्मानं नैवात्मानमुपरोचितवान् चतुरोऽपि योषिदाराधनकुशलोऽपि वृद्धिमानपि सम्पन्नोऽपि रोचिवास्योरणावित्यादिना प्राप्तस्यापि च परस्मैपदस्य नपादमीतिप्रतिषेधे णिचस्येति तङ्॥६४॥ ज०म०

यस्यामित्यादि। यस्यामशोकवनिकायां रिपुर्दशाननः स्मरात् कामात् केवलं सीतां वासयते स्म वसतिं कारयति स्म नतु आत्मानं तस्यै अरोचयत रोचितवान् चतुरोऽपि योषिदाराधनकुशलोऽपि बुद्धिमानपि स्मरशास्त्रज्ञानवानपि वसहचोरज्ञि प्राणिघाढाचेति पे प्राप्ते पूर्व्ववन्म॥६४॥ भ०

मन्दायमानगमनोहरितायत्तरूं कपिः। द्रुमैः
शकशकायद्भिर्म्मारुतेनाट सर्व्वतः॥६५॥

मन्देत्यादि। कपिः सर्व्वतः सर्व्वत्र तामाट विजहार यत्तदो र्नित्यसम्बन्धात्तामिति गम्यते मन्दायमानगमनः मन्दीभवद्गमनः कीदृशीं हरितायत्तरूं शाद्वलीभवद्वृक्षां अप्राणिजातेश्चेत्यूङ् द्रुमैरुपलक्षितां कीदृशैः शकशकायद्भिः शकस्वभावैः शकीभवद्भिः केन मारुतेन अत्रामन्दं मन्दं भवति अहरिता हरिताभवन्तीति लोहितादिलात्क्यष् अशकाः शकाभवन्तीति वाक्ये अव्यक्तानुकरणादिति डाच् तस्मिन्विषयभूते डाचि वक्तव्ये भवतः ज०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



नित्यमाम्रेडिते डाचीति पररूपत्वं डाजन्तात् शकशकाशब्दा त्क्यष् वाक्यष् इति परस्मैपदं आत्मनेपदञ्च॥ ६५॥

भ॰ मन्देत्यादि। कपिः सर्व्वतः सर्व्वत्र तामशोकवनिकामाट बभ्राम कीदृशः मन्दायमानगमनः अमन्दं मन्दं भवति मन्दा यमानं तादृशं गमनमस्येति विग्रहः भृशादेश्च्व्यर्थे इति क्यः ङित्त्वान्नं तां कीदृशीं हरितायत्तरुं हरिद्वर्णीभवद्वृक्षां अहरि ताहरिताभवन्ति हरितायन्तस्तादृशास्तरवो यत्र डाज्लोहितादे रिति च्व्यर्थे क्यः पक्षे पत्रञ्च मारुतेन वायुना शकशकायद्भिः शक त्शकदिति शब्दं कुर्व्वद्भिः द्रुमैरुपलक्षितां द्रुमैः करणभूतैराटेति वा शकदित्यनुकरणशब्दात् नैकाचोऽव्यक्तानुकरणाद्दिति डाच् द्वित्वञ्च तलोपोऽतद्दति प्रकृतेर्द्वस्य तलोपः अशकशकाः शकशका भवन्तीति डाज्लोहितादेरिति च्व्यर्थे क्यः पक्षे पत्रञ्च शकदित्यस्य शब्दवाचकस्यापि लक्षणया तद्दति वृक्षे वृत्तिः॥ ६५॥

अस्यन्दन्निन्दुमणयो व्यरुचन् कुमुदाकराः। अलो ठिषत वातेन प्रकीर्णास्तवकोच्चयाः॥ ६६॥

ज॰म॰ अस्येत्यादि। चन्द्रोदयादिन्दुमणयः अस्यन्दन् स्यन्दन्ते स्म तामाटेति योज्यं व्यरुचन् कुमुदाकराः विराजितवन्तः स्तवको च्चयाः गुच्छराशयः वातेन प्रकीर्णाः इतस्ततोविक्षिप्ताः सन्तः अलोठिषत लुठन्तेस्म सर्व्वत्र द्युद्भ्यो लुङीति विभाषा परस्मैपदं द्युतादयश्च कृपूपर्य्यन्ताः॥ ६६॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अस्येत्यादि। इन्दुमणयश्चन्द्रकान्ता अस्यन्दन् स्रवन्ति स्म चन्द्ररश्मिभिरित्यर्थात् यस्यां तामाटेति सम्बन्धोबोध्यः यस्यां कुमुदानामाकरा उत्पत्तिस्थानानि व्यरुचन् विरेजुः यस्यां स्तवकोच्चयाः पुष्पगुच्छसमूहा वातेन प्रकीर्णा इतस्ततोविक्षिप्ताः सन्तः अलोठिषत लुलुठुः स्यन्दूङ्स्रुतौ रुचूङ्दीप्तिप्रकाशयोः लुठुङवादिवत् एषां ङित्वादात्मनेपदे सिद्धे शासुलिद्युत्पुषादेरिति द्युतादित्वात् टौ पेङविधानं तेनैव पं अतएव द्युतादेभ्यामुभयपदित्वं गम्यते परे तु लुङि द्युतादेरिति सूत्रेण विकल्पेनात्मनेपदमाहुः ङे स्यन्देर्नलोपाभावोबाहुल्यात् देवीदासचक्रवर्त्ती तु शासुलिद्युदित्यादौ ग्लुचुनैवेष्टसिद्धौ ग्लुचूपादानेन ङे क्वचित् नलोपाभावोज्ञापितइत्याह केचित्तु क्वचिदात्मनेपदिनोऽपि परस्मैपदित्वं स्यादिति ज्ञापनाय घ्यां रूपं दर्शितमित्याहुः अलोठिषतेति सान्तोऽदनतइत्यतादेशः॥ ६६॥ भ०

सीतान्तिके विवृत्सन्तं वर्त्स्यत्सिद्धिं प्लवङ्गमं। पतत्रिणः प्रशुभामन्द्रमानुवानास्वजिह्लदन्॥ ६७॥

सीतेत्यादि। सीतासमीपे विवृत्सन्तं वर्त्तितुमिच्छन्तं प्लवङ्गमं वर्त्स्यत्सिद्धिं वर्त्स्यन्ती भविष्यन्ती सिद्धिः सीतादर्शनलक्षणा यस्य वृद्भ्यःस्यसनोरिति विभाषातिप् तं पक्षिणः प्रशुभाः प्रशस्ता अजिह्लदन् सुखयन्ति स्म णिचि लुङि चङि रूपं कीदृशाः मन्द्रं गम्भीरं ज०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



मधुरमानुवानाः वाश्यमानाः आङिनुप्रच्छ्योरुपसंख्यानमिति तङ्
एुस्तुताविन्यादादिकस्य परस्मैपदित्वात् ॥ ९७ ॥

भ० सीतेत्यादि। शुभाः अनुकूलाः पतत्त्रिणः पक्षिणः प्लवङ्गमं
हनूमन्तं अजिह्लदन् आनन्दयामासुः ह्लादीङ्मोदने णौ च्यां
रूपं किं कुर्वन्तः मन्द्रं गभीरं आनुवानाः उत्कण्ठापूर्व्वकं शब्दं
कुर्व्वाणाः आङ्पूर्व्वो नौतिरुत्कण्ठायां शब्दे वर्त्तते विपराजी
त्यादिना सं कीदृशं सीतासमीपे विवृत्सन्तं वर्त्तितुमिच्छन्तं
वर्त्स्यन्ती भविष्यन्ती सिद्धिः सीतादर्शनरूपा यस्य तं शुभशब्देन
भाविनीं सिद्धिमनुमाय कपेरानन्द इति ध्वनिः वृद्भ्योनेस्प्यसः
नोर्व्वालसेइति इम्निषेधः अतएव पं तेन वृतादेःस्यसनोरु
भयपदित्वं गम्यते ॥ ९७ ॥

वर्त्तिष्यमाणमात्मानं सीता पत्युरिवान्तिके। उद
पश्यत्तदा तथ्यैर्निमित्तैरिष्टदर्शनैः ॥ ९८ ॥

ज०म० वर्त्तीत्यादि। सीतापि तदा तस्मिन् काले पत्यू रामस्यान्तिके
आत्मानं वर्त्तिष्यमाणमिव उदपश्यत् उत्प्रेचते स्म वृद्भ्यः स्यसनो
रिति विभाषावचनात्तङ् निमित्तैश्चक्षुःस्पन्दनादिभिः तथ्यैरवि
सम्वादिभिः इष्टदर्शनैः इष्टार्थप्रकाशकैः दर्शनमिति कृत्यल्युटो
बहुलमिति कर्त्तरि ल्युट् ॥ ९८ ॥

भ० वर्त्तीत्यादि। तदा तस्मिन् काले सीतापि पत्यूरामस्या
न्तिके वर्त्तिष्यमाणमिवात्मानं निमित्तैश्चक्षुःस्पन्दनादिभिरुद

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



पश्यत उत्प्रेक्षितवती तथ्यैरविसम्वादिभिः दृष्टः प्रियो दृश्यते यैः करणेऽनट् दृष्टं दर्शयन्तीति कर्त्तरि वा दृष्टस्य दर्शनं येभ्य इति वा वृतादेः पे स्यसनोरिम्निषेधः से तु इम् भवत्येव इवार्थोऽत्र शादृश्यं सम्भावना वा॥ ६८॥

निरवर्त्स्यन्न चेद्वार्त्ता सीतायाावितथैव नः। अक ल्स्यदुद्यतिः सर्व्वा हनूमानित्यचिन्तयत्॥ ६९॥

आत्मनेपदाधिकारः॥

निरित्यादि। चेदिति यद्यर्थे यदि सीतायावार्त्ता न निरव र्त्स्यत् निर्वृतिं नायास्यत् तदा वृथैव निष्फलैव नोऽस्माकमुद्यतिः सर्व्वा अयमुद्यमः समुद्रलङ्घनादिकः अकल्प्स्यत् अभविष्यत् इत्ये वं हनूमानचिन्तयत् क्रियातिपत्तौ लृङ् तत्र निरवर्त्स्यदिति वृद्भ्यःस्यसनोरिति विभाषापरस्मैपदं अकल्प्स्यदिति लुटि च कॢ पइति चकारात् स्यसनोरपि भवति विभाषापरस्मैपदं उद्यति रिति यमेः स्त्रियां क्तिन् अनुदात्तेत्यादिना अनुनासिकलोपइ त्यात्मनेपदपरस्मैपदाधिकारः॥ ६९॥ ज०म०

निरित्यादि। चेद्यदि सीतायावार्त्ता न निरवर्त्स्यत् न निष्प त्स्यते तदास्माकं सर्व्वा समुद्रलङ्घनादिरूपा उद्यतिरुद्यमो वित थैव निष्फलैव अकल्प्स्यत् अभविष्यतइति हनूमान् अचिन्तयत् वृतादेः पूर्व्ववदुभयपदं अनिम् च ष्यां रूपं निष्पूर्व्वो वृतिर्निष्पत्त्य भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



र्थः कपूषङ्वुचकल्पने कपकूपोऽकपादाविति कूपादेशः यमेःका वनतनाद्यनिमामिति मलोपः। इतिपरस्मैपराधिकारः॥ ६९॥

वृक्षाद्वृक्षं परिक्रामन्रावणाद्विभ्यतीं भृशं। भ्रत्रो स्त्राणमपश्यन्तीमदृश्यो जनकात्मजां॥ ७०॥

ज०म० इतः प्रभृतिकारकमधिकृत्याह। वृक्षादित्यादि। तां जनका त्मजां सीतां सकपिकुञ्जरोऽपश्यदिति वक्ष्यमाणेन सम्बन्धः वृक्षात् वृक्षं परिक्रामन् गच्छन् ध्रुवमपायेऽपादानमित्यपादानसंज्ञायां पञ्चमी रावणाद्विभ्यतीं भृशं त्रस्यन्तीं अत्यर्थं भ्रत्रोरावणात्त्राम पश्यन्तीं यतोभयन्ततः कुतोरक्षेति भीत्रार्थानामित्यपादान संज्ञा अदृश्यः प्रच्छन्नोभूत्वा ऋदुपधेत्यादिना क्यप्॥ ७०॥

भ० अथ कारकाधिकारः। वृक्षादित्यादि तां जनकात्मजां कपि कुञ्जरोऽपश्यदिति तृतीयश्लोकेनान्वयः किं कुर्व्वन् अदृश्योभूत्वा वृक्षादेकस्मादपरं वृक्षं परिक्रामन् गच्छन् तां कीदृशीं रावणा द्विभ्यतीं त्रस्यन्तीं भ्रत्रोरावणात् त्राणं रक्षणं अपश्यन्तीं यतोऽपा येत्यादिना सर्व्वत्रापादानत्वं अपायः संश्लेषः अपाययोगे यच्छ ब्दोऽवधिवचनः यतोभीर्भयमित्यत्र यच्छब्दोभयहेतुवचनः तेन भयार्थयोगे भयहेतोरपादानत्वं त्राणं रक्षणं तच्च भीतस्य तेना त्रापि यच्छब्दोभयहेतुवचनः तेन त्राणार्थयोगेऽपि भयहेतो रपादानत्वं दृभृजुषेत्यादिना ऋदुङ्त्वात् दृशेः क्यप्॥ ७०॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



तां पराजयमानां स प्रीतेरक्ष्यां दशाननात्।
अन्तर्द्दधानां रक्षोभ्यो मलिनां ध्याममूर्द्धजां॥ ७१॥

ज०म० तामित्यादि। प्रीतेः रावणसम्बन्धिन्याः पराजयमानां विमुखीभवन्तीं पराजेरसोढ इत्यपादानत्वं असोढोऽर्थः प्रीतिः रक्ष्यान्दशाननात् रावणविषये स्वयं निवार्य्यप्रसरां वारणार्थानामीप्सित इत्यपादानत्वं प्रवृत्तिविघातलक्षणया रक्षणक्रियया आत्मसम्बन्धिन्या दशाननस्य व्याप्तुमभिप्रेतत्वात् अन्तर्द्दधानां रक्षोभ्यः मा मां रक्षांसि द्राक्षुरिति ततस्तान्तर्द्धौ येनादर्शनमित्यपादानसंज्ञा अन्तर्द्धिनिमित्तं हि रक्षोभिरात्मनोदर्शनस्यानीप्सितत्वात् मलिनां शरीरेण स्नानमूर्द्धजां मलिनकेशां बद्धवेणीत्वात्॥ ७१॥

भ० तामित्यादि। तां कीदृशीं प्रीतेरावणसम्बन्धिन्या इत्यर्थात् पराजयमानां प्रीतिमसहमानामित्यर्थः यतोऽपायेत्यादौ पराजयोऽसहनं पराजयपदनिर्देशेन परापूर्व्वजेरसहनविषयीभूतोगम्यते पराजेरसोढे इति पाणिनिसूत्रदर्शनात् पराजेः सोढुमशक्यमिति क्रमदीश्वरसूत्रदर्शनाच्च अशक्त्या निवर्त्तनं वा पराजयः रावणप्रीतेः सकाशात् अशक्त्या निवर्त्तमानामित्यर्थः यद्यपि प्रीतिं बुद्ध्या प्राप्य ततोनिवर्त्तत इति बुद्धिकृतापाय एवापादानत्वं घटते तथापि पराजयेति कृतं प्रपञ्चार्थं दशाननात् रक्ष्यां रक्षणीयां त्राणार्थेऽपादानत्वं रक्ष्यां निवारणीयां वा तदा वारणार्थेऽपादानत्वं रक्षोभ्योऽन्तर्दधानां राक्षसकर्तृकद



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



र्शनाभावेच्छया व्यवहितीभवन्तीं अन्तर्द्धावपादानत्वं अन्तर्द्धिर्व्यवधानं तत्र यदीयदर्शनाभावेच्छया तस्यापादानत्वं रक्षांसि विलोक्येति वा ल्यबर्थे पञ्चमी मलिनां शरीरेण ध्याममूर्द्धजां मलिनकेशां वेणीबन्धात् मलशब्दात् फलादित्वात् गोत्रणमेधेव्यादिना इनः॥ ७१॥

रामादधीतसन्देशो वायोर्जातश्च्युतस्मितां। प्रभवन्तीमिवादित्यादपश्यत्कपिकुञ्जरः॥ ७२॥

ज॰म॰ रामादित्यादि। सत्कृत्य अधीतसन्देशो गृहीतसन्देशः कपिकुञ्जरः आख्यातोपयोग इत्यपादानसंज्ञा रामस्याख्यातृत्वात् सावधानतया सन्देशग्रहणात् नियमपूर्व्वकविद्यावत्सन्देशग्रहणं वायोर्जात इति जनिकर्त्तुरित्यपादानसंज्ञा जन्यर्थस्य जन्मनः कर्त्ता हनूमान् तस्य वायुः प्रकृतिः कारणं च्युतस्मितं शोकाक्रान्तत्वात् प्रभवन्तीमिवादित्यात् भुवःप्रभव इत्यनेन भवत्यर्थस्य सीतायाः कर्तृभूतायाः प्रथमत उपलभ्यमानत्वात् अतः प्रभव आदित्यः तस्यास्तेजस्वित्वात्॥ ७२॥

भ॰ रामादित्यादि। च्युतं स्मितं यस्याः शोकाक्रान्तत्वात् तां आदित्यात् प्रभवन्तीमिव उत्पन्नामिव प्रथमत उपलभ्यमानां वा एतेन तेजोऽतिशयो दर्शितः यतोऽपायेत्यादिना यतोभूरित्यपादानत्वं भूरुत्पत्तिः उत्पत्तितुल्यत्वलक्षणया प्रथमोपलम्भस्यान्च बुद्धिसंश्लेषपूर्व्वकस्यापायस्य सत्त्वात् यतोऽपाय इत्यपादानत्वं

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



वा यत्र प्रकाशनं प्रभुवदित्याधारस्थापादानत्वमिति श्रीपतिः भुव श्चोपलम्भस्थानमित्यपादानसंज्ञार्थं क्रमदीश्वरसूत्रं ईदृशीं तां कपिकुञ्जरः कपिश्रेष्ठो हनूमान् अपश्यदित्यन्वयः सकीदृशः रामादधीतसन्देशः गृहीतवाचिकः यत आदानमित्यपादानत्वं वायोर्जातः यतोभूरित्यपादानत्वं ॥ ७२ ॥

रोचमानः कुदृष्टिभ्योरक्षोभ्यः प्रत्तवान् श्रियं।
श्लाघमानः परस्त्रीभ्यस्तत्रागाद्राक्षसाधिपः ॥ ७३ ॥

रोचेत्यादि। तत्र तस्यामशोकवनिकायां राक्षसाधिपो रा जं०म० वणः आगात् आगतः रोचमानः कुदृष्टिभ्यः त्यक्तत्रयीधर्मत्वात् ये कुदृष्टयः कुबुद्धयः तान् स्वविषये स्पृहावतः कारयन्नित्यर्थः रुच्यर्थानां प्रीयमाणइति सम्प्रदानसंज्ञायां चतुर्थी रुचेरभिला षस्य तत्रावस्थानात् कुदृष्टयः प्रीयमाणाः रक्षोभ्यः श्रियं विभू तिं प्रत्तवान् कर्म्मणा यमभिप्रैतीति सम्प्रदानं ददातिक्रियया राक्षसानामभिप्रीयमाणत्वात् श्लाघमानः परस्त्रीभ्यः युष्मद्विष येऽस्माकं श्लाघेति परकलत्राणि ज्ञापयितुमेषयन् श्लाघह्नुङित्या दिना सम्प्रदानत्वं श्लाघया वक्ष्यमानेन ज्ञापयितुमिष्यमाणत्वा त्तासां ॥ ७३ ॥

कुलकं। रोचेत्यादि। तत्र तस्यामशोकवनिकायां राक्षसाधिपो भ० रावणआगात् आगतः कीदृशः कुदृष्टिभ्योरोचमानः ये कुदृष्टयः कुबुद्धयः त्यक्तधर्म्मत्वात् तेभ्योरोचमानस्तेषां प्रीतिमुत्पादयन्

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



यस्मैदित्सेत्यादिना यस्मैरुचिरिति संप्रदानत्वं रुचिरभिलाषोत्पादनं तेन रुच्यर्थस्य कर्त्ता यस्य प्रीतिमुत्पादयति तस्य संप्रदानत्वमिति पर्य्यवसितोऽर्थः रक्षोभ्यः श्रियं प्रत्तवान् कृतसम्यक्सिदानः ग्यचस्तवेति दाञस्तादेशः यस्मैदित्सेति संप्रदानत्वं परस्त्रीभ्यः स्लाघमानः तासां स्लाघया तास्तोषयन् स्वकीयस्लाघां ताञ्ज्ञापयन् वा तास्वात्मस्लाघां कथयन् वा यस्मैस्लाघार्थइति सम्प्रदानत्वं यस्मैस्लाघार्थइति स्लाघार्थेन बोद्धोप्स्यमानस्य सम्प्रदानत्वमित्यर्थः॥ ७३॥

अशप्त निह्नुवानोऽसौ सीतायै स्मरमोहितः। धारयन्निव चैतस्यै वसूनि प्रत्यपद्यत॥ ७४॥

ज०म० अशेत्यादि। सीतायै निह्नुवानः क्रौर्य्यादिकं न मेऽस्तीति सीतां ज्ञापयितुमेषयन्नित्यर्थः तस्यै सीतायै अशप्यत् शपथं सीतां ज्ञापयितुमैषदित्यर्थः किमित्येवमाह स्मरमोहितः अत्र शपथापह्नुतिक्रियया सीतामाज्ञापयितुमिष्यमाणत्वात् पूर्व्ववत्सम्प्रदानसंज्ञा किञ्चास्यै सीतायै स्वामिनीभूतायै वसूनि द्रव्याणि प्रत्यपद्यत अङ्गीकृतवान् धारयन्निव गृहीतवित्तइव अत्र धारेरुत्तमर्णइति सीतायाः कयाचिदुत्तमर्णया तुल्यत्वात्॥ ७४॥

भ० अशप्तेत्यादि। असौ रावणः स्मरेण मोहितः सन् सीतायै अशप्त शपथं मिथ्यानिरसनं तां ज्ञापयितुमिच्छति स्म स्वशपथपूर्व्वकं वा किञ्चित् ज्ञापयितुमिष्टवान् शपथाशीर्गत्यनुकारइति

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



शपथे मं तस्यै निह्नुवानः कपटापह्नवेन सीतां स्वाभिप्रायं ज्ञाप यितुमिच्छन् किञ्च एतस्यै सीतायै वस्तूनि धारयन्निव तत्सम्बन्धीनि धनानि आत्मनि स्थापयन्निव गृहीतवित्तोऽधमर्णइव तस्यै वस्तूनि प्रत्यपद्यत दातुमङ्गीकृतवान् यस्मैदित्सेत्यादिना सर्व्वत्र सम्प्रदानत्वं शपह्नुधात्वर्थयोगे यच्छब्दोज्ञीप्स्यमानवचनः धार्य्यर्थयोगे यच्छब्दउत्तमर्णवचनः ॥ ७४ ॥

तस्यै स्पृहयमाणोऽसौ बह्वप्रियमभाषत। सानुनीतिश्च सीतायै नाक्रुध्यन्नाप्यसूयत ॥ ७५ ॥

तस्यइत्यादि। असौ राक्षसाधिपः स्पृहयमाणः सीतामाप्तुमिच्छन् बहु प्रियमभाषत वच्यमाणं स्पृहेरीप्सितइति स्पृहयतेः सीतायाईप्स्यमानत्वात् सानुनीतिश्च सानुनयः सीतायै नाक्रुध्यत् तां प्रति कोपं न कृतवान् नाप्यसूयत दोषाविष्करणलक्षणामसूयां न कृतवान् क्रुध्यतिसूयत्योर्द्दिवादिकयोरुदात्तेत्त्वङि तोर्लङिप्रयोगे क्रुधद्रुहेत्यादिना सम्प्रदानं ॥ ७५ ॥ ज०म०

तस्यइत्यादि। असौ रावणो बह्वप्रियं वच्यमाणं अभाषत तस्यै सीतायै स्पृहयमाणः स्पृहां कुर्व्वन् यस्मैदित्सेत्यादिना सम्प्रदानत्वं स्पृह्यर्थे यच्छब्दईप्सितवचनः सानुनीतिः सानुनयः सन् सीतायै मा क्रुध्यत् न कोपं कृतवान् नापि असूयत दोषाविष्करणं नापि कृतवान् सूयोऽसूताविति यस्यानेकार्थत्वात् इदं रूपं भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ध्यां कण्ड्वादावस्य धातोर्घीटीयोग्यमित्यस्य क्वचिद्व्यभिचाराद्‌सो ऽभावइति केचित् माण्यसूयतेति केचित् पठन्ति पूर्व्ववत् सम्प्रदानत्वं॥ ७५॥

संक्रुध्यसि मृषा किन्त्वं दिदृक्षुं मां मृगेक्षणे। ईक्षितव्यं परस्त्रीभ्यः स्वधर्म्मो रक्षसामयं॥ ७६॥

ज॰म॰ संक्रित्यादि। किं त्वं शुभाशुभे दिदृक्षुं द्रष्टुमिच्छुं मां हे मृगेक्षणे संक्रुध्यसि क्रुधद्रुहोरुपसृष्टयोःकर्म्मेति कर्म्मसंज्ञा क्रुधेरुपसर्गेण युक्तत्वात् कुतस्ते परिज्ञानं यत्परस्त्रीषु शुभाशुभं निरूपयसि अन्यत्र दुष्टाशयत्वात् अथ कथं मृषा संक्रुध्यामीति चेदाह ईक्षितव्यं परस्त्रीभ्यः का शुभा न शुभेति यदीक्षितव्यमीक्षणीयं तदयं स्वधर्म्मो रक्षसां राधीक्ष्योर्यस्यविप्रश्नइति सम्प्रदानसंज्ञा यतः स्त्रीविषये विविधस्य प्रश्नस्य क्रियमाणत्वात्॥ ७६॥

भ॰ संक्रित्यादि। किं प्रियमभाषतेत्याह हे मृगेक्षणे त्वं शुभा न वेति द्रष्टुमिच्छन्तं मां किं मृषा त्वं संक्रुध्यसि क्रुधद्रुहोरुपसर्गे सम्प्रदानस्य कर्म्मत्वमिति केचित् स्वमते स्वभावादिमौ सोपसर्गौ सकर्म्मकाविति दुर्गवाक्यमादृतं क्रियाव्याप्यस्य कर्म्मत्वात् परस्त्रीदर्शने युक्तएव क्रोधः कथं मृषेति चेदाह परस्त्रीभ्यईक्षितव्यं विविधप्रश्नपूर्व्वकं तद्दर्शनं तासां शुभाशुभनिरूपणं वा कर्त्तव्यमित्ययं रक्षसां स्वधर्मः यस्मैदित्सेत्यादिना ईक्षार्थयोगे सम्प्रदानत्वं

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



द्भिरत्र विविधप्रश्नपूर्व्वकदर्शनार्थः शुभाशुभपर्य्यालोचनार्था वा ॥ ७६ ॥

शृण्वद्भ्यः प्रतिशृण्वन्ति मध्यमा भीरु नोत्तमाः।
गृणद्भ्योऽनुगृणन्त्यन्ये कृतार्था नैव मद्विधाः ॥ ७७ ॥

शृण्वदित्यादि। अनेनात्मना प्रभावं दर्शयति शृण्वद्भ्यः ज०म० प्रार्थयमानेभ्यः स्वामिन्निदं क्रियतामिति मध्यमाः प्रभवः प्रति शृण्वन्ति ओमित्युपगच्छन्ति हे भीरु नोत्तमामादृशाः ते हि स्वातन्त्र्यात्स्वयमेव हितम्प्रतिपद्यन्त इति भावः प्रत्याङ्भ्यांश्रुवः पूर्व्वस्यकर्त्तेति सम्प्रदानसंज्ञा पूर्व्वस्याः प्रार्थनक्रियायाः प्रार्थयितुः कर्तृत्वात् अन्ये प्रभवोऽकृतार्थाः अलब्धलाभाः गृणद्भ्यः अनुग्राह्यस्य भृत्यस्य कस्यचित्स्तुतिं कुर्व्वद्भ्योमन्त्रिभ्यः अनुगृणन्ति तान् प्रोत्साहयन्ति अनुगृणीत अनुगृणीतेति ममानुगतोभवतीति नैव मद्विधा अनुगृणन्ति कृतार्थत्वात् गृशब्दइत्यस्य प्रयोगे अनुप्रतिगृणश्चेति सम्प्रदानसंज्ञा गृणातेः स्तुतिक्रियापेक्षया कर्तृत्वात् ॥ ७७ ॥

शृण्वदित्यादि। इदानीमात्मोत्कर्षः कथ्यते हे भीरु शृण्वद्भ्यः भ० प्रार्थयमानेभ्यः स्वामिन्निदं क्रियतामित्युपदेष्टृभ्योमध्यमाएव प्रभवः प्रतिशृण्वन्ति तैः प्रयुक्ताः सन्तस्त्वया कर्त्तव्यमित्युपगच्छन्ति न तु मद्विधामादृशाउत्तमाः ते हि स्वातन्त्र्यात्स्वयमेव हिताहितं जानन्तीति भावः अन्ये तु अकृतार्थाः प्रभवोगृणद्भ्यः

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



स्तुतिं कुर्व्वन्त एव अनुगृणन्ति तैः प्रयुक्ताधनादिकं दातुमभ्युपगच्छन्ति स्वप्रसिद्धये स्तावकेभ्योयच्छन्तीत्यर्थः नत्वेवं मद्विधाः स्वतः प्रसिद्धत्वेन परस्तुत्यनपेक्षत्वात् यस्मैदित्सेत्यादिना उभयत्र सम्प्रदानत्वं अत्र आप्रतिश्रुप्रत्यनुग्रर्थयोगे यच्छब्दोगम्यपूर्व्वक्रियाकर्त्तृवचनइति तु रामं वदन्तं प्रोत्साहयामासेत्यर्थइत्यनेन सूचितं अत्र हि प्रार्थनमेव पूर्व्वक्रिया गम्या तस्याः कर्त्ता हृष्णच्छब्दः एवं स्तुतिकरणमेव पूर्व्वक्रिया गम्या तस्याः कर्त्ता गृणच्छब्दः॥ ७७॥

इच्छ स्नेहेन दीव्यन्तीं विषयान् भुवनेश्वरं। सम्भोगाय परिक्रीतः कर्त्तास्मि तव नाप्रियं॥ ७८॥

ज॰म॰ इच्छेत्यादि। ईदृशं पूजितं भुवनेश्वरं त्रिलोकविजयिनमिच्छ अङ्गीकुरु आत्मानमुद्दिश्य स्नेहेन प्रेम्णा साधकतमङ्करणमिति करणसंज्ञा दीव्यन्तीं क्रीडन्तीं विषयान् शब्दादिभिरित्यर्थः दिवःकर्म्मचेति करणसंज्ञापवादात्कर्म्मसंज्ञा सम्भोगाय परिक्रीतः त्वद्विषयभोगेन परिक्रीतइत्यर्थः परिक्रयणे सम्प्रदानमिति सम्प्रदानत्वं तव नाप्रियं कर्त्तास्मि न करिष्यामि॥ ७८॥

भ॰ इच्छेत्यादि॥ ॥ भुवनानामीश्वरं मां त्वं स्नेहेन प्रेम्णा इच्छ अङ्गीकुरु साधनहेत्विति करणत्वं किं कुर्व्वती विषयान् दीव्यन्ती विषयैः स्रक्चन्दनादिभिः क्रीडन्ती दिवोधेवेति पक्षे करणे द्वितीया सम्भोगाय सम्भोगेन परिक्रीतानियतकालं त्वया सेवायै

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



क्षीयतोऽहं तवाप्रियं अहं न कर्त्तास्मि न करिष्यामि परिक्रियोपधे वेति पक्षे करणे चतुर्थी ॥ ७८॥

आस्स्व साकं मया सौधे मा धिष्ठा निर्ज्जनं वनं।
मा धिवात्सीर्भुवं शय्यामधिशेष्व स्मरोत्सुका॥ ७९॥

आस्स्वेत्यादि। मया साकं सार्द्धं सौधे धवलगृहे आस्स्व तिष्ठ आसेर्लोटि रूपं आधारोऽधिकरणमित्यधिकरणसंज्ञायां सप्तमी मा धिष्ठा निर्ज्जनं वनं अधिशीङ्स्थासांकर्म्मेत्यधिकरणे कर्म्मसंज्ञा लुङि रूपं मा धिवात्सीः भुवं भूमौ मा शयिष्ठाः माङि लुङि रूपं उपान्वध्याङ्वसइति अधिकरणे कर्म्मसंज्ञा किन्तु शय्यामधिशेष्व शीङोलोटि रूपं अधिशीङिति कर्म्मसंज्ञा स्मरोत्सुका कामार्थिनी॥ ७९॥ ज०म०

आस्स्वेत्यादि। मया साकं सह सौधे धवलगृहे आस्स्व तिष्ठ त्नि लासङ्उपवेशे आमन्त्रणे प्रार्थने वा शी कालभावाधारमित्याश्लेषाधारत्वं निर्ज्जनं वनं त्वं मा धिष्ठाः निर्ज्जने वने न तिष्ठ कर्म्मक्रियेत्यादिना अधिपूर्व्वस्य आधारस्य कर्म्मत्वं भूस्थेति सेर्लुक् शीकः स्तुस्तुभेत्यादिना षत्वं भुवं मा धिवात्सीः भूमौ मा शयिष्ठाः पूर्व्ववदधिवसेराधारस्य कर्म्मत्वं सत्स्यरइति तः स्मरोत्सुका कामासक्ता सती त्वं शय्यां अधिशेष्व पूर्व्ववदधिशीङआधारस्य कर्म्मत्वं॥ ७९॥ भ०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अभिन्यविक्षथास्त्वं मे यथैवाव्याहता मनः। तथाप्यध्यावसन्तं मां मारौत्सीर्हृदयं तथा ॥ ८० ॥

ज०म० अभीत्यादि। यथैव त्वमव्याहता अनिवारिता सती मे मम मनः अभिन्यविक्षथाः अभिनिविष्टासि लुङि रूपं नेर्विश इति तङ् अभिनिविशश्चेत्यधिकरणे मनसः कर्म्मसंज्ञा तथा त्वमपि त्वद्धृदयमध्यावसन्तं मां मा रौत्सीः मा निवारय रुधेर्लुङि रूपं उपान्वध्येति हृदयस्य कर्म्मसंज्ञा ॥ ८० ॥

भ० अभीत्यादि॥ यथैव येनैव प्रकारेण त्वमव्याहता मया अनिवारिता सती मम मनोऽभिन्यविक्षथाः अभिनिविष्टासि थो विश प्रवेशे विपराजीति मं हशषोऽनिमिजुङ इति सक् अभिन्यविक्षथा इति पाठे घौ पूर्व्ववदाधारस्य कर्म्मत्वं तथा तेनैव प्रकारेण तव हृदयमध्यावसन्तं मां त्वमपि मा रौत्सीः न निवारय मां हृदि कुर्व्विति भावः रुधिरौञ्निधञ् आवृतौ टौ पूर्व्ववदधिवसेराधारस्य कर्म्मत्वं ॥ ८० ॥

मावमंस्थानमस्यन्तमकार्य्यज्ञे जगत्पतिं। संदृष्टे मयि काकुत्स्थमधन्यं कामयेत का ॥ ८१ ॥

ज०म० मावेत्यादि। हे अकार्य्यज्ञे अविशेषज्ञे मां जगत्पतिं नमस्यन्तं मावमंस्थाः लुङि रूपं कर्त्तुरीप्सिततममिति कर्म्मसंज्ञा अवमानक्रिया कर्तृसम्बन्धिन्या जगत्पतेराप्तुमिष्टत्वात् सन्दृष्टे मयि

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



काकुत्स्थमधन्यं मन्दभाग्यं का कामयेत का इच्छेत् नैवेत्यर्थः तथा युक्तं चानीप्सितमिति कर्म्मसंज्ञा येनैव प्रकारेण कर्त्तुरीप्सिततमं क्रियया युक्तं तेनैवेप्सितादन्यस्य रामस्य प्रयुज्यमानत्वात्॥ ८१॥

मावेत्यादि। हे अकार्य्यज्ञे ऽविशेषज्ञे नमस्यन्तं प्रणमन्तं जगत्पतिं मां त्वं मावमंस्थाः नावजानीहि जगन्नमस्योऽप्यहं त्वां नमस्यामीति नावज्ञा युक्तेति भावः कर्म्मक्रियेति कर्म्मत्वं कर्म्मक्रियेत्यत्र कर्म्मक्रियाव्याप्यं तच्च चतुर्व्विधं प्राप्यनिर्वर्त्त्यविकार्य्यानीप्सितभेदात् इदन्तु प्राप्यं कर्म्म प्राप्तुमिष्टत्वात् तत्र पूर्व्वमवमननक्रियया जगत्पतिर्व्याप्यते पश्चान्नञ्योगेन वहिरङ्गेन न तन्निवृत्तिः नमः करोतीति नमस्यतेर्वरिवदिति क्यः मयि संदृष्टे सति अधन्यं मन्दभाग्यं काकुत्स्थं रामं का कामयेत् इच्छेत इदमनीप्सितं कर्म्म ॥ ८१॥ भ०

यः पयोदोग्धि पाषाणं स रामाद्भूतिमाप्नुयात्। रावणं गमय प्रीतिं बोधयन्तं हिताहितं॥ ८२॥

यःपेत्यादि। यथा पाषाणात् पयो न सम्भवति तथा रामादपि विभूतिरिति नैराश्यं दर्शयति पयसः पूर्व्वेणैव कर्म्मसंज्ञा पाषाणस्याकथितञ्चेत्यनेन रावणं गमय प्रीतिं भवत्या सह प्रीतिं गच्छन्तं गमय प्रीतिं स्वयमेव हिताहितं भवतीं बुध्यमानां बोधयन्तं गतिबुद्धीत्यादिना कर्म्मसंज्ञा गतिबुध्योरण्यन्तावस्थायां तयोः कर्त्तृत्वात्॥ ८२॥ ज०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० यद्दत्यादि। यः पाषाणं पयोदोग्धि पाषाणेन हेतुना पयोनिः सारयति सएव रामाद्भूतिं प्राप्नुयात् सम्भावनायां खो यथा पाषाणात् पयोन सम्भवति तथा रामादपि भूतिरिति भावः या ञ्चार्थेत्यादिना दुहोद्विकर्म्मकत्वं पाषाणमिति कर्म्महेतोः कर्म्मत्वं पयइति निर्व्वर्त्यं कर्म्म तस्मात् रावणं मां प्रीतिं गमय प्रापय हितञ्चाहितञ्च बोधयन्तं भवतीमित्युक्तश्लोकस्थमिहानुषज्यते योऽञ्जेरिति गतिज्ञानार्थयोः प्रयोज्यकर्त्तुः कर्म्मत्वं॥ ८२॥

प्रीतोऽहं भोजयिष्यामि भवतीं भुवनत्रयं। किं विलापयसेऽत्यर्थं पार्श्वे शायय रावणं॥ ८३॥

ज०म० प्रीतइत्यादि। अहं प्रीतः सन् भुवनत्रयं तत्समुत्थं भोज्यं भोक्तुं योग्यास्भवतीं भोजयिष्यामि प्रत्यवसानार्थत्वात्कर्म्मसंज्ञा प्रत्यव सानमभ्यवहारः अकर्त्रभिप्राये णिचश्चेत्यात्मनेपदं न भवति वि लपन्तं विविधं भाषमाणं किं विलापयसेऽत्यर्थं नाहं त्वामिच्छा मीति ब्रुवाणा अत्र शब्दकर्म्मकत्वात् कर्म्मसंज्ञा कर्त्रभिप्राये णिच श्चेत्यात्मनेपदं तस्मादिदं प्रार्थये पार्श्वे रावणं शायय अत्राकर्म्म कत्वात्कर्म्मसंज्ञा॥ ८३॥

भ० प्रीतइत्यादि। अहं प्रीतः सन् भवतीं त्वां भुवनत्रयं भोजयि ष्यामि भुवनत्रयसम्बन्धिसुखोपभोगोभुवनत्रयभोगेन लक्ष्यते पूर्व्व वद्शनार्थस्य प्रयोज्यकर्त्तः कर्म्मत्वं किं रावणं मां अत्यर्थं विलाप

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



यसे विविधं भाषयसि शब्दार्थत्वात् प्रयोज्यस्य कर्म्मत्वं तस्मादिदं प्रार्थये मां पार्श्वे शायय स्वापय प्रार्थनायां णी शीङोऽकर्म्मकत्वात् प्रयोज्यस्य कर्म्मत्वं ॥ ८३ ॥

आज्ञां कारय रक्षोभिर्मां प्रियाण्युपहारय। कः शक्रेण कृतं नेच्छेदधिमूर्द्धानमञ्जलिं॥ ८४ ॥
इति कारकाधिकारः॥

आज्ञामित्यादि। रक्षांसि त्वदाज्ञां कुर्व्वन्त्येव कारय प्रियाणि च त्वत्सम्बन्धीनि मामुपहरन्तमुपहारय उत्पादय हृक्रोरन्यतरस्यामिति कर्म्मसंज्ञा शक्रेण कृतं विरचितं अञ्जलिमधिमूर्द्धानं अधिगतः प्राप्तो मूर्द्धा येनेति कोनेच्छेत् स्वतन्त्र इति कर्तृसंज्ञा शक्रेण प्रणतोऽहमित्यर्थः प्रयोज्यकर्त्ता नोदाहृतोण्यन्तावस्थाया मुदाहृतत्वात्। इति कारकाधिकारः॥ ८४॥ ज०म०

आज्ञामित्यादि। रक्षोभिराज्ञां कारय तान्याज्ञाकरणाय प्रेरय मां प्रियाणि अभिलषणीयानि उपहारय प्रियाण्युपहर्त्तुमानेतुं मां प्रेरय हृक्रमाभिवादिदृशस्त्वेति प्रयोज्यस्य विकल्पेन कर्म्मत्वं कर्म्मत्वाभावपक्षे साधनहेत्वित्यादिना कर्त्तरि तृतीया को जनः शक्रेण कृतं विरचितं अधिमूर्द्धानमञ्जलिं न इच्छेत् अपि तु सर्व्वएवेच्छति इन्द्रेणाहं प्रणतः त्वामपि मत्प्रियामसौ नमस्करिष्यतीति भावः मूर्द्धानमधिगतः प्राप्तः अधिमूर्द्धा अधिगतो मूर्द्धा येनेति वा अत्र स्वतन्त्रकर्त्तोदाहृतः णौप्रयोज्यकर्त्ता भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



दर्शितएव त्वर्थेत्यादिना उक्तकर्त्तरि प्रथमा कर्त्ता क्रियामुख्यः प्रयोजकस्य। इति कारकाधिकारः॥ ८४॥

वचनं रक्षसां पत्युरनुक्रुद्धा पतिप्रिया। पापानुवसितं सीता रावणं प्राब्रवीद्वचः॥ ८५॥

ज०म० इतः प्रभृति कर्म्मप्रवचनीयमधिकृत्याह। वचनमित्यादि रक्षसां पत्यूरावणस्य वचनमनुलक्षीकृत्य अनुर्लक्षणइति कर्म्मप्रवचनीयसंज्ञायां द्वितीया क्रुद्धा सती सीता पतिप्रिया पतिः प्रियोयस्याइति रावणं प्राब्रवीद्वचोवक्ष्यमाणं पापानुवसितं पापेन संयुक्तं तृतीयार्थइत्यनेन कर्म्मप्रवचनीयसंज्ञायां द्वितीया पापमन्ववसितइति द्वितीयेति योगविभागात्सः सुप्सुपेति वा॥ ८५॥

भ० अथ कर्म्मप्रवचनीयाधिकारः सच स्वमते धिक्समयेत्यादि सूत्रसमूहनिर्द्दिष्टविभक्त्यधिकारः। वचनमित्यादि पतिः प्रियो यस्याः सा सीता रक्षसां पत्यूरावणस्य वचनमनुलक्षीकृत्य तेन हेतुना वा क्रुद्धा सती रावणं वचोवक्ष्यमाणं प्राब्रवीत् रावणं कीदृशं पापानुवसितं पापमनु पापेन सह वसितं सम्बद्धमिति द्वितीयासमासः षिन्गञ्बन्धे अवपूर्व्वात् क्तः वातीवाप्योरिति अवस्यालोपः धिक्समयेत्यादिना अनुयोगे द्वितीया वीप्सेत्यम्भावचिह्नेऽभिस्तेषुभागेपरिप्रती। अनुस्तेषु सहार्थे च हीनेऽनूपौ मताविहेति वीप्सादिसम्बन्धं द्वितीया वक्ति अभ्यादयोद्योतका अनुरत्र चिह्नार्थे सहार्थे च चिह्नं लक्षणं हेतावप्यनुयोगे द्वितीयेति केचित्॥ ८५॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



न भवाननुरामश्चेदुपशूरेषु वा ततः। अपवाह्य च्छलाद्वीरौ किमर्थं मामिहाहरः॥ ८६॥

नेत्यादि। यदि भवान्नानुरामं रामान्न हीनइत्यर्थः हीन इत्यनेन कर्म्मप्रवचनीयसंज्ञा अनुशब्दस्य स्वहीनार्थद्योतकः हीन स्योत्कृष्टापेक्षः उपशूरेषु वा शूरेभ्योवा यद्यधिकोभवान् उपो धिकेचेति चकाराद्धीने उपशब्दस्य कर्म्मप्रवचनीयसंज्ञा यस्मा दधिकमित्यनेन सप्तमी उपशब्दस्याधिकद्योतनात् किमर्थं कनक मृगच्छलेन वीरौ रामलक्ष्मणौ अपवाह्य अन्यतोनीत्वा मामिहा हरः लङ्कामानीतवान्॥ ८६॥ ज०म०

नेत्यादि। किं प्राब्रवीदित्याह। चेद्यदि भवान् अनुरामं रा मात् हीनो नभवेत् यदि वा उपशूरेषु शूरेभ्यो यद्यधिकोभवान् तदा किमर्थं किंनिमित्तं कनकमृगच्छलेन वीरौ रामलक्ष्मणौ अपवाह्य अन्यतोनीत्वा त्वं मामिहाहरः लङ्कायामानीतवानसि समर्थोहि जित्वैवानयति ह्रञोघी पूर्व्ववदनुयोगे द्वितीया अनुर त्र हीनार्थे अधिकेशार्थोपाधिभ्यामिति अधिकार्थोपयोगे सप्तमी ॥ ८६॥ भ०

उपशूरं न ते वृत्तं कथं रात्रिञ्चराधम। यत्त्वंप्रत्य पलोकेभ्योलङ्कायां वसतिर्भयात्॥ ८७॥

उपेत्यादि। हे रात्रिञ्चराधम कथं ते वृत्तं चरितं नोप शूरं शूरेभ्योन हीनं उपोधिकेचेतिचकाराद्धीने उपशब्दस्य कर्म्म ज०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



प्रवचनीयसंज्ञा यद्यस्मात्त्वमत्यधुना भयाल्लङ्कायां जलपर्व्वत दुर्गायां वसतिः वसेरति वसिवर्तिभ्यश्चेत्यौणादिकः अपलोकेभ्यो लोकान् वर्जयित्वा अपपरीवर्जनइति कर्म्मप्रवचनीयसंज्ञायां पञ्चम्यपाङ्परिरिति पञ्चमी ॥ ८७ ॥

भ० उपेत्यादि। हे रात्रिञ्चराधम कथं ते तव वृत्तं चरितं नोप शूरं शूरेभ्यो न हीनं शूरशब्दोऽत्र लक्षणया शूरवृत्तवाची धिक्समयेत्यादिना द्वितीया उपोऽत्र हीनार्थे यत् यस्मात् त्वम त्यधुना भयाद्धेतोरपलोकेभ्योलोकान् वर्ज्जयित्वा लङ्कायां जलपर्व्व तदुर्गायां तव वसतिर्निवासः अन्यारभ्येत्यादिना अपयोगे पञ्चमी अपस्त्यागार्थे आङ्व्याप्तिसीम्नोस्त्यागेऽन्यौ प्रतिदानप्रति धौप्रतीति अन्यौ पर्य्यपौ ॥ ८७ ॥

आरामदर्शनात्पाप विद्योतस्व स्त्रियः प्रति। सद्वृत्ता ननुदुर्वृत्तः परिस्त्रीं जातमन्मथः ॥ ८८ ॥

ज०म० आरेत्यादि। हे पाप आरामदर्शनात् रामदर्शनं यावत् आङ्मर्य्यादावचने पूर्व्ववत्पञ्चमी स्त्रियः प्रति योषितो लक्ष्मी कृत्य विद्योतस्व शोभस्व लक्षणेत्थंभूतेति कर्म्मप्रवचनीयत्वं परि स्त्रीर्जातमन्मथः अत्र वीप्सायां कर्म्मप्रवचनीयत्वं ॥ ८८ ॥

भ० आरामेत्यादि। हे पाप दुराचार आरामदर्शनात् रामद र्शनं यावत् स्त्रियः प्रति लक्ष्मीकृत्य विद्योतस्व शोभस्व पूर्व्ववत् सीमार्थाङ्योगे पञ्चमी धिक्समयेत्यादिना चिह्नार्थप्रतियोगे

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



द्वितीया त्वं कीदृशः सद्वृत्तान् सदाचारान् अनु दुर्व्वृत्तः दुश्चरित्रः सदाचारेषु कथञ्चित् प्रकारं द्रोहादिकमापन्नोदुर्व्वृत्तोभवसीत्यर्थः पूर्व्ववदित्यम्भावार्थानुयोगे द्वितीया इत्यम्भावः कस्यचित्प्रकारस्यापत्तिः स्त्रीःपरि लचीकृत्य स्त्रीषु कथञ्चित्प्रकारं विहारित्वादिकमापन्नोवा जातकामः पूर्व्ववच्चिह्नार्थे इत्थम्भावार्थे वा परियोगे द्वितीया वीप्सायां परिशब्दस्य कर्म्मप्रवचनीयत्वमिति जयमङ्गला न युक्ता वीप्सायां द्वित्वं लोकतः सिद्धमिति टीकायामुक्तत्वात् क्वचित् समुच्चन्तमिदं विशेषणद्वयं दृश्यते॥ ८८॥

**अभिद्योतिष्यते रामोभवन्तमचिरादिह। उद्गूर्णवाणः संग्रामे योनारायणतः प्रति॥ ८९॥**

अभीत्यादि। भवन्तमभि भवन्तं लचीकृत्य अभिरभागइति कर्म्मप्रवचनीयत्वं अचिरादिह लङ्कायां रामोद्योतिष्यते प्रकाशतेजाभविष्यति यउद्गूर्णवाणः उद्यतवाणः सङ्ग्रामे नारायणतः प्रतितेन तुल्यः प्रतिनिधिः प्रति प्रतिनिधीति प्रतिनिधौ कर्म्मप्रवचनीयत्वं प्रतिः प्रतिनिधि प्रतिदाने च यस्मादिति पञ्चमी प्रतियोगे पञ्चम्यास्तसिः मुख्यसदृशः प्रतिनिधिः॥ ८९॥ ज॰म॰

अभीत्यादि। भवन्तमभि लचीकृत्य रामोऽचिरादिह लङ्कायां द्योतिष्यते असह्यतेजाभविष्यतीत्यर्थः पूर्व्ववत् चिह्नार्थाभियोगे द्वितीया योरामः संग्रामे उद्गूर्णवाणउद्यतकाण्डः सन् भ॰



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



नारायणतः प्रति तेन तुल्यः अन्यारभ्येत्यादिना प्रतिनिध्यर्थं प्रतियोगे पञ्चमी प्रसक्तेरिति पञ्चम्यास्तस्॥ ८६ ॥

कुतोऽधियास्यसि क्रूर निहतस्तेन पत्रिभिः। न सूक्तं भवतात्युग्रमतिरामं मदोद्धत॥ ९०॥

ज०म० कुतइत्यादि। हे क्रूर तेन रामेण उद्धर्णवाणेन पत्रिभिः शरैः निहतः सन् कुतोऽधियास्यसि केन प्रकारेण निःसरिष्यसि अधि परीअनर्थकाविति अधेःकर्म्मप्रवचनीयसंज्ञा धात्वर्थव्यतिरेकेणा र्थस्यानभिधानादनर्थकत्वं संज्ञा च गत्युपसर्गसंज्ञावाधनार्था तेन तिङि चोदात्तवतीति निघाताभावोद्रष्टव्यः पञ्चमी च प्रश्नाख्या नयोरित्युपसंख्यानात् भवति किमिति हनिष्यतीति चेत् यतो भवता न सूक्तं प्रशस्तमुक्तं सुः पूजायामिति कर्म्मप्रवचनीयत्वं गतिरनन्तरइति स्वराभावः अत्युग्रमतिरौद्रं अतिरामं राम मधिक्षिप्य काकुत्स्थमधन्यमिति अतिरतिक्रमणेचेति कर्म्मप्रवच नीयत्वं चकारात्पूजायाञ्च तच्चाप्युक्तमिति प्रयोगः हे मदोद्धत ॥ ९०॥

भ० कुतइत्यादि। हे क्रूर तेन रामेण संग्रामे पत्रिभिः शरैर्निहतः सन् कुतस्त्वं अधियास्यसि सर्व्वतोभावेन कस्मात् निःसरिष्यसि हे मदोद्धत अतिरामं राममतिक्रम्य अवक्षिप्य अत्युग्रं अतिरौद्रं भवता न सूक्तं न शोभनमुक्तं रामाक्षेपकं तव पूर्व्ववचनं मिथ्यैवेति भावः धिक्समयेत्यादिना अतियोगे द्वितीया॥ ९०॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



परिशेषं न नामापि स्थापयिष्यति ते विभुः। अपि
स्थाणुं जयेद्रामो भवतोग्रहणं कियत् ॥ ९१ ॥

परीत्यादि। रामोविभुः प्रभुः ते परिशेषं नामापि संज्ञा मपि न स्थापयिष्यति किमु देहं अपिः पदार्थेत्यादिना पदार्थे कर्म्मप्रवचनीयसंज्ञा पदस्य देहस्याप्रयुज्यमानस्यार्थे अपिशब्दोव र्त्तते अपि स्थाणुं जयेद्रामोयमाराध्याधिपत्यं प्राप्तवानसि तमपि स्थाणुं महादेवं जेतुं सम्भाव्यते भवतोग्रहणं कियत् वस्त्वेव न भव ति अत्र संभावनायां कर्म्मप्रवचनीयत्वं सम्भावने लिङ् उप सर्गबाधनत्वात्संज्ञायाउपसर्गात्सुनोतीत्यादिना षत्वं न भवति ॥ ९१ ॥　जं०म०

परीत्यादि। सप्रभूरामस्ते तव परिशेषं नामापि संज्ञामपि न स्थापयिष्यति किं पुनः शरीरं अत्रापिशब्देन देहस्य समुच्चयात् अत्रार्चायां स्वती नातिक्रमेऽतिः पर्य्यधी गतौ। अपिः पदार्थ संभाव्यगर्हानुज्ञासमुच्चये इत्यनेनोपसर्गत्वाभावः तेन व्यस्यग्यनु कारेत्यादिना न समासः धातुपूर्व्वत्वनियमाभावः गीकः स्तुस्तुभे त्यादिना न षत्वञ्च परेस्त्वेतदर्थे कर्म्मप्रवचनीयसंज्ञा हता कुत स्तस्यैवं सामर्थ्यमित्याह रामः स्थाणुमपि जयेत् यमाराध्य त्वमा धिपत्यं प्राप्तवान् तमपि स्थाणुं महादेवं सजयेदिति सम्भाव्यते अपिशब्दः सम्भावनायाद्योतकः तत्रैव स्थीतेन रामेण बलाद्भवतो ग्रहणं कियत् अल्पायाससाध्यमेव पूर्व्ववत्षत्वनिषेधः ॥ ९१ ॥　भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अपिस्तुह्यपिसेधास्मांस्तथ्यमुक्तं नराशन। अपि सिञ्चेः कृशानौ त्वं दर्पं मय्यपि योऽभिकः॥ ९२॥

ज०म० अपीत्यादि। हे नराशन मया तथ्यमुक्तं यन्नामापि न स्थापयिष्यतीति अस्मानपि स्तुहि साधूक्तमिति प्रशंस सेर्ह्यपिच्चेति अपिति ङित्त्वाद्गुणाभावः अपिसेध निगृहाण यथेष्टं तथा क्रियतां मया तु सत्यमेवोक्तमिति भावः अत्रानुपसर्गे कामचारानुज्ञाने कर्म्मप्रवचनीयसंज्ञा किञ्च कृशानावग्नौ दर्पं अपिसिञ्चेः क्षरेस्त्वं अत्र गर्हायां लिङि रूपं योऽयं मय्यपि मद्विषयेऽपि अभिकः कामयिता अनुकाभिकेत्यादिना निपातितः उपसर्गसंज्ञाबाधनार्थ-
भ० त्वात् स्तौतिसेधिसिचां षत्वं न भवति॥ ९२॥

अपीत्यादि। हे नराशन परिशेषं न नामापि स्थापयिष्यतीति तथ्यं सत्यमेव मयोक्तं त्वमस्मान् अपिस्तुहि साधूक्तमिति प्रशंस अपिसेध निगृहाण यथा तवेच्छा तथैव क्रियतां मया तु सत्यमेवोक्तमिति भावः अत्रापिशब्दः समुच्चयेऽनुज्ञायां वा पूर्व्ववत्षत्वनिषेधः ष्टुञ्स्तुतौ षिधूशिवे शास्त्रे द्वौ रूपं त्वं कृशानौ वह्नावेव दर्पं अपिसिञ्चेः मुञ्च अत्रापिशब्दो गर्हायां पूर्व्ववत् षत्वनिषेधः यद्यपि जातुयद्योर्लिङ् सदाचेपे इति कालसामान्ये गर्हायां लिङ् विहिता तथापि पदसंस्कारात् विधौ लिङ् अग्रतः स्यात् अत्र दर्पशब्देन दर्पजनकत्वाद्वेतउच्यते यस्त्वं मय्यपि मद्विषये अभिकः कामुकः॥ ९२॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अधिरामे पराक्रान्तमधिकर्त्ता स ते त्वयं। इत्युक्ता मैथिली तूष्णीमासाञ्चक्रे दशाननं॥ ९३॥

अधीत्यादि। पराक्रान्तस्य शौर्य्यस्य रामईशितेत्यस्मिन्नर्थ अधिरामे पराक्रान्तं नपुंसके भावे क्तः अधिरीश्वरइति स्वस्वामिसम्बन्धे अधेः कर्म्मप्रवचनीयसंज्ञा यस्मादधिकमित्यादिना सप्तमी यस्यैवं सरामस्ते त्वयमधिकर्त्ता करिष्यति अत्र कर्म्मण्येव द्वितीया न कर्म्मप्रवचनीययुक्तइति विभाषाकृञीति या संज्ञा तस्यागत्युपसर्गसंज्ञाबाधनार्थत्वात् संज्ञापक्षे तिङि चोदात्तवतीति निघाताभावोद्रष्टव्यइति एवमुक्ता दशाननं मैथिली तूष्णीमासाञ्चक्रे तूष्णीं स्थितवती। इति कर्म्मप्रवचनीयाधिकारः ॥ ९३॥ ज॰म॰

अधीत्यादि। रामः पराक्रमस्य स्वामीत्यर्थे अधिरामे अधिकेश्वर्य्योपाधिभ्यामिति सप्तमी पराक्रान्तमिति भावे क्तः अधिरामे पराक्रान्तं यथा भवति तथा सरामस्ते तव त्वयं अधिकर्त्ता अधिकं करिष्यति स्वकीयपराक्रमेण त्वयं करिष्यतीत्यर्थः इति दशाननमुक्ता मैथिली तूष्णीं मौनेन आसाञ्चक्रे स्थितवती त्विंजादीत्याम्। इति कर्म्मप्रवचनीयाधिकारः॥ ९३॥ भ॰

ततः खड्गं समुद्यम्य रावणः क्रूरविग्रहः। वैदेहीमन्तरा क्रुद्धः त्वणमूचे विनिश्वसन्॥ ९४॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० इतःप्रभृत्यनभिहितइत्यधिकृत्य विभक्तिविधानमाह। तत इत्यादि ततः सीतावचनादुत्तरकालं रावणः खड्गं समुद्यम्य उत्क्षिप्य कर्म्मणि द्वितीया क्रूरविग्रहः दुःप्रेक्ष्यत्वात् वैदेहीमन्तरा क्रुद्धः वैदेह्यामध्ये कुपितः अन्तरान्तरेण युक्तइति षष्ठ्यपवादाद्द्वितीया अन्तराशब्दो मध्यमाधेयप्रधानमाचष्टे आधेयश्चात्र क्रुद्धोरावणः क्षणमूचे उक्तवान् उक्तिक्रियया क्षणस्य कालस्य साकल्येन सम्बन्धात् कालाध्वनोरिति द्वितीया विनिश्वसन् क्रोधात्॥ ९४॥

भ० अथानभिहिताधिकारः। अथानभिहितइत्यधिकृत्य पाणिनिना या द्वितीयादिविभक्तयोविहितास्ताः कथ्यन्ते स्वमतेऽनभिहिताधिकाराभावेऽपि उक्ते कर्म्मादौ प्रथमा स्यात् पारिशेष्यादनभिहितइत्यवगम्यते। ततइत्यादि सीतावचनानन्तरं रावणः क्रूरविग्रहोरोषात् दुष्प्रेक्ष्यशरीरः सन् खड्गमुद्यम्य उत्क्षिप्य क्षणं विनिश्वसन् ऊचे कीदृशः वैदेहीमन्तरा सीतायामध्ये क्रुद्धः मध्यभागं छेत्तुमुद्यतइत्यर्थः किम्वा रावणपरिजनञ्चेत्यत्राध्याहार्य्यं वैदेहीं रावणः परिजनञ्चान्तरा क्रुद्धः वैदेह्या रावणपरिजनस्य चान्तरामध्ये कुपितः सन्नित्यर्थः खड्गमिति कर्म्मणि द्वितीया अन्तराशब्दोमध्यार्थः तद्योगे धिक्समयेत्यादिना द्वितीया क्षणमिति सदाध्वादिव्याप्ताविति द्वितीया विनिश्वासक्रियया वचनेन वा तस्यातिसंयोगसम्बन्धात्॥ ९४॥

चिरेणानुगुणं प्रोक्ता प्रतिपत्तिपराङ्मुखी। न मासे प्रतिपत्तासे मांश्चेन्मर्त्तासि मैथिलि॥ ९५॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



चिरेत्यादि। हे मैथिलि चिरेणापि कालेनानुगुणमनुकूलं मया प्रोक्तापि सती प्रतिपत्तिपराङ्मुखी उक्तस्यार्थस्यानुष्ठानं प्रतिपत्तिः तस्यां पराङ्मुखी इदानीं यदि त्वं मासे त्रिंशद्दिवसलक्षणे मां न प्रतिपत्तासे नाङ्गीकरिष्यसि तदा मर्त्तासि मरिष्यसि उभयमपि लुटि रूपं तत्र चिरेण प्रोक्तेत्यपवर्गे तृतीया विवक्षितार्थप्रकाशनं फलं तस्य प्राप्तौ तत्क्रियापरिसमाप्तिरपवर्ग इति मां मासेन प्रतिपत्तास इति सप्तमीपञ्चम्यौ कारकमध्य इति सप्तमी कर्म्मकर्त्रोः कारकयोर्मध्यत्वात् मासस्य ॥ ९५ ॥ ज०म०

चिरेणेत्यादि। हे मैथिलि चिरेण कालेन मयानुगुणं अनुकूलं प्रोक्तापि तस्योक्तस्य प्रतिपत्तिरनुमतिस्ततः पराङ्मुखी त्वमधुना चेद्यदि मासे त्रिंशद्दिनपरिमिते काले मां न प्रतिपत्तासे नाङ्गीकरिष्यसि तदा मर्त्तासि मरिष्यसि खड्गप्रहारेणेत्यर्थात् मास इति व्याप्यविवक्षया न द्वितीया सत्यामपि व्याप्तौ निर्धारे अधिकेन क्रियान्तःकालाध्वनोस्य पीचेति सप्तमी आद्यैका वचनक्रिया अपरा च प्रतिपत्तिक्रिया तन्मध्ये मासः कालस्तेन तद्विषयः मासे अनतिक्रान्ते सतीत्यध्याहृत्य पदं साध्विति श्रीपतिः प्रतिपूर्व्वपदोऽम्टङस्य ड्यां रूपं ॥ ९५ ॥ भ०

प्रायुङ्क्त राक्षसीर्भीमा मन्दिराय प्रतिव्रजन्। भयानि दत्त सीतायै सर्व्वायूयं कृते मम ॥ ९६ ॥

प्रायुङ्क्तेत्यादि। रावणो राक्षसीर्भीमा भयानकाः प्रायुङ्क्त समादिष्टवान् लङि रूपं मन्दिराय प्रतिव्रजन् गृहाय प्रतिव्रजन् ज०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



गत्यर्थकर्म्मणीत्यादिना तु चतुर्थी कर्म्मप्रवचनीयाधिकारएव दर्शितत्वात् किमादिशदित्याह सर्व्वायूयं सीतायै भयानि दत्त लोटि रूपं चतुर्थीसम्प्रदाने संपूज्याहृत्य प्रकर्षेण दीयतइति सम्प्रदानं मम कृते मदनुग्रहनिमित्तं॥ ६६॥

भ॰ प्रायुङ्क्तेत्यादि। रावणोमन्दिराय प्रतिव्रजन् गृहं प्रति गच्छन् भीमाभयानकाराक्षसीः प्रायुङ्क्त समादिष्टवान् गत्यर्थमन्यढेइति कर्म्मणिचतुर्थी किमादिशदित्याह सर्व्वायूयं मम कृते मन्निमित्तं मत्कार्य्याय वा सीतायै भयानि दत्त प्रयच्छत संप्रदाने चतुर्थी यद्यपि स्वस्वत्वध्वंसपूर्व्वेत्यादिलक्षणं दानं भयस्य न सम्भवति आरोपणार्थएव ददातिस्तथापि दित्साशब्दस्य विवक्षामात्रवचनत्वात् साधुत्वं कृतेशब्दोनिमित्तार्थोऽव्ययः क्विपितादर्थ्ये वा चतुर्थी॥ ६६॥

गते तस्मिन् समाजग्मुर्भयाय प्रति मैथिलीं। राक्षस्यो रावणप्रीत्यै क्रूरञ्चोचुरलं मुहुः॥ ९७॥

ज॰म॰ गतइत्यादि। तस्मिन् रावणे गते सति राक्षस्यः समाजग्मुः सम्भूय गताः समोगम्यृच्छीत्यादिना आत्मनेपदं न भवति आङा व्यवहितत्वात् मैथिलीं प्रति लक्षीकृत्य भयाय सीतायै भयं दातुं क्रियार्थोपपदस्य कर्म्मणिस्थानिनइति चतुर्थी ददातेः क्रियार्थोपपदस्य स्थानिनः प्रयुज्यमानस्य भयं कर्म्म क्रिया चात्र समागमः

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



तत्रोपपदं क्रियार्थमिति क्रूरस्य भयानकं मुहुः प्रतिच्चणं अलं पर्य्याप्तमूचुः उक्तवत्यः रावणप्रीत्यै रावणस्यैवं प्रीतिः स्यादिति तुमर्थाच्चभाववचनादिति चतुर्थी क्रियायांक्रियार्थायामिति तुमुना समानार्थत्वात् भाववचनास्येत्यनेन विहितस्य क्तिनः क्रियार्थ उपपदं क्रूराभिधानं ॥ ९७॥

गतेइत्यादि। तस्मिन् रावणे गते सति मैथिलीं प्रति लच्चीकृत्य भयाय सीतायै भयं दातुं राच्चस्यः समाजग्मुः आङ्व्यवधानात् समोगमृच्छेति न मं भयायेति नित्यं कर्म्मणि तुमोऽप्रयोगिनइति चतुर्थ्यर्थे परसूत्रं स्वमते तादर्थ्यएव मैथिलीमिति धिक्समयेत्यादिना प्रतियोगे द्वितीया अथ रावणप्रीत्यै क्रूरं कठोरं अलं अत्यर्थं मुहुर्व्वारं वारं ऊचुः क्रूरमिति क्रियाविशेषणे द्वितीया॥ ९७॥ भ॰

रावणाय नमः कुर्य्याः स्यात्सीते स्वस्ति ते ध्रुवं। अन्यथा प्रातराशाय कुर्य्याम त्वामलं वयं॥ ९८॥

रावेत्यादि। हे सीते रावणाय नमः कुर्य्यारावणं नमस्कुरु एवञ्च सति ते तुभ्यं स्वस्ति कल्याणं ध्रुवं स्यात् युष्मच्छब्दस्य चतुर्थ्येकवचनान्तस्य ते आदेशः नमस्कृत्वेति पाठान्तरं तत्र नमस्कृत्वा स्थितायै तुभ्यमित्यध्याहृत्य योज्यं अन्यथा ह्यसमानकर्तृकत्वात् क्वाप्रत्ययोन घटते नमस्कृत्येति पाठान्तरं साचात्प्रभृतिषु नम जं॰मं॰



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



शब्दस्य विकल्पेन गतिसंज्ञा गत्यभावपक्षे नित्यं गतिसमासा भावे ल्यबादेशः नमस्पुरसोर्गत्योरिति विसर्जनीयस्य सकारादे शस्य न सम्भवतीति अन्यथेति यदि न नमस्कुर्य्याः तदा अलमा तराशाय प्रातर्भोजनाय त्वां कुर्य्याम वयमित्यूचुः नित्यंङितइति सलोपः रावणायेत्यादिषु नमःस्वस्तीत्यादिना चतुर्थी ॥ ६८ ॥

भ० रावणायेत्यादि। किमूचुरित्याह हे सीते त्वं रावणाय नमः प्रणामं कुर्य्याः तेनैव ध्रुवं ते तुभ्यं स्वस्ति कुशलं स्यात् शक्तार्थवष डित्यादिना नमःस्वस्तियोगे चतुर्थी नमःशब्दोऽयं यदा वाच कएव तदा तद्योगे चतुर्थीति बोध्यं नारायणं नमस्कृत्येत्यादिषु नमःशब्दोद्योतकः कृञेव प्रणामं वक्ति तेन तद्योगे न चतुर्थी किन्तु द्वितीया नमस्कुर्य्यादिति सकारवत्पाठे हस्तेपाणावित्यादिना साचादादित्वात्पक्षे समासः सेतुकखपफेवेति पक्षे विसर्गस्य स कारः नमस्कृत्येति पाठे स्थितायाइत्यध्याहार्य्यं विष्णुं नत्वा स्तौ तीत्युदाहरणेन एककर्तृकधातुद्वययोगे पूर्व्वकालिकाचोज्ञा पितत्वात् अन्यथा यदि रावणं न प्रणमसि तदा प्रातराशाय प्रा तर्भोजनायालं समर्थां त्वां वयं कुर्य्याम प्रातर्भोच्यामइत्यर्थः अलंशब्दः शक्तार्थस्तेन तद्योगे चतुर्थी ॥ ६८ ॥

तृणाय मत्वा ताः सर्व्वावदन्तीस्त्रिजटावदत्।
आत्मानं हत दुर्व्वृत्ताः स्वमांसैः कुरुताशनं ॥ ६९ ॥

ज०म० तृणेत्यादि। अथानन्तरं राक्षसीर्व्वदन्तीः त्रिजटा रावण स्वसा अवदत् उक्तवती तृणाय मत्वा तृणमिव सङ्गणय्य मन्य

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कर्म्मण्यनादरइति चतुर्थी तत्र कुत्सितग्रहणं कर्त्तव्यमित्युक्तं इह मा भूत् तृणं मत्वेति किमवदत् आत्मानं हत मारयत दुर्वृत्ताः दुराचाराः स्वमांसैः कुरुताशनमिति करणे तृतीया ॥ ६६ ॥

तृणायेत्यादि। इति वदन्तीस्ताः सर्व्वा राक्षसीस्तृणाय मत्वा तृणवन्मत्वा त्रिजटानाम राक्षसी वक्ष्यमाणमवदत् गत्यर्थमन्यढ इति अवज्ञाबोधकत्वणात् कर्म्मणि चतुर्थी राक्षसीशब्दोनावज्ञा बोधकः तेन तच्छब्दात् कर्म्मणि न चतुर्थी किन्तु द्वितीया किमव ददित्याह हे दुर्वृत्तादुराचारायूयं आत्मानं हत मारयत स्वकीयैर्म्मांसैरशनं भोजनं कुरुत यतः सीताभोजनोद्यताः करणे तृतीया वनतनाद्यनिमामिति हन्तेर्नलोपः ॥ ६६ ॥

अद्य सीता मया दृष्टा सूर्य्यं चन्द्रमसा सह। स्वप्ने स्पृशन्ती मध्येन तनुः श्यामा सुलोचना ॥ १०० ॥

किमर्थमेव माहेत्याह अद्येत्यादि। स्वप्ने मया अद्य सीता दृष्टा कर्त्तरि तृतीया सूर्य्यं स्पृशन्ती चन्द्रमसा सह सहयोगे तृतीया सूर्य्याचन्द्रमसाविति रामलक्ष्मणाविति भावः मध्येन तनुः तन्वी इत्थंभूतलक्षणे तृतीया वोतोगुणवचनादिति ङीब्भावपक्षे रूपं श्यामा वर्णेन सुलोचना शोभननेत्रा ॥ १०० ॥

अद्येत्यादि। अद्य स्वप्ने मया सीता दृष्टा कर्त्तरि तृतीया कीदृशी चन्द्रमसा सह सूर्य्यं स्पृशन्ती एतादृशः स्वप्नः साम्राज्यलक्षणमिति केचित् सूर्य्याचन्द्रमसाविव रामलक्ष्मणावित्याशयइति

(margin: भ॰ / ज॰म॰ / भ॰)

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



जयमङ्गला सहवारणेति सहयोगे तृतीया मध्येन तनूः तन्वी भेदके तृतीया श्यामा शीते सुखोष्णसर्व्वाङ्गी ग्रीष्मे या सुखशीतला। तप्तकाञ्चनवर्णाभा सा स्त्री श्यामेति कथ्यते। श्यामवर्णेनेत्यन्ये सुलोचना शोभननेत्रा ॥ १०० ॥

तास्तया तर्ज्जिताः सर्व्वामुखैर्भीमा यथागतं। ययुः सुषुप्सवस्तल्पं भीमैर्वचनकर्म्मभिः ॥ १०१ ॥

ज॰म॰ तादृत्यादि। ताराचस्यस्तया त्रिजटया तर्जिताभर्त्सिताः सुपुप्सवः स्वप्तुमिच्छवस्तल्पं शयनीयं ययुर्गताः यथागतं यतोयतस्तस्मादुत्थायागताः यथासादृश्यइति वीप्सायामव्ययीभावः मुखैर्भीमारौद्राः मुखानां विकृतत्वात् येनाङ्गविकारइति तृतीया भीमैर्व्वचनकर्म्मभिः उपलक्षिताः इत्थंभूते तृतीया ॥ १०१।

भ॰ तादृत्यादि। ताः सर्व्वाराचस्यः तया त्रिजटया तर्ज्जिताभर्त्सिताः सत्यः सुपुप्सवः शयितुमिच्छवस्तल्पं ययुः यथागतं यस्माद्यस्मात् उत्थायागतास्तत्र तत्रैव वीप्सायामव्ययीभावः मुखैर्भीमाः मुखविकारोपलक्षिताः भेदके तृतीया येनाङ्गेनाङ्गिनोविकृतिर्लक्ष्यते तस्मादिति परः भीमैर्व्वचनकर्म्मभिरुपलक्षिताः विशेषणे तृतीया तल्पं शय्याट्टदारेष्वित्यमरः ॥ १०१ ॥

गतासु तासु मैथिल्याः संजानानोऽनिलात्मजः। आयातेन दशास्यस्य संस्थितोऽन्तर्हितश्चिरं ॥ १०२ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



गतेत्यादि ।तासु राक्षसीषु गतासु अनिलात्मजो हनूमान् राम संकथां प्रास्तावीदिति वक्ष्यमाणेन सम्बन्धः मैथिल्या सञ्जानानः इयं सेत्यवगच्छन् संज्ञोन्यतरस्यामिति कर्म्मणि तृतीया सम्प्रति ख्यामिति तङ् दशास्यस्यायातेनागमनेन हेतुना चिरमन्तर्हितो निलीनः स्थितः हेताविति तृतीया ॥ १०२ ॥ ज॰म॰

गतास्वित्यादि। तासु राक्षसीषु गतासु सतीषु अनिलात्मजो हनूमान् रामसङ्कथां प्रास्तावीत् प्रावर्त्तयदिति वक्ष्यमाणश्लोके नान्वयः कीदृशः मैथिल्या संजानानः सैवेयमित्यवगच्छन् संज्ञो स्मृताविति कर्म्मणि तृतीया सम्प्रतेरस्मृताविति मं दशास्यस्या यातेनागमनेन हेतुना अन्तर्हितोविलीनः सन् चिरं संस्थितः हेतौ तृतीया स्वभावक्तेति दशास्यात् कर्त्तरि षष्ठी सम्बन्धविवक्षया वा ॥ १०२ ॥ भ॰

क्षणाद्दद्ध्वोन्मुक्तो वियोगेन क्रतुद्विषः। हेतो र्बोधस्य मैथिल्याः प्रास्तावीद्रामसंकथां ॥ १०३ ॥

क्षणादित्यादि। क्षणाद्धेतोर्व्वृद्धवोन्मुक्तोयथा स्थानान्तरं गतवान् अकर्तृक्षणइति पञ्चमी क्षणस्याकर्तृहेतुत्वात् क्षणेन वन्धितइवेति नोक्तं अप्रयोजकं कर्तृत्वात्तृणस्य उन्मुक्तः क्रतुद्विषो रावणस्य वियोगेन विश्लेषेण विभाषागुणेऽस्त्रियामिति पचे तृतीयोदाहृता न पञ्चमी वियोगस्य गुणपदार्थत्वात् किमिति संकथां प्रास्तावीदित्याह हेतोर्बोधस्य मैथिल्याः एषरामदूतइति मैथि ज॰म॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



स्यादेधोऽवगमः स्यात् षष्ठीहेतुप्रयोगइति बोधशब्दस्य षष्ठी प्रास्तावीदिति स्तुसुधूञ्भ्यः परस्मैपदेष्वितीट् नेटीति हलन्तलक्षणायावृद्धेः प्रतिषेधः नेगन्तलक्षणायाः ॥ १०३ ॥

भ० क्षणादित्यादि। हनूमान् कीदृशः क्रतुद्विषो रावणस्य वियोगेन विश्लेषेण हेतुना उन्मुक्तः स्वच्छन्दः यथा क्षणाद्धेतोर्व्वद्धः सन् उन्मुक्तः स्थानान्तरं गतस्तद्वत् हेतौ पञ्चमी तृतीया च दर्शिता किमर्थं रामसङ्कथां प्रास्तावीदित्याह एषरामदूतइति मैथिल्यायोबोधस्तस्य हेतोस्तदर्थं प्रयोजनमपि हेतुरुच्यते तदुद्देशेन कार्य्योत्पत्तेः व्यादधोऽर्थार्थैककोरिति षष्ठी सुस्तुधेः सेरिम्येदिती म् ब्रजवदेति ञिः ॥ १०३ ॥

तं दृष्ट्वाचिन्तयत्सीता हेतोः कस्यैषरावणः। अवरुह्य तरोराराद्वैति वानरविग्रहः ॥ १०४ ॥

ज०म० तमित्यादि। तं हनूमन्तं रामं स्तुवन्तं दृष्ट्वा सीता अचिन्तयत् कस्य हेतोः रावणोवानरविग्रहः सन् ऐति आयाति आङ्पूर्व्वस्येणोरूपं सर्व्वनाम्नस्तृतीयाचेति षष्ठी किंशब्दस्य सर्व्वनामत्वात् आरात् अन्तिके तरोरिति अन्याराादित्याराच्छब्दयोगे पञ्चमी अवरुह्यावतीर्य्येति अवरोहणापेक्षयेत्यपादाने पञ्चमी अपेक्षायायौगपद्याभावादुपपदविभक्तेः कारकविभक्तिर्व्वलीयसी आराद्योगे न वर्त्तते ॥ १०४ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



तमित्यादि। तं रामं स्तुवन्तं हनूमन्तं दृष्ट्वा सीताचिन्तयत् भ०
किं चिन्तितवतीत्याह कस्य हेतोः किमर्थं रावणोऽयं वानरमूर्त्तिः
सन् अवरुह्य वृक्षान्तरादर्थात् तरोरारात् तदाश्रितवृक्षस्य
समीपे ऐति आगच्छति आङ्पूर्व्वइणगतौ कस्य हेतोरिति व्या
दयोऽर्थैकक्तेः अस्तुसर्व्वादूति षष्ठी तरोरित्यावृत्त्या उभयत्र
सम्बन्धादेकत्रापादाने पञ्चमी अपरत्र अन्यारभ्येत्यादिना इय
मेवोदाहृतं अपादानपञ्चम्याः कारकाधिकारे दर्शितत्वात्तरो
रित्यस्यावरुह्येत्यनेन सम्बन्धोन विवचितः आरादित्यनेनैव सम्ब
न्धइति केचित् उपपदविभक्तेः कारकविभक्तिर्गरीयसीत्यपादान
एव पञ्चमीति केचित्॥ १०४॥

पूर्व्वस्मादन्यवद्भाति भावाद्दाशरथिं स्तुवन्। ऋते
क्रौर्य्यात्समायातोमां विश्वासयितुं नु किं॥ १०५॥

पूर्व्वेत्यादि। पूर्व्वस्माद्रावणादन्यवद्भाति ज्ञायते अन्येन तुल्यं ज०म०
वर्त्ततइति कृत्वा अन्यशब्दयोगे पञ्चमी यतोभावात्स्नेहाद्दाश
रथिं स्तुवन् किन्तु क्रौर्य्यादृते क्रौर्य्यं वर्जयित्वा ऋतेशब्दयोगे पञ्च
मी माम्विश्वासयितुं सम्भावयितुं किमागतइत्यचिन्तयत्॥ १०५॥

पूर्व्वस्मादित्यादि। अयं पूर्व्वस्माद्रावणादन्यइव भाति प्रका भ०
शते अन्यारभ्येति पञ्चमी कुतइत्याह भावादभिप्रायाद्धेतोर्दाश
रथिं स्तुवन् हेतौ पञ्चमी क्रौर्य्यात् ऋते रामविषये क्रूरतां विना
मां विश्वासयितुं किन्तु समायातः नु वितर्के ऋतेयोगे पूर्व्वव

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



त्पञ्चमी भावः स्वभावेऽभिप्राये चेष्टासत्तात्मजन्मसु। क्रिया लीलापदार्थेषु वृद्धुजन्तुविभूतिष्विति विश्वः॥ १०५॥

इतरोरावणादेषराघवानुचरोयदि। सफलानि निमित्तानि प्राक्प्रभातात्ततोमम॥ १०६॥

ज॰म॰ इतइत्यादि। यदि रावणादितरः प्रतियोगी राघवानुचरः राघवार्थकारी इतरयोगे पञ्चमी ततोमम सफलानि स्वप्नलक्षणानि दर्शनादीनि निमित्तानि प्राक् प्रभातात् आदित्योदयात्पूर्व्वस्मिन् काले अन्यस्य हि प्रभातादुत्तरकालं सफलानि उत्तरपदयोगे पञ्चमी॥ १०६॥

भ॰ इतरइत्यादि। एषयदि रावणादितरोऽन्यः राघवानुचरः रामप्रयोजनकारी भवेत् मम प्राक् प्रभातात् सूर्य्योदयात् पूर्व्वकाले यानि शुभस्य निमित्तानि स्वप्नदर्शनादीनि तानि मम सफलानि स्युः इतरशब्दोऽन्यार्थः तद्योगे दिक्शब्दयोगे च पञ्चमी दिक्शब्दाद्दिग्देशकालेस्तात्तस्य लुक्च॥ १०६॥

उत्तराद्दि वसन्रामः समुद्राद्रक्षसां पुरं। अवैलवणतोयस्य स्थितां दक्षिणतः कथं॥ १०७॥

ज॰म॰ उत्तरेत्यादि। रामदूतोऽयमिति न सम्भाव्यते यतः समुद्रादुत्तरा या दिक् तस्यामुत्तराहि वसन् रामः आहिचदूरे

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



उत्तराच्चेति तस्मादाहिप्रत्ययान्तेन उत्तराहिशब्देन योगे समुद्रा दिति पञ्चमी लवणतोयस्य लवणसमुद्रस्य दक्षिणतोदक्षिणस्यां दिशि स्थितां रक्षसां पुरीं लङ्कां कथमवैत् ज्ञातवान् दक्षि णतइति दक्षिणोत्तराभ्यामतसुच् तदन्तेन योगे षष्ठ्यतसर्थप्रत्य येनेति षष्ठी॥ १०७॥

उत्तरेत्यादि। अथ रामदूतोऽयं न सम्भाव्यते यतद्रूतः समु भ० द्रादुत्तरस्यां दिशि वसन् रामो लवणतोयस्य समुद्रस्य दक्षिणस्यां दिशि स्थितां रक्षसां पुरं लङ्कां कथमवैत् ज्ञातवान् दक्षिणोत्त रादाहीति सप्तम्या आहि अन्यारभ्येति दिक्शब्दयोगे पञ्चमी तसुक्रेरिति सप्तम्यास्तस् तद्योगे समार्थेनेत्यादिना षष्ठी॥ १०७॥

दण्डकान्दक्षिणेनाहं सरितोऽद्रीन् वनानि च।
अतिक्रम्याम्बधिञ्चैव पुंसामगममाहृता॥ १०८॥

दण्डेत्यादि। दण्डकानामदूरे या दक्षिणा दिक् तस्यामिति ज०म० एनवन्यतरस्यामिति सप्तम्यन्तादेनप्प्रत्ययः तदन्तेन योगे एन पाद्वितीयेति द्वितीया दक्षिणेन दण्डकानां दक्षिणस्यां दिशि सरितोऽद्रीन्वनानि च अम्बुधिं चातिक्रम्य पुंसामगममगम्यं ग्रह वृदनिश्चिगमस्चेत्यप् अहमाहृता आनीता तत्कथमवैदित्यचि न्तयत्॥ १०८॥

दण्डकानित्यादि। दण्डकाया अदूरे दक्षिणस्यां दिशि स्थि भ० तानि सरितोऽद्रीन् वनानि च अम्बुधिञ्चातिक्रम्य पुंसामगममवि



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज्ञातं यथा स्यात्तथाऽऽहृता पुंसामगम्यं देशं प्रापिता वा न विद्यते गमो ज्ञानं यत्र तत्कथमवेदिति सम्बन्धः वनोऽपीति सप्तम्या एनः तद्योगे धिक्समयेत्यादिना द्वितीया एनोऽपञ्चम्यादिति परस्वरसात् कृत्तद्धितसमासानामभिधानं नियामकमित्युक्तेर दूरार्थमपि बोध्यं दण्डकाशब्दो वनेऽपि स्त्रीलिङ्गः नित्यबहुवचनान्तः पुंलिङ्ग इत्यन्ये तन्मते दण्डकानिति पाठः ॥ १०८ ॥

पृथङ्नभस्वतश्चण्डाद्वैनतेयेन वा विना। गन्तुमुत्सहते नेह कश्चित्किमुत वानरः ॥ १०९ ॥

ज०म० पृथगित्यादि। नभस्वतो वातात् चण्डात् पृथक् वायुं त्यक्त्वा वैनतेयेन वा विना गरुडं वा वर्जयित्वा पृथग्विनेत्यादिना तृतीया पञ्चम्यौ इह लङ्कायां कश्चित् गन्तुं नोत्सहते किमुत वानरः ॥ १०६ ॥

भ० पृथगित्यादि। चण्डान्नभस्वतोवातात् पृथगन्यः वैनतेयेन गरुडेन वान्यः कश्चिदिह गन्तुं न उत्सहते किं पुनर्व्वानरः इत्येवमचिन्तयदिति सम्बन्धः पृथक्शब्दोऽन्यार्थस्तेन तद्योगे विना योगे च अन्यारभ्येत्यादिना पञ्चमी नभस्वन्तं वैनतेयञ्च वर्ज्जयित्वेत्यर्थ इति केचित् किमुतेत्यव्ययं पुनरर्थे ॥ १०६ ॥

इति चिन्तावतीं कृच्छ्रात्समासाद्य कपिद्विपः। मुक्तां स्तोकेन रक्षोभिः प्रोचेऽहं रामकिङ्करः ॥ ११० ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



इतीत्यादि। एवमुक्तेन प्रकारेण चिन्तावतीं कपिद्विपो हनू- ज०म०
मान् कृच्छ्रात्समासाद्य कथमभ्युपगम्य अहं रामकिङ्करः रामप्रे
षणकरइति प्रोचे मुक्तां स्तोकेनाल्पेन रक्षोभिः कर्तृभिः करणे
न च स्तोकाल्पेत्यादिना तृतीयापञ्चम्यौ कृच्छ्रस्तोकयोरसत्ववचन
योः करणत्वात्॥ ११०॥

इतीत्यादि। कपिद्विपः कपिश्रेष्ठो हनूमान् तां सीतां कृच्छ्रात् भ०
चिरकालान्वेषणेन समासाद्य प्राप्य अहं रामस्य किङ्करः परिचा
रकइति प्रोचे वदति स्म कीदृशीं एवमुक्तप्रकारेण चिन्तायुक्तां
रक्षोभिः स्तोकेनाल्पेन मुक्तां त्यक्तां करणे कतिपयस्तोकाल्पकृच्छ्रा
दसत्वइति सूत्रेण विभाषया पञ्चमीमाह परः स्वमते कृच्छ्रादि
ति हेतौ पञ्चमी स्तोकेनेति करणे तृतीया॥ ११०॥

विप्रकृष्टं महेन्द्रस्य न दूरं विन्ध्यपर्व्वतात्। नान
भ्यासे समुद्रस्य तव माल्यवति प्रियः॥ १११॥

यदि त्वं रामकिङ्करः क्वासावित्याह विप्रेत्यादि। माल्यवति ज०म०
पर्व्वते तव प्रियो रामः महेन्द्रस्य पर्व्वतस्य विप्रकृष्टं दूरं विन्ध्य
पर्व्वताच्च न दूरं दूरान्तिकार्थैः षष्ठ्यन्यतरस्यामिति षष्ठीपञ्चम्यौ
महेन्द्रपर्व्वतविन्ध्ययोर्दूरविप्रकृष्टयोस्तु दूरान्तिकार्थेभ्यो द्वितीया
चेति द्वितीया नानभ्यासे न दूरे समुद्रस्य दूरान्तिकार्थैरिति
षष्ठी माल्यवति सप्तम्यधिकरणे चेति सप्तमी चकाराद्दूरान्तिका
र्थेभ्यश्च यस्य च भावेनेत्यनेनानभ्यासइति सप्तमी॥ १११॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



विप्रेत्यादि । यदि त्वं रामकिङ्करस्तदा क्वासावित्यतद्दम्‌च्यते तव प्रियो माल्यवति पर्व्वते वर्त्तते महेन्द्रस्य पर्व्वतविशेषस्य न विप्रकृष्टं न दूरं विन्ध्यनाम्नः पर्व्वतात् न दूरं समुद्रस्य नाभ्यासे न दूरे वारादर्थैरिति विन्ध्यपर्व्वतशब्दात् पचे पञ्चमी तदप्रवृत्तिपचे सम्बन्धे षष्ठ्येव आरादर्थैरिति दूरान्तिकार्थैः दूरान्तिकार्थादसत्त्वेऽमुटाङसिङिसेति परः स्वमते विप्रकृष्टादयोदेशार्थत्वे विवचिताः स्थितिक्रियात्वर्थाल्लभ्यत एव तेनास्त्यध्याहारात् देशाध्वकालभाववाढैरिति पाचिककर्म्मत्वं कर्म्मत्वाभावपचे सप्तमो ॥ १११ ॥

असंप्राप्ते दशग्रीवे प्रविष्टोऽहमिदं वनं । तस्मिन् प्रतिगते द्रष्टुं त्वामुपाक्रंस्यचेतितः ॥ ११२ ॥

ज०म० असमित्यादि । दशवदने असंप्राप्ते अप्रविष्टे अहमचेतितः सन् इदं वनमशोकवनिकाख्यं प्रविष्टइति तस्मिन्प्रतिगते त्वां द्रष्टुमुपाक्रंसि समुत्सहे स्म यस्यचभावेनेति सप्तमी कपेः प्रवेशोपक्रमयोः रावणसंप्राप्तिप्रतिगमनक्रियाभ्यां लच्यमाणत्वात् उपाक्रंसीति उपपराभ्यामित्यनेन वृत्यादिषुसर्गउत्साहे क्रमेस्तङ् उत्तमपुरुषैकवचनं इट् स्नोक्रमोरनात्मनेपदनिमित्तइति सिच् इट् नभवति ॥ ११२ ॥

भ० असमित्यादि । रावणे असंप्राप्ते अनायाते सति अहमचेतितोऽज्ञातः सन्निदं वनं प्रविष्टः प्रवेशस्य गतिविशेषत्वात् गत्यर्थाढेति कर्त्तरि क्तः तस्मिन् प्रतिगते सति त्वां द्रष्टुं साचात्कर्त्तुं अहं

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



उपाक्रंसि उद्यतोऽस्मि प्रोपादारम्भइति मंख्यांघिः उपाक्रंसि उत्सा हं कृतवानस्मीति वार्थः इत्युत्साहतायनइति मं कालभावाधा रमिति उभयत्र भावे सप्तमी ॥ ११२ ॥

तस्मिन् वदति रुष्टोऽपि नाकार्षं देवि विक्रमं। अविनाशाय कार्य्यस्य विचिन्वानः परापरं ॥ ११३ ॥

यद्यादावेव प्रविष्टोऽसि तर्हि किमिति स्वकर्म न दर्शितवानसी ज०म० त्याह। तस्मिन्नित्यादि हे देवि तस्मिन्वदति रुष्टोऽपि विक्रमं नाका र्षं तं तथा वदन्तमनादृत्य विक्रमं नाकार्षमित्यर्थः षष्ठीचानादर इति चकारात्सप्तमी किमर्थं कार्य्यस्य सन्देशकथनादेरविना शाय विचिन्वानः परापरं पौर्व्वापर्य्यं निरूपयन् कर्त्रभिप्रायेतङ् ॥ ११३ ॥

तस्मिन्नित्यादि। हे देवि तस्मिन् रावणे वदति वदन्तं तं भ० अनादृत्य रुष्टोऽप्यहं विक्रमं नाकार्षं न कृतवान् स्वामीश्वराधि पतीत्यादिना अनादरे सप्तमी तस्मिन् वदति सतीति भावे सप्तमीति विद्यासागरः कुतइत्याह यतोऽहं कार्य्यस्य सन्देशकथ नस्य अविनाशाय अविघाताय परापरं विचिन्वानः परं यद्भवि ष्यति विरोधादि अपरञ्च यद्भूतं सन्देशकथनार्थमागमनादि तत्सर्व्वं विचारयन् उत्तरे सति कथं न पूर्व्वस्य वाधइति चिन्त यन् ॥ ११३ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



वानरेषु कपिः स्वामी नरेष्वधिपतेः सखा । जातोरामस्य सुग्रीवस्ततोदूतोऽहमागतः ॥ ११४ ॥

ज०म० कथं वानरस्त्वं तस्य किंकरइत्याह । वानरेत्यादि वानरेषु स्वामी यः कपिः सुग्रीवः स नरेष्वधिपतेरामस्य सखा जातः स्वामी स्वरेत्यादिना षष्ठीसप्तम्योर्विधानात् सप्तम्युदाहृता ततोऽहं दूत आगतः ॥ ११४ ॥

भ० वानरेष्वित्यादि । रामस्यानुचरोवानरः कथमित्याह वानराणां कपिः सुग्रीवो नराणामधिपतेरामस्य सखा जातः ततोऽहं दूत आगतः स्वामीश्वराधिपतीति सप्तमी ॥ ११४ ॥

ईश्वरस्य निशाटानां विलोक्य निखिलां पुरीं । कुशलोऽन्वेषणस्याहमायुक्तोदूतकर्म्मणि ॥ ११५ ॥

ज०म० आगत्य च लङ्कां प्रविश्य दृष्टायातइत्याह । ईश्वेत्यादि निशाटानां राक्षसानामीश्वरस्य दशाननस्य अत्र षष्ठ्युदाहृता पुरीं निखिलां निःशेषां विलोक्य किं तत्र वर्त्ततइति प्राप्तइति वक्ष्यमाणेन सम्बन्धः कुशलोऽन्वेषणस्याहं सीताया अन्वेषणस्य निपुणः आयुक्तोदूतकर्म्मणि दूतकर्म्मणि दूतक्रियायां व्यापृतः आयुक्तकुशलाभ्यामिति षष्ठीसप्तम्यौ ॥ ११५ ॥

भ० ईश्वरस्येत्यादि । निशाटानां राक्षसानां ईश्वरस्य रावणस्य निखिलां समस्तां पुरीं विलोक्य अहं प्राप्तइत्यग्रिमश्लोकेनान्वयः

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कीदृशः अन्वेषणस्य कुशलः सीतान्वेषणनिपुणः दूतकर्म्मणि आयुक्तः तत्परः स्वामीश्वराधिपतीत्यादिना षष्ठीसप्तम्यौ ॥ ११५॥

दर्शनीयतमाः पश्यन् स्त्रीषु दिव्यास्वपि स्त्रियः। प्राप्तो व्यालतमान् व्यस्यन् भुजङ्गेभ्योऽपि राक्षसान्॥ ११६॥

दर्शेत्यादि। तत्र दिव्यास्वपि स्त्रीषु मध्ये दर्शनीयतमाः स्त्रियः पश्यन् यतश्च निर्द्धारणमिति सप्तमी दर्शनीयतमत्वेन गुणेन पृथक्करणात् भुजङ्गेभ्योऽपि व्यालतमान् हिंस्रान् राक्षसान् व्यस्यन् अपक्षिपन् पञ्चमीविभक्तइति पञ्चमी भुजङ्गेभ्यो राक्षसानां विभागात् प्राप्तो देव्याः पादमूलमित्यर्थात्॥११६॥ ज०म०

दर्शेत्यादि। दिव्यास्वपि स्त्रीषु मध्ये दर्शनीयतमाः स्त्रियः पश्यन् भुजङ्गेभ्योऽपि व्यालतमान् अतिहिंस्रान् राक्षसान् व्यस्यन् अवक्षिपन् अहं प्राप्तो देव्याः स्थानमित्यर्थात् गम्यते स्त्रीष्वित्यत्र दर्शनीयतमत्वेन गुणेन समुदायादेकदेशस्य निर्द्धारणात् स्वामीश्वराधिपतीत्यादिना निर्द्धारे सप्तमी भुजङ्गेभ्यइत्यत्र पञ्चमीव्यतिरेके इति सूत्रेण पञ्चमीमाह परः व्यतिरेको हीनाधिकभावइति परः स्वमते निर्द्धारेऽधिकेनेत्यादिना निर्द्धारेपञ्चमी केनचिद्गुणेन समानधर्म्मिभ्यो यत्पृथक्करणं सनिर्द्धारः भुजङ्गराक्षसयोस्तु सधर्म्मित्वं व्यालत्वेन वासवता अपि क्वचित् पञ्चमीत्यनेन निर्द्धारे पञ्चमीमाहुः ॥ ११६ ॥ भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भवत्यामुत्सुकोरामः प्रसितः सङ्गमेन ते। मघासु कृतनिर्व्वापः पितृभ्योमां व्यसर्ज्जयत्॥११७॥

ज०म० किमवस्थोरामइत्याह भवेत्यादि। भवत्यां त्वयि उत्सुकः उन्मनाः रामः तव सङ्गमेन प्रसितः प्रसक्तः प्रसितोत्सुकाभ्यांतृतीया चेतिचकारात्सप्तमो मघाभिर्युक्तः कालः तत्समीपे चन्द्रमसोवर्त्तमानत्वात् नक्षत्रेण युक्तः कालइत्यण् तस्यलुबविशेषइति लुप् तस्मिन्काले पितृभ्यः कृतनिर्व्वापः दत्तदानः मां व्यसर्जयत् नक्षत्रेच लुपीति सप्तमो तत्रापि लुपि युक्तवद्व्यक्तिवचनइति स्त्रीलिङ्ग बहुवचने भवतः व्यसर्जयदिति विसृन्दात्प्रातिपदिकेत्यादिना प्रातिपदिकमात्रे प्रथमा॥११७॥

भ० भवत्यामित्यादि। रामोमां व्यसर्ज्जयत् प्रास्थापयत् कीदृशः सन् भवत्यां त्वयि उत्सुकः उन्मनाः तव सङ्गमेन प्रसितः प्रसक्तः प्रसितोत्सुकाभ्यां तृतीयासप्तम्याविति परः स्वमते विषयविवक्षया सप्तमी करणत्वविवक्षया तृतीया मघासु मघानक्षत्रयुक्तकाले पितृभ्यः कृतनिर्व्वापः कृतदानः काले सप्तमी मघाशब्दस्य तद्युक्तकालवाचित्वं कालवाचिनोनक्षत्रादित्युक्तेरेव गम्यते लोकोपचारात् कालेऽपि स्त्रीलिङ्गत्वं बहुवचनान्तत्वञ्च परे तु मघानक्षत्रेणेन्दुयुक्तेन युक्तः कालइत्यर्थे टण्तन्लुक्च प्रकृतिवल्लिङ्गवचने इति स्त्रीत्वं बहुवचनत्वञ्चाहुः॥११७॥

अयं मैथिल्यभिज्ञानं काकुत्स्थस्याङ्गुरीयकः। भवत्याः स्मरतात्यर्थमर्पितः सादरंमम॥११८॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



सन्देहनिवृत्त्यर्थं चाभिज्ञानं दर्शयन्नाह अयमित्यादि। काकुत्स्थस्यायमङ्गुलीयकोऽभिज्ञानं चिह्नमयमभिज्ञानमिति लिङ्गाधिके प्रातिपदिकमात्रे प्रथमा मैथिलीति सम्बोधनाधिके सम्बोधनेचेति सामन्त्रितं सम्बुद्धिश्चात्रैव द्रष्टव्यं काकुत्स्थस्येति षष्ठीशेष इति षष्ठी भवत्या अत्यर्थं स्मरता मम सादरमर्पितं अधीगर्थेत्यादिना स्मरणार्थे कर्म्मणः शेषविवक्षायां षष्ठी॥ ११८॥ ज॰म॰

अयमित्यादि। सन्देहनिरासार्थमाह हे मैथिलि अयं काकुत्स्थस्य रामस्य अङ्गुलीयकआभरणविशेषोऽभिज्ञानं चिह्नं स्वार्थसम्बुद्ध्युक्तार्थइति लिङ्गार्थे सम्बोधने च प्रथमा काकुत्स्थस्येति सम्बन्धे षष्ठी अत्यर्थं भवतीं स्मरता रामेण सादरं यथा स्यात्तथा मम समर्पितः भवत्या इति समार्थेनेत्यादिकर्म्मणि षष्ठी अन्ये तु कर्म्मणोवा दयादेः स्मृत्यर्थस्य चेत्यादिविशेषसूत्रैः कर्मणि षष्ठी मुक्ता कर्म्मादिविषयेऽप्यविवक्षिते कर्म्मादौ सम्बन्धविवक्षायां षष्ठ्येवेत्यनेनान्यत्रापि षष्ठीं स्वीकुर्व्वन्ति विशेषसूत्रविषयादन्यत्रापि दृष्टत्वात् ममेत्याधारे सम्बन्धविवक्षा अङ्गुलौ भवति तिष्ठतीति ढघेकादिति ईयः तदन्तस्य वाच्यलिङ्गत्वात् अलङ्कारशब्दस्य गम्यमानत्वात् पुंस्त्वमुदाहृतं अङ्गुलीयकमूर्म्मिकेत्यमरेण सामान्यत्वान्नपुंसकं प्रयुक्तं॥ ११८॥ भ॰

**रामस्य दयमानोऽसावध्येति तव लक्ष्मणः। उपस्कुरुते राजेन्द्रावागमस्येह मा त्रसीः॥ ११९॥**



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज॰म॰ रामेत्यादि। असौ लक्ष्मणो रामस्य दयमानो रामं रक्षन् दुःखं मा कार्षीरिति दयतेः कर्म्मणि षष्ठी तवाध्येति त्वां स्मरति अधीगर्थे षष्ठी आश्वासनार्थमाह मा त्रसीः उद्वेगं मा कार्षीः त्रसेरीदित्वान्निष्ठायामिट्प्रतिषेधात् सिचट्ट् भवति यतोराजेन्द्रौ रामलक्ष्मणौ इहागमस्यागमनस्य भावे अप् उपास्कृषातां प्रतियत्नं कृतवन्तौ आगमनस्य निश्चितत्वात् तस्यैव सुग्रीवसख्येन गुणाधानात् तेन कृतः प्रतियत्न इति कर्म्मणि षष्ठी प्रतियत्ने लुङ् तङ् सुट्॥११९॥

भ॰ रामेत्यादि। असौ लक्ष्मणो रामस्य दयमानः शोकापनोदनेन रामं प्रतिपालयन् तव अध्येति त्वां स्मरति पूर्व्ववत्कर्म्मणि षष्ठी आश्वासार्थमाह राजेन्द्रौ क्षत्रियश्रेष्ठौ तौ इहागमस्य उपास्कृषातां आगमनमुपस्कृतवन्तौ अतो मा त्रसीः भयं न कुरु स्कृच नावक्षेपणेत्यादिना प्रतियत्ने सं सम्परिःसुमुपादित्यादिना सुम् सतो गुणान्तराधानं प्रतियत्नः निश्चितत्वात् सतएव गमनस्य सुग्रीवसख्येन गुणान्तरस्योत्कर्षस्याधानात् पूर्व्ववत्कर्म्मणि षष्ठी कृञः प्रतियत्ने कर्म्मणि षष्ठीति परः त्रसीउद्वेगे टी॥११९॥

रावणस्येह रोक्ष्यन्ति कपयो भीमविक्रमाः। धृत्या नाथस्व वैदेहि मन्योरुज्जासयात्मनः॥१२०॥

ज॰म॰ रावेत्यादि। इह लङ्कायां कपयो भीमविक्रमाः असह्यपराक्रमाः रावणस्य रोक्ष्यन्ति सरोगं रावणं करिष्यन्ति भीमविक्रमा

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



इति गुणप्रधानोनिर्द्देशः ततश्च विक्रमेरुजः भावकर्तृकत्वात् रुजा र्थानां भाववचनानामज्वरइति षष्ठी अतोवैदेहि धृत्या नाथस्व आशंसस्व धृतिं लभस्वेत्यर्थः आशिषिनाथइति कर्म्मणि षष्ठी आशि षिनाथइत्युपसंख्यानात्तङ् मन्योरुज्जासयात्मनः मन्युं नाशय जसुहिंसायां ताडने च चौरादिकस्य हिंसार्थत्वात्तेन जासिनि प्रहणेति कर्म्मणि षष्ठी॥ १२०॥

रावणस्येत्यादि। इह लङ्कायां कपयोभीमपराक्रमाः सन्तोरा वणस्य रोक्ष्यन्ति रावणं पीडयिष्यन्ति रुजोभङ्गे ती कर्म्मणि षष्ठी अन्ये तु रुजार्थस्य भावकर्तृत्वे इति सूत्रेण कर्म्मणि षष्ठ्याउदाह रणार्थं कपयस्तत्सम्बन्धिनोभीमाविक्रमास्च इह रावणस्य रोक्ष्य न्तीत्यन्वयं कुर्व्वन्ति हे वैदेहि धृत्या नाथस्व धृतिर्भूयादित्यात्म न्याशिषं कुरु धृतिं लभस्वेति भावः कर्म्मणि षष्ठी आसिषिनाथइति षष्ठ्यर्थं परसूत्रं अपथाशीरित्यादिना सं आत्मनोमन्योरुज्जा सय आत्मनः शोकं नाशय जसकवधे कर्म्मणि षष्ठी जासिनिप्र हननाटिक्राथिपिषांहिंसायामिति षष्ठ्यर्थं परसूत्रं॥ ॥ १२०॥

**राक्षसानां मयि गते रामः प्रणिहनिष्यति। प्राणा नामपणिष्टासौ रावणस्वामिहानयन्॥ १२१॥**

राक्षेत्यादि। मयि गते रामोराक्षसानां प्रणिहनिष्यति राक्ष सान् मारयिष्यति पूर्व्ववत्कर्म्मणि षष्ठी निप्रहणइति सङ्घातविगृ हीतविपर्य्यस्तग्रहणमित्युक्तं नेर्गदेत्यादिना णत्वं किञ्च प्राणाना

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



मपणिष्टायमिति अयं रावणस्त्वामिहानयन् प्राणानपणिष्ट विक्री तवान् व्यवहृञ्पणोःसमर्थयोरिति षष्ठी प्राणानामपणायिष्टेति पाठान्तरं तदयुक्तं स्तुत्यर्थस्य पणेस्तत्र ग्रहणात् गुपूधूपेत्यादिना आयप्रत्ययोन भवति ॥ १२१ ॥

भ० राक्षसानामित्यादि। मयि गते सति रामो राक्षसानां प्रणि हनिष्यति राक्षसान् मारयिष्यति प्राग्वन्नोणइति नेर्णत्वं कर्म्मणि षष्ठी असौ रावणस्त्वामिह लङ्कायामानयन् प्राणानामपणिष्ट प्राणान् विक्रीतवान् व्यवहृञ्पणोर्व्यवहारे इति षष्ठ्यर्थं परसूत्रं तत्र व्यवहारेइति क्रयविक्रयलक्षणे द्यूतक्रियायाञ्चेति व्याख्यातं पणङ्व्यवहृतौस्तुतौ वा रेइत्यनेन कमश्चेतइत्यादिसूत्रविहिता ञिङीयङायाविभाषिताः तेन पक्षे नायप्रत्ययः अपणिष्टेति चिन्त्यमिति विद्याविनोदस्य प्रलपितं व्यवस्थितवाधिकारादाया दयोऽसार्व्वधातुके वा भवन्तीति पक्षे नायप्रत्ययइति विद्यासाग रेणोक्तत्वात् स्वमतं युक्तमेव ॥ १२१ ॥

अदेवीद्बन्धुभोगानां प्रादेवीदात्मसम्पदं। गतश्च त्वत्तवैकस्याः स्मरत्यङ्गोरघूत्तमः ॥ १२२ ॥

ज०म० अदेवीदित्यादि। न केवलं प्राणानपणिष्ट बन्धुभोगानामदेवीत् बन्धुभोगान्विक्रीतवान् दिवस्तदर्थस्येति षष्ठी दिवो व्यवहारार्थ त्वात् प्रादेवीदात्मसम्पदं विक्रीतवान् विभाषोपसर्गइति पक्षे द्वि तीया प्रशब्देन युक्तत्वात् रामानुरागं पुनर्द्दर्शयन्नाह रघूत्तम

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



स्मरति अधीगर्थेति षष्ठी अह्नइति एकस्मिन्नप्यह्नि कृत्वोऽर्थप्रयोगकालेऽधिकरणइति षष्ठी ॥१२२॥

अदेवीदित्यादि। न केवलं प्राणानामपणिष्टासौ रावणो बन्धून् भोगांश्च अदेवीत् क्रीतवान् त्यक्तवानिति यावत् कर्म्मणि षष्ठी आत्मसम्पदमपि प्रादेवीत् विक्रीतवान् कर्म्मणि द्वितीया परे तु व्यवहारे सोपसर्गस्य दिवः कर्म्मणि वा षष्ठी नित्यन्त्वनुपसर्गस्येत्याहुः अथ संक्षिप्य पुनरपि रामानुरागं दर्शयति अह्नः शतकृत्वो दिवसे शतं वारान् रामएकस्यास्तव एकां त्वां स्मरति चकृत्वस् वारेइति शतशब्दात् चकृत्वस् तद्योगे स्वामीश्वराधिपतीत्यादौ सुजर्थैरिति अह्नन्शब्दात्षष्ठी तवेति कर्म्मणि षष्ठी ॥१२२॥ भ०

तवोपशायिका यावद्राक्षस्यश्चेतयन्ति न। प्रतिसंदिश्यतां तावद्भर्त्तुः शार्ङ्गस्य मैथिलि ॥१२३॥

एवं तामाश्वास्य सन्देशन्दापयितुमाह तवेत्यादि। हे मैथिलि तवोपशापिका परिपाट्या शयनं याभीराक्षसीभिः सहेत्यर्थात् पर्य्यायार्हर्णोत्पत्तिषु ण्वुच यावन्न चेतयन्ति न प्रतिबुध्यन्ते तावत्प्रतिसन्दिश्यतां प्रतिसन्देशोदीयतां शार्ङ्गस्य भर्तुः शार्ङ्गं धनुर्धारयतो रामस्य तव शार्ङ्गस्येति यथाक्रमं कर्तृकर्म्मणोः कृतीति षष्ठी ॥१२३॥ ज०म०

तवेत्यादि। हे मैथिलि तवोपशायिका पर्य्यायशयनं याभीराक्षसीभिः सहेत्यर्थात् पर्य्यायप्राप्ता तास्च राक्षस्योयावन्न चेत भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



यन्ति न प्रतिबुध्यन्ते तावत् शार्ङ्गस्य भर्त्तुर्धनुर्धारयतो रामस्य कृत प्रतिसन्दिश्यतां प्रतिसन्देशोदीयतां इत्येवं हनूमान् शेषे इति पूर्व्वेण सम्बन्धः उपपूर्व्वशीङ् पर्य्यायशयनवाचकः अस्यूणकेति ज्ञापकात् भावे णकः क्तोलच्च ढयेक्ततीत्यादिना तवेत्यत्र कर्त्तरि षष्ठी शार्ङ्गस्येत्यत्र कर्म्मणि तव उप समीपे शायिकाः शयानाः राचसः कर्त्तरि णकइति केचित् चित्क्तसंज्ञाने चुर्णोञ्जिः ॥ १२३ ॥

पुरः प्रवेशमाश्चर्य्यं बुद्ध्वा शाखामृगेण सा। चूडामणिमभिज्ञानं ददौ रामस्य सम्मतं ॥ १२४।

ज०म० पुरइत्यादि। शाखामृगेण मर्कटेन पुरोलङ्कायाः दुःप्रवेशायायाः प्रवेशः तमाश्चर्य्यमद्भुतं बुद्ध्वा सा सीता चूडामणिमभिज्ञानं ददौ सर्व्वमुक्तमस्य सम्भाव्यतइति उभयप्राप्तौ कर्म्मणीति षष्ठी प्रवेशइत्युभयप्राप्तौ क्तति लङ्काहनूमतोः कर्म्मकर्तृत्वात् रामस्य संमतं प्रियं मतिबुद्धीत्यादिना वर्त्तमाने निष्ठा नलोकेति षष्ठी प्रतिषिधे प्राप्ते क्तस्य च वर्त्तमानइति षष्ठी ॥ १२४ ॥

भ० पुरइत्यादि। शाखामृगेण वानरेण पुरोलङ्कायाः प्रवेशमाश्चर्य्यं बुद्ध्वा मत्वा सा सीता चूडामणिमभिज्ञानं शिरोरत्नं स्वकीयचिह्नं ददौ रामस्य सम्मतं रामेण मन्यमानं ज्ञायमानं सदा स्मरणात् ज्ञार्थैकार्थेति वर्त्तमाने क्तः तद्योगे कामुकसज्ञार्थं क्तइति कर्त्तरि षष्ठी प्रपूर्व्वविशेर्घञ् तद्योगे ढयेक्ततीति पुरइत्य

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



त्वं कर्म्मणि षष्ठी क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशतइति न्या यात् शाखामृगेणेत्यत्र ढघेक्तीत्यनेन षष्ठीविषयेऽपि साधनहे त्वित्यादिना कर्त्तरि तृतीया इति केचित् वस्तुतस्तु यत्रैकक्तयोगे कर्त्तरि कर्म्मणि च षष्ठ्याविषयः स्यात् तत्र ढघेक्तीत्यादिना कर्म्म णि नित्यं षष्ठी त्वभावक्तेत्यादौ सढइत्यनेन तु कर्त्तरि विभाषया षष्ठी सटेषष्ठी योग्यकर्म्मवत् क्तिप्रयुज्यमानेइत्यर्थः यत्तु कर्तृ कर्म्मप्राप्तौ कर्म्मणएवैकक्तीति षष्ठ्यर्थं क्रमदीश्वरस्य सूत्रं तत्तु प्रायिकं अनात्वङ्क्षिर्व्वेत्यपरे इति तेनैव पश्चादुक्तं शब्दानामनुशा सनमाचार्य्येणाचार्य्यस्येत्याद्युदाहरन्ति आद्याः॥१२४॥

रामस्य शयितं भुक्तं जल्पितं हसितं स्थितं। प्रक्रान्त ञ्च मुङ्ः पृष्ट्वा हनूमन्तं व्यसर्ज्जयत्॥१२५॥

रामेत्यादि। रामस्य अभिज्ञानं दत्वा शयितादिकं मुङः पृष्ट्वा हनूमन्तं व्यसर्जयत् प्रेषितवती तस्य शयितं शयनस्थानं किंभू मौ शेते अन्यत्रेति वा भुक्तं भोजनस्थानं किं गृहे भुङ्क्ते मुनिजनगृहे वेति जल्पितं मन्त्रस्थानं किं रहसि मन्त्रयते प्रकाशे वेति हसितं हसनस्थानं किं शृंगारवस्तुनि हसति वीरवस्तुनि वेति स्थितं निवासस्थानं किं गुहायां तिष्ठत्युत तरुतले वेति प्रक्रान्तं प्रचंक्रम णस्थानं अनुनासिकेत्यादिना दीर्घः किं अङ्गने क्रम्यते अन्यत्र वेति एषां शैव्यगतिप्रत्यवसानार्थलात् क्तोधिकरणेवेति क्तः तस्य प्रयोगे अधिकरणवाचिनश्चेति षष्ठी॥१२५॥

ज॰म॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ॰ रामस्येत्यादि। अभिज्ञानं दत्वा रामस्य शयितादि मुहुर्व्वारं वारं पृष्ट्वा सीता हनूमन्तं व्यसर्ज्जयत् प्रेषितवती शयितं शयनस्थानं भूमिः शय्या वेति भुक्तं भोजनस्थानं स्वगृहं मुनिगृहं वेति जल्पितं मन्त्रणास्थानं रहः प्रकाशितं वा हसितं हास्यस्थानं शृङ्गारवस्तु वीरवस्तु वा स्थितं वासस्थानं तरुतलं गृहादिकं वा प्रक्रान्तं चंक्रमणस्थानं अङ्गणं वनं वा सर्व्वत्र ध्रौव्यगत्यदनार्थादिति आधारे क्तः तद्योगे कामुकसङ्घार्थक्तेइति कर्त्तरि षष्ठी यदि भावे क्तः तदा स्वभावक्तेति षष्ठी सम्बन्धविवक्षया वा ॥ १२५॥

असौ दधदभिज्ञानं चिकीर्षुः कर्म्म दारुणं। गामुकोऽप्यन्तिकं भर्त्तुर्म्मनसाचिन्तयत्क्षणं ॥ १२६ ॥

ज॰म॰ असावित्यादि। असौ हनूमान् दधत् धारयन्नभिज्ञानं चिह्नं कर्तृकर्म्मणोः कृतीति षष्ठ्यां प्राप्तायां नलोकेति लप्रयोगे प्रतिषेधः लइति शानजादयोगृहीताः दारुणमशोकवनिकाभङ्गादिकं कर्म्म चिकीर्षुः कर्तुमिच्छुः उकारप्रश्लेषात् षष्ठ्याः प्रतिषेधः भर्तुः स्वामिनः अन्तिकं समीपं गामुकोऽपि गमनशीलोऽपि उकप्रयोगे प्रतिषेधः मनसा क्षणं चिन्तितवान् वक्ष्यमाणं कर्म्म ॥ १२६ ॥

भ॰ असावित्यादि। असौ हनूमान् अभिज्ञानं चिह्नं दधत् धारयन् दारुणं कर्म्म चिकीर्षुः कर्त्तुमिच्छुः भर्त्तू रामस्य अन्तिकं समीपं गामुकोगमनशीलोऽपि क्षणं मनसाऽचिन्तयत् वक्ष्यमाणमिति योज्यं ढधेकृतीति सूत्रे व्यादिवर्जनात् न कर्म्मणि षष्ठी ॥ १२६॥

CC-0. In Public Domain, Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कृत्वा कर्म्म यथादिष्टं पूर्व्वकार्य्याविरोधि यः। करो त्यभ्यधिकं कृत्यं तमाहुर्दूतमुत्तमं ॥१२७॥

कृत्वेत्यादि। योदूतोयथोद्दिष्टं कर्म्म कार्य्यं कृत्वा अत्र कृत्वेत्यव्य यप्रयोगे प्रतिषेधः ततउत्तरकालं पूर्व्वकर्म्माविरोधि पूर्व्वकृतस्य कार्य्यस्य यदविरोधि तदधिकं करोति तमुत्तमं दूतमाहुर्विदु र्नीतिविदइति शेषः मया च यथोद्दिष्टं सीतान्वेषणं कृतमिति भावः॥१२७॥ ज०म०

कृत्वेत्यादि। यो दूतोयथादिष्टमाज्ञानतिक्रमेण कार्य्यं कृत्वा पूर्व्वकार्य्याविरोधि अधिकं कार्य्यान्तरं करोति तमुत्तमं दूतमा हुर्नीतिविदइति शेषः तस्मात् सीतान्वेषणमादिष्टं कर्म्म कृत्वा अधिकमपि करिष्यामीत्यग्रिमश्लोके वक्ष्यति कृत्वेति व्यवर्ज्जनात् न तद्योगे षष्ठी ॥१२७॥ भ०

वैदेहीं दृष्टवान् कर्म्म कृत्वान्यैरपि दुष्करं। यशो यास्याम्युपादाता वार्त्तामाख्यायकः प्रभोः॥१२८॥

तदेव च दर्शयन्नाह वैदेहीत्यादि। अहमद्य तावद्वैदेहीं दृष्ट वान् निष्ठाप्रयोगे प्रतिषेधः अन्यदपि कार्य्यमतिदुष्करं कृत्वा खल प्रयोगे प्रतिषेधः ततोयशउपादाता आत्मसात्कर्त्ता इदमति दुष्करं तेन कृतमिति तृन्नन्तस्य प्रयोगे प्रतिषेधः वार्त्तामाख्याय ज०म०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कः प्रभोर्वार्त्तामाख्याता स्यातिभविष्यदधिकारात्तुमर्थण्वुलौक्रिया यामिति ण्वुल् अकेनोर्भविष्यदाधर्म्मण्ययोरिति प्रतिषेधः ॥१२८॥

भ० वैदेहीमित्यादि। वैदेहीं दृष्टवानहं अन्यैरतिदुष्करं कर्म्म वक्ष्यमाणं वनभङ्गादि कृत्वा यशउपादाता उपादानशीलः सन् प्रभोः समीपे वार्त्तामाख्यायकः आख्यातुं यास्यामि क्तवतुखल र्थशीलार्थतृणां योगे षष्ठीनिषेधोदर्शितः आख्यायकइति अस्य ण्केत्युकेस्तृन्ण्कौ घेइति विधानादन्यत्रापि ण्कोभवतीति ज्ञापि तं तेनात्र तुमर्थे ण्कोबोध्यः किम्वा तृन्ण्कौ घेइत्यनेनैव ण्कः तत्र कालस्याविशेषात् सर्व्वस्मिन् काले तौ भवतइति प्राप्तं अत्र तु भविष्यत्कालोविवक्षितः आख्यायकः आख्यास्यन्नित्यर्थः क्वचि दपवादविषयेऽप्युत्सर्गोऽपि प्रवर्त्ततइति न्यायात् षष्ठीविषयेऽपि द्वितीया परे तु क्रियार्थार्थाद्भविष्यतीति सूत्रेण ण्कं ण्कस्तुम र्थेप्रायइति सूत्रेण षष्ठीनिषेधश्चाङः प्रायोग्रहणात् क्वचित् षष्ठी मपि॥ १२८ ॥

राक्षसेन्द्रस्य संरक्ष्यं मया लव्यमिदं वनं। इति सं चिन्त्य सदृशं नन्दनस्याभनक् कपिः ॥ १२९ ॥

ज०म० राक्षेत्यादि। इदं वनमशोकवनिकाख्यं राक्षसेन्द्रस्य सं रक्ष्यं रक्षार्हं अर्हेकृत्यः स्त्वहलोर्ण्यत् तन्मया लव्यं लवनीयं कृत्या नां कर्त्तरिवेति षष्ठी तृतीये कर्त्तरि भवतः इत्येवं सञ्चिन्त्य कपि र्नन्दनस्य वनस्य सदृशं तुल्यं तुल्यार्थैरिति पक्षे षष्ठी अभनक्

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भग्नवान् भञ्जेर्लङि स्वान्तलोपइति नलोपे हल्ङ्यादिलोपे जश्त्वे चर्त्वे च रूपं॥१२८॥

राघेत्यादि। इदं वनं राघवेन्द्रस्य संरक्ष्यं सम्यक्रक्षार्हं मया लव्यं छेदनीयं इति सञ्चिन्त्य नन्दनस्य इन्द्रवनस्य सदृशं तद्वनं कपिर्हनूमान् अभनक् भग्नवान् भन्जेर्घ्यां रुधादित्वात् श्नम् लृभावक्तेति ल्ययोगे कर्त्तरि विभाषया षष्ठी समार्थेनेति समार्थेन षष्ठी॥१२८॥ भ०

राघवाभ्यां शिवं इतस्तयोरस्त्विति ब्रुवन्। हितो भनज्मि रामस्य कः किं ब्रूतेऽत्र राक्षसः॥१३०॥

राघेत्यादि। राघवाभ्यां रामलक्ष्मणाभ्यां शिवं भद्रमस्तु तयो र्हनूमान् इतोहितो रामस्य भनज्मीदं वनं एवञ्च क्रियमाणे कोभवतां मध्ये राक्षसः किं ब्रूते इत्येवं ब्रुवन् बभञ्ज पवनात्मजो रिपुवनमिति वक्ष्यमाणेन सम्बन्धः राघवाभ्यां शिवं हितोरामस्येति चतुर्थी चाशिष्येत्यादिना षष्ठीचतुर्थ्यौ। इति विभक्त्यधिकारः॥१३०॥ ज०म०

राघवाभ्यामित्यादि। हे राक्षसा राघवाभ्यां रामलक्ष्मणाभ्यां शिवं भूयादिति शेषः शक्तार्थवषडित्यादिना हितार्थत्वात् शिव शब्दयोगे चतुर्थी तत्र हि शक्तइत्यनेन शक्तार्थानां अलंप्रभु प्रोयपर्य्याप्तसमर्थादीनां ग्रहणं अर्थशब्दः प्रयोजनवाची तेन प्रयोजनार्थानां ग्रहणं हितमित्यनेन हितार्थानां भद्रशोभनशिवा भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



चप्रकारेण द्रुभङ्गध्वनिसंविग्नाः शाखाभङ्गशब्देन सन्त्रस्ताः ओ
विजीभयचलनयोः ओदितश्चेति निष्ठानत्वं नुवत्यचिकुलाः कूज
द्भिः पचिकुलैः व्यस्तमानसाः नुशब्दे तौदादिकस्तस्य ङवङादेशः
॥ १ ॥

भ० द्रुभङ्गेत्यादि। सीतासन्निधिस्थाः चण्डाचर्य्यौराचसीरावणस्य
निवेदनं वक्ष्यमाणं अकार्षुः कृतवत्यः कृञश्ची अनुसिद्धेरित्युच
कीदृश्यः द्रूणां वृचाणां भङ्गशब्दैः संत्रस्ताः विजङ्गोशोभीकम्पे ओ
दित्वात् क्तस्य नः कुवद्भिः शब्दायमानैः पचिणां कुलैः समूहैरा
कुलाव्यस्तचित्ताः कुङशब्देकुलचेत्यादादिकात् शतः कुशब्दे
भौवादिकइति जयमङ्गलायां प्रमादस्तस्यात्मनेपदित्वात् शपो
गुणित्वाच कूजत्यचिकुलाकुलाइति क्वचित् पाठः ॥ १ ॥

यदतासीच्छनैर्भानुर्यत्रावासीन्मितं मरुत्।
यदाप्यानं हिमोस्रेण भनत्त्युपवनं कपिः ॥ २ ॥

ज०भ० यदित्यादि। यद्वनं भानुः शनैर्मन्दमताप्सीत् तपति स्म हलन्त
लचणा वृद्धिः मरुत् मितं स्तोकमवासीत् वाति स्म हिमोस्रेण
शिशिररश्मिना आप्यानं वृद्धिं नीतं प्यायतेर्लोपाव्योर्व्वलीति
यलोपः ओदित्वान्नत्वं तदुपवनं कपिर्भिनत्ति चूर्णयतीति निवेद
नमकार्षुः ॥ २ ॥

ज० यदित्यादि। निवेदनमाह यदुपवनं भानुः शनैर्मन्दंअता
प्सीत् तपति स्म अजवदेति सिः अनिमत्वात् यत्रोपवने वायुर्मित

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



मत्वं अवासीत् वाति स्म यमरमेति इम्सनौ यदुपवनं हिमोस्रेण चन्द्रेण आप्यानं वृद्धं ओप्यायीङ् वृद्धौ कर्त्तरि क्तः य्वोर्लोपइति यलोपः किरणोस्रमयूखांशुगभस्तिघृणिधृष्णयइत्यमरः तदुपवनं कपिर्भनक्ति इति निवेदनमकार्षुरिति पूर्व्वेण सम्बन्धः॥ २॥

ततोऽशीतिसहस्राणि किङ्कराणां समादिशत्।
इन्द्रजित्सूर्विनाशाय मारुतेः क्रोधमूर्च्छितः॥ ३॥

ततइत्यादि। निवेदनानन्तरमिन्द्रजित्सूः रावणः इन्द्रजितं सूते इति सत्सूद्विषेत्यादिनानुपसर्गे क्विप् मारुतेर्हनूमतोविनाशाय अशीतिसहस्राणि समादिशत् समादिष्टवान् किंकराणां किं कुर्व्वन्ति दिवाविभेत्यादिना टच् क्रोधमूर्च्छितः क्रोधोद्धतः मूर्च्छ समुच्छ्राये वर्त्तमानत्वात्॥ ३॥　　ज०म०

ततइत्यादि। ततोऽनन्तरमिन्द्रजित्सूरावणः क्रोधेन मूर्च्छितः संजातमूर्च्छः सन् मारुतेर्हनूमतोविनाशाय किङ्कराणां अशीतिसहस्राणि समादिशत् आज्ञापयत् इन्द्रजितं सूते इति क्विप्॥ ३॥　　भ०

शक्त्यृष्टिपरिघप्रासगदामुद्गरपाणयः। व्यश्नवाना दिशः प्रापुर्वनं दृष्टिविषोपमाः॥ ४॥

शक्तीत्यादि। ते किङ्करावनं प्रापुः प्राप्तवन्तः शक्त्यादयः प्रहरणविशेषाः पाणौ येषामिति प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ　　ज०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भवतः व्यश्नुवानाः दिशोव्याप्नुवन्तः अशूव्याप्तौ स्वादिकः दृष्टि विषोपमाः भुजङ्गवत् दृष्ट्यैव विनाशयन्तइत्यर्थः ॥ ४ ॥

भ० शक्तीत्यादि। शक्त्यादयः पाणौ येषां ते किङ्करावनं प्रापुः दिशोव्यश्नुवानाव्याप्नुवन्तः अशूङ्व्याप्तिसंहत्योः दृष्टिविषैः सर्पविशेषैरुपमायेषां दृष्टिर्दर्शनं विषोपमा विषमिव येषामिति वा ॥ ४ ॥

दध्वान मेघवद्भीममादाय परिघं कपिः। नेदुर्दीप्तायुधास्तेऽपि तडित्वन्तइवाम्बुदाः ॥ ५ ॥

ज०म० दध्वेत्यादि। कपिर्भीमं परिघं भयानकमर्गलमादाय मेघवद्दध्वान ध्वनति स्म तेऽपि किङ्कराः तडित्वन्तइवाम्बुदाः नेदुः नदन्ति स्म किङ्कराणां कृष्णत्वात् मेघैः सादृश्यं आयुधानाञ्च तडितेति ॥ ५ ॥

भ० दध्वानेत्यादि। कपिर्हनूमान् भीमं भयानकं परिघं लौहवन्मुद्गरमादाय गृहीत्वा मेघइव दध्वान ध्वनशब्दे तेऽपि दीप्तप्रहरणाराक्षसास्तडिद्युक्तामेघाइव नेदुः शब्दितवन्तः ॥ ५ ॥

कपिनाम्भोधिधीरेण समगंसत राक्षसाः। वर्षास्वुद्धततोयौघाः समुद्रेणेव सिन्धवः ॥ ६ ॥

ज०म० कपीत्यादि। कपिना अम्भोधिधीरेण क्षोभ्यत्वात् राक्षसाः समगंसत सङ्गताः समोगमीत्यादिना तङ् लुङ् यथा सिन्धवो नद्यः उद्धततोयौघाः उद्रिक्तजलपूराः समुद्रेण सङ्गच्छन्ते ॥ ६ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कपिनेत्यादि। ते राक्षसाः समुद्रवद्धीरेण कपिना समगं भ० सत मिलिताबभूवुः समो गम्यृच्छेति मं मान्तोऽदलतद्व्यतादेशः यथा वर्षास्वद्भुतजलपूराः सिन्धवो नद्यः समुद्रेण सङ्गताभवन्ति ॥६॥

लाङ्गूलमुद्धतं धुन्वन्नुद्वहन् परिघं गुरुं। तस्थौ तोरणमारुह्य पूर्व्वं न प्रजहार सः ॥७॥

॥ एते प्रकीर्णकाः ॥

लाङ्गूलेत्यादि। सहनूमान् लाङ्गूलं पुच्छमुद्धतं उत्क्षिप्तं ज०म० धून्वन् धूञ्कम्पनइति स्वादौ पठितः परिघं गुरुं उद्वहन् तोरणमारुह्य तस्थौ न तु पूर्व्वं प्रजहार प्रहृतवान् शूराणां पश्चात् प्रहारित्वात् ॥७॥

एते प्रकीर्णकाः।

लाङ्गूलेत्यादि। सहनूमान् तोरणं वहिर्द्वारमारुह्य उद्धत भ० मुत्क्षिप्तं लाङ्गूलं धुन्वन् कम्पयन् गुरुं परिघं उद्वहन् धारयन् तस्थौ पूर्व्वं न प्रजहार शूराणां पश्चात्प्रहारित्वात् ॥७॥

एतेप्रकीर्णकाः।

॥ सिचि वृद्ध्यधिकारमाह ॥

अक्षारिषुः शराम्भांसि तस्मिन्रक्षःपयोधराः। न चाक्षालीन्न चात्राजीत्त्रासं कपिमहीधरः ॥८॥



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० इतःपरं सिचि वृद्धिमधिकृत्याह अचेत्यादि। तस्मिन्वने रक्षः पयोधराः रक्षांसि पयोधरा इव शराम्भांसि शरान् अम्भांसीव अचारिषुः चरितवन्तः चरतिरकर्म्मकः चरेत् चुतजवृत्तिरित्यादिप्रयोगेषु दृश्यते इह तु सकर्म्मकोविवक्षितः कपिर्महीधर इव न चाक्षालीत् न चलितवान् इयोरय्यतोहलादेर्लघोरिति विकल्पे प्राप्ते अतोलान्तस्येति सिचि वृद्धिः नाव्राजीत् त्रासं भयञ्च न जगाम महीधरतुल्यत्वात् नेटीति प्रतिषेधस्यातोहलादेर्लघोरिति विकल्पिते वदव्रजेत्यादिना वृद्धिः॥ ८॥

भ० अथ सिचि वृद्ध्यधिकारः स्वमते सिच् सिः। अचेत्यादि। तस्मिन् कपौ रक्षांसि पयोधरा इव शरानम्भांसीव अचारिषुः क्षिप्तवन्तः किन्तु कपिर्महीधर इव न च अक्षालीत् नैव चलितवान् न च त्रासमव्राजीत् प्राप्तवान् चर्ज्जसञ्चलने कलह्मलचाले व्रजगतौ सर्व्वत्र ण्यांसिः व्रजवदेति व्रिः॥ ८॥

अवादीत्तिष्ठतेत्युच्चैः प्रादेवीत्परिघं कपिः। तथा यथा रणे प्राणान् बहूनामग्रहीद्द्विषां॥ ९॥

ज०म० अवेत्यादि। ततउत्तरकालं कपिस्तिष्ठत मा पलायध्वमिति उच्चैस्तानवादीत् पूर्व्ववद्वृद्धिः तथा तेन प्रकारेण परिघं परिघेण प्रादेवीत् विजिगीषते स्म दिवःकर्म्मचेति परिघस्य कर्म्मसंज्ञा दिवेर्नेटीति वृद्धिप्रतिषेधः यथा बहूनां द्विषां शत्रूणां प्राणान्नयग्रहीत् निगृहीतवान् अतोहलादेरिति विकल्पे प्राप्ते ह्म्यन्तक्षणश्वसइति प्रतिषेधः॥ ९॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अवादीदित्यादि। अत: परं यूयं तिष्ठत मा पलायध्वमि भ०
त्युच्चैर्महता ध्वनिना कपिरवादीत् उक्तवान् पूर्व्ववद्वृद्धि: परिघेण
तथा तेन प्रकारेण प्रादेवीत् क्रीडति स्म जेतुमैच्छद्वा दिव्युजिगी
षेच्छापणिद्युतौ क्रीडागत्यो: टीणुर्घूङ्इति णु: दिवोर्धेवेति करणे
द्वितीया यथा रणे वह्नां शत्रूणां प्राणान् अग्रहीत् अपहृतवान्
ह्मादे:सेमइति हान्तवर्ज्जनान्न व्रि: ॥ ६ ॥

व्रणैरवमिषू रक्तं देहै: प्रौर्णाविषुर्भुवं। दिश: प्रौर्ण
विषुस्त्वान्ये यातुधानाभवद्भिय: ॥ १० ॥

व्रणैरित्यादि। यातुधानाराक्षसाव्रणै: प्रहारमार्गै: रक्तं शो ज०म०
णितमवमिषु: वमन्ति स्म ह्यन्तेति वृद्धिप्रतिषेध: देहैर्भुवं प्रौर्णा
विषु: छादितवन्त: अन्ये यातुधाना:भवद्भिय:भवन्तीभीर्येषामिति
भयात्पलायमाना: दिश: प्रौर्णविषु: छादितवन्त: ऊर्णोतेर्विभा
षेति विकल्प: ऊर्णोर्विभाषोर्णोरित्यङित्त्वपक्षे द्रष्टव्य: ङित्त्वे गुण
वृद्धिप्रतिषेधात् ॥ १० ॥

व्रणैरित्यादि। यातुधानाव्रणै: प्रहारमार्गैरक्तं अवमिषु: भ०
वमन्ति स्म पूर्व्ववन्मान्तवर्ज्जनान्न व्रि: देहैर्भुवं प्रौर्णाविषु: आच्छा
दितवन्त: भवन्ती विद्यमाना भीर्भयं येषां तेऽन्ये यातुधानादिश:
प्रौर्णविषु: पलायन्ते स्मेत्यर्थ: ऊर्णुञ्आच्छादने णूवव्रिध्यामिति
वृद्धिरावादेशस्य ॥ १० ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अक्राणिषुश्च्युतोत्साहा भिन्नदेहाः प्रियासवः। कपे रत्रासिषुर्नादान्मृगाः सिंहध्वनेरिव॥ ११॥

॥ इति सिचि वृद्ध्यधिकारः॥

ज०म० अरेत्यदि। च्युतोत्साहाः निरुत्साहाः अराविषुः स्वनाः स्म इति शब्दितवन्तः यतः प्रियासवः प्रियप्राणाः कपेः सम्बन्धिनो नादादत्रासिषुः त्रस्ताः उभयत्रापि नेटीति प्रतिषिद्धोऽतो हला देरिति विकल्पः। इति सिचि वृद्ध्यधिकारः॥ ११॥

भ० अक्रेत्यादि। प्रिया असवः प्राणा येषां ते यातुधाना भिन्नदेहा विदीर्णशरीराभूत्वा निरुत्साहा निस्पृहाः सन्तः अक्राणिषुः स्वनाः स्म इति शब्दितवन्तः कणशब्दे हसादेःसेमदिति पचे व्रिः कपे र्नादात् अत्रासिषुः त्रस्ताः पूर्ववत्पचे व्रिः यथा सिंहस्य ध्वनेर्मृगा स्त्रस्यन्ति। इति सिचि वृद्ध्यधिकारः॥ ११॥

मायानामीश्वरास्तेऽपि शस्त्रहस्तारथैः कपिं। प्रत्या ववृतिरे हन्तुं हन्तव्यामारुतेः पुनः॥ १२॥

ज०म० इतदट्प्रतिषेधमधिकृत्याह मायेत्यादि। अथानन्तरं राक्षसाये दिशोगताः ते कपिं हन्तुं पुनः प्रत्यावव्रतिरे प्रति निवृत्ताः मायानामीश्वराः प्रभवः स्येशेति वरच् नेड्वशिकृतीति नेट् आर्द्धधातुकेत्यादिना प्राप्तत्वात् रथैस्तत्र गताः सन्तः शस्त्र हस्ताः शस्त्राणि हस्तेषु येषामिति हनिकुशित्यादिना रमेरीणा

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



दिकः क्यन् रथाः अमिचमीत्यादिना असेरौणादिस्तन् इसिन्ह स्वहेत्यादिना इसेस्तन् तयोस्तितुत्रेत्यादिना इट्प्रतिषेधः हन्त व्या मारुतेरिति हनूमतोबधार्हः कृत्यानां कर्त्तरिवेति षष्ठी एका च इत्यादिना इट्प्रतिषेधः हन्तेर्नमान्तेष्वनिट्त्वात् ॥ १२ ॥

इतइट्प्रतिषेधाधिकारः मायानामित्यादि। अथानन्तरं भ० ये दिव्याः प्रार्णविषुः ते कपिं हन्तुं रथैः पुनः प्रत्यावृत्तिरे प्रत्या गताः प्रतिनिवृत्ता हनलौगतौबधे वमोरचोमनौदितइति औदि दर्जनादनिम् कीदृशास्ते मायानामीश्वराः प्रभवः याथायभास कसइति वरः इवचतेरिति नेम् अस्त्रं हस्ते येषां ते तथा अस्यते हन्यतेऽनेनेति अस्त्रं असबधे चासुषिति चः पूर्व्ववन्नेम् मारुतेर्हनू मतोहन्तव्याः हन्तुं शक्याः त्व्यभावेति पचे कर्त्तरि षष्ठी ॥ १२ ॥

तांश्चेतव्यान् चितौ श्रित्वा वानरस्तोरणं युतान्।
जघानाधूय परिघं विजिघृचून् समागतान् ॥ १३ ॥

तांश्चेत्यादि। समुदिताएकस्यामेव वेलायां मया हन्तव्या ज०म० इति वानरस्तोरणमाश्रितवान् सतोरणं श्रित्वा तान् राक्षसान् विजिघृचून् विगृहीतुमिच्छून् युतान् समुदितान् समागतान् ढौकि तान् चितौ पृथिव्यां चेतव्यान् पुञ्जीकर्त्तव्यान् जघान हतवान् परि घमाधूय परिभ्राम्य तत्र चेतव्यानिति एकाचइतीट्प्रतिषेधः चितावित्ति क्तिच्क्तौचसंज्ञायामिति क्तिच् तितुत्रेत्यादिना इट् प्रतिषेधः श्रित्वा युतानिति श्युकः कितीट्प्रतिषेधः विजिघृचूनिति

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



सनिग्रहगुहोश्चेति तत्र रुदविदेति सनः कित्त्वं ग्रहिज्येति संप्रसारणं ठत्वकत्वषत्वानि ॥ १३ ॥

भ० तामित्यादि। तोरणं श्रित्वा परिघमवधूय परिभ्राम्य वानरस्तान् राक्षसान् जघान कीदृशान् चितौ चेतव्यान् पुञ्जीकर्त्तव्यान् युतान् एकीभूतान् विजिघृक्षून् विग्रहं कर्त्तुमिच्छून् समागतान् मिलितान् चिज्ञस्त्वव्यः नेमेकाजादित्यादिना इमनिषेधः वृदुश्रिञ्जूर्णोरिति श्रियुभ्यां नेम् नेमुगुहग्रहदूति ग्रहेः सनि नेम् गमेरोदित्वान्नेम् ॥ १३ ॥

संजुघुक्षव आयूंषि ततः प्रतिरुरुक्षवः। रावणान्तिकमाजग्मुर्हतशेषा निशाचराः ॥ १४ ॥

ज०म० संजित्यादि। ततउत्तरकालं ये हतशेषानिशाचराः ते संजुघुक्षव आयूंषि जीवितानि गोहितुमिच्छवः गुहेः पूर्ववत्प्रतिषेधः रावणान्तिकमाजग्मुः आगताः प्रतिरुरुक्षवः वक्ष्यमाणमर्थं कथयितुमिच्छवः अत्रापि पूर्व्ववत्प्रतिषेधः तत्र चकारेणोगन्तानां सनि समुच्चितत्वात् ॥ १४ ॥

भ० समित्यादि। ततोऽनन्तरं हतशेषानिशाचरारावणस्य समीपमासेदुः समाजग्मुः कीदृशाः आयूंषि जीवितानि गोपायितुमिच्छवः गुहूञ्संवृतौ सन् नेमुगुहग्रहदूति नेम् प्रतिरुरुक्षवः वक्ष्यमाणं कथयितुमिच्छवः रुत्लध्वनौ पूर्व्ववन्नेम् ॥ १४ ॥

एकेन बहवः शूराः साविष्काराः प्रमत्तवत्। वैमुख्यञ्चक्रमेत्युच्चैरूचुर्दशमुखान्तिके ॥ १५ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



एकेनेत्यादि। वयं वहवः शूराः साविष्काराः साहंकाराश्चपि मल्लः एकेनापि कपिना हेतुभूतेन वैमुख्यं चक्रम पराङ्मुखत्वमनुष्ठितवन्तः प्रमत्तवत् मद्यपानमत्ताइव एवञ्च चित्तव्याक्षेपादुत्तमपुरुषे लिटि कृते कृसृद्रुत्यादिना इट्प्रतिषेधोनियमितइति एवं दशमुखान्तिके उचेरुचुः॥ १५॥ ज॰म॰

एकेनेत्यादि। एकेन कपिना हेतुना वहवोऽपि समर्था अपि प्रमत्ताइव साहङ्काराअपि वैमुख्यं विमुखतां चक्रम विमुखाभवामः स्मेत्यर्थात् इति ते हतशेषानिशाचराः रावणस्य समीपे ऊचुः नेमसुमिति नेम् परमते अस्मदि वाच्ये चित्तविक्षेपार्थे टी तदर्थसूचनाय प्रमत्तवदित्युक्तं मद्यपानां हि चित्तविक्षेपः सम्भवत्येव स्वमते सर्व्वत्र टी दुर्निवारा॥ १५॥ भ॰

मांसोपभोगसंशूनानुद्विग्नांस्तानवेत्य सः। उद्वृत्तनयनोमित्रान्मन्त्रिणः स्वान् व्यसर्ज्जयत्॥ १६॥

मांसेत्यादि। सदशमुखस्तानुद्विग्नान् भीतानवेत्य ज्ञात्वा स्वानात्मीयान् मन्त्रिणोव्यसर्जयत् प्राहिणोत् कीदृशांस्तान् मांसोपभोगसंशूनान् मांसोपभोगेन स्थूलवर्ष्मणः उभयत्रापि श्वीदितो निष्ठायामितीट्प्रतिषेधः तत्र श्वयतेर्यजादित्वात्संप्रसारणं हल इति संप्रसारणस्य दीर्घः द्वयोरप्योदित्त्वान्निष्ठानत्वं उद्वृत्तनयनोरोषात् निष्क्रान्ततारकः यस्यविभाषेतीट्प्रतिषेधः वृतेरुदित्त्वात् मित्रान् स्निग्धान् मन्त्रिणः आदितश्चेतीट्प्रतिषेधः रदाभ्यामिति निष्ठानत्वं॥ १६॥ ज॰म॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० मांसेत्यादि। तान् राक्षसान् उद्विग्नान् त्रस्तान् अवेत्य ज्ञात्वा सरावणो मन्त्रिणो व्यसर्ज्जयत् कीदृशान् मांसोपभोगेन संशूनान् स्थूलान् मित्रान् स्निग्धान् सकीदृशः उद्वृत्तनयनः उद्घूर्णितनेत्रः क्रोधवशात् श्वायोऽश्वीर्गतिवृद्ध्योः नेमडोश्वीदिति नेम् यजादित्वात् ग्रहस्सपाद्योरिति जिः जिर्धोऽन्त्यः स्थूल्वाद्योदिति ओदित्वात् क्तस्य नः विजङ्गोशेभीकम्पे ईदित्वात् पूर्व्ववन्नेम् वृतुङ्वर्त्तने पूञ्शिधुदितद्रत्यनेन वेमलात् पूर्व्ववन्नेम् दूर्मिद्यात्तु मिदाञिङ्चइति चकारात् खेहने आदितइति नेम्॥ १६ ॥

प्रमेदिताः सपुत्रास्ते सुस्वान्तावाढविक्रमाः। अम्लिष्टनादानिरगुः फाण्टचित्रास्त्रपाणयः॥ १७॥

ज०म० प्रमइत्यादि। ते मन्त्रिणः सपुत्राः पुत्रैः सह निरगुः निर्गताः इणोगालुङि प्रमेदिताः स्निग्धीभवितुमारब्धाः आदिकर्म्मणि निष्ठा ततोविभाषाभावादिकर्म्मणोरिति प्रतिषेधः इट्पचे निष्ठा शीङ्त्यादिना किच्चप्रतिषेधात् गुणः सुस्वान्ताः स्वामिनि कल्याणमनसः वाढविक्रमाः भृशपराक्रमाः अम्लिष्टनादाः विस्पष्टवाचः मन्त्रिणां वाग्मित्वात् फाण्टचित्रास्त्रपाणयः यदश्टतपिष्टं कषायं उदकसम्पर्कमात्राद्विभक्तरसं ईषदुष्णं तदल्पप्रयाससाध्यत्वात् अनायाससाध्यं फाण्टमित्युच्यते तेन चित्राणि रञ्जितानि अस्त्राणि पाणौ येषामिति स्वान्तादयः क्षुब्धेत्यादिना निपातिताः॥ १७॥

भ० प्रमेइत्यादि। ते मन्त्रिणः सपुत्राः पुत्रैः सह निरगुर्निर्गतवन्तः इणस्यां रूपं कीदृशाः प्रमेदिताः वहिर्गमनसमये भार्य्यादीन्

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



प्रति स्नेहं कर्त्तुमारब्धवन्तः राजप्रसादात् स्निग्धाभवितुमारब्धा विविधोपभोगेन प्रीताभवितुमारब्धावा भावादिढेवेति पचे इम् सुखान्ताः शोभनमनसः वाढविक्रमाः भृशपराक्रमाः अक्लिष्ट नादाः तिस्पष्टवाचः मन्त्रिणां वाग्मित्वात् फाण्टचित्रास्त्रपाणयः फाण्डेन कषायभेदेन चित्राणि अस्त्राणि पाणौ येषां ते तथा चुब्धवाढेत्यादिना स्वनवाङ्क्लेच्छकिफणां स्वान्तवाढक्लिष्टफाण्टा निपातिताः पुनातीति पुत्रः पादिःस्वद्त्यस्य योगविभागेन ह्रस्वत्वान्न गुणः हवत्रतेरिति नेम्॥१७॥

तान् दृष्ट्वातिदृढान्धृष्टान् प्राप्तान् परिवृढाज्ञया।
कष्टं विनर्द्दतः क्रूरान् शस्त्रघुष्टकरान् कपिः॥१८॥

ज॰म॰ तानित्यादि। तान् दृष्ट्वा कपिः आर्द्दिददिति वच्यमाणेन सम्बन्धः किंभूतान् धृष्टान् धृष्णोतीति धृष्टः धृषीशसीवैयात्यइतीट्प्रतिषेधः अतिदृढान् वलवतः दृढस्थूलवलयोरिति निपातनं परिवृढाज्ञया परिवृढस्य प्रभोराज्ञया प्राप्तान् प्रभौ परिवृढइति निपातनं कष्टं विनर्दतः कक्रं ध्वनतः गम्भीररवञ्च कक्रगहनयोः कषइतीट्प्रतिषेधः क्रूरान् हिंस्रान् शस्त्रघुष्टकरान् घुषिरविशब्दनइतीट्प्रतिषेधः॥१८॥

भ॰ तानित्यादि। कपिर्हनूमान् तान् राक्षसान् दृष्ट्वा द्रुतं आर्द्दिददित्यग्रिमश्लोकेनान्वयः कीदृशान् अतिदृढान् वलवत्तरान् धृष्टान् प्रगल्भान् परिवृढस्य प्रभोराज्ञया प्राप्तान् कष्टं कक्रं आ



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



चदुःखदं विनर्द्दतः शब्दायमानान् क्रूरान् हिंस्रान् शस्त्रैर्घुष्टो घोषणं प्राप्तः सततधारणाद्घृष्टो वा करो येषां तान् पूर्व्ववत् दृढ वृषवृढकषघुषांक्ते निपातः॥ १८॥

अव्यर्णांगिरिकूटाभानभ्यर्णानार्द्दिदत् द्रुतं। वृत्तश्च
स्तान्महारम्भानदान्तांस्त्रिदशैरपि॥ १९॥ युग्मकं॥

ज॰म॰ अव्यदित्यादि। अव्यर्णोऽपीडितः अर्द्दैःसंनिविश्यद्दतीट्प्रतिषेधः गिरिकूटाभान् महागिरिसदृशप्रमाणान् अभ्यर्णानविदूरान् अभेश्चाविदूर्य्यइतीट्प्रतिषेधः द्रुतमार्द्दिदत् हिंसितवान् अर्द्दैः स्वार्थिकण्यन्तस्य लुङि रूपं वृतशस्तोऽधीतशस्त्रविद्यः णेरध्ययने वृत्तमिति इडभावो णिलुक् निपात्यते महारम्भान् अनल्पव्यापारान् त्रिदशैरप्यदान्तान् अशमितान् वादान्तेत्यादिना इडभावो णिलुक् निपात्यते॥ १९॥

भ॰ अव्यर्णइत्यादि। गिरिकूटाभान् पर्व्वतशृङ्गसदृशान् अभ्यर्णान् समीपगतान् वृत्तशस्तान् अधीतशस्त्रविद्यान् महारम्भान् क्रत व्यूहत्वात् त्रिदशैर्देवैरपि अदान्तान् अदमितान् कपिः कीदृशः अव्यर्णः अपीडितः अर्द्दैः क्ते नेमसन्निव्यर्द्दइति नेम् क्षुब्धस्वान्तेत्यादिना सामीप्ये अभिपूर्व्वादर्द्देर्ण्यन्तात्तोरध्ययने च निपातितः ण्यन्तदमेर्दान्तशान्तेत्यादिना निपातः॥ १९॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



दमितारिः प्रशान्तोर्जोनादापूरितदिङ्मुखः। ज
घान रुषितो रुष्टांस्त्वरितस्तूर्णमागतान्॥ २०॥

दमीत्यादि। ये तु प्रशान्तौजसः शमितबलाः सन्तोरुष्टाः तूर्णमागताः तान् कपिर्जघान व्यापादितवान् प्रतापाद्दाम्यन्तो ऽरयोदमितायेन दमितारिः प्रशान्तं शत्रूणामोजोयेन सप्र शान्तौजाः नादापूरितदिङ्मुखः तस्य दृष्टत्वात् रुषितः क्रुद्धः त्वरितः ससम्भ्रमः अत्र दमितप्रशमितपूरिताः एयन्ताः वादान्ते त्यादिना विकल्पितेटः रुष्टरुषितत्वरिताः रुष्यमत्वरेत्यादिना ॥ २०॥ ज॰म॰

दमीत्यादि। कपिस्तूर्णं शीघ्रं आगतान् राक्षसान् त्वरितः सन् जघान कीदृशः दमिताउपशमिता अरयः शत्रवोयेन श तथा नादैरापूरितं दिङ्मुखं येन रुषितः क्रुद्धः कीदृशान् प्रशा न्तोर्ज्जान् उपशमितवलान् रुष्टान् क्रुद्धान् ण्यन्तशमेः तादम् लो पोञेरिति ञिलोपः ण्यन्तदमेर्दान्तशान्तेत्यादिना निपातः रुष त्वरिभ्यां क्तस्य वारुषामित्यादिना विभाषितद्रूम् त्वरेरनिम्पचे श्विवावमवेत्यादिना ऊट्॥ २०॥ भ॰

तेषां निहन्यमानानां संघुष्टैः कर्णभेदिभिः। अभू
दभ्यमितत्रासमाखान्ताशेषदिग्जगत्॥ २१॥

तेषामित्यादि। तेषां रक्षसां निहन्यमानानां सङ्घुष्टैः शब्दैः कर्ण भेदिभिः वाधिर्य्यकरैः अभ्यमितत्रासं अभिगतत्रासं जगदभूत ज॰म॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



आस्वान्ताः अशेषादिशोयस्मिन् जगति संघुष्टाभ्यमिताखान्ताः रुष्यमत्वरेति विकल्पितेटः ॥ २१ ॥

भ० तेषामित्यादि। हनूमता निहन्यमानानां तेषां राक्षसानां संघुष्टैः शब्दैः जगत् भुवनं अभ्यमितत्रासं प्राप्तभयं अभूत् कीदृशैः कर्णभेदिभिः श्रोत्रविदारिभिः कीदृशं अस्वान्ता आशब्दिता अशेषादिशोयत्र तत्तथा संपूर्व्वघुषअम् आङ्पूर्व्वस्वनाश्च वारुषामित्यादिना क्तवत्वोर्वेमत्वं ॥ २१ ॥

भयसंहृष्टरोमाणस्ततस्तेऽपचितद्विषः। क्षणेन क्षीणविक्रान्ताः कपिनानेषत क्षयं ॥ २२ ॥

इतीट्प्रतिषेधाधिकारः ॥

ज०म० भयमित्यादि। ततस्ते राक्षसाः कपिना क्षणेन क्षयं विनाशमनेषत नीताः कर्म्मणि लुङ् भयसंहृष्टरोमाणः भयोद्गतरोमाञ्चाः हृषेर्लोमस्विति विभाषितेट् अपचितद्विषः अपचितानां पूजितानां ऋषीणां शत्रवः अपचितश्चेति निपातः क्षीणविक्रान्ताः क्षीणं विक्रान्तं पराक्रमोयेषां क्षियोदीर्घादिति निष्ठातकारस्य नः ॥ २२ ॥

भ० भयेत्यादि। ततोऽनन्तरं कपिना ते राक्षसाः क्षणेन क्षयं अनेषत प्रापिताः कर्म्मणि टी णुर्घुङ्इति णुः मान्तोऽदनतइत्यदादेशः न्यादिव्यन्ताढगत्यर्था इति मुख्यकर्म्मोक्तं कीदृशाः भयेन संहृष्टानि उद्गतानि रोमाणि येषां वारुषामहृषेति वेम् अपचितानां पूजितानां मुन्यादीनां द्विषः शत्रवः नेमेकाजितिनेम् क्षीणं विक्रान्तं

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



पराक्रमोयेषां चेः पूर्ववन्नेम् चेर्घोढेइति दीर्घत्वे सूत्वाद्योदित्यादि ना ऋस्य नः क्रमुगताविस्यस्य पूक्लिशुदितइत्यनेन वेम्त्वात् नेम् डीश्वीदिति नेम् ञमुङञस्वणाविति र्घः। इतीट्प्रतिषेधाधिकारः ॥ २२ ॥

हत्वा रचांसि लवितुमक्रमीन्मारुतिः पुनः। अशोक वनिकामेव निगृहीतारिशासनः ॥ २३ ॥

इतः प्रभृतीटमधिकृत्याह हत्वेत्यादि। रचांसि हत्वा मारु तिरशोकवनिकामेव पुनर्लवितुं छेत्तुं आर्द्धधातुकस्येट् अक्रमीत् गतवान् स्नुक्रमोरनानेपदनिमित्तइतीट् निगृहीतारिशासनः ध्व स्तारिव्यवस्थः ग्रहोलिटि दोर्घइतीटोदीर्घत्वं ॥ २३ ॥ जं०म०

अथेडधिकारः। हत्वेत्यादि। रचांसि हत्वा निगृहीतरावणा शासो मारुतिर्हनूमान् पुनरप्यशोकवनिकामेव लवितुं छेत्तुं अक्र मीत् जगाम सूञगिछिदि वसोरस्येतीम् क्रमेष्टी स्नुक्रमोऽमइति इम् मान्तवर्ज्जनात् हसादेःसेमइतिन त्रिः ग्रहेरिमोर्घत्वं॥ २३॥ भ०

आवरीतुमिवाकाशं वरितुं वीनिवोत्थितं। वनं प्रभ ञ्जनसुतोनादयिष्ट विनाशयन् ॥ २४ ॥

आवेत्यादि। प्रभञ्जनसुतोहनूमान् वनमशोकवनिकाख्यं विनाशयन् नादपिष्टदयां न कृतवान् लुङि रूपं आकाशमा वंरीतुमिव अवष्टम्भमिवोत्थितं वनं वीन् पचिणोवरितुं प्रार्थयितु जं०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



मिवोत्थितं आगच्छत नान्यत्र यात इहैव फलवृद्धिं प्राप्स्यथेति आवरीतुं वरितुमिति वृतोवेति विकल्पेनेटोदीर्घत्वं ॥ २४ ॥

भ० आवेत्यादि। प्रभञ्जनसुतोहनूमान् वनं विनाशयन् न अदयिष्ट दयां न कृतवान् कीदृशं आकाशं आवरीतुं आच्छादयितुमिव वीन् पक्षिणो वरितुं प्रार्थयितुमिव उत्थितं अत्युच्चलात् उच्चलोत्प्रेक्षा नेमेकाजित्यादौ वृवर्ज्जनादिम् वृतोवेमोर्घदूतिवादीर्घः ॥ २४ ॥

वरिषीष्ट शिवं क्षिप्यन् मैथिल्याः कल्पशाखिनः।
प्रावारिषुरिव क्षौणीं क्षिप्तावृक्षाः समन्ततः ॥ २५ ॥

ज०म० वरीत्यादि। ये कल्पशाखिनः कल्पवृक्षाः स्वर्गादादायारोपितास्तानुन्मूल्य यथास्थानं क्षिप्यन् मैथिल्याः शिवं कल्याणं वरिषीष्ट प्रार्थितवान् मैथिल्याभद्रमस्त्वित्याशंसावचने लिङ् नलिङीति दीर्घप्रतिषेधः अन्ये च वृक्षास्तेन समन्ततः क्षिप्ताः सन्तः क्षौणीं पृथ्वीं प्रावारिषुरिवाच्छादितवन्तइव तेषामनाच्छादितत्वादिवार्थः सिचि वृद्धिः परस्मैपदेष्विति वृद्धिः ॥ २५ ॥

भ० वरीत्यादि। हनूमान् मैथिल्याः शिवं मङ्गलं वरिषीष्ट प्रार्थितवान् आशिषि टौ स्याद्वृद्दुरिति पक्षे इम् अठीढीपसेरिति नेमोदीर्घः किङ्कुर्व्वन् ये कल्पवृक्षाः स्वर्गादानीयाशोकवनिकायामारोपितास्तानून्मूल्य यथास्थानं क्षिप्यन्ननुप्रेरयन् शिवशब्दस्य हितार्थत्वात् समार्थैनेत्यादिना मैथिल्याइत्यत्र षष्ठी अन्ये वृक्षाः

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



समन्ततस्तेन छिन्नाः क्षौणिं भूमिं प्रावारिषुरिव आच्छादितव
न्तइव ध्यात्मनि रूपं पूर्व्ववन्नेमोर्घः ॥ २५ ॥

संवुवूर्षुः स्वमाकूतमाज्ञां विवरिषुं द्रुतं। अवरिष्टा
क्षमक्षम्यं कपिं हन्तुं दशाननः ॥ २६ ॥

सम्वुवूर्षुरित्यादि। रामदूतेन कपिना कर्म्मेदृशं कृतमिति स्वमा ज॰म॰
कूतमभिप्रायं सम्वुवूर्षुः सम्वरीतुमिच्छुः दशाननोऽद्भुतमाज्ञां विव
रिषुः प्रकटितुमिच्छुः अचं स्वसुतमवरिष्ट प्रार्थितवान् कर्त्रभिप्रा
ये तङ् किमर्थं कपिं हन्तुं हनिष्यामीति अचम्यं चन्तुमशक्यं पोर
दुपधादिति यत् सम्वुवूर्षुः विवरिषुरिति उगन्तत्वात् सनि ग्रह
गुहोश्चेति, चकारेणेट्प्रतिषेधे प्राप्ते इट् सनिवेति विभाषेट्
तत्रानिट्पचे इकोझलीति कित्त्वे उदोष्ठ्यपूर्व्वस्येत्युत्वपचे गुण
एव ॥ २६ ॥

समित्यादि। अथ दशाननोऽद्भुतं कपिं हन्तुं अचनामानं कुमारं भ॰
अवरिष्ट प्रार्थितवान् पचे इमोर्घाभावः कीदृशं अचम्यं न चसार्हं
कीदृशः कपिमात्रेण रामदूतेनैवं कृतमिति स्वमाकूतं स्वकीयमा
शयं संवुवूर्षुः संवरीतुमिच्छुः आज्ञां विवरिषुः हे अचागच्छा
गच्छ कपिर्हन्यतामित्याज्ञां विवरीतुं प्रकटयितुमिच्छुः स्याद्दृद्दु
रिति वृञः सनोवेम् अनिम्पचे घोऽज्झनिङ्गमामिति दीर्घत्वे एर्नौ
निमिसनीत्यणत्वात् ऋदिरणावित्युर् ॥ २६ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ऊचे संवरिषीष्ठास्त्वं गच्छ शत्रोः पराक्रमं। ध्वृषीष्ठायुधि मायाभिः स्वरिता शत्रुसंमुखं॥ २७॥

ज०म० ऊचेइत्यादि। किमित्याह त्वं गच्छ शत्रोः पराक्रमं सम्वरिषीष्ठाः संछादय आशिषि लिङ्सिचोरात्मनेपदेष्विति वृञो विभाषेट् उश्चेतीट् पचे न कित्वं ध्वृषीष्ठाः युधि मायाभिः कर्तृभूताभिः त्वं कुटिलीकृषीष्ठाः ध्वृ हूर्छने ऊर्छा कौटिल्ये तस्य चोदात्तत्वात् आशिषि कर्म्मणि लिङ् ऋतश्च संयोगादेरिति विभाषेट् अनिट्पचे उश्चेति कित्त्वं स्वरिता उपतापयिता शत्रुसंमुखं शत्रोरग्रतः अतोऽद्रुतं स्वरिषीष्ठा इति वच्यमाणेन योज्यं स्वृ शब्दोपतापयोरित्यस्य स्वरति सूतिसूयेत्यादिना विभाषेट् लिङ्सिचोरिति नानुवर्त्तते॥ २७॥

भ० ऊचेइत्यादि। विवरणमाह दशाननऊचे किमित्याह हे अच त्वं गच्छ गत्वा शत्रोः कपेः पराक्रमं संवरिषीष्ठाः आच्छादय आशिषि टो पूर्व्ववत् पचे इम् त्वं युधि संग्रामे मायाभिः कर्त्रीभिः ध्वृषीष्ठाः कुटिलीकृषीष्ठाः ध्वृ कौटिल्ये कर्म्मणि टो स्याद्युट्टुरिति पचे इमोऽभावे इगुङ्र्मढीस्वनिमद्रुति कित्त्वान्न गुणः त्वं कीदृशः शत्रुसंमुखं यथा स्यात्तथा स्वरिता शत्रोरग्रत उपतापयितित्यर्थः किम्वा शत्रुसंमुखं शत्रूणां प्रधानं स्वरिता उपतापनशीलः मुख माद्ये प्रधानेचेत्यमरः स्वृ उ शब्दोपतापयोः वेमूदित्स्वरेति पचे इम्॥ २७॥

द्रुतं संस्वरिषीष्ठास्त्वं निर्दयः प्रधनोत्तमे। समायानामगात् सीता कपेर्विधवितुं द्युतिं॥ २८॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



द्रुतमित्यादि। संस्करिषीष्ठाः उपतापय निर्भयस्सन् आशिषि लिङ् समो गम्यृच्छीत्यात्मनेपदं अत्र स्वृतस्चेतीट् प्रधनोत्तमे संग्रामवरे एवमुक्तः सन् समायातां सीता जनकः कपेर्द्युतिन्तेजोविधवितुमपनेतुमगात् गतः सीता धवितुमिति स्वरतीत्यादिसूत्रेण विभाषेट्॥ २८॥ ज०म०

द्रुतमित्यादि। त्वं प्रधनोत्तमे महायुद्धे निर्भयः सन् द्रुतं संस्वरिषीष्ठाः उपतापय शत्रुमित्यर्थात् समो गम्यृच्छेति सं एवमुक्तः सोऽस्वः कपेर्द्युतिं तेजोविधवितुं अपनेतुं अगात् गतः कीदृशः मायानां सीता जनकः स्वृधुञ्भ्यां पूर्व्ववत् पक्षे इम्॥ २८॥ भ०

विगाढारं वनस्यासौ शत्रूणां गाहिता कपिः। अक्षं रधितुमारेभे रद्धा लङ्कानिवासिनां॥ २९॥

विगेत्यादि। असौ कपिः वनस्य विगाढा अवलोडयिता अरं शीघ्रं शत्रूणां गाहिता विनाशयिता कर्म्मणि षष्ठी ऊदित्त्वाद्विभाषेट् स्वरतीत्यादिना अक्षं रधितुं हिंसितुमारेभे प्रवृत्तः लङ्कानिवासिनां रक्षसां रद्धा हिंसिता रधादिभ्यश्चेति विभाषेट्॥ २९॥ ज०म०

विगेत्यादि। असौ हनूमान् अक्षं रधितुं हिंसितुं आरेभे प्रवृत्तः कीदृशः अरं शीघ्रं वनस्य विगाढा विलोडयिता शत्रूणां गाहिता नाशयिता लङ्कानिवासिनां रद्धा हन्ता गाहूविलोडे इत्यस्य ऊदित्त्वात् रधहतौ इत्यस्य च रधादित्वात् पूर्व्ववद्विभाषया इम्॥ २९॥ भ०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



निष्कोषितव्यान्निष्कोष्टुं प्राणान् दशमुखात्मजात्।
आदाय परिघं तस्थौ वनान्निष्कुषितद्रुमः ॥ ३० ॥

ज०म० निष्कइत्यादि। दशमुखात्मजादचात् प्राणान्निष्कोषितव्यान् अपनेतव्यान् अपनयार्हान् निष्कोष्टुं अपनेष्यामीति परिघमादायतस्थौ निरःकुषइति विभाषेट् निष्कुषितद्रुमः वनादपनीतवृचः इस्निष्ठायामितीट् ॥ ३० ॥

भ० निष्कइत्यादि। दशमुखात्मजात् अचात् निष्कोषितव्यान् आकर्षणयोग्यान् प्राणान् निष्कोष्टुं अपहर्त्तुं परिघं आदाय गृहीत्वा कपिः तस्थौ कीदृशः वनात् निष्कुषिताआकृष्टाद्रुमावृचायेन पूर्व्ववत् निःपूर्व्वकुषेर्वेम् नेम्डीश्वीदिदेम्इति क्तेनेम् निषेधस्तत्र निष्कुषवर्ज्जनात् ॥ ३० ॥

एष्टारमेषिता संख्ये सोढारं सहिता भृशं। रेष्टारं रेषितुं व्यास्थद्रोष्टाचः शस्त्रसंहतीः ॥ ३१ ॥

ज०म० एष्टेत्यादि। कपिं युद्धस्यैष्टारं एषिता एषणशीलोऽचः ताच्छील्ये तृन् नलोकेति षष्ठीप्रतिषेधः सोटारं प्रहरणस्य सहितारं सहिता भृशं सहनशीलः रेष्टारं हिंसकं रेषितुं हिंसितुं रोष्टा रोषणशीलः शस्त्रसंहतीर्व्यास्थत् चिप्तवान् लङि रूपं सर्व्वत्र तीषसहेत्यादिना वेट् ॥ ३१ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



एष्टेत्यादि। अत्तः संख्ये युद्धे रेष्टारं हिंसकं हनूमन्तं रेषितुं भ°
हिंसितुं शस्त्रसमूहान् व्यास्यत् चिप्तवान् अस्युदूर्चैपे घो कीदृशं
एष्टारं इच्छाशीलं युद्धस्येत्यर्थात् सोढारं सहनशीलं भृशमत्यर्थं
सोऽपि एषिता एषणशीलः सहिता सहनशीलः रोष्टा रोषण
शीलः इषुशवाक्क्षे सहजङ्शक्तौ रिषवधे इषञ्चिच चकारात्
वधे वेम्सहेत्यादिना वेम्॥ ३१ ॥

शस्त्रैर्दिदेविषुं संख्ये दुद्यूषुः परिघं कपिः। अर्हिधिषु
र्यशः कीर्त्तिमीर्त्सुं वृत्तैरताडयत्॥ ३२॥

शस्त्रैरित्यादि। कपिः अर्हिधिषुः यशोवर्द्धितुमिच्छुः परिघं दुद्यू ज°म°
षुः परिघेण क्रीडितुमिच्छुः अक्षं वृक्षैरताडयत् हतवान् कीदृशं
शस्त्रैर्दिदेविषुं क्रीडितुमिच्छं कीर्त्तिमीर्त्सुं वर्द्धितुमिच्छुं दिवेरिवन्तस्य
ऋधुवृद्धावित्यस्य च सनीवन्तर्द्धेत्यादिना विभाषितेट् तत्र दिवे
रिडभावपक्षे कोःशूट् ऋधेराप्ज्ञप्धामीदितील अभ्यासस्तो
पश्च॥ ३२॥

शस्त्रैरित्यादि। कपिः संख्ये युद्धे वृत्तैरचमताडयत् अत्तं भ°
कीदृशं शस्त्रैर्दिदेविषुं क्रीडितुमिच्छन्तं ईर्त्सुं वर्द्धयितुमिच्छुं कपिः
कीदृशः परिघेण दुद्यूषुः क्रीडितुमिच्छुः दिवोधेवेति करणे द्विती
या यशोऽर्हिधिषुः वर्द्धयितुमिच्छुः दिव्युक्रीडादौ भ्रस्जश्रिस्वृ
यूर्णुभरेत्यादिना इवन्तत्वात् सनोवेम् इमोऽभावपक्षे क्लोः शूटा
वित्यादिना ऊट् ऋधुवृद्धौ पूर्व्वेण सनोवेम् नाजन्तादेरादिर्द्वि

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



रित्यकारस्य स्थादौनवद्भावेऽयेइति रेफस्य च न द्वित्वं अनिम्पचे त्रपर्धापामीर्थ्यइति ईर खिलोपस्य अन्तर्भूतण्यार्थेऽत्र बोध्यः ॥ ३२ ॥

भूयस्तं धिप्सुमाहूय राजपुत्रं दिदम्भिषुः। अहंस्ततः समूर्च्छावान् संशिश्रीषुरभूद्ध्वजं ॥ ३३ ॥

ज०म० भूयइत्यादि। तं राजपुत्रं अक्षं धिप्सुं दम्भितुं वञ्चयितुमिच्छुं भूयः पुनरपि दिदम्भिषुः वञ्चयितुमिच्छुः आहूयागच्छेत्यहन् हतवान् ततः सोऽक्षः मूर्च्छावान् मूर्च्छायुक्तः ध्वजमात्मीयं संशिश्रीषुः संश्रयितुमिच्छुः अभूत् भूतः अत्र दम्भेः श्रयतेश्च सनीवन्तर्द्धेतीट् अत्र श्रयतेरनिट्पचे अज्झनगमांसनीति दीर्घः द्वितीयस्य च दम्भइच्च अभ्यासलोपः दम्भेर्हल् ग्रहणस्य जातिपरत्वात्सिद्धमिति कित्त्वे अनुनासिकलोपः एकाचोवशइति भष् खरिचेति चर्त्वं ॥ ३३ ॥

भ० भूयइत्यादि। कपिस्तमक्षं आहूय आगच्छ युद्धे इत्युक्त्वा भूयः पुनरपि अहन् हन्तेर्घी कीदृशं धीप्सुं दम्भं कर्त्तुमिच्छं सच दिदम्भिषुः दम्भं कर्त्तुमिच्छुः ततः प्रहारानन्तर सोऽक्षोध्वजं संशिश्रीषुः आश्रयितुमिच्छुः सन् मूर्च्छावान् मूर्च्छितोऽभूत् भ्रस्ज श्रीत्यादिना दम्भेः श्रयतेश्च सनीवेम् दम्भेरनिम्पचे दभीयावित अचईत्वं खिलोपस्य अनकारनिर्द्देशात् नस्य लोपः झभान्तस्येति दस्य धः श्रयतेर्घोऽज्झनिङ्गमामिति दीर्घः ॥ ३३ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



आश्वस्याथ क्षणाल्लोकान् बिभ्रक्षुरिव तेजसा।
रुषा बिभ्रज्जिषुप्रख्यं कपिं बाणैरवाकिरत्॥ ३४ ॥

आश्वेत्यादि। क्षणात् क्षणमात्रेणाश्वस्य संज्ञां लब्ध्वा लोकान् जनान् तेजसा क्रोधात्थेन बिभ्रक्षुरिव अथ सकपिं बाणैरवाकिरत् संछादितवान् कीदृशं बिभ्रज्जिषुप्रख्यं अग्नितुल्यं बिभ्रज्जिषुः बिभ्रक्षुरिति सनीवन्तर्द्धेत्यादिना विभाषेट् तत्रानिट्पक्षे स्को रिति सलोपः व्रश्चेति षः इट्पक्षे सकारस्य जश्त्वं स्तुलञ्च ॥ ३४ ॥ ज॰म॰

आश्वस्येत्यादि। ततोऽक्षः क्षणात् आश्वस्य चेतनां प्राप्य बाणैः कपिमवाकिरत् आच्छादितवान् कीदृशः तेजसा लोकान् बिभ्रक्षुरिव क्रोधलक्षणमत्र तेजः रुषा क्रोधेन बिभ्रज्जिषुप्रख्यं अग्नितुल्यं भ्रस्जज्ञीति भ्रस्जेः सनि वेम्॥ ३४ ॥ भ॰

संयुयूषुं दिशो बाणैरक्षं यियविषुर्द्रुमैः। कपिर्मायामिवाकार्षीद्दर्शयन् विक्रमं रणे॥ ३५ ॥

समित्यादि। बाणैर्दिशः संयुयूषुं मिश्रयितुमिच्छुं अक्षं कपिः द्रुमैर्यियविषुः योतुमिच्छुर्मायामिवेन्द्रजालमिवाकार्षीत् कृतवान् रणे विक्रमं दर्शयन् योतेः सन् सनीवन्तर्धेति विभाषेट् ओःपु यण्ज्यपरइतीत्वं अज्झनगमांसनीति दीर्घः॥ ३५ ॥ ज॰म॰

समित्यादि। कपीरणे विक्रमं दर्शयन् मायामिव अकार्षीत् इन्द्रजालमिव दर्शितवानित्यर्थः कीदृशः द्रुमैरक्षं यियविषुः मिश्र भ॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



यितुमिच्छुः अचं कीदृशं वार्णैर्दंश दिशः संयुयूषुं मिश्रयितुमिच्छुं भ्रस्जश्रीति वेम्॥ ३५॥

वानरं प्रोर्णुनविषुः शस्त्रैरक्षोविदिद्युते। तं प्रोर्णुनूषुरुपलैः सवृचैराबभौ कपिः॥ ३६॥

ज०म० वानेत्यादि। वानरं प्रोर्णनविषुः छादयितुमिच्छुरचः विदिद्युते विद्योतते स्म द्युतिस्वाप्योरिति संप्रसारणं कपिरपि तमचं उपलैर्वृचसहितैः प्रोर्णुनूषुः सम्वरीतुमिच्छुराबभौ भाति स्म ऊर्णोतेः पूर्व्ववद्विभाषेट् इट्पचे गुणः अन्यत्र अजझनेति दीर्घः उभयत्र नन्द्राइति रेफेन द्विरुच्यते॥ ३६॥

भ० वानरमित्यादि। अचः शस्त्रैर्वानरं प्रोर्णुनविषुः आच्छादयितुमिच्छुः सन् विदिद्युते दीप्तः द्युत्स्वाप्योःखेर्ज्जिः कपिरपि वृचसहितैरुपलैः पाषाणैस्तमचं प्रोर्णुनूषुः आच्छादयितुमिच्छुः सन् बभौ दीप्यते स्म ऊर्णुञ् आच्छादने भ्रस्जश्रीत्यादिना वेम्॥ ३६॥

स्वां जिज्ञापयिषू शक्तिं वुभूर्षू नु जगन्ति किं। शस्त्रैरित्यक्षपातां तौ पश्यतां वुद्धिमाहवे॥ ३७॥

ज०भ० स्वाञ्जीत्यादि। तौ कपिराचसौ किं स्वां शक्तिं जिज्ञापयिषू बोधयितुमिच्छू इव वुभूर्षू त्रिजगन्ति किं नु त्रैलोक्यं शस्त्रेण भर्त्तुं पूरयितुमिच्छू इत्येवं वद्धिमाहवे पश्यतां प्रेक्षकाणां अक्षपातां कृतवन्तौ

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



जिज्ञापयिषू बुभूर्षू इति विभाषेट् तत्र भृञ्भरणइति भौवादिकस्य ग्रहणं सनीवन्तर्द्धेति सूत्रे भरेति शपा निर्देशात्॥ ३७॥

त्वामित्यादि। तौ कपिराक्षसौ पश्यतां जनानां आहवे युद्धे इति बुद्धिमकृषातां चक्रतुः कीदृशीं बुद्धिमित्याह किन्नु किमु एतौ स्वां शक्तिं ज्ञापयितुमिच्छू जगन्ति त्रिभुवनानि शस्त्रैर्बुभूर्षू पूरयितुमिच्छू ज्ञपिभूभ्यां भ्रस्जञ्जीत्यादिना सनोवेम् भृञ्भौवादिकः सूत्रे भरेति निर्द्देशात्॥ ३७॥ भ०

मायाभिः सुचिरं क्लिष्ट्वा राक्षसोऽक्लिशितक्रियं। सं प्राप्य वानरं भूमौ पपात परिघाहतः॥ ३८॥

मायेत्यादि। राक्षसोमायाभिः सुचिरं क्लिष्ट्वा क्लेशं कृत्वा वानरं अक्लिशितक्रियमनभिभूतव्यापारं सम्प्राप्य परिघाहतो भूमौ पपात क्लिशः क्त्वानिष्ठयोरिति विभाषेट्॥ ३८॥ ज०म०

मायाभिरित्यादि। राक्षसोऽसौमायाभिः सुचिरं क्लिष्ट्वा क्लेशं प्राप्य अक्लिशितक्रियं अनभिभूतव्यापारं वानरं सम्प्राप्य परिघेणाहतः सन् भूमौ पपात क्लिशः पूङ्क्लिशुडदितइति क्त्वाचोवेम् पूङ्क्लिशवमजपेति क्तक्तवत्वोर्वेम्॥ ३७॥ भ०

पवितोऽनुगुणैर्वातैः शीतैः पूत्वा पयोनिधौ। वभञ्जाध्युषितं भूयः क्षुधित्वा पत्त्रिभिर्वनं॥ ३९॥

पवीत्यादि। कपिरपि पयोनिधौ पूत्वा स्नात्वा अनुगुणैरनुकूलैः शीतैर्वातैः पवितः पवित्रीकृतः पूङश्चेति विभाषेट् भूयः ज०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



पुनर्वनं बभञ्ज कीदृशं पत्त्रिभिः पक्षिभिः क्षुधित्वा क्षुधितैर्भूत्वा अध्युषितं कृततिवासं वसतिक्षुधोरितीट्॥ ३९॥

भ० पवितइत्यादि। कपिः क्षुधित्वा क्षुधितोभूत्वा पयोनिधौ पूत्वा स्नात्वा फलादिकं भुक्त्वा चेत्यर्थात् शीतलैरनुगुणैर्व्वातैः पवितस्य क्लमः सन् भूयः पुनरपि तद्वनं बभञ्ज भग्नवान् कीदृशं पत्त्रिभिः पक्षिभिरध्युषितं अधिष्ठितं क्षणं भङ्गाभावात् पूञः पूक्लिशवसेतिक्त क्तवतोर्वेम् पूशीधूषेत्यादिना णुः पूक्लिश्डदितइति क्त्वाचोवेम् वसेः क्षुधेश्च क्षुधवसपूजार्थाञ्च इतीम्॥ ३९॥

उच्चैरञ्चितलाङ्गूलः शिरोऽञ्चित्वेव संवहन्। दध द्विलुभितं वातैः केशरं वह्निपिङ्गलं॥ ४०॥

ज०म० उच्चैरित्यादि। उच्चैरूर्द्ध्वं अञ्चितं पूजितं लाङ्गूलं पुच्छं यस्य शोभनविन्यासेन स्थितत्वात् शिरोऽञ्चित्वेव सम्वहन् अनम्रत्वात् पूजयित्वेव शिरोविभ्राणः अञ्चेःपूजायामिति विभाषेट् वह्निपि ङ्गलञ्च केशरं सटां दधत् बिभ्रत् वातैर्व्विलुभितं आकुलितं लुभोविमोहनइतीट् विमोहनमाकुलीकरणं॥ ४०॥

भ० उच्चैरित्यादि। कपिः कीदृशः उच्चैरञ्चितलाङ्गूलः ऊर्द्ध्वं अञ्चितं पूजितं लाङ्गूलं पुच्छं यस्य सतथा शिरोऽञ्चित्वेव अन म्रत्वात् पूजयित्वेव संवहन् बिभ्राणः वातैर्व्विलुभितं चञ्चलीकृतं वह्निवत्पिङ्गलं केशरं दधत् धारयन् ईदृशोवनं बभञ्जेति पूर्व्वेणा न्वयः क्षुधवसपूजार्थाञ्चागार्ध्यार्थलुभइति इम् नेदित्पूजार्थाञ्चो रिति नलोपाभावः॥ ४०॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



जरित्वेव जवेनान्ये निपेतुस्तस्य शाखिनः। भङ्क्त्वा विवशानन्यान् बलेनापातयत्तरून्॥ ४१॥

जरीत्यादि। तस्य कपेर्जवेन वेगेन अन्ये शाखिनः जरित्वेव जीर्णाइव भूत्वा निपेतुः अन्यांस्तरून् बलेन भङ्क्त्वा छित्त्वा विवशान् स्वस्तपल्लवानपातयत् पातितवान् जृव्रश्चोः क्त्वीतीट्॥ ४१॥ ज०म०

जरित्वेत्यादि। अन्ये शाखिनः तस्य कपेर्जवेन वेगेन जरित्वेव जीर्णाइव भूत्वा निपेतुः निपतितवन्तः अन्यान् विवशान् अनायत्तान् तरून् बलेन भङ्क्त्वा छित्त्वा कपिरपातयत् पातयामास जृव्रश्चोनजिरिति इम् जिनिषेधश्च॥ ४१। भ०

दमित्वाप्यरिसंघातानश्रान्त्वा कपिकेशरी। वनं चचार कर्त्तिष्यन्नर्त्स्यन्निव निरङ्कुशः॥ ४२॥

दमीत्यादि। कपिकेशरी हनूमान् अरिसङ्घातान् दमित्वा उपशमं नीत्वा अश्रान्त्वा अपरिश्रान्तोभूत्वा वनं चचार उदितो वेति विकल्पेनेट् निरङ्कुशः निरवग्रहः कर्त्तिष्यन् छेत्स्यन् नर्त्स्यन्निव नर्त्तुकामइव सेसिचीत्यादिना विभाषेट्॥ ४२॥ ज०म०

दमित्वेत्यादि। कपिकेशरी हनूमान् शत्रुसमूहान् दमित्वा नाशयित्वापि अश्रान्त्वा अश्रान्तोभूत्वा वनं कर्त्तिष्यन् छेत्स्यन् नर्त्स्यन्निव नर्त्तितुकामइव निरङ्कुशोनिरवग्रहः सन् चचार भ०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



वभ्राम दभ्रद्रमे अमुष्यद्र्त्तपः खेदयोरदिलात् पूज्जिष्ठदित इति वेम् ऋतीयपढिदि नृत्यनृत्ये अनयोर्नृत्कृदिति वेम्॥ ४२॥

पारं जिगमिषन् सोऽथ पुनरावर्त्स्यतां द्विषां। मत्त द्विरदवद्रेमे वने लङ्कानिवासिनां॥ ४३॥

ज॰म॰ पारमित्यादि। अथ सकपिर्द्विषां पारं जिगमिषन् गन्तुमिच्छन् गमेरिट्परस्मैपदेषु पुनरावर्त्स्यतां प्रतीपीभविष्यतां नवृद्भ्य इतीट्प्रतिषेधः वृद्भ्यःस्यसनोरिति परस्मैपदं लङ्कानिवासिनां वने मत्तद्विरदइव रेमे क्रीडितवान्॥ ४३॥

भ॰ पारमित्यादि। अथानन्तरं सहनूमान् पुनरावर्त्स्यतां प्रत्यागमिष्यतां लङ्कानिवासिनां द्विषां शत्रूणां पारमन्तं गन्तुं इच्छुः सन् वने मत्तहस्तीव रेमे क्रीडति स्म गमेऽमेसइति गच्छतेरिम् वृद्भ्योनेम्पेइति वृतेर्नेम् अतएव पं॥ ४३॥

यद्यकल्प्स्यदभिप्रायोयोद्धुं रक्षःपतेः स्वयं। तमप्यकर्त्स्यमद्याहं वदन्नित्यचरत्कपिः॥ ४४॥

ज॰म॰ यद्येत्यादि। रक्षःपतेः रावणस्य स्वयं योद्धुं, यद्यभिप्रायोऽकल्प्स्यत् समपत्स्यत् तासिचकपइति चकारात् स्यकारेच नेट् तदा तमप्यहमकर्त्स्यं उत्सारयामि अहमद्येति एव वदन् कपि

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



र्वंनमचरत् हेसीचीत्यादिना विभाषेट् अकल्प्स्यदकर्त्स्यमिति च लिङ्निमित्तइति लृङ् हेतुहेतुमद्भावश्च लिङोनिमित्तं॥ ४४॥

यद्येत्यादि। यदि रक्षःपतेरावणस्य स्वयं योद्धुमभिप्रायो भ॰ ऽकल्प्स्यत् कल्पिष्यते तमप्यद्याहमकर्त्स्यं अच्छेत्स्यं इति वदन् कपि रचरत् चरति स्म क्रपूङ्वृचकल्पने पूर्व्ववत् वृतादित्वात् स्यस्य नेम् छतीअपछिदि नृत्कृदिति वेम्॥ ४४॥

हते तस्मिन् प्रियं श्रुत्वा कल्प्ता प्रीतिं परां प्रभुः।
तोषोऽद्यैव च सीतायाः परश्चेतसि कल्प्स्यति॥ ४५॥

हतइत्यादि। हते तस्मिन् रक्षःपतौ प्रियं श्रुत्वा प्रभुः रामः ज॰म॰ परां प्रीतिं कल्प्ता जनयिता अन्तर्भावितोण्यर्थः धातोरकर्म्म कत्वात् सीतायाश्चाद्यैव चेतसि तोषः परोमहान् कल्प्स्यति संप त्स्यते तासिचक्लृपइतीट्प्रतिषेधः लुटिचक्लृपइति परस्मैपदं॥४५॥

हतेइत्यादि। तस्मिन् रावणे हते सति प्रियं श्रुत्वा प्रभूरामः भ परां प्रीतिं कल्प्ता प्राप्स्यति नेम्पेद्याइति तेनैव पं कित्त्व अद्यैव च अधुनैव च सीतायाश्चेतसि परस्तोषः कल्प्स्यति भविष्यति पूर्व्ववत् वृतादित्वात् स्यस्यनेम् इति वदन् कपिरचरदिति पूर्व्वेणान्वयः ॥ ४४ ॥

आहूय रावणोऽवोचदथेन्द्रजितमन्तिकात्। वने मत्तइव क्रुद्धोगजेन्द्रः प्रधनेऽटन्॥ ४६॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० आहूयेत्यादि। अथ रावणः इन्द्रजितमाहूय अन्तिकमवोचत् किमवोचदित्याह वने मत्तइव यथा गजेन्द्रोमत्तः क्रुद्धोवने पर्य्यटन् द्विषामन्तं गतवान् तथा त्वं प्रधनेषु संग्रामेष्वटन् द्विषामन्तं ययाथेति वक्ष्यमाणश्लोकेनान्वयः॥ ४६॥

म० आहूयेत्यादि। अथानन्तरं अन्तिके समीपे इन्द्रजितमाहूय रावणोऽवोचत् उक्तवान् किमवोचदित्याह त्वं क्रुद्धः सन् प्रधनेषु युद्धेषु अटन् परिभ्रमन् वने मत्तोगजेन्द्रइव द्विषामन्तं ययाथेत्यग्रिमश्लोकेनान्वयः मदीभिर्यञ्जिहर्षे नेम्डीश्वीदिति ईदित्वान्निम् खल्वायोदित्यादौ मदवर्ज्जनान्न क्तस्य नः क्रुधृयौकोपे औदित्वान्नेम्॥ ४६॥

ययाथ त्वं द्विषामन्तं भूयोयातासि चासकृत्। अशक्य जेतुं त्वं देवान् मायाः सस्मर्थ संप्रति॥ ४७॥

ज०म० ययेत्यादि। न केवलं ययाथ भूयः पुनरपि यातासि यास्यसि यातेः क्रादिनियमात्प्राप्तस्येटः अचस्तास्वत्थल्यनिटोनित्यमिति प्रतिषेधः तस्य हि तासौ नित्यमनिट्त्वं अजन्ताधातवोऽनुदात्तइति वचनात् देवान् जेतुं त्वमसकृत् वहुधा अशक्य शक्तोपि उपदेशेत्वतइति थलीट्प्रतिषेधः शकेस्तासौनित्यानिट्त्वं शकिसुकान्तइति वचनात् मायाश्च कूटयुद्धानि सम्प्रति युद्धे सस्मर्थ ज्ञातवानसि ऋतोभारद्वाजस्येतीट्प्रतिषेधः॥ ४७॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ययाथेत्यादि। असकृत् वारंवारं द्विषामन्तं ययाथ प्राप्तवा भ॰
नसि सृजदृशजिति वेम्त्वं भूयः पुनरपि यातासि च यास्यसि च
नेमेकाजिति नेम्त्वं देवान् जेतुं शशक्थ शक्तोभूतोऽसि सृजदृश
जिति वेम् संयति युद्धे मायावङ्गीः सस्मर्थ स्मृतवानसि नेम्टतस्थप
इति नेम्॥ ४७॥

त्वं ससर्जिथ शस्त्राणि ददृष्ठारींश्च दुःसहान्। शस्त्रै
रादिथ शस्त्राणि त्वमेव महतामपि॥ ४८॥

त्वं सेत्यादि। शस्त्राणि त्वं ससर्जिथ चिप्तवानसि अरींश्च दुःस ज॰म॰
हान् युध्यतः ददृष्ठ दृष्टवानसि न पलायितोऽसि विभाषासृजि
दृशोरिति थलि विभाषेट् अनिट्पचे सृजिदृशोर्झल्यमकिति षत्व
ष्टुत्वे महतामपि मध्ये त्वमेव शस्त्राणि परकीयानि शस्त्रैः स्वैरा
दिथ जग्धवानसि इडत्यर्तिव्ययतीनामित्यदेरिट्॥ ४८॥
त्वमित्यादि। त्वं शस्त्राणि च ससर्ज्जिथ चिप्तबानसि सृजदृ भ॰
शेति वेम् दुःसहानरीन् ददृष्ठ दृष्टवानसि पूर्व्ववद्वेम्त्वात् पचेऽ
निम् शक्राजिति षङ् वर्द्धाकिदिति ऋतोरः स्वकीयैः शस्त्रैः त्वमे
वाद्वितीयः महतामिन्द्रादीनामपि शस्त्राणि आदिथ भचित
वानसि सृजदृशेत्यादौ अदवर्ज्जनान्नेम्सुमित्यादिना नियमात्
नित्यमिम्॥ ४८॥

स त्वं हनिष्यन् दुर्व्वुद्धिं कपिं व्रज ममाज्ञया। माना
ञ्जीराचसीर्म्मायाः प्रस्तावीर्म्मा न विक्रमं॥ ४९॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० त्वमित्यादि। स त्वमेवंविधः कपिं दुर्बुद्धिं चपलत्वाद्धनिष्य न्निति मदाज्ञया व्रज इन्तेरोस्यइतीट् वत्वेकाजिति सूत्रत्रयं नो दात्तं फलादेशस्य छन्दोविषयत्वात् राक्षसीं मायां मा नाञ्जीः मा न व्यक्तीकुरु अपितु व्यक्तीकुर्व्वित्यर्थः अञ्जेःसिचीतीट् विक्रमं न मा प्रस्तावीः मा न प्रादुरभूस्व स्तुसुधुञ्भ्यइतीट्॥ ४८॥

भ० त्वमित्यादि। सएवंविधः प्रसिद्धस्त्वं दुष्टमतिं कपिं हनि ष्यन् विनाशयिष्यन् ममाज्ञया व्रज गच्छ स्यस्यर्द्धनइति इम् राक्षससम्बन्धिनीर्मायामा न अञ्जीः व्यक्तीकरिष्यसि अपि त्वस्य मेव अन्जूधञ्जिव्यक्तिगतिम्रक्षणे ऊदित्वाद्वेमत्वे अन्जःसेरिमिति नित्यमिम् विक्रमं मा न प्रस्तावीः न न प्रस्तुतं करिष्यसि अपि त्व स्यमेव स्तुसुधोः सेरितीम् व्रजवदेति व्रिः माङ्योगे इमोऽभावः माटोवेति सदा टौ च॥ ४८॥

मा न सावीर्म्महास्त्राणि मा न धावीररिं रणे। वा नरं मा न संयंसीर्व्रज त्वर्णमशङ्कितः॥ ५०॥

ज०म० मानेत्यादि। रणे महास्त्राणि मा न सावीः मा न प्रसुहि मा न मुञ्चेत्यर्थः षुप्रसवैश्वर्य्ययोरित्यस्य रूपं अरिंश्च मा न धावीः मा न कम्पय अपि तु भीषयस्वेत्यर्थः पूर्व्ववदिट् वानरं मा न संयं सीः मा न वधीः यमरमेत्यादिना सगिटौ समुदाङ्भ्योयमइति तङ् न भवति तत्राकर्म्मकादिति वर्त्तते यतएवं तस्मादशङ्कित स्त्वर्णं व्रज॥ ५०॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



मानेत्यादि। महास्त्राणि मा न सावीर्न न सन्धास्यसि अपि तु सन्धानं करिष्यस्येव रणे अरिं शत्रुं मा न धावीर्न न कम्पयिष्यसि अपि त्ववश्यमेव वानरं मा न संयंसीः बद्धं न न करिष्यसि अपि त्ववश्यमेव तस्मात्त्वं निर्भयः सन् तूर्णं शीघ्रं व्रज गच्छ षुञ्‌सन्धाच्छेद पीडामन्थे धुञ्‌कम्पे आभ्यां सुस्तुधोःसेरितीम् यमोउपरतौ संपूर्व्वोबन्धनार्थः यमरमेति इम्‌सनौ सिन्ज्यन्तेत्यादौ अग्रन्यो त्वमायमदिति नमं कर्त्तुः फलवत्त्वाभावात् इति रावणोऽवोचदिति पूर्व्वेण सम्बन्धः॥ ५०॥ भ०

अनंसीच्चरणौ तस्य मन्दिरादिन्द्रजिद्व्रजन्। गते तस्मिन्नुपारंसीत् संरम्भाद्रक्षसां पतिः॥ ५१॥

अनमित्यादि। एवमुक्तइन्द्रजित् मन्दिरात् व्रजन् गमिष्यन् वर्त्तमानसामीप्ये वर्त्तमानवदिति लट् तस्य पितुश्चरणावनंसीत् नतवान् पूर्व्ववत्सगिटौ गते तस्मिन् रक्षसां पतिः रावणः संरम्भात् क्रोधात् उपारंसीत् निवृत्तवान् पूर्व्ववत्सगिटौ रमेरुपाच्चेति तिप् ॥ ५१॥ ज०म०

अनंसीदित्यादि। एवमुक्तइन्द्रजित् मन्दिरात् व्रजन् गच्छन् तस्य रावणस्य चरणौ अनंसीत् प्रणनाम तस्मिन्निन्द्रजिति गते सति रक्षसां पतीरावणः संरम्भात् क्रोधात् उपारंसीत् निवृत्तः उभयत्र यमरमणमेति इम्‌सनौ॥ ५१॥ भ०

इन्द्रजिद्विक्रमाभिज्ञोमन्वानोवानरं जितं। संस्मयिषमाणोऽगान्मायां व्यञ्जिजिषुर्द्विषः॥ ५२॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० इन्द्रेत्यादि। वानरं जितं मन्वानोऽवगच्छन् यतो विक्रमाभिज्ञः अगात् गतवान् द्विषः शत्रून् सिस्मयिषमाणः उपहसितुमिच्छन् पूर्व्ववत्सनइति तङ् मायां व्यञ्जिजिषुः व्यक्तीकर्त्तुमिच्छुः स्मिपूङर ञ्ज्वशास्वनीतोट् तत्राञ्जेर्नन्द्राइति नकारोनद्विरुच्यते॥ ५२॥

भ० इन्द्रजिदित्यादि। इन्द्रजित् स्वविक्रमाभिज्ञः अतएव वानरं जितमभिभूतं मन्वानो जानन् द्विषः शत्रोः संसिस्मयिषमाणः उपहसितुमिच्छुः सन् मायां व्यञ्जिजिषुर्व्यक्तीकर्त्तुमिच्छुः सन् अगात् गतः स्मिङपूङित्यादिना स्मिङोऽञ्जश्च सनइम् द्विष इति सम्बन्धे षष्ठी॥ ५२॥

जगत्पिपविषुर्व्वायुः कल्पान्तइव दुर्द्धरः। लोकाना शिशिषोस्तुल्यः कृतान्तस्य विपर्य्यये॥ ५३॥

ज०म० जगत्यादि। कल्पान्ते युगान्ते वायुरिव दुर्धरः जगत्पिपविषुः पवितुमुत्क्षेप्तुमिच्छुः विपर्य्यये विनाशकाले लोकानाशिशिषोः भक्षयितुमिच्छो' कृतान्तस्य तुल्योऽगादिति पूर्व्वेण सम्बन्धः पूर्व्ववदिट् ॥ ५३॥

भ० जगदित्यादि। कीदृशः जगत् भुवनं पिपविषुः पवितुमुत्क्षे प्तुमिच्छुः कल्पान्ते वायुरिव दुर्द्धरः धर्त्तुमशक्य' विपर्य्यये जगतां विनाशकाले लोकान् आशिशिषोः व्याप्तुमात्मसात्कर्त्तुमिच्छोः कृतान्तस्य यमस्य तुल्यः ईदृशइन्द्रजिदगादिति पूर्व्वेणान्वयः

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



पूङ्शोधे अपूङ्क्वाप्तिसंहत्योः आभ्यां सनः स्मिङ्पूङित्यादिना इम् आशिशिषोर्भक्षयितुमिच्छोरिति केचित् तन्न साधु सूत्रे अशू इत्यूदनुबन्धनिर्द्देशात् ॥ ५३ ॥

वने चिकरिषोर्वृक्षान् बलं जिगरिषुः कपेः । लस द्विचित्रशस्त्रौघः संग्रामोमूर्त्तिमानिव ॥ ५४ ॥

वनइत्यादि। वने वृक्षांश्चिकरिषोः विक्षेप्तुमिच्छोः कपेर्व्वलं सामर्थ्यं जिगरिषुः अपनेतुमिच्छुः इग्रोहगन्तत्वात् सनि ग्रहगुहो श्चेति प्रतिषेधे प्राप्ते इट्सनिवेति विकल्पे किरश्चपञ्चभ्यइतीट् किरतेरिटो दीर्घत्वं नेच्छन्तीति न दीर्घः लसन् शोभमानोविविधोवज्र प्रकारः शस्त्राणामायुधानामोघः समूहोयस्य समूर्तिमान् शरीरी संग्रामइव इन्द्रजिदगादिति पूर्व्वेणान्वयइत्यर्थः ॥ ५४ ॥ ज०म०

वनेइत्यादि। पुनः कीदृशः वने वृक्षान् चिकरिषोर्विक्षेप्तु मिच्छोः कपेर्व्वलं सामर्थ्यं जिगरिषुर्भक्षयितुं नाशयितुमिच्छुः लसन् दीप्यमानोविचित्रोनानाविधः शस्त्रसमूहोयस्य मूर्त्तः संग्राम इव इन्द्रजिदगादिति पूर्व्वेण सम्बन्धः कॄशविक्षेपे गॄशनिगरणे आभ्यां सनः पूर्व्ववदिम् ॥ ५४ ॥ भ०

रोदिति स्मेव चायाति तस्मिन् पक्षिगणैः शुचा । मुक्तकण्ठं हतान् वृक्षान् बन्धून् बन्धोरिवागमे ॥५५॥



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज॰म॰ रोदीत्यादि। तस्मिन्निन्द्रजिति आयात्यागच्छति सति पक्षिगणः हतान् वृक्षान् कपिनाश्रितान् शुचा शोकेन मुक्तकण्ठं सशब्दं नामग्राहं रोदितिं स्मेव रुदितवानिव नामग्रहणपूर्व्वया रोदन क्रियया व्याप्यमानत्वात् वृक्षाणां कर्म्मसंज्ञा रुदादिभ्य इतीट् बन्धून् बन्धोरिव यथा बन्धोरागमने कश्चित् बन्धून् रोदिति ॥ ५५ ॥

भ॰ रोदितीत्यादि। तस्मिन्निन्द्रजिति आयाति आगच्छति सति पक्षिगणः शुचा शोकेन मुक्तकण्ठं सशब्दं यथा स्यात्तथा हतान् हनूमता विनाश्रितान् वृक्षान् रोदिति स्मेव क्रन्दति स्मेव यथा बन्धोरागमे लोको हतान् बन्धून् रोदिति सशब्दरोदनक्रियायां रुदिःसकर्म्मकः रुद्भ्यायो हस्वस्येतीम् हनलोगतौवधे औदिला न्नेम् ॥ ५५ ॥

आश्वसीदिव चायाति तद्वेगपवनाहतं। विचित्रस्त वकोद्भासि वनं लुलितपल्लवं ॥ ५६ ॥

ज॰म॰ आश्वेत्यादि। तस्मिन्नायाति वनं तद्वेगपवनाहतं सत् आश्वसीदिव सञ्जीवितमिव लङि रूपं यतो विचित्रस्तवकोद्भासि लुलितपल्लवञ्च जातं पूर्व्ववदिट् ॥ ५६ ॥

भ॰ आश्वसीदित्यादि। तस्मिन्नायाति सति वनञ्च आश्वसीदिव संजीवितमिव श्वसञ्जुप्राणने घी रुदाद्यस्तीति ईम् कीदृशं तस्य हनूमतो वेगवायुना आहतं आश्वस्ततामाह विचित्रेण स्तवकेनोद्भासमानं ग्रहादित्वान्नेम् लुलितं मनोहरं पल्लवं यस्य स तथा ॥ ५६ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



न प्राणिषि दुराचार मायानामीशिषे न च। नेडिषे यदि काकुत्स्थं तमूचे वानरोवचः॥ ५७॥

इतीडधिकारः॥

नप्रेत्यादि। वानरस्तमागच्छन्तमिदं वचनमूचे हे दुराचार न प्राणिषि न जीवसि अनचेत्यस्य रूपं पूर्व्ववदिट् अनितेरिति णत्वं नच मायानामीशिषे नेशिता भवसि ईशः सइति इट् अधी गर्थेति कर्म्मणि षष्ठी यदि काकुत्स्थं नेडिषे न स्तौषि ईडजनोर्ध्वे चेत चकारात्तेचेतीट्। इतीडधिकारः॥ ५७॥ ज॰म॰

नप्रेत्यादि। वानरोहनूमान् तमिन्द्रजितं वचऊचे किं वच इत्याह हे दुराचार त्वं काकुत्स्थं यदि नेडिषे न स्तौषि तदा न प्राणिषि न जीवसि न च मायानामीशिषे मायानामीश्वरो न भविष्यसि माया यथेष्टं न च विनियोच्यसे इति वा कर्म्मणि षष्ठी धातूनामनेकार्थत्वात् विनियोगार्थता वर्त्तमानसामीप्येऽपि वर्त्तमानवद्विवच्यतइति न्यायात् सर्व्वत्र की अनप्रुप्राणने रुद्धोऽयइति इम् ईडलङ्स्तुतौ आभ्यां सश्चोरस्येमिति इम्। इतीडधिकारः॥५७॥ भ॰

ससैन्यश्छादयन् संख्ये प्रावर्त्तिष्ट तमिन्द्रजित्। शरैः खुरप्रैर्मायाभिः शतशः सर्व्वतोमुखैः॥ ५८॥

इदानीं विसर्जनीयस्य सइत्यधिकृत्याह। ससेत्यादि। ज॰म॰ इन्द्रजित् ससैन्यः सबलः तं वानरं सर्व्वतः शरैः क्षुरप्रैः भल्लैः

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



छादयन् मुहुः चणं मायाभिः शतशोऽनेकधा संख्ये प्रावर्त्तिष्ट प्रवृत्तः लुङि रूपं तत्र ससैन्यश्छादयन् इति विसर्जनीयस्य सइति सत्वं छकारे परे स्तुत्वं शरैः चुरप्रैरिति सत्वापवादः शर्परेखरि विसर्जनीयस्य विसर्जनीयः विसर्जनीयस्य विकारनिवृत्त्यर्थः माया भिः शतशः सर्व्वतइति वाशरीति विकल्पः विसर्जनीयःसका रोवा॥५८॥

अ० अतः परं विसर्ज्जनीयसत्वाधिकारः। सकारपदमादेशमा त्रोपलचणं समते विसन्ध्यधिकारः। ससैन्यइत्यादि। इन्द्रजित् ससैन्यः सैन्यैः सह शरैः चुरप्रैस्च सर्व्वतोमुहुर्व्वारंवारं तं वानरं छादयन् संख्ये युद्धे मायाभिः शतशः शतं शतं वारान् प्रावर्त्तिष्ट प्रवृत्तः ससैन्यश्छादयन्नित्यत्र वेःसोऽशसन्तेछतेइति विसर्गस्य सः स्तुस्तुभिरिति तालव्यत्वं शरैः चुरप्रैरित्यत्र कखपफयोर्म्न्या वित्यस्य न विषयः अशसन्तइत्यस्यानुवर्त्तनात् विभक्तिव्यत्ययेन अशसन्तयोरिति कखपफयोर्विशेषणात् परे तु शषपरयोः स्याज्जि च न स्यादिति जिह्वामूलीयनिषेधं षस्परयोर्न स्यादित्यनेन उप ध्मानीयनिषेधञ्चाहुः चुरप्रैर्म्मायाभिरित्यत्र रिचोऽवेइति विसर्ग स्य रेफः यद्यपि रवेइति कृते इष्टसिद्धिः स्यात्तथापि इचइति कृतस्य साफल्यमाह देवीदासचक्रवर्त्ती यथा क्वचिदपवादविषये ऽप्युत्सर्गोऽपि प्रवर्त्ततइति न्यायात् अभोभगोऽघोभ्योऽवेलुवित्या दिसूत्रविषये प्रवृत्त्याशङ्कानिरासः तेन हि न्यायेन दधिना पति नेत्यादिसिद्धं मायाभिः शतशइत्यत्र शसिशसित्यस्य विषयः सर्व्व तोमुहुरित्यत्र अतोऽह्व्युरित्यस्य विषयः॥५८॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



वानरः कुलशैलाभः प्रसह्यायुधशीकरं। रक्षस्पाशान् यशस्काम्यंस्तमस्कल्पानदुद्रुवत्॥ ५९॥

वानेत्यादि। वानरः कुलशैलाभः संग्रामे स्थिरत्वात् आयुधं शीकरमिव नैरन्तर्य्येण पतनात् प्रसह्याभिभूय कुःपोः कःपौ चेति जिह्वामूलीयोपध्मानीयौ रक्षस्पाशान् कुत्सितराक्षसान् पाश्ये पाशप् स्वार्थिका अपि प्रकृतितोलिङ्गवचनान्यतिवर्त्तन्ते यशस्काम्यन् आत्मनो यश इच्छन् अत्र तकारे परतोनश्छव्यप्रशानिति नुलं विसर्जनीयसकारौ च पूर्व्वस्यानुनासिकः तमस्कल्पान् ईषदसमाप्ततमसः कुःप्वोरपवादः सोपदादाविति सकारः तत्र पाशकल्पकाम्येष्विति परिगणनं अदुद्रवत् ढौकते स्म णिश्रीत्यादिना चङ्॥ ५९॥ ज॰म॰

वानरइत्यादि। वानरः कुलपर्व्वततुल्यः क्षोभरहितत्वात् आयुधं शीकरमिव नैरन्तर्य्येण पतनात् प्रसह्य सोढ्वा रक्षस्पाशान् कुत्सितरक्षांसि अदुद्रुवत् ढौकते स्म द्रावितवानित्यर्थः द्रुगतौ टौ ञिश्रिद्रुस्रुकमइति अङ् कीदृशः यशस्काम्यन् आत्मनो यश इच्छतीति लेःकाम्यक्स्वेच्छायामिति काम्यक् ततः शतृः कीदृशान् तमस्कल्पान् अन्धकारतुल्यान् त्यादेश्चानेइति कल्पः कुत्सितानि रक्षांसि रक्षस्पाशाः पाशःकुत्सायामिति पाशः पुंस्त्वमभिधानात् राजानमिच्छति राजीयतीत्यादिषु नोलुप्फेधावित्यनेनैवेष्टसिद्धौ नलोपार्थं नलोपक्यङेइति कृतं ज्ञापयति लुप्तविभक्तिकस्य विरामाश्रितकार्य्यस्यानित्यमिति तेन रक्षस्पाशादिषु भ॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



विसर्गाभावः किम्वा रक्षसाशादयोमनीषादित्वात् सिद्धाः किम्वा सेतुकखपफेवेत्यस्य योगविभागात् वाशब्दस्य व्यवस्थावाचित्वाच्च पाशकाम्यकल्पेषु विसर्गस्य नित्यं सकारः॥ ५९॥

धनुष्पाशभृतः संख्ये ज्योतिस्कल्पोरुकेशरः। दुधाव निर्नमस्कारान् राक्षसेन्द्रपुरस्कृतान्॥ ६०॥

ज०म० धनुरित्यादि। धनुष्पाशभृतः कुत्सितधनुर्धरान् राक्षसान् ज्योतिष्कल्पोरुकेसरः अग्नितुल्यवृहत्सटोवानरः इणःषइति पाशादिष्वेव विसर्जनीयस्य षत्वं दुधाव कम्पितवान् यस्मान्निर्नमस्कारान् अप्रणामान् राक्षसेन्द्रेणेन्द्रजिता पुरस्कृतान् अग्रतः स्थापितान् नमस्पुरसोर्गत्योरिति विसर्जनीयस्य सकारः इणउत्तरस्य तु विसर्जनीयस्य सएवाधिक्रियते तच्च नमःशब्दस्य साक्षात्प्रभृतिषु पाठात् पुरःशब्दस्य पुरोऽव्ययमिति गतिसंज्ञा॥ ६०॥

भ० धनुरित्यादि। वानरः संख्ये युद्धे तान् राक्षसान् दुधाव कम्पितवान् धून्ञकम्पे ठी कीदृशान् धनुष्पाशभृतः निन्दितधनुर्द्धरान् पूर्व्ववत्पाशः निर्नमस्कारान् नमस्कारवर्ज्जितान् अप्रशस्तानित्यर्थः राक्षसेन्द्रपुरस्कृतान् इन्द्रजिताऽग्रतः स्थापितान कीदृशः ज्योतिस्कल्पोरुकेशरः अग्नितुल्यवर्णविपुलसटः पूर्व्ववत् कल्पः सर्व्वत्र पूर्व्ववत् विसर्गाभावः वेःसकारोवा तस्येणात्परस्य सस्य षत्वमभिनिष्पतन्त्यद्रत्यत्र व्याख्यातं॥ ६०॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



स्वामिनोनिष्क्रयं गन्तुमाविष्कृतबलः कपिः। रराज समरे शत्रून् घ्नन् दुष्कृतबहिष्कृतः॥ ६१॥

स्वामीत्यादि। स्वामिनः सुग्रीवस्य निष्क्रयमानृण्यं गन्तुं शत्रून् घ्नन् विनाशयन् कपिः समरे रराज आविष्कृतबलः प्रकटितसामर्थ्यः दुष्कृतबहिष्कृतः दुष्कृतं पापं बहिःकृतमनेनेति वाहिताग्न्यादिषु द्रष्टव्यं सर्व्वत्र इदुदुपधस्य चेत्यनेनाप्रत्ययविसर्जनीयस्य षत्वं॥ ६१॥ ज०म०

स्वामीत्यादि। कपिः समरे संग्रामे शत्रून् घ्नन् विनाशयन् रराज दीप्यते स्म कीदृशः स्वामिनः सुग्रीवस्य निष्क्रयमानृण्यं गन्तुं आविष्कृतं प्रकाशितं बलं सामर्थ्यं येन तादृशः दुष्कृतेन पापेन बहिष्कृतस्त्यक्तः निष्पाप इत्यर्थः दुष्कृतं बहिष्कृतं येनेति वा पूर्व्वनिपातस्यानियमात् क्वचित् क्तान्तस्य परनिपातः आहिताग्न्यादेर्व्वेति परः दुर्न्निरावीर्व्वहिःप्रादुसतुरांषःकखपफेइति परसूत्रदर्शनात् निष्क्रयादिषु षेतुकखपफेवेत्यस्य वाशब्दस्य व्यवस्थावाचित्वात् नित्यं सकारोबाध्यः विकल्पेऽपि न क्षतिः दुःखं दुष्खञ्चेति द्विरूपदर्शनात् मूर्द्धन्यषत्वं पूर्व्ववत्॥ ६१॥ भ०

चतुष्काष्ठं क्षिपन् वृक्षान् तिरस्कुर्व्वन्नरीन्रणे। तिरस्कृतदिगाभोगोददृशे बहुधा भ्रमन्॥ ६२॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० चतुरित्यादि। चतस्रः काष्ठा दिशो यस्मिन् क्षेपण इति क्रिया विशेषणं पूर्व्ववत् षत्वं चतसृषु दिक्षु वृक्षान् रणे भ्रमन् एकोऽपि वहुधा दृदृशे दृष्टः कपिः क्षिपन्निति तौदादिकः अरींस्तिरस्कुर्व्वन् अभिभवन् तिरस्कृतदिगाभोगः अपनीतदिग्विस्तरः तिरसोन्यत रस्यामिति पक्षे षत्वं ॥ ६२ ॥

भ० चतुरित्यादि। सएकः कपीरणे भ्रमन् वहुधा ददृशे जनै रित्यर्थात् किङ्कुर्व्वन् चतुष्काष्ठं वृक्षान् क्षिपन् चतस्रः काष्ठा दिश आधारत्वेन यस्मिन् क्षेपणे क्रियाविशेषणमिदं चतसृषु दिक्षु वृक्षान् क्षिपन्नित्यर्थः अरीन् शत्रून् तिरस्कुर्व्वन् अभिभवन् तिर स्कृतदिगाभोगः आच्छादितदिग्विस्तारः पूर्व्ववद्विभाषया विस र्गस्य सकारः ॥ ६२ ॥

द्विष्कुर्व्वतां चतुष्कुर्व्वन्नभिघातं नगैर्द्विषां। वहिष्क रिष्यन् संग्रामाद्रिपून् ज्वलनपिङ्गलः ॥ ६३ ॥

ज०म० द्विष्कुर्व्वेत्यादि। असौ कपिराटीदिति वक्ष्यमाणेन सम्बन्धः कीदृशः द्विष्कुर्व्वतां द्वौ वारावभिघातं कुर्व्वतां द्विषां चतुष्कुर्व्वन् चतुरोवारान् नगैर्वृक्षैरभिघातं कुर्व्वन् द्विस्त्रिश्चतुरिति कृत्वोऽर्थ इति विसर्जनीयस्य वा षत्वं अरीन् संग्रामाद्वहिष्करिष्यन् अपने ष्यामीति इसुसोः सामर्थ्य इति विसर्जनीयस्य षत्वं पक्षे सामर्थ्यं चात्र ह्यपेक्षानैकार्थीभावः वहिष्करिष्यन्निति द्वयोः परस्परव्यपेक्षत्वात् ॥ ६३ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



द्विरित्यादि। असौ कपिराटौदित्यग्रिमश्लोकेनान्वयः किङ्कुर्व्वन् द्वौ वारौ अभिघातं कुर्व्वतां द्विषां नगैः पर्व्वतैश्चतुरोवारान् अभिघातं कुर्व्वन् द्विस्त्रिश्चतुःक्त्वोऽर्थे इति सूत्रेण विभाषया कस्कादित्वाद्रूपद्वयमिति परः स्रमते इत्लेपाणावित्यादिना सात्त्वादित्वात् वा समासः। समासे सेतुकखेति रूपद्वयं निर्व्विरोधं एवमसमासेऽपि कखपफेवेत्यस्य योगविभागः कार्य्यः समासपच्चे षत्वं व्याख्यातमेव असमासेऽपि क्तित्वादित्यस्य योगविभागात् षत्वं मनीषादित्वाद्वा संग्रामात् अरीन् शत्रून् वहिष्करिष्यन् पूर्व्ववत् वेःषः षत्वञ्च ज्वलनवत् वह्निवत् पिङ्गलः॥ ६३॥ भ०

ज्योतिष्कुर्व्वन्निवैकोऽसावाटीत् संख्ये परार्द्धवत्।
तमनायुष्करं प्राप शक्रशत्रुर्द्धनुष्करः॥ ६४॥

ज्योतिरित्यादि। एकोऽपि ज्वलनपिङ्गलः ज्योतिष्कुर्व्वन्निव अग्निं दीपयन्निव पूर्व्ववत्पच्चे विसर्जनीयस्य षः परार्द्धवत् दिव्य इव परार्द्धो द्युलोकः ब्रह्माण्डसम्बन्धिनऊर्ध्वभागस्योत्कृष्टत्वात् तत्र भवइति परावराधमेति यत् संख्ये संग्रामे आटीत् परिचक्राम इटइटीति सिचोलोपः तं वानरमनायुष्करं प्राणापहारिणं शक्रशत्रुरिन्द्रजित् प्राप प्राप्तवान् धनुष्करः धनुः करे यस्येति नित्यं समासेत्यादिना षत्वं॥ ६४॥ ज०म०

ज्योतिरित्यादि। एकोऽसौ कपिः संख्ये परार्द्धवत् अत्युत्कृष्टसंख्याविशेषावच्छिन्नवत् ज्योतिष्कुर्व्वन् आटीत् परिचक्राम भ०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



परार्द्धवत् दिव्यवदिति जयमङ्गला तं कपिं शक्रशत्रुरिन्द्रजित् प्राप कीदृशं न आयुः करोतीत्यनायुष्करं कीदृशः धनुः करे यस्य स तथा पूर्व्ववद्वेःसः षत्वञ्च इसुसन्तयोः कखपफयोर्न्नित्यमितिपरः ॥ ६४ ॥

अस्यन्नरुष्करान् वाणान् ज्योतिष्करसमद्युतिः।
यशस्करोयशस्कामं कपिं वाणैरताडयत्॥ ६५ ॥

ज॰म॰ अस्यन्नित्यादि। वाणानरुष्करान् व्रणजनकान् दिवाविभेत्या दिना टः अस्यन् क्षिपन् ज्योतिष्करसमद्युतिः ज्योतिष्करणशीलः आदित्यः कञोहेविल्यादिना टः तेन तुल्यद्रत्यर्थः पूर्व्ववत् षत्वं यशस्करोयशोजननशीलः इन्द्रजिद्यशस्कामं यशसि कामोऽस्येति तं कपिं वाणैरवाकिरत् अताडयत् अतः ककमीत्यादिना न व्यय विसर्जनीयस्य सत्वं॥ ६५ ॥

भ॰ अस्यन्नित्यादि। इन्द्रजिदरुष्करान् व्रणजनकान् वाणान् अस्यन् क्षिपन् वाणैः कपिमताडयत् ज्योतिष्करस्य सूर्य्यस्य समा द्युतिर्यस्य यशस्करोयशोजननशीलः कीदृशं कपिं यशस्कामं यशसि कामोयस्य सर्व्वत्र पूर्व्ववद्वेःस इलात् षत्वञ्च अरुर्ज्योतिर्यशस्य करोतीति स्वकृष्टः॥ ६५ ॥

घकाराधसदं नासौ चरन् वियति मारुतिः। मर्म्माविद्भिस्तमस्काण्डैर्व्विध्यमानोऽप्यनेकधा॥ ६६ ॥

इति सत्वाधिकारः।

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



चकारेत्यादि। असौ मारुतिर्वियति चरन् अधस्तद् पृथिव्यां पदं न चकार अधस्तदमिति मयूरव्यंसकादित्वात्सः कस्कादिषु चेति षत्वं मर्म्माणि विध्यन्तीति क्विप् नहिवृतीत्यादिना पूर्व्वपदस्य दीर्घत्वं। इति षत्वसत्वाधिकारः॥ ६६॥ ज॰म॰

चकारेत्यादि। असौ मारुतिर्हनूमान् वियति आकाशे चरन् मर्म्माणि विध्यद्भिः कालायसघटितत्वात् तमस्तुल्यैः काण्डैः शरैरनेकधाविध्यमानस्ताड्यमानोऽपि अधस्तद् पृथिव्यां पदं न चकार पूर्व्ववद्वेः सः अधःशिरसोःपदे तमसस्तु काण्डे नित्यं विसर्गस्य सकारइति परः। इति विसर्ज्जनीयसत्वाधिकारः॥ ६६॥ भ॰

पुरुहूतद्विषोधूर्षु युक्तानत्वस्य वाजिनः। आयूंषि त्वक्षु निर्भिद्य प्राभञ्जनिरमोचयत्॥ ६७॥

इतः प्रभृति अपदान्तस्य मूर्द्धन्यइत्यधिकृत्याह। पुरुहूतेत्यादि। पुरुहूतद्विषइन्द्रजितः सम्बन्धिनोयानस्य रथस्य धूर्षु युक्तान् वाजिनः त्वक्षु चर्म्मसु निर्भिद्य प्राभञ्जनिर्मारुतिरायूंषि जीवितानि अमोचयत् त्याजितवान् धूर्षु त्वक्ष्विति आदेशप्रत्यययोरिति षः प्रत्ययसकारत्वात् तत्र हि इण्कोरिति वर्त्तते परेण च णकारेण प्रत्याहारः आयूंषीति नुम्विसर्जनीयेत्यादिना सहेःसाडस्सः इति छन्दोविषयत्वान्नोदाहृतं ततः छन्दसि सहइति ण्विप्रत्ययस्य विधानात् एवञ्च पृतनाषाड्विषइति पाठान्तरमयुक्तं॥६७॥ ज॰म॰

अथ मूर्द्धन्यषत्वाधिकारः। पुरुहूतेत्यादि। प्रभञ्जनस्यापत्यं हनूमान् पुरुहूतद्विषः शक्रशत्रोर्मेघनादस्य यानस्य रथस्य धूर्षु भ॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भारेषु युक्तान् वाजिनोऽश्वान् त्वचु चर्म्मसु निर्भिद्य आयूंषि अमो चयत् त्याजयामास घोऽज्ञौञ्जेरिति सूत्रे उपसर्ज्जनीभूतार्थाअपि शब्दार्थादयोगृह्यन्ते इति तु प्राप्त्यर्थयोर्निवहो: प्रतिषेधेन ज्ञापि तं तेन वाजिनां प्रयोज्यानां कर्म्मत्वं अत्र हि मुचिर्म्मुक्तिपूर्व्विकायां गतौ वर्त्तते अतएवामोचयत् मोचनेन भवान्तरमगमयदित्यर्थः क्विलादित्यादिना धूर्ष्वित्यत्र रेफात् आयूंषीत्यत्र नुविव्यवधानेऽपि त्वचिष्वित्यत्र ककारात् सस्य षत्वं पुरुहूतेत्यत्र पृतनाषाडिति क्वचित्पाठः ॥ ६७ ॥

सुषुपुस्ते यदा भूमौ रावणिः सारथिं तदा। आह र्त्तुमन्यानशिषत् प्रोषितत्रासकर्कशः ॥ ६८ ॥

ज०म० सुष्वित्यादि। ते यदा भूमौ सुषुपुः निपेतुः आदेशसकार त्वात्पूर्व्ववत् षत्वं तदा रावणिरन्यानश्वानाहर्त्तुमानेतुं सारथि मशिषत् आदिष्टवान् सर्तिशास्तीत्यङ् शासइदुङ्हलोरिति इकारः शासिवसीति षत्वं प्रोषितत्रासः प्रोषितात्क्रमादुपगत भयः कर्कशश्च रौद्रः प्रोषितइति यजादित्वात्सम्प्रसारणं षत्वं पूर्व्ववत् ॥ ६८ ॥

भ० सुषुपुरित्यादि। ते वाजिनोयदा भूमौ सुषुपुः निपेतुः ञिष्व पोशये भ्वाद्यादिष्णइति मूर्द्धन्यस्य दन्त्यत्वं ततः क्विलादिति सस्य कृतत्वात् षत्वं तदा तस्मिन् काले रावणस्यापत्यमिन्द्रजित् अन्या नश्वानाहर्त्तुं सारथिं अशिषत् आदिष्टवान् कीदृशः प्रोषितोऽपग

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



तस्यासीयस्येति बहुव्रीहिः सचासौ कर्कशस्येति पश्चात्कर्मधारयः शोषितत्वासिन कर्कशोवा प्रासेः शासशिद्युदिति ङः शासुङिति इत् वसेः चुधवसेति क्तस्य इम् यहस्वपाद्योरिति जिः किलादि त्यादौ शासवसेति षत्वं ॥ ६८ ॥

प्रतुष्टुषुः पुनर्युद्धमासिषञ्जयिषुर्भयं। आतस्थौ रथमात्मीयानुत्सिसाहयिषन्निव ॥ ६९ ॥

प्रतीत्यादि। अस्मा आनीतादति पुनरपि युद्धं प्रतुष्टुषुः प्रस्तो तुमारब्धुमिच्छुः सन् अज्झनगमांसनीति दीर्घः सनाशंसभिक्षउः नलोकेति षष्ठीप्रतिषेधः रथमातस्थौ आरूढवान् भयमासिषञ्ज यिषुः संश्लेषयितुमिच्छुः हनूमता तत्र स्तौतेः सनि षत्वभूते सञ्जेश्च स्तौतिण्योरिति अभ्यासादुत्तरस्य षत्वं आत्मीयान् भृत्यानुत्सि साहयिषन्निव उत्साहयितुमिच्छन्निव युध्यध्वमिति स्तौतीत्यादिना षत्वे प्राप्ते सःस्विदित्यादिना षकारस्य सत्वं ॥ ६९ ॥ ज०म०

प्रतुष्टुषुरित्यादि। इन्द्रजित् पुनः सज्जीभूतं रथमातस्थौ भयं आश्रितवान् कीदृशः युद्धं प्रतुष्टुषुः प्रस्तोतुमारब्धुमिच्छुः भयं आसिषञ्जयिषुः हनूमतोभयमासञ्जयितुं संश्लेषयितुं इच्छुः आत्मी यान् अनुचरान् उत्सिसाहयिसन्निव उत्साहयितुमिच्छन्निव त्रिस्तोःखेरित्यादिना षत्वभूते सनि खेः षत्वं तत्रैव सहवर्ज्जनात् उत्सिसाहयिषन्नित्यत्र न षत्वं ॥ ६९ ॥ भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भारेषु युक्तान् वाजिनोऽश्वान् त्वत्तु चर्म्मसु निर्भिद्य आयूंषि अमो चयत् त्याजयामास घोऽन्नौत्रेरिति सूत्रे उपसर्ज्जनीभूतार्थोऽपि शब्दार्थादयोगृह्यन्ते इति तु प्राप्त्यर्थयोर्निवहो: प्रतिषेधेन ज्ञापितं तेन वाजिनां प्रयोज्यानां कर्म्मत्वं अत्र हि मुचिर्म्मुक्तिपूर्व्विकायां गतौ वर्त्तते अत एवामोचयत् मोचनेन भवान्तरमगमयदित्यर्थः किलादित्यादिना धूर्व्वित्यत्र रेफात् आयूंषीत्यत्र नुविव्यवधानेऽपि त्वच्वित्यत्र ककारात् सस्य षत्वं पुरुहूतेत्यत्र पृतनाषाडिति क्वचित्पाठः ॥ ९७ ॥

सुषुपुस्ते यदा भूमौ रावणिः सारथिं तदा। आहर्त्तुमन्यानशिषत् प्रोषितत्रासकर्कशः ॥ ९८ ॥

ज०म० सुप्वित्यादि। ते यदा भूमौ सुषुपुः निपेतुः आदेशसकारत्वात्पूर्व्ववत् षत्वं तदा रावणिरन्यानश्वानाहर्त्तुमानेतुं सारथिमशिषत् आदिष्टवान् सर्तिशास्तीत्यङ् शासइदङ्हलोरिति इकारः शासिवसीति षत्वं प्रोषितत्रासः प्रोषिताद्गमादुपगतभयः कर्कशश्च रौद्रः प्रोषितइति यजादित्वात्सम्प्रसारणं षत्वं पूर्व्ववत् ॥ ९८ ॥

भ० सुषुपुरित्यादि। ते वाजिनोयदा भूमौ सुषुपुः निषेदुः ञिष्वपोशये ध्वाद्यादिषणइति मूर्द्धन्यस्य दन्त्यत्वं ततः किलादिति सस्य कृतत्वात् षत्वं तदा तस्मिन् काले रावणस्यापत्यमिन्द्रजित् अन्यानश्वानाहर्त्तुं सारथिं अशिषत् आदिष्टवान् कीदृशः प्रोषितोऽपग

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



तस्यासीयस्येति बहुव्रीहिः सचासौ कर्कशस्येति पश्चात्कर्मधारयः शोषितश्चासिन कर्कशोवा श्रासेः शाशसिह्यदिति ङः शासुङिति इत् वसेः शुधवसेति क्तस्य इम् ग्रहस्वपाद्योरिति जिः क्विलादि त्यादौ शासवसेति षत्वं ॥ ६८ ॥

प्रतुष्टुषुः पुनर्युद्धमासिषञ्जयिषुर्भयं। आतस्थौ रथमात्मीयानुत्सिसाहयिषन्निव ॥ ६९ ॥

प्रत्तित्यादि। अस्वा आनीतादृति पुनरपि युद्धं प्रतुष्टुषुः प्रस्तो तुमारब्धुमिच्छुः सन् अज्भनगमांसनीति दीर्घः सनाशंसभिच्छङः नलोकेति षष्ठीप्रतिषेधः रथमातस्थौ आरूढवान् भयमासिषञ्ज यिषुः संश्लेषयितुमिच्छुः हनूमता तत्र स्तौतेः सनि षत्वभूते सञ्जेश्च स्तौतिण्योरिति अभ्यासादुत्तरस्य षत्वं आत्मीयान् भृत्यानुत्सि साहयिषन्निव उत्साहयितुमिच्छन्निव युध्यध्वमिति स्तौतीत्यादिना षत्वे प्राप्ते सःस्विदित्यादिना षकारस्य सत्वं ॥ ६९ ॥ ज॰म॰

प्रतुष्टुषुरित्यादि। इन्द्रजित् पुनः सज्जीभूतं रथमातस्थौ आश्रितवान् कीदृशः युद्धं प्रतुष्टुषुः प्रस्तोतुमारब्धुमिच्छुः भयं आसिषञ्जयिषुः हनूमतोभयमासञ्जयितुं संश्लेषयितुं इच्छुः आत्मी यान् अनुचरान् उत्सिसाहयिसन्निव उत्साहयितुमिच्छन्निव ञिस्तोःखेरित्यादिना षत्वभूते सनि खेः षत्वं तत्रैव सहवर्ज्जनात् उत्सिसाहयिषन्नित्यत्र न षत्वं ॥ ६९ ॥ भ॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



बलान्यभिषिषिचन्तं तरुभिः कपिवारिदं। विजिगीषुः पुनश्चक्रे व्यूहं दुर्ज्जयमिन्द्रजित्॥ ७०॥

ज०म० बलेत्यादि। कपिवारिदं कपिं वारिदमिव बलान्यभिषिषिचन्तं तरुभिः अभिषेक्तुं छादयितुमिच्छन्तं स्थादिष्वभ्यासेत्यादिना तु सकारस्याभ्याससकारस्य च षत्वं तमेवंविधं कपिं विजिगीषुर्विजेतुमिच्छुः इन्द्रजित् सन्लिटोर्ज्जेरिति कुत्वं पुनर्व्यूहं बलसन्निवेशं दुर्जयाख्यं चक्रे हस्त्यश्वादिसैनिकानां मण्डलस्थित्या विरच्यते॥ ७०॥

भ० बलानीत्यादि। तरुभिर्व्वलानि अभिषिषिचन्तं छादयितुमिच्छन्तं अतएव कपिं वारिदमिव जेतुमिच्छुरिन्द्रजित् पुनर्व्यूहं बलविन्यासं चक्रे दुर्ज्जयं जेतुमशक्यं व्यूहस्य कपेर्व्वा विशेषणं अभिपूर्व्वसिचः सनः षत्वे ञिस्तोःखेरिति नियमेन क्रिलादित्यादिना गीकइति इत्यादिना च प्राप्तं षत्वं वाध्यते प्रकृतेर्व्वाधितत्वात् गीकइत्यादिना खेःसकारस्यापि न षत्वमिति केचित् ञिस्तोःखेरित्यनेन खिनिमित्तं षत्वं वाध्यते तेन प्रकृतेः सस्य न षत्वं खेस्तु गीकइत्यादिना षत्वं भवत्येवेति केचित् वस्तुतस्तु षत्वभूते सनि खिनिमित्तस्यैव षस्य निषेधः नतु गिनिमित्तस्य तेनोभयत्र गीकइति षत्वं॥ ७०॥

अभिष्यन्तः कपिं क्रोधादभ्यषिञ्चन्निवात्मनः। संप्रहारसमुद्भूतैरक्तैः कोष्णैररुश्च्युतैः॥ ७१॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अभीत्यादि। राक्षसाः क्रोधादात्मनोऽभिष्यन्तः अन्तं जं०म०
नयन्तः षोऽन्तकर्म्मणीत्यस्य शतरि ओतःश्यनीत्योकारलोपः उप
सर्गादिति षत्वं सम्प्रहारसम्भूतैः रक्तैः कोष्णैरीषदुष्णैः अस्रुतैः
व्रणान्निर्गतैः कपिमभ्यषिञ्चन्निव अभिषिक्तवन्त इव लङि रूपं
प्राक्सितादड्व्यवायेऽपीति षत्वं॥ ७१॥

अभीत्यादि। राक्षसाः क्रोधादात्मनोऽभिष्यन्तोऽन्तं नयन्तः भ०
सम्यक् प्रहारजातैः ईषदुष्णैर्व्रणच्युतैः रक्तैः कपिं अभ्यषिञ्चन्निव
अभिषिक्तवन्त इव षोयनाशे शतृ; अभिषोसिचोर्गीकःस्तुस्तुभषो
इत्यादिना षत्वं॥ ७१॥

**संग्रामे तानधिष्ठास्यन्निषद्य पुरतोरणं। अविषी**
**दन्नवष्टब्धान् व्यष्टभ्नान्नरविष्वणान्॥ ७२॥**

संग्रामइत्यादि। ये प्राणिनः अभिषिञ्चन्ति तान्नरविष्वणान् जं०म०
राक्षसान् संग्रामे अधिष्ठास्यन् अस्वतन्त्रीकरिष्यन् कपिः उपसर्गा
दिति षत्वं पुरतोरणं पुरद्वारं व्यष्टभ्नात् आश्रितवान् निषद्य
तत्रैव पुरतोरणे स्थित्वा प्राणिनोमाप्रविक्षुरिति अविषीदन्
विषादमगच्छन् निषद्य विषीदन्निति सदिरप्रतेरिति षत्वं अवष्ट
ब्धान् अविदूरान् अवाचालम्बनाविदूर्य्ययोरिति षत्वं व्यष्टभ्ना
दिति अड्व्यवायेस्तम्भेरिति षत्वं स्तम्भुस्तुम्भुइत्यादिना श्नाप्रत्ययः
सशब्दायामभ्यवहारक्रियायां स्वनतिर्वर्त्तते नराणां विष्वणाइति
सः नरान् सशब्दमभ्यवहरन्तइत्यर्थः वेश्वस्वनोसभोजनइति षत्वं
॥ ७२॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० संग्रामइत्यादि। हनूमान् संग्रामे निषद्य स्थित्वा अविषीदन् विषसो न भवन् तान् राक्षसान् अधिष्ठास्यन् अभिभविष्यन् पुरतोरणं पुरीवहिर्द्वारं व्यष्टभ्नात् आक्रान्तवान् पुरतोरणमधिष्ठास्यन् तान् व्यष्टभ्नादिति वा कीदृशान् अवष्टभ्नान् निकटस्थान् ऊर्ज्जितान् वा नरविष्वणान् मनुष्यं भुञ्जानान् अधिस्थानिविषदविस्तम्भान्नार्थविस्वनां गीकइत्यादिना षत्वं अवष्टभ्नानिति गीकइत्यादौ अवस्वनेत्यस्य योगविभागार्थात् क्वचिदन्नार्थादन्यत्रापि षत्वं मनीषादित्वाद्वा अत्रात्तम्भैरोर्ज्जित्याश्रयनिकटभोजनेष्विति परः॥ ७२॥

विषह्य राक्षसाः क्रुद्धाः शस्त्रजालमवाकिरन्। यन्न व्यसहतेन्द्रोऽपि कपिः पर्य्यषहिष्ट तत्॥ ७३॥

ज०म० विषेत्यादि। विषह्य सोढ्वा कपिचेष्टितमित्यर्थात् सात्पदाद्योरिति प्रतिषेधे प्राप्ते परिनिविभ्यइति षत्वं राक्षसाः क्रुद्धाः शस्त्रजालमवाकिरन् विक्षिप्तवन्तः लङि रूपं यच्च शस्त्रजालमिन्द्रोऽपि न व्यषहत न सोढवान्सः लङि रूपं तत्कपिः पर्य्यसहिष्ट लुङि रूपं सहेःसिवादीनामित्यादिना विभाषा षत्वं॥ ७३॥

भ० विषह्येत्यादि। राक्षसाविषह्य सोढ्वा हनूमतः प्रहारमित्यर्थात् क्रुद्धाः सन्तः शस्त्रजालं शस्त्रसमूहं नैरन्तर्य्येण सर्व्वतोविक्षेपात् जालमिव अवाकिरन् विक्षिप्तवन्तः ध्वां रूपं यत्शस्त्रजालं

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



इन्द्रोऽपि न व्यसहत न विसोढवान् कपिस्तत् शस्त्रजालं पर्य्यस हिष्ट परिसोढवान् व्यां रूपं विषह्येत्यत्र गीकद्दत्यादिना षत्वं व्यसहतेत्यत्र पर्य्यसहिष्टेत्यत्र च निविपरिसन्जेत्यादिना पाक्षिक षत्वं ॥ ७३ ॥

विष्यन्दमानरुधिरो रक्तविस्यन्दपाटलान्। विष्क न्तॄन् परिघेणाहन्नविस्कन्ता कपिर्द्विषः ॥ ७४ ॥

विष्येत्यादि। विष्यन्दमानरुधिरः क्षरद्रक्तः कपिः परिघेण अहन् ताडितवान् द्विषः शत्रून् रक्तविस्यन्दपाटलान् रक्तस्रुतिलो हितान् अनुपर्य्यभिनिविभ्यः स्यन्दतेरिति विभाषाषत्वं रक्तस्या प्राणित्वात् विष्कन्तॄन् विविधं स्कन्तुं गन्तुं शीलमेषामिति तॄन् अवि स्कन्ता कपिः अगमनशीलः स्थानशील इत्यर्थः वेःस्कन्देरनिष्ठा यामिति विभाषा षत्वं ॥ ७४ ॥ ज०स०

विष्येत्यादि। कपिर्द्विषः शत्रून् परिघेण अहन् ताडितवान् कीदृशः विष्यन्दमानरुधिरः क्षरद्रक्तः अविस्कन्ता अविचलन शीलः कीदृशान् रक्तविस्यन्दपाटलान् रक्तस्रुतिलोहितान् विष्कन्तॄन् विविधगतिशीलान् स्यन्दूङ्स्रुतौ स्कन्दिरोशोषणे गत्यां अनयोः सस्यविस्कम्भानिर्व्विखित्यादिना पक्षे षत्वं स्यन्देः कर्तृ रक्तं तेनाप्राणिकर्तृकत्वं स्कन्देस्तृन् झपझसोरिति दस्य तः सवर्गात् सवर्गस्य सवर्गेलुग्वेति सूत्रेण पक्षे दलोपमाङ्गः परे स्रमते मनीषादित्वात्तद्रूपमपि ॥ ७४ ॥ भ०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० संग्रामइत्यादि। हनूमान् संग्रामे निषद्य स्थित्वा अविषीदन् विषण्णो न भवन् तान् राक्षसान् अधिष्ठास्यन् अभिभविष्यन् पुरतोरणं पुरीवहिर्द्वारं व्यष्टभ्नात् आक्रान्तवान् पुरतोरणमधिष्ठास्यन् तान् व्यष्टभ्नादिति वा कीदृशान् अवष्टब्धान् निकटस्थान् ऊर्ज्जितान् वा नरविष्वणान् मनुष्यं भुञ्जानान् अधिस्थानिषदविस्तम्भान्नार्थविस्वनां गोकइत्यादिना षत्वं अवष्टब्धानिति गोकइत्यादौ अवस्वनेत्यस्य योगविभागार्थात् क्वचिदन्नार्थादन्यत्रापि षत्वं मनीषादित्वाद्वा अत्रात्तम्भेरोर्ज्जित्याश्रयनिकटभोजनेष्विति परः॥ ७२॥

विषह्य राक्षसाः क्रुद्धाः शस्त्रजालमवाकिरन्। यन्न व्यसहतेन्द्रोऽपि कपिः पर्य्यषहिष्ट तत्॥ ७३॥

ज०म० विषेत्यादि। विषह्य सोढ्वा कपिचेष्टितमित्यर्थात् सात्पदाद्योरिति प्रतिषेधे प्राप्ते परिनिविभ्यइति षत्वं राक्षसाः क्रुद्धाः शस्त्रजालमवाकिरन् विक्षिप्तवन्तः लङि रूपं यच्च शस्त्रजालमिन्द्रोऽपि न व्यषहत न सोढवान्सः लङि रूपं तत्कपिः पर्य्यसहिष्ट लुङि रूपं सहेःसिवादीनामित्यादिना विभाषा षत्वं॥ ७३॥

भ० विषह्येत्यादि। राक्षसाविषह्य सोढ्वा हनूमतः प्रहारमित्यर्थात् क्रुद्धाः सन्तः शस्त्रजालं शस्त्रसमूहं नैरन्तर्य्येण सर्व्वतोविक्षेपात् जालमिव अवाकिरन् विक्षिप्तवन्तः ध्यां रूपं यत्शस्त्रजालं

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



इन्द्रोऽपि न व्यसहत न विसोढवान् कपिस्तत् शस्त्रजालं पर्य्यस हिष्ट परिसोढवान् ग्यां रूपं विषह्येत्यत्र गीकड्त्यादिना षत्वं व्यसहतेत्यत्र पर्य्यसहिष्टेत्यत्र च निविपरिसन्जेत्यादिना पाक्षिक षत्वं ॥ ७३ ॥

विष्यन्दमानरुधिरो रक्तविस्यन्दपाटलान्। विष्क न्तॄन् परिघेणाहन्नविस्कन्ता कपिर्द्विषः ॥ ७४ ॥

विष्येत्यादि। विष्यन्दमानरुधिरः चरद्रक्तः कपिः परिघेण हन् ताडितवान् द्विषः शत्रून् रक्तविस्यन्दपाटलान् रक्तस्रुतिलो हितान् अनुपर्य्यभिनिविभ्यः स्यन्दतेरिति विभाषाषत्वं रक्तस्या प्राणित्वात् विष्कन्तॄन् विविधं स्कन्तुं गन्तुं शीलमेषामिति तृन् अवि स्कन्ता कपिः अगमनशीलः स्थानशीलइत्यर्थः वेःस्कन्देरनिष्ठा यामिति विभाषा षत्वं ॥ ७४ ॥ जं॰स॰

विष्येत्यादि। कपिर्द्विषः शत्रून् परिघेण अहन् ताडितवान् कीदृशः विष्यन्दमानरुधिरः चरद्रक्तः अविस्कन्ता अविचलन शीलः कीदृशान् रक्तविस्यन्दपाटलान् रक्तस्रुतिलोहितान् विष्कन्तॄन् विविधगतिशीलान् स्यन्दूङ्स्रुतौ स्कन्दिरोशोषणे गत्यां अनयोः सस्य विस्कम्भानिर्व्विविखित्यादिना पक्षे षत्वं स्यन्देः कर्तृ रक्तं तेनाप्राणिकर्तृकत्वं स्कन्देस्तृन् झपञ्झसोरिति दस्य तः सवर्गात् सवर्गस्य सवर्गेलुग्वेति सूत्रेण पक्षे दलोपमाऊः परे स्मते मनीषादित्वात्तद्रूपमपि ॥ ७४ ॥ भ॰



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



मेघनादः परिष्कन्दन् परिस्कन्दन्तमाश्वरिं। अब
ध्नादपरिस्कन्दं ब्रह्मपाशेन विस्फुरन्॥ ७५॥

ज॰म॰ मेघेत्यादि। मेघनाद इन्द्रजित् परिष्कन्दन् परितोभ्रमन् परिस्कन्दन्तम्परिभ्रमन्तमरिं कपिं ब्रह्मपाशेन ब्रह्मणा दत्तेन पाशेनशीघ्रमबध्नात् बद्धवान् लङि श्नाप्रत्यये रूपं परेश्चेति वा षत्वं अपरिस्कन्दं अप्राच्यभरतत्वात् तेन परिस्कन्दः प्राच्यभरते ष्विति निपातनं विस्फुरन् द्वेषादुद्गच्छन्नित्यर्थः स्फुरतिस्फुलत्यो रिति विभाषाषत्वं॥ ७५॥

भ॰ मेघेत्यादि। मेघनादइन्द्रजित् परिष्कन्दन् परितोभ्रमन् परिस्कन्दन्तं परितोभ्रमन्तमरिं हनूमन्तं ब्रह्मपाशेन आशु शीघ्रं अपरिस्कन्दं निश्चलं यथा स्यात्तथा अबध्नात् बद्धवान् न विद्यते परिस्कन्दश्चलनं यस्मादबन्धनात् क्रियाविशेषणं अरेर्विशे षणमिति केचित् विस्फुरन् कोपात् हर्षाद्वा कम्पमानः परिस्कन्द विस्फुरोः सत्व विस्कभ्नानिर्वैत्यादिना विभाषया षत्वं॥ ७५॥

विस्फुलद्भिर्गृहीतोऽसौ निष्फुलः पुरुषाशनैः। विष्क म्भितुं समर्थोऽपि नाचलद्ब्रह्मगौरवात्॥ ७६॥

ज॰म॰ विष्फुलेत्यादि। असौ कपिः पुरुषाशनैः राचसैः विस्फुलद्भिः हर्षाच्चलद्भिर्गृहीतः निष्फुलः सतेजाः निस्फुलेति विभाषा षत्वं

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



विष्कम्भितुं व्यापारितुं समर्थोऽपि ब्रह्मगौरवान्नाचलत् न चलितः माभून्मोघो ब्राह्मः पाश इति वेष्कम्नातेरिति षत्वं ॥ ७६ ॥

विष्फुलेत्यादि। असौ कपिर्विष्फुलद्भिर्हर्षाच्चलद्भिः पुरुषाशनैः राक्षसैः गृहीतोऽपि निष्फुलो निष्कम्पः विष्कम्भितुं व्यावर्त्तितुं समर्थोऽपि ब्रह्मगौरवात् नाचलत् न चलितवान् विस्कम्नेत्यादिना विष्कम्भः षत्वं नित्यं स्फुरस्फुलोस्तु विभाषितं ॥ ७६ ॥ भ०

## क्षषीढ्वं भर्त्तुरानन्दं मा न प्रोढ्वं द्रुतं वियत्। वानरं नेतुमित्युच्चैरिन्द्रजित् प्रावदत् स्वकान् ॥ ७७ ॥

क्षषीत्यादि। भर्तुः रावणस्य आनन्दं क्षषीढ्व कुरुध्वं लिङि रूपं अतो वानरं द्रुतं नेतुं वियदाकाशं मा न प्रोढ्वं मानीत्यतिष्ट माङि लुङ् इणः षीध्वमिति धकारस्य मूर्द्धन्यढकारः इत्येवमुच्चैरिन्द्रजित् स्वकान् भृत्यान् प्रावदत् वदेर्लङि रूपं ॥ ७७ ॥ ज०म०

क्षषीढ्वमित्यादि। यूयं भर्त्तूरावणस्य आनन्दं क्षषीढ्वं कुरुध्वं व्यारूपं इगुङुर्मढीति कित्त्वान्न गुणः टीठीढीधीढिच इति धस्य ढत्वं क्लिादिति षः वानरं नेतुं द्रुतं यूयं वियदाकाशं मा न प्रोढ्वं न ने गच्छत अपि तु प्रोढ्वं प्रप्लुङ्चसर्पणे मायोगे टी सिः गुणः धेसलोपेवेति पक्षे सिलोपः टीठीढीधीढिच इति धस्य ढत्वं इत्युक्तं इन्द्रजित् स्वकान् आत्मीयान् उच्चैर्महता ध्वनिना प्रावदत् प्रोक्तवान् ॥ ७७ ॥ भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



गतमङ्गुलिषङ्गं त्वां भीरुष्ठानादिहागतं। खादिष्यामइति प्रोचुर्नयन्तोमारुतिं द्विषः॥ ७८॥

ज०म० गतमित्यादि। अङ्गुलीनां सङ्गः अङ्गुलीषङ्गः तं गतं प्राप्तं हस्तप्राप्तमित्यर्थः समासेऽङ्गुलेःसङ्गइति षत्वं भीरोः कातरस्य यत् स्थानं तस्माद्भीरुष्ठानादिहागतं भीरोस्थानमिति षत्वं खादिष्यामइति प्रोचुः द्विषोराक्षसा मारुतिं नयन्तोनेष्यन्तः वर्त्तमानसामीप्ये भविष्यति लट्॥ ७८॥

म० गतमित्यादि। मारुतिं नयन्तोराक्षसाइति प्रोचुः उक्तवन्तः किमित्याह त्वां वयं खादिष्यामः कीदृशं त्वां अङ्गुलेः सङ्गं गतं प्राप्तं हस्तप्राप्तमित्यर्थः भीरोरामस्य स्थानादिह लङ्कायामागतं समासेऽङ्गुलेः सङ्गस्य भीरोस्थानस्य चेति षत्वमिति परः स्वमते क्विलादित्यस्य योगविभागात् शासवसघसाढाश्चेत्यच चकारस्यानुक्तसमुच्चयार्थत्वादन्येषामपीत्यर्थाद्वा मनीषादित्वाद्वा॥ ७८॥

अग्निष्टोमादिसंस्थेषु ज्योतिष्टोमादिषु द्विजान्। योऽरक्षीत्तस्य दूतोऽयं मानुषस्येति चावदन्॥ ७९॥

ज०भ० अग्नीत्यादि। अग्निष्टोमादिसंस्थेषु सदृशेषु ज्योतिष्टोमादिषु योद्विजानरक्षीत् तस्य मानुषस्यायं दूत इतिचावदन् नयन्तो द्विषः अग्नेस्तुत्स्तोमसोमाः ज्योतिरायुषस्तोमइति षत्वं॥ ७९॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अग्नीत्यादि। अग्निष्टोमादिसङ्घेषु ज्योतिष्टोमादिषु यज्ञेषु योद्विजान् अरक्षीत् आदिशब्दाद्वाजपेयादेर्ग्रहणं आयुर्ज्योतिरग्निभ्यःस्तोमस्येति षत्वमिति परः स्वमते मनीषादित्वात् तस्य मानुषस्यायं दूतद्रूतिच ते द्विषोऽवदन्॥ ७९॥ भ०

नासां मातृष्वसेय्याश्च रावणस्य लुलाव यः। मातुः स्वसुश्च तनयान् खरादीन् विजघान यः॥ ८०॥

नासामित्यादि। रावणस्य या मातुः स्वसा भगिनी सा मातृष्वसा मातृपितृभ्यामिति षत्वं तस्याअपत्यं मातृष्वसेयी मातृष्वसुश्चेतिठगन्तलोपौ तस्याश्चोनासां लुलाव मातुःस्वसुश्च तनयान् खरादीन्निजघान मातृपितृभ्यामन्यतरस्यामिति षत्वाभावपक्षे विभाषास्वसृपत्योरिति षष्ठ्याअलुक्॥ ८०॥ ज०म०

नासामित्यादि। योरावणस्य मातृष्वसेय्यामातृष्वसुर्दुहितुः शूर्पणखायानासां लुलाव च्छिन्नवान् मातृस्वसृशब्दादत्यादित्वात् ष्णेयः मनीषादित्वादन्तलोपः आदिसस्य षत्वञ्च मातृपितृभ्यां स्वसुरिति परः योमातुः स्वसुश्च मातुर्भगिन्याश्च तनयान् पुत्रान् खरादीन् निजघान तस्य दूतोऽयमिति सम्बन्धः स्वसुर्वा मातृपितृभ्यामिति विभाषया षत्वमिति परः स्वमते मनीषादित्वात्॥ ८०॥ भ०

प्रादुःषन्ति न संत्रासायस्य रक्षःसमागमे। तस्य क्षत्रियदुःषूतेरयं प्रणिधिरागतः॥ ८१॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज॰म॰ प्रादुरित्यादि। यस्य रक्षःसमागमे सन्त्रासाः भयानि न प्रादुःषन्ति न प्रादुर्भवन्ति उपसर्गप्रादुर्भ्यामित्यादिना दुःशब्दादुत्तरस्यास्ति सकारस्य अस्तेरल्लोपइत्यल्लोपे कृते षत्वं प्रादुःसकारस्य च ष्टुत्वं तस्य क्षत्रियदुःषूतेः दुष्पुत्रस्यायं प्रणिधिरागत इति चावदन् नयन्तः सूयतइति सूतिः दुर्निंदायामिति सूतेः सकारस्य सुविनिर्दुर्भ्यइति षत्वं॥ ८१॥

भ॰ प्रादुरित्यादि। रक्षसां समागमे यस्य सन्त्रासान प्रादुःषन्ति न प्रादुर्भवन्ति प्रादुर्गीकइति षत्वं तस्य क्षत्रियदुःषूतेः प्रणिधिस्त्वरोऽयमागतः विनिसुदुर्भ्यः सूतिसमसुपामिति षत्वमिति परः स्वमते मनीषादित्वात्॥ ८१॥

दृष्ट्वा सुषुप्तं राजेन्द्रं पापोऽयं विषमाशयः। चारकर्म्मणि निष्णातः प्रविष्टः प्रमदावनं॥ ८२॥

ज॰म॰ दृष्टेत्यादि। राजेन्द्रं रावणं दृष्ट्वा प्रमदावनं प्रविष्टः सुषुप्तं गाढनिद्रं वच्यादिना सम्प्रसारणं पापोऽयं विषमाशयः सुपीत्यादिना षत्वं चारकर्म्मणि निष्णातः कुशलः निनदीभ्यांस्नातेःकौशलइति षत्वं॥ ८२॥

भ॰ दृष्टेत्यादि। अयं पापोदुराचारो राजेन्द्रं रावणं दृष्ट्वा प्रमदावनं प्रविष्टः कीदृशं राजेन्द्रं सुषुप्तं गाढनिद्रितं विस्कम्भानिर्व्विसुनिर्दुःस्वपइति षत्वं कीदृशः विषमाशयः कुटिलहृदयः विषमेत्यत्र मनीषादित्वात् षत्वं चारकर्म्मणि निष्णातः कुशलः निनदीभ्यांस्नः कौशलेइति षत्वमिति परः स्वमते मनीषादित्वात्॥८२॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कुलकं। सुप्रतिष्णातसूत्राणां कपिष्ठलसमत्विषां।
स्थितां वृत्ते द्विजातीनां रात्रावैचत मैथिलीं॥ ८३॥

सुप्रेत्यादि। येषां द्विजातीनां सुप्रतिष्णातानि ग्रन्थतोऽर्थतश्च निश्चितानि सूत्राणि तेषां सुप्रतिष्णातसूत्राणां सूत्रं प्रतिष्णातमिति निपातनं कपिष्ठलसमत्विषां कपिष्ठलोनामद्विजर्षभो गोत्रप्रवर्त्तकः कपिष्ठलोगोत्रइति साधुः तत्तुल्यतेजसां द्विजातीनां वृत्ते चरिते स्थितां मैथिलीं ऐचत॥ ८३॥ ज॰म॰

सुप्रेत्यादि। अयं रात्रौ द्विजातीनां वृत्ते स्थितां मैथिलीं ऐचत दृष्टवान् घ्यां रूपं कीदृशानां सुप्रतिष्णातं ग्रन्थतोऽर्थतश्च विशुद्धं गोभिलादिसूत्रं येषां मनीषादित्वात् सूत्रे प्रतिस्नातस्य षत्वं कपिष्ठलसमत्विषां कपिष्ठलाख्यस्य ऋषेः समा त्विट् येषां मनीषादित्वात् गोत्रे कपेः स्थलस्य सस्य षत्वं॥ ८३॥ भ॰

सर्व्वनारीगुणैः प्रष्ठां विष्टरस्थां गविष्ठिरां। अयानां कुष्ठले तारां दिविष्ठामिव निर्म्मलां॥ ८४॥

कीदृशीमित्याह सर्व्वेत्यादि। यावन्तो नारीगुणाः तैः प्रष्ठां अग्रगामिनीं प्रष्ठोग्रगामिनीति साधुः विष्टरस्थामासनस्थां वृचासनयोर्व्विष्टरइति साधुः गविष्ठिरां वाचिस्थिरां गवियुधिभ्यामिति षत्वं अस्मादेव वचनात् सप्तम्या अलुक् कुष्ठले अयानां कौ स्थले ज॰म॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भूतले भ्रुड्ढे विकुशमित्यादिना षत्वं दिविष्ठां दिवि तिष्ठतीति सुपि स्थइति कः तत्पुरुषेकृतिबहुलमिति सप्तम्याअलुक् गगणस्थां तारामिव निर्म्मलां अम्बाम्बेत्यादिना षत्वं ॥ ८४ ॥

भ॰ सर्व्वेत्यादि । मैथिलीं कीदृशीं सर्व्वनारीगुणैः प्रष्ठां यावन्तो नारीगुणास्तैरग्रगामिनीं मनीषादित्वात् प्रात्स्थोऽग्रगे षत्वं विष्टरस्थां आसनस्थां मनीषादित्वाद्वृचासनयोर्विष्टरइति रूपसिद्धिः गविष्ठिरां वाचिस्थिरां सप्तमीतत्पुरुषः अभिधानान्न ङेर्लोपः मनीषादित्वात् गवियुधिभ्यांस्थिरस्य षत्वं कुष्ठले भूस्थले शयानां मनीषादित्वात् शमिपरिविकुभ्यः स्थलस्य षत्वं दिविष्ठां तारामिव निर्म्मलां दिवि तिष्टतीति हनजनादिति डः अभिधानात् सप्तम्याअलुक् स्त्रियामाप् मनीषादित्वात् षत्वं ॥ ८४ ॥

सुषाम्नीं सर्व्वतेजःसु तन्वीं ज्योतिष्टमां शुभां । निष्टपन्तीमिवात्मानं ज्योतिःसात्कुर्व्वतीं वनं ॥ ८५ ॥

ज॰म॰ सुषेत्यादि । शोभनं साम यस्याइति विगृह्य अनउपधालोपिनोऽन्यतरस्यामिति ङीप् सुषामादिषुचेति षत्वं सुष्ठु प्रियम्वदामित्यर्थः तन्वीं कृशां शुभां कल्याणीं सर्व्वतेजस्सु ज्योतिष्टमां अतिशयेन ज्योतिष्मतीं ह्रस्वात्तादौ तद्धितइति षत्वं एवञ्च कृत्वा निष्टपन्तीमिवात्मानं समुज्ज्वलयन्तीमिवात्मानं निसस्तपतावनासेवनइति षत्वं वनं ज्योतिःसात्कुर्व्वन्तीं अज्योतिर्ज्योतिः कुर्व्वाणां कार्त्स्न्येन दीपयन्तीमित्यर्थः कार्त्स्न्ये सातिप्रत्ययः तत्र नुमि

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



विसर्जनीयस्येत्यादिना प्राप्तस्य षत्वस्य सत्पिदाद्योरिति प्रतिषेधः युष्मदित्यादिनोदाहृतं छान्दसत्वात्॥ ८५॥

सुषाम्नीमित्यादि। पुनः कीदृशीं मैथिलीं सुषाम्नीं प्रियम्वदां भ॰ शोभनं साम यस्याइति नान्तत्वात् स्त्रियामीप् निःसुदुर्भ्यःसामसेधसन्धीनामिति षत्वमिति परः स्वमते मनीषादित्वात् तन्वीं कृशां गुणाद्योतइति पक्षे ईप् सर्व्वज्योतिःसु मध्ये ज्योतिष्टमां प्रकृष्टप्रकाशरूपां लोकोर्धादिति षत्वं शुभां कल्याणयुक्तां आत्मानं निष्टपन्तीमिव सक्तापयन्तीमिव हनूमद्दर्शनात् तापस्य नैरन्तर्य्याभावात् निरस्तपोसक्तसेवनेइति षत्वमिति परः स्वमते मनीषादित्वात् तापस्य सक्तसेवनमत्र विवक्षितं वनं ज्योतिःसात्कुर्व्वतीं कार्त्स्न्येन दीपयन्तीमित्यर्थः कार्त्स्न्यायत्योःसम्पद्यक्रादाविति चसात् किलादित्यादौ साद्दर्ज्जनात् न षत्वं॥ ८५॥

मधुसाद्भूतकिञ्जल्कपिञ्जरभ्रमराकुलां। उल्लसत्कुसुमां पुण्यां हेमरत्नलतामिव॥ ८६॥

मध्वित्यादि। मधुसाद्भूतकिञ्जल्कं कार्त्स्न्येन मधुतामापन्नं ज॰मे॰ यत्किञ्जल्कं पुष्पकेसरं तन्मधुसाद्भूतकिञ्जल्कं आदेशप्रत्यययोरिति प्राप्तस्य पूर्व्ववत्प्रतिषेधः तेन पिञ्जराः पिङ्गलाः ये भ्रमराः तैराकुलां उल्लसत्कुसुमां चलत्पुष्पां हेमरत्नलतामिव यथा हेमरत्नमयीं कल्पतरुलतां पुण्यां पवित्रान्तद्वत्तामपीत्यर्थः॥८६॥



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० मधुसादित्यादि। पुनः कीदृशीं हेमरत्नलतामिव कल्पतरुलतामिव पुण्यां पवित्रां उत्तमामित्यर्थः हेमरत्नलतां कीदृशीं कार्त्स्न्येन मधुतामापन्नेन किञ्जल्केन पुष्पकेसरेण पिङ्गला ये भ्रमरास्तैराकुलां व्याप्तां अत्रापि सादेर्व्वर्जनान्न षत्वं उल्लसत्कुसुमां राजत्पुष्पां॥ ८६॥

विलोचनाम्बु मुञ्चन्तीं कुर्व्वाणां परिसेसिचां। हृदयस्येव शोकाग्निसन्तप्तस्योत्तमव्रतां॥ ८७॥

ज०म० विलोचेत्यादि। विलोचनाम्बु अस्रु मुञ्चन्तीं विक्षिपन्तीं हृदयस्य शोकाग्निसन्तप्तस्य परिसेसिचां भृशं निर्व्वाणमिव कुर्व्वाणामैक्षतेति पूर्व्वेण सम्बन्धः सिचेर्यङन्तात् स्त्रीलिङ्गे भावे अकारप्रत्ययः उपसर्गादित्यादिना अभ्यासव्यवायेऽपि प्राप्तस्य षत्वस्य सिचोयङीति प्रतिषेधः उत्तमव्रतां पतिव्रतात्वात्॥ ८७॥

भ० विलोचनेत्यादि। विलोचनाम्बु मुञ्चन्तीं अस्रु क्षिपन्तीं शोकरूपाग्निसन्तप्तस्य हृदयस्य परिसेसिचां पुनःपुनरतिशयेन वा सेचनं कुर्व्वाणामिव अग्निनिर्व्वाणाय जलसेकः क्रियतइत्युत्प्रेक्षा सिचोयङ्लुकि संस्यादइति अः स्त्रियामाप् गोकइत्यादौ अयङ् सिचेति यङ्वर्ज्जनान्न षत्वं उत्तमव्रतां पतिव्रतात्वात् ईदृशीं मैथिलीमैक्षतेति सम्बन्धः॥ ८७॥

दृष्ट्वा तामभनग्वृक्षान्द्विषोघ्नन् परिसेधतः। परितस्तान् विचिक्षेप क्रुद्धः क्षयमिवानिलः॥ ८८॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



दृष्ट्वेत्यादि। तां दृष्ट्वा वृक्षानभनक् चूर्णितवान् द्विषः शत्रून् परिसेधतः आगच्छतः घ्नन् हिंसन् पूर्व्ववत्प्राप्तस्य सेधतेर्गताविति प्रतिषेधः परितस्च समन्तादुद्दिचिक्षेप उन्मूलितवान् लिटः संयोगादित्वादकित्त्वे गुणः क्रुद्धः स्वयमिव साक्षादिवानिलः॥ ८८॥ ज०म०

दृष्ट्वेत्यादि। अयं तां सीतां दृष्ट्वा वृक्षान् अभनक् भग्नवान् किङ्कुर्व्वन् द्विषः शत्रून् घ्नन् हिंसन् कीदृशान् परिसेधतः सर्व्वतोगच्छतः गीकदृत्यादौ अगतिसेधेति गत्यर्थवर्ज्जनात् न षत्वं अयं तान् वृक्षान् परितः समन्तात् प्रचिक्षेप क्षिप्तवान् क्रुद्धः सन् स्वयं साक्षात् अनिलइव॥ ८८॥ भ०

अप्रतिस्तब्धविक्रान्तमनिस्तब्धोमहाहवे। विसोढवन्तमस्त्राणि व्यतस्तम्भद्घनध्वनिः॥ ८९॥

अप्रेत्यादि। घनध्वनिर्मेघनादः अनिस्तब्धोऽनभिभूतः अप्रतिस्तब्धविक्रान्तं अनभिभूतविक्रमं कपिं स्तम्भेरिति प्राप्तस्य षत्वस्य प्रतिस्तब्धनिस्तब्धौ चेति प्रतिषेधनिपातनं अस्त्राणि महाहवे विसोढवन्तं सोढइति प्रतिषेधः व्यतस्तम्भत् निष्पादितवान् एवं नयनोऽवदन्निति योज्यं स्तम्भेर्ण्यन्तस्य स्तम्भसिवुसहाञ्चङीति षत्वप्रतिषेधः॥ ८९॥ ज०म०

अप्रेत्यादि। घनध्वनिर्मेघनादः अप्रतिस्तब्धविक्रान्तं अनभिभूतविक्रमं हनूमन्तं व्यतस्तम्भत् निश्चलं कृतवान् कीदृशः अनिस्तब्धः अनभिभूतः कीदृशं महायुद्धे अस्त्राणि विसोढवन्तं सहेः भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



त्वतुः वेमसहेति वेमत्वात् नेम्डीन्नीदिति नेम् होढः सहवहोऽ दोढीति ओत्वं गीकइत्यादौ अनोङ्सहेति ओङ्वर्ज्जनान्न षत्वं स्तम्भेः प्रेरणे ञिः ञिश्रीत्यङ् गीकइत्यादौ अनङ्स्तम्भेति अङ्व र्ज्जनान्न षत्वं प्रतिस्तम्भनिस्तम्भयोः प्रतिनिशब्दौ उपसर्गप्रतिरू पकौ तेन गीकइत्यादिना न षत्वं प्रतिनिर्भ्यां स्तम्भस्येति षत्वनि षेधार्थपरसूत्रं ॥ ८८ ॥

ते विज्ञायाभिसोष्यन्तं रक्षैरत्रांसि सव्यथाः। अन्यै रप्यायतं मेवुर्व्वरत्राशृङ्खलादिभिः ॥ ९० ॥

ज०म० ते इत्यादि। राक्षसाः ये मारुतिं नेष्यन्तः रक्षैः रक्षांसि विसोष्यन्तं अभिषेच्यन्तं कपिं सुनोतेः स्यसनोरिति षत्वं यद्यारक्ष्यमाणेन नीयेत अवश्यं राक्षसान् रक्षैः सोष्यतीति विज्ञाय सव्यथाः सभयाः सन्तः अन्यैरपि वरत्राशृङ्खलादिभिरायतं दीर्घं नेऊः बध्नन्ति स्म णहवन्धनइत्यस्य लिटि रूपं ॥ ९० ॥

म० ते इत्यादि। ते मारुतिं नयन्तोराक्षसाविज्ञाय हनूमत्प राक्रममित्यर्थात् सव्यथाः सभयाः सन्तः ब्रह्मास्त्रवन्धे सत्यपि अन्यैरपि वरत्राशृङ्खलादिभिरायतं दीर्घं कपिं मेवुः बध्नन्ति स्म मवनहे नहोवन्धनं यो रूपं कीदृशं रक्षैः खगाक्षसक्षवैरत्रांसि अभिसोष्यन्तं अभिषेच्यन्तं गीकइत्यादौ अस्यान्तसुञेति स्यान्त वर्ज्जनान्न षत्वं वरत्रा चर्म्मरज्जुः ॥ ९० ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



विषसादेन्द्रजिद्बुद्ध्वा बन्धे बन्धान्तरक्रियां। दिव्य
बन्धोविषहते नापरं बन्धनं यतः॥९१॥

इति षत्वाधिकारः।

विषेत्यादि। बन्धे दिव्ये बन्धान्तरक्रियां बन्धनविशेषकरणं बुद्ध्वा इन्द्रजित् विषसाद विषादमुपगतः नियतं दिव्यबन्धं मुक्तवानिति यतोदिव्यबन्धोनापरं स्वयं बन्धनं विषहते अतोविषसादेति योज्यं सदिस्वंज्योःपरस्य लिटि षत्वप्रतिषेधः पूर्व्वस्य तु सदिरप्रतेरिति भवत्येव विषहतइति न प्रतिषेधः तत्र षोढरूपस्य ग्रहणात्। इति मूर्द्धन्याधिकारः॥९१॥ ज०म०

विषेत्यादि। इन्द्रजित् बन्धे बन्धान्तरकरणं बुद्ध्वा ज्ञात्वा विषसाद विषादं गतवान् गीकइत्यादिना षत्वे प्राप्ते सदस्वन्जोर्व्यांनाखेरिति प्रकृतेः षत्वनिषेधः स्वेस्तु षत्वमेव यतोयस्मात् दिव्यबन्धोऽपरं बन्धनं न विषहते गीकइत्यादिना षत्वं। इति षत्वाधिकारः॥९१॥ भ०

मुष्णन्तमिव तेजांसि विस्तीर्णोरस्थलं पुरः। उपसे
दुर्दशग्रीवं गृहीत्वा राक्षसाः कपिं॥९२॥

इतःप्रभृति णत्वमधिकृत्याह। मुष्णेत्यादि। राक्षसाः पुरः कपिमादाय दशग्रीवमासेदुः ढौकितवन्तः नतु दर्शनगोचरं गताः अप्रभातत्वात् कीदृशं तेजांसि मुष्णन्तं खण्डयन्तमिव विस्तीर्णोरस्थलं विस्तृतवक्षसं तत्र रषाभ्यां नोणइति णत्वं॥९२॥ ज०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० अथ णत्वाधिकारः। मुष्णन्तमित्यादि। राक्षसाः कपिं गृहीत्वा पुरोऽग्रतोदशग्रीवमुपस्थेदुः कीदृशं तेजांसि मुष्णन्तमिव खण्डयन्तमिव स्वतेजसाऽभिभवात् विस्तीर्णवक्षसं उभयत्र पूर्णोदान्तेन इति णत्वं॥ ९२॥

वज्रधाभिन्नमर्म्माणोभीमाः खरणसादयः। अग्रेवणं वर्त्तमाने प्रतीच्यां चन्द्रमण्डले॥ ९३॥

ज०म० वक्रित्यादि। वानरद्विषा राक्षसाऊचुरिति वक्ष्यमाणेन सम्बन्धः कीदृशाः किमूचुरित्याह वज्रधा भिन्नमर्म्माणइति यानि कालान्तरे प्राणहराणि मर्म्माणि तानि वज्रधा भिन्नानि येषामिति वज्रीहिः अट्पवर्गसमुदायस्य व्यवधानादट्कुप्वाङित्यादिना णत्वं खरणसादयः खरस्येव नासिकायस्येति अञ्नासिकायाइत्यच् नसादेशस्य पूर्व्वपदात्संज्ञायामिति णत्वं खरणसादयोराक्षसाः वनस्याग्रे अग्रेवणं राजदन्तादित्वात्परनिपातः वनं परगेति णत्वं प्रतीच्यान्दिशि यद्वनन्तस्य वनस्याग्रे उपरि वर्त्तमाने चन्द्रमण्डले प्रभातसन्ध्यायामित्यर्थः॥ ९३॥

भ० वज्रधेत्यादि। वानरद्विषोराक्षसाइत्यूचुरित्यग्रिमश्लोकेनान्वयः कीदृशाः वज्रधा भिन्नानि मर्म्माणि जीवितस्थानानि येषां तादृशाः पूर्णोऽदान्तेइत्यादिना अवकुप्वन्तरेपीति णत्वं भीमा भयानकाः खरस्येव नसा नासिका येषां ते आदयोयेषां ते तथा पूर्णइत्यादावतद्धादित्यस्य योगविभागात् णत्वं नसाशब्दस्य

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



रूपमिदं लपनं वदनं तुण्डमाननं नासिका नसेति रभसः नसा नासा च नासिकेति कोषान्तरं खरखुराभ्यां नासिकायानसूनसा विति परः किमूचुरित्याह चन्द्रमण्डले प्रतीच्यां पश्चिमायां दिशि वनस्याग्रे वर्त्तमाने सति अनेनोद्यानं निर्वणं वनशून्यं कृतमिति परश्लोकेनान्वयः वनस्याग्रे अग्रेवणं तस्मिन् व्यंपूर्व्वमिति अग्रे शब्दस्य पूर्व्वनिपातः अग्रेवणमिति पाठे देशाध्वकालेति ढसंज्ञा अग्रेवणमित्यनुस्वारवत् पाठोऽत्र प्रमादकृतः सप्तम्यन्तत्वादिति विद्याविनोदः अग्रेवणइति खरणसवणत्वं अग्रे मिश्रकासारिका सिश्रकापुरगाकोटराभ्योवनस्य संज्ञायामिति परसूत्रे संज्ञाया मिति सम्भवपरमुक्तं तेनासंज्ञायामपि णत्वं स्यादिति बोध्यं अग्रेव णेवर्त्तमाने प्रतीच्यां चन्द्रमण्डलइत्यनेन प्रातःसन्ध्या सूचिता ॥९३॥

निर्व्वणं कृतमुद्यानमनेनाम्रवणादिभिः। देवदारु वनामिश्रैरित्यूचुर्व्वानरद्विषः॥९४॥

निर्व्वेत्यादि। उद्यानं संनिवेशविशेषः निर्व्वणं वृत्तरहितं अनेन कपिना कृतं आम्रवणादिभिरुपलचितं उभयत्रापि प्रनिरन्तेति णत्वं देवदारुवनामिश्रैरिति विभाषौषधीत्यादिना णत्वं न भवति द्व्यचरत्र्यचरेभ्यइति वक्तव्यमिति वचनात् इत्येवमूचुः॥९४॥ ज०म०

निर्व्वणमित्यादि। कीदृशमुद्यानं आम्रवणादिभिरुपलचितं कीदृशैः देवदारुवनामिश्रैः देवदारुवनयुक्तैः निर्व्वणाम्रवणयोः भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



खरणसवणत्वं देवदारुवनेत्यत्र योगविभागस्य कचिद्विषयान्न णत्वं परमते आम्रशरपीयूक्षशरखदिरनिःप्रकार्य्यान्तरिभुभ्योव नस्य णत्वं तथा ईरिकाभद्रिकातिमिरवर्ज्जं द्वित्र्यच्चौषधिस्थं पुर्व्वावनस्य णत्वं देवदारुशब्दस्य चतुरचत्वाद्देवदारुवनाभिश्रै रित्यत्र न णत्वं॥ ६४॥

उपास्थिषत संप्रीताः पूर्व्वाह्णे रोषवाहणं। राक्षसाः कपिमादाय पतिं रुधिरपायिणां॥ ९५॥

ज०म० उपेत्यादि। ते राक्षसाः पतिमुपास्थिषत उपागताः दृष्टिपथं गताइत्यर्थः उपाद्देवपूजेत्यादिना सङ्गतिकरणे तङ् स्थाघ्वो रिच सम्प्रीताः हृष्टाः तेषामनुज्ञातप्रवेशत्वात् पूर्व्वाह्णे प्रत्यूषसि अह्नोदन्तादिति णत्वं रोषवाहणं कपिमादाय रोषस्यासनीकृतं वाहनमाहितादिति णत्वं रोषस्य तत्राधीयमानत्वात् पतिं रुधिरपायिणां राक्षसानां पानं देशइति णत्वं॥ ६५॥

भ० उपेत्यादि। राक्षसाः कपिमादाय संप्रीताः सन्तः पूर्व्वाह्णे प्रत्यूषसि रुधिरपायिनां राक्षसानां पतिं रावणं उपास्थिषत उपगताः मैत्राध्वसङ्गाराधइति सङ्गे मं स्थादोर्ङिष्टीमे इति ङिः गुणाभावस्य मान्तोऽदनतइत्यत् कपिं कीदृशं रोषवाहणं आरूढ क्रोधं पूर्व्वाह्णइति प्राक्तनोणोऽतोऽह्नस्येति णत्वं रोषवाहणमिति खरणसवणत्वं परमते वाह्यपुर्व्वाहनस्य णत्वं रोषस्य वाह्यत्वात्

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



रुधिरपायिणामिति रुधिरं रक्तं पिबन्तीति ग्रहादित्वात् णिन् पूर्वोऽदान्त इत्यादौ नैकाचकोस्त्वेवेति पाक्षिकं णत्वं असृक्पाणाधिपं तूर्णं कपिमादाय राक्षसाइति क्वचित्पाठः तदा असृक् प्रधानं पानं येषां तेषामधिपं असृजां पानं यत्र सोऽसृक्पाणो देशः तस्याधिपमिति वा असृगेव पानं पेयं येषामिति वा खरणस वत्त्वं देशे पानस्य णत्वं नित्यं भावकरणयोः पानस्य वा णत्व मिति परः ॥ ९५ ॥

सुरापाणपरिक्षीवं रिपुदर्पहरोदयं। परस्त्रीवा हिणं प्रापुः साविष्काराः सुरापिणः॥ ९६ ॥

सुरेत्यादि। सुरापाणात्परिक्षीवं मत्तं रावणं वा भावकरण योरिति णत्वं रिपुदर्पहरउदयो वृद्धिर्यस्य तं परस्त्रियं वाह यितुमुपभोक्तुं शीलं यस्य तं परस्त्रीवाहिणं प्रातिपदिकान्तइति णत्वाभावः पाक्षिकः प्रापुः सुष्ठु निकटीकृताः साविष्काराः धाष्ट कारा: सुरापिणः सुरापैर्युक्ताः सुरां पिबन्तीति गापोष्टक् ते येषां सन्तीति मत्वर्थीयः एकाजुत्तरपदेणइति णत्वं उत्तरस्य प्राति पदिकान्तस्यैकाच्त्वात् ॥ ९६ ॥ जं०म०

सुरेत्यादि। राक्षसा रावणं प्रापुः कीदृशं सुरापाणेन परि क्षीवं मत्तं खरणसवत्त्वं भावकरणयोः पानस्य वा णत्वमिति परः रिपूणां दर्पहारकउदयो यस्य तं परस्त्रियं वोढुं उपभोक्तुं शीलं यस्य तं पूर्वोदान्तेइत्यादिना नैकाचकोस्त्वेवेति पक्षे णत्वं परस्त्री भ०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कामिणमिति पाठे तेनैव कवर्गवत्त्वात् नित्यं णत्वं कीदृशाः साहि
ङ्कारा: साहङ्काराः सुरापिणः सुरापैर्युक्ताः सुरां पिबन्तीति
सुरापाः हनजनादिति डः ततोऽस्त्यर्थे इन् पूर्व्ववदेकाच्त्वात्
नित्यं णत्वं ॥ ६६ ॥

संहर्षयोगिणः पादौ प्रणेमुस्त्रिदशद्विषः। प्रहिण्व
न्तोहनूमन्तं प्रमीणन्तं द्विषन्मतीः ॥ ९७ ॥

ज०म० संहेत्यादि। संहर्षयोगिणः स्पर्द्धायोगिनः कुमतिचेति णत्वं ते
अन्योन्याभिभवेच्छया त्रिदशद्विषोरावणस्य पादौ प्रणेमुः उप
सर्गादसमासेऽपीति णत्वं हनूमन्तं प्रहिण्वन्तः ढौकयन्तः द्विष
न्मतीः शत्रुबुद्धीः प्रमीणन्तं अभिभवन्तं मीञहिंसायां क्र्यादिकः
हिनुमिनाइति णत्वं ॥ ९७ ॥

भ० समित्यादि। राक्षसास्त्रिदशद्विषोरावणस्य पादौ प्रणेमुः
प्रणतवन्तः प्रात्वन्नोणइत्यादिना नादिधातुत्वाण्णत्वं संहर्षयो
गिणः महाहर्षयुक्ताः प्रुणंइत्यादिना कवर्गवत्त्वात् नित्यं णत्वं
हनूमन्तं प्रहिण्वन्तः प्रापयन्तः कीदृशं द्विषन्मतीः शत्रुबुद्धीः प्रमी
णन्तं अभिभवन्तं प्रात्वन्नोणइति मीनाहिन्वोर्णत्वं ॥ ९७ ॥

प्रवपाणि शिरो भूमौ वानरस्य वनच्छिदः। आम
न्त्रयत संक्रुद्धः समितिं रक्षसां पतिः ॥ ९८ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



प्रवेत्यादि। अहं वानरस्य वनच्छिदः शिरोभूमौ प्रवपाणि छित्त्वा पातयामि आनिलोडिति णत्वं वपिरत्र पातने वर्त्तते संक्रुद्धः रक्षसां पतिः स्वामी समितिं समूहं आमन्त्रयत भाषितवान्॥ ९८॥ ज॰म॰

प्रवेत्यादि। रक्षसां पतीरावणः संक्रुद्धः सन् समितिं सभां आमन्त्रयत उक्तवान् किन्तदित्याह अहं वनच्छिदो वानरस्य शिरो भूमौ प्रवपाणि छित्त्वा पातयामीत्यर्थः वपिरत्र प्रहरणे आम्ब्रेणद्रूति आनिपोणत्वं॥ ९८॥ भ॰

प्रण्यगादीत् प्रणिघ्नन्तं घनः प्रणिनदन्निव। ततः प्रणिहितः स्वार्थे राक्षसेन्द्रं विभीषणः॥ ९९॥

प्रण्येत्यादि। ततउत्तरकालं विभीषणोराक्षसेन्द्रं प्रणिघ्नन्तं हन्तुमारभमाणं प्रण्यगादीत् वक्तुं प्रवृत्तः घनद्रूव प्रणिनदन् गर्जन् स्वार्थे राक्षसेन्द्रस्य प्रणिहितोऽवहितमनाः सर्व्वत्र नेर्गदेति णत्वं॥ ९९॥ ज॰म॰

प्रण्येत्यादि। ततोऽनन्तरं हनूमन्तं प्रणिघ्नन्तं हन्तुमारभमाणं राक्षसेन्द्रं विभीषणोघनद्रूव प्रणिनदन् गर्ज्जन् प्रण्यगादीत् वक्तुं प्रवृत्तः स्वार्थे रावणप्रयोजने प्रणिहितः सावधानः सर्व्वत्र आम्ब्रेणद्रूति णत्वं॥ ९९॥ भ॰

प्रणिशाम्य दशग्रीव प्रणियातुमलं रुषं। प्रणिजानीहि हन्यन्ते दूतादोषे न सत्यपि॥ १००॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज॰म॰ प्रणीत्यादि। हे दशग्रीव प्रणिशाम्य रोषं त्यज लोटि शमनि रूपं शमामष्टानामिति दीर्घः रुषं प्रणियातुमलं न किञ्चित् पूर्व्वं वत्सलं प्रणिजानीहि अवगच्छ सत्यपि दोषे न हन्यन्ते दूता इति जानातेः शेषधातोरुपदेशावस्थायां अकखाद्यषान्तत्वात् शेषे विभाषेत्यादिना णत्वं॥ १००॥

भ॰ प्रणीत्यादि। हे दशग्रीव प्रणिशाम्य शान्तोभव शमेर्ण्णौ रूपं यन्त्रोशमादिमिदइति दीर्घः हेर्लोपः रुषं क्रोधं प्रणियातुं आश्रयितुं अलं नार्हसि निषेधार्थोऽलं शब्दः उभयत्र प्राग्वण्णोत्व इति णत्वं त्वं प्रणिजानीहि अवगच्छ पूर्व्ववदकखाद्यषान्तान्तने रिति पत्ते णत्वं दोषे सत्यपि दूता न हन्यन्ते नीतिज्ञैरित्यर्थात् ॥१००॥

प्राणयन्तमरिं प्रोचे राक्षसेन्द्रोविभीषणं। प्राणिणि षुर्न पापोऽयं योऽभाङ्क्षीत्प्रमदावनं॥ १०१॥

ज॰म॰ प्राणेत्यादि। अरिं कपिं यः प्राणयति जीवयति तं प्राणयणां विभीषणं श्वसप्राणने अनचेत्यस्य रूपं अनितेरिति णत्वं प्रोचे राक्षसेन्द्रः न प्राणिणिषुः न जीवितुमिच्छुरयं पापः उभौ साभ्यासस्येति णत्वं द्वयोरपि योऽभाङ्क्षीत् भग्नवान् प्रमदावनं हलन्तलक्षणा वृद्धिः॥ १०१॥

भ॰ प्राणेत्यादि। अरिं हनूमन्तं प्राणयन्तं जीवयन्तं विभीषणं राक्षसेन्द्रः प्रोचे उक्तवान् अनितेर्ण्यन्तस्य रूपं किमुक्तवानित्याह

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अयं पापो दुराचारोन प्राणिणिषुर्न जीवितुमिच्छुः अनितेः सनि रूपं प्राग्वन्तोणइत्यादिना वाऽनेनेति विभाषया णत्वं योऽयं मम दावनं अभाङ्क्षीत् भग्नवान् ख्यां रूपं ॥ १०१ ॥

प्राघानिषत रक्षांसि येनाप्तानि वने मम। न प्रहण्मः कथं पापं वद पूर्व्वापकारिणं ॥ १०२ ॥

प्राघेत्यादि। मम आप्तानि अक्षप्रभृतीनि येन वने प्राघानिषत मारितानि कर्म्मणि लुङ् चिण्वदिट् होहन्तेरिति घत्वं तपर परिच्छिन्नाकारपूर्व्वस्य नकारस्य हन्तेरत्पूर्व्वस्येति णत्वं न भवति तं पूर्व्वापकारिणं पापं कथं न प्रहण्मः न मारयामइति वद कथय स्वोर्व्वेति णत्वं ॥ १०२ ॥ ज॰म॰

प्राघेत्यादि। येन ममाप्तानि रक्षांसि अक्षप्रभृतीनि रणे प्राघानिषत मारितानि कर्म्मणि टी हनग्रहदृशश्च इति णिण्खेर्हो घो ञ्णितिचेति घः हनोक्तौ घ्नोणन इत्यत्र घ्नइत्युपलक्षणं ह्स्यान्यथा ले णत्वाभावइति बोध्यं तेन घत्वेऽपि णत्वनिषेधः होघत्वे इति णत्व निषेधार्थं परसूत्रं तं पूर्व्वापकारिणं पापं कपिं कथं वयं न प्रहण्मः इति त्वं वद प्राग्वन्तोणइत्यादौ मवान्तहनइति पक्षे णत्वं पूर्व्वापकारिणमिति क्षुर्णइत्यादिना कवर्गवत्वात् नित्यं णत्वं ॥ १०२ ॥ भ॰

वेश्मान्तर्हणनं कोपान्मम शत्रोः करिष्यतः। मा कार्षीरन्तरयणं प्रयाणार्हमवेह्यमुं ॥ १०३ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० वेश्मेत्यादि। शत्रोर्वेश्मान्तः गृहमध्यएव हननं कोपान्मम करिष्यतः अन्तरदेशइति नकारस्य णत्वं हननस्याभावरूप स्यादेशत्वात् अन्तरयणमन्तरायणं विघातं मा कार्षीः अयन स्येति णत्वं प्रयाणार्हं दीर्घप्रस्थानार्हममुमवेहि अवगच्छ कृत्यच इति णत्वं अचउत्तरस्य नकारस्य कृत्स्थत्वात्॥१०३॥

भ० वेश्मेत्यादि। वेश्मान्तर्गृहमध्ये शत्रोर्हणनं करिष्यतोमम अन्तरयणं विघ्नं त्वं मा कार्षीः न कुरु हे विभीषण अमुं वानरं प्रयाणार्हं दीर्घप्रस्थानार्हं मरणयोग्यं अवेहि जानीहि अन्तर्हण नमिति प्राग्वन्नोणइति णत्वं अन्तरोऽदेशेहनइति णत्वमिति परः अन्तरयणमिति खरणस्ववत्त्वं अन्तरोऽदेशेऽयनस्येति णत्वमिति परः प्रयाणार्हमिति नोऽचोऽन्तरदुर्गेरिति णत्वं॥१०३॥

प्रक्षीणजीवितं कुर्य्युर्ये न शत्रुमुपस्थितं। न्याय्याया अपि ते लक्ष्म्याः कुर्व्वन्त्याशु प्रहापणं॥१०४॥

ज०म० प्रक्षीत्यादि। शत्रुमुपस्थितं प्रक्षीणजीवितं ये न कुर्य्युः जहाते रोदितस्येति निष्ठादेशनकारस्य पूर्व्ववत्त्वं ते न्याय्याया अपि कुल क्रमादागतायाअपि लक्ष्म्याः प्रहापणं त्याजनं कुर्व्वन्ति णेर्विभा षेति णत्वं॥१०४॥

भ० प्रक्षीत्यादि। ये उपस्थितं शत्रुं प्रक्षीणजीवितं त्यक्तप्राणं न कुर्य्युः ओहाक्त्यागे दामागैहागिति ङी ओदित्त्वात् क्तस्य नः

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



नीचोऽन्तरदुर्गेरिति णत्वं ते न्याय्याया न्यायप्राप्ताया अपि लक्ष्म्याः आप्तु प्रहापणं त्यागं कुर्व्वन्ति नीचोऽन्तरदुर्गेरित्यादिना अन्तात् पचे णत्वं ॥ १०४ ॥

कः कृत्वा रावणामर्षप्रकोपणमवद्यधीः। शक्नोत गति शक्तोऽपि कर्त्तुमायुःप्रगोपणं ॥ १०५ ॥

कःकृत्वेत्यादि। अवद्यधीः योऽबुद्धिः रावणामर्षस्य प्रकोपण ज०म० मभिवृद्धिं कृत्वा आयुःप्रगोपणं कर्तुं शक्तोऽपि कः शक्तः इलश्च जुपधादिति णत्वं कुपगुपयोर्हलन्तयोरिगुपधत्वात्॥ १०५ ॥

कइत्यादि। कोऽवद्यधीर्दुर्बुद्धिः शक्तोऽपि दूरस्तुत्योऽपि रावण भ० सम्बन्धिक्रोधस्य प्रकोपणमभिवृद्धिं कृत्वा आयुषः प्रगोपणं कर्तुं शक्तः समर्थो भवति नीचोऽन्तरदुर्गेरित्यादिना कुपगुपोरिजु डत्वात् विभाषया णत्वं ॥ १०५ ॥

वनान्तप्रेङ्खणः पापः फलानां परिणिंसकः। प्रणि त्विष्यति नोभूयः प्रणिन्धास्मान्मधून्ययं ॥ १०६ ॥

वनेत्यादि। प्रेङ्खति गच्छतीति प्रपूर्व्वादिङ्खेः कर्त्तरि ल्युट् ज०म० वनान्तस्य वनसमीपस्य प्रेङ्खणःइजादेःसनुमइति णत्वं फलानां परिणिंसकः भक्षयिता णिंसिचुम्बनइत्यस्य रूपं अस्मान् प्रणिन्द्य तिरस्कृत्य भूयः पुनरप्ययं मधूनि नोऽस्माकं प्रणित्विष्यति मोक्ष्यति णिचचुम्बनइत्यस्य रूपं वानिंसनिक्षनिन्दामिति णत्वं ॥ १०६ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० वनान्तेत्यादि। अयं पापोऽस्मान् प्रणिन्द्य तिरस्कृत्य भूयः पुनरपि मधूनि नः प्रक्षिचिष्यति न चुम्बिष्यति न भक्षयिष्यतीत्यर्थः कीदृशः वनान्तप्रेङ्खणः वनमध्यगः इखिगतौ नन्द्यादिलात्नः नेनोऽन्तरदुर्गैरित्यादिना इजादीदित्वात् णत्वं फलानां परिणिसकः चुम्बकः भक्षकइत्यर्थः प्राम्बन्नोणोऽन्तरदुर्गैरित्यादिना निंसनिक्षनिन्दां विभाषया णत्वं॥ १०६॥

हरेः प्रगमनं नास्ति न प्रभानं हिमद्रुहः। नातिप्रवेपनं वायोर्मया गोपायिते वने॥ १०७॥

ज०म० हरेरित्यादि। मया गोपायिते रक्षिते वने हरेरिन्द्रस्यापि प्रगमनं सञ्चारोनास्ति हिमद्रुहः आदित्यस्य न प्रभानं न प्रकर्षेण दीप्तिः वायोर्नातिप्रवेपनं मन्दगमनं तदनेन भग्नमित्यर्थात् कृत्यचइतिप्राप्तस्य णत्वस्य नभाभूपूकमिगमीत्यादिना प्रतिषेधः॥ १०७॥

भ० हरेरित्यादि। मया गोपायिते रक्षिते वने हरेरिन्द्रस्यापि चन्द्रस्य वा प्रगमनं सञ्चारोनास्ति हिमद्रुहः सूर्य्यस्य प्रभानं प्रकृष्टा दीप्तिर्नास्ति वायोरतिप्रवेपनं प्रचण्डगमनं नास्ति सर्व्वत्र नेनोऽन्तरदुर्गैरित्यादौ स्वाभादिवर्ज्जनान्न णत्वं॥ १०७॥

दुष्पानः पुनरेतेन कपिना भृङ्गसम्भृतः। प्रनष्टविनयेनाग्र्यः स्वादुः पुष्पासवोवने॥ १०८॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



दुष्पेत्यादि। पुनरेतेन प्रनष्टविनयेन कपिना पुष्पासवो दुष्पानः दुःखेन पास्यत इति आतोयुच् षात्पदान्तादिति णत्वस्य प्रतिषेधः भृङ्गसम्भृतो भ्रमरसञ्चितः प्रनष्ट इति नशेःषान्तस्येति प्रतिषेधः अग्र्यः श्रेष्ठः ॥ १०८ ॥

दुष्पानेत्यादि। प्रनष्टविनयेन एतेन कपिना वने भृङ्गेण भ्रमरेण सम्भृतः सञ्चितः श्रेष्ठः अग्र्यः स्वादुर्मिष्टः पुष्पासवः पुनर्दुष्पानः दुःखेन पास्यते मयाद्य ताडनात् नोचोऽन्तरदुर्गैरित्यादौ दुर्ब्बर्ज्जनान्न णत्वं मद्यः क्ते प्रक्षाजिति षड् प्राग्वन्नोण इत्यादिना नशेः षान्तत्वाभावात् न णत्वं ॥ १०८ ॥ भ०

रोषभीममुखेनैवं क्षुभ्नतोक्ते प्लवङ्गमः। प्रोचे सानुनयं वाक्यं रावणं स्वार्थसिद्धये ॥ १०९ ॥

इति णत्वाधिकारः।

रोषेत्यादि। रोषभीममुखेन इति पदव्यवायेऽपि णत्वप्रतिषेधः भीममुख इत्यनेन निमित्तनिमित्तिनोर्व्यवधानात् क्षुभ्नादिषु चेति णत्वप्रतिषेधः एवमुक्ते सति प्लवङ्गमः रावणं प्रोचे वक्तुं प्रवृत्तः वाक्यं वक्ष्यमाणं सानुनयं अनुकूलं किमर्थं स्वार्थस्य सिद्धये स्वार्थस्य सीताप्रत्यर्पणं। इति णत्वाधिकारः॥ १०९ ॥ ज०म०

रोषेत्यादि। रोषेण भीमं दुष्प्रेक्ष्यं मुखं यस्य तेन क्षुभ्नता कलुषीभवता रावणेन एवमुक्ते सति प्लवङ्गमो हनूमान् स्वार्थस्य सीता भ०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



प्रत्यर्पणरूपस्य सिद्धये सानुनयमनुकूलं वाक्यं रावणं प्रोचे रोष भीममुखेनेति पुर्णद्रत्यादौ अतद्वादिति अतद्वपदेन नकारवत् पूर्व्ववर्त्तिनिमित्तवदेकमाचपदं गृह्यते प्रथमद्दष्टत्वात् न तु पूर्व्वं पूर्व्ववर्त्ति यावत् पदं तेनात्र कार्य्यकारणयोर्भीमपदव्यवधानात् न णत्वं अनाङ्पदव्यवायेऽपीति णत्वनिषेधार्थं परसूत्रं क्षुभ्नतेति मनोषादित्वात् भयुक्तस्य नस्य णत्वनिषेधः। इति णत्वाधिकारः। ॥ १०९ ॥

दूतमेकं कपिं बद्धमानीतं वेश्म पश्यतः। लोकत्रय पतेः क्रोधः कथं तृणलघुस्तव ॥ ११० ॥

ज०म० इतः प्रभृति प्रकीर्णकश्लोकानाह दूतमित्यादि। दूतं सन्दे शस्य हारकं एकमद्वितीयं बद्धं अस्वतन्त्रीकृतं वेश्मानीतं पश्यत इति सर्व्वमेतन्न रोषकारणं अतोलोकत्रयपतेस्तवायं तृणवल्लघु रसारः कथं कोपः॥ ११० ॥

भ० अथ प्रकीर्णकाः। दूतमित्यादि। एकमद्वितीयं बद्धं वेश्म गृह मानीतं कपिं दूतं सन्देशहारकं मां पश्यतोलोकत्रयपतेस्तव कथं तृणवत् लघुरसारः क्रोधः॥ ११० ॥

अभ्याचितजनप्रङ्के विजिगीषापराङ्मुखे। कस्मादा नीतिनिष्णस्य संरम्भस्तव तापसे॥ १११ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अग्न्येत्यादि। अग्न्याहितजनप्रके आहिताग्नौ जने प्रवणे वाहि ताग्न्यादिषु पूर्व्वनिपातः तस्मिन् विजिगीषापराङ्मुखे त्यक्तरा ज्यलात् तापसे रामे तपःसहस्राभ्यां विनिनी अण्चेत्यण् निष्णस्य तव नीतौ पटुप्रज्ञस्य कस्माद्धेतोः संरम्भः रोषः॥ १११॥ ज॰म॰

अग्न्येत्यादि। कस्माद्वा तव तापसे रामे संरम्भः क्रोधः कीदृशे अग्न्याहितजनप्रके याज्ञिकजनेषु नम्रे अग्निराहितोयेन सोऽ ग्न्याहितः क्तान्तस्य पूर्व्वनिपातश्चौत्सर्गिकः अत्र तु आहितादि रग्न्यादेरिति सूत्रेण क्तान्तस्य विकल्पेन परनिपातइति परः स्समते पूर्व्वनिपातपरनिपातयोरन्वयबोधेन कर्त्तव्यत्वं नियमा भावात् तथात्वे विवक्षाधीनत्वादुभयपदं सिद्धमेव विजिगीषा पराङ्मुखे विजेतुमिच्छा विजिगीषा तत्र पराङ्मुखे विगतस्पृहे कीदृशस्य नीतिनिष्णस्य नीतौ पण्डितस्य॥ १११॥ भ॰

न सर्व्वरात्रकल्याण्यस्त्रियोवा रत्नभूमयः। यं विनि र्ज्जित्य लभ्यन्ते कः कुर्य्यात्तेन विग्रहं॥ ११२॥

नसेत्यादि। यं विनिर्जित्य सर्व्वरात्रं कल्याण्यः स्त्रियोन लभ्यन्ते सर्व्वाश्च तारात्रयस्येति पूर्व्वकालेति सः अहःसर्व्वैत्यादिना अच् सर्व्वरात्रं कल्याण्यइति सः न रत्नभूमयः रत्नाकराः रत्नानि भूमयस्येति सः कः तेन सह विग्रहं कुर्य्यात् सन्धिरेव युक्तः॥११२॥ ज॰म॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ॰ नसेत्यादि। यं विनिर्ज्जित्य सर्व्वराचान् व्याप्य कल्याण्यः सुखदाः स्त्रियोरत्नानि भूमयश्च न लभ्यन्ते तेन सह विग्रहं कः पुरुषः कुर्य्यात् सर्व्वाश्च ताराचयश्चेति सर्व्वरात्राः ततः सदाष्याद्विवा प्ताविति द्वितीयाविधानात् द्वितीयातत्पुरुषः सर्व्वैकदेशसंख्या तेति षः तदन्तरात्रिशब्दस्य पुंलिङ्गत्वं पूर्व्वरात्रइत्युदाहरणेन ज्ञापितं॥ ११२॥

सङ्गच्छ रामसुग्रीवौ भुवनस्य समृद्धये। रत्नपूर्णौ विवाम्भोधी हिमवान् पूर्व्वपश्चिमौ॥ ११३॥

ज॰म॰ तदेव दर्शयन्नाह सङ्गेत्यादि। यथा रत्नपूर्णावम्भोनिधी पूर्व्वपश्चिमौ भुवनस्य समृद्धये हिमवान् सङ्गतवान् तथा त्वमपि रामसुग्रीवौ भुवनस्य समृद्धये सङ्गच्छ सङ्गतिं कुरु सकर्म्मकत्वात्समोगमिति तङ् न भवति॥ ११३॥

भ॰ सङ्गेत्यादि। भुवनस्य वृद्धये त्वं रामसुग्रीवौ संगच्छ सकर्म्मकत्वात् समोगम्यृच्छेति न सं हिमवान् हिमालयः पर्व्वतः रत्नैः पूर्णौ पूर्व्वपश्चिमौ समुद्रौ यथा सङ्गतवान्॥ ११३॥

सुहृदौ रामसुग्रीवौ किङ्कराः कपियूथपाः। परदारार्पणेनैव लभ्यन्ते मुञ्च मैथिलीं॥ ११४॥

ज॰म॰ तच्च सङ्गतं परदारार्पणेनैवेति दर्शयन्नाह सुहृदित्यादि। रामसुग्रीवौ सुहृदौ लभ्येते सुहृद्दुर्हृदौमित्रामित्रयोरिति निपा

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



तनं तत्प्रतिलाभात् किङ्करालभ्यन्ते किं कुर्व्वन्तीति द्विवाविभेति ट: कपियूथपा: नीलप्रभृतय: तस्मान्मुञ्च मैथिलीमिति ॥ ११४ ॥

भ० सुहृदित्यादि। रामसुग्रीवौ सुहृदौ त्वया लभ्येते एवं सति कपियूथपानीलादय: किङ्करालभ्यन्ते परस्त्रीसमर्पणेनैव नतु स्वकीयकिञ्चिद्द्रव्यप्रदानेन तस्मान्मैथिलीं मुञ्च त्यज ॥ ११४ ॥

धर्म्मं प्रत्यर्पयन् सीतामर्थं रामेण मित्रतां। कामं विश्वासवासेन सीतां दत्वाप्नुहि त्रयं ॥ ११५ ॥

ज०म० किञ्च सीताप्रत्यर्पणात्पुरुषार्थप्राप्तिरिति दर्शयन्नाह धर्म्म मित्यादि। सीतां प्रत्यर्पयन् धर्म्मं अधर्म्मविरते: अर्थं रामेण मित्रतां सर्व्वलाभानामर्थसम्पन्नमित्रलाभस्य महत्त्वात् विश्वास वासेन रामविश्वासपूर्व्वकेणावस्थानेन कामं अत: सीतां दत्वा आप्नुहि लभस्व त्रयं त्रिवर्गं त्रयोऽवयवाअस्येति द्वित्रिभ्यां तयस्यायज्वा ॥ ११५ ॥

भ० धर्म्ममित्यादि। सीतार्पणेन त्रिवर्गप्राप्तिं दर्शयति सीतां दत्वा त्रयं त्रिवर्गं आप्नुहि लभस्व यथा सीतां प्रत्यर्पयन् धर्म्मं प्राप्स्यसि परस्त्रीहरणाभावात् रामेण सह मित्रतामर्थं प्राप्स्यसि विश्वास वासेन कामं प्राप्स्यसि त्रयोऽवयवाअस्येति द्वित्रेर्व्वायट् ॥ ११५ ॥

विराधताडकावालिकबन्धखरदूषणै:। न चन ज्ञापितोयाद्दङ्मारीचेनापि ते रिपु: ॥ ११६ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज॰म॰ रिपुरेवास्तु किन्तेन मित्रीकृतेन नवासौ शक्तोऽपकर्त्तुमिति चेदाह विराधेत्यादि। यादृगसौ रिपुः तादृग्विराधादिभिः मच न ज्ञापितः तव अपि तु ज्ञापितएवेत्यर्थः तस्मात्तेन सह मैत्री युक्ता न विग्रहइति भावः यादृगिति त्यदादिषु दृशइति किन् आसर्व्वनाम्नः ॥ ११६ ॥

भ॰ विराधेत्यादि। शत्रुरपि रामः किं कर्त्तुं शक्नोतीत्यतआह तव रिपुर्यादृक् विराधाद्यैर्मारीचेन च न न ज्ञापितः अपितु ज्ञापित एव ॥ ११६ ॥

खरादिनिधनञ्चैव मा मंस्था वैरकारणं। आत्मानं रक्षितुं यस्मात् कृतं तन्न जिगीषया ॥ ११७ ॥

ज॰म॰ खरादीन् व्यापादयता तेनैव वैरकारणमाचरितं न मयेति चेदाह खरेत्यादि। खरादिनिधनञ्चापि वैरकारणं मा मंस्थाः मा ज्ञासीः लुङि रूपं यस्मादात्मानं संरक्षितुं तत् खरादिनिधनं कृतं न तु जिगीषया विजेतुमिच्छया ॥ ११७ ॥

भ॰ खरादीत्यादि। खरप्रभृतिविनाशमपि विरोधवीजं त्वंमा मंस्थाः मा ज्ञासीः त्वां रूपं यस्मात् आत्मानं रक्षितुं तत् कृतं नतु जेतुमिच्छया ॥ ११७ ॥

ततः क्रोधानिलापातकम्प्रास्याम्भोजसंहतिः। महा ह्रदइव क्षुभ्यन् कपिमाहस्म रावणः ॥ ११८ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ततइत्यादि। ततः कपिवाक्यानन्तरं क्रोधोऽनिलइव तस्या पातेन संश्लेषेण कम्प्रा कम्पनशीला आस्याम्भोजानां मुखपद्मानां संहतिर्य्यस्य सएवं महाह्रदइव क्षुभ्यन् चलन् दैवादित्वाच्छ्यन् ॥११८॥ ज०म०

ततइत्यादि। कपिवचनानन्तरं रावणोमहाह्रदइव क्षुभ्यन् सञ्चलन् कपिमाहस्म उक्तवान् कीसेनातीतेइति की पञ्चतिणपञ्च णब्वाहस्येति सूत्रस्तिपो णप् आहादेशश्च कीदृशः क्रोधोऽनिल इव तस्यापातेनागमनेन संश्लेषेण कम्प्रा कम्पनशीला मुख पद्मानां संहतिर्य्यस्य स तथा अतएव ह्रदतुल्यता ॥११८॥ भ०

हतराक्षसयोधस्य विरुग्णोद्यानशाखिनः। दूतो ऽस्मीति ब्रुवाणस्य किं दूतसदृशं तव ॥११९॥

हतेत्यादि। हताः राक्षसयोधाः अक्षप्रभृतयोयेन विरुग्णाः भग्नाः ओदितश्चेति निष्ठानत्वं उद्यानशाखिनोयेन तस्यैवम्बिधस्य तव दूतोऽस्मीति ब्रुवाणस्य किं दूतसदृशं सन्देशमात्रस्य प्राप काहि दूतादति भावः ॥११९॥ ज०म०

हतेत्यादि। हे वानर अहं दूतोऽस्मीति ब्रुवाणस्य तव किं कर्म्म दूतसदृशं न किमपि दूताहि सन्देशप्रापकाभवन्ति तव कीदृशस्य हताराक्षसयोधायेन विरुग्णाउद्यानवृक्षायेन स तस्य ॥११९॥ भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



पङ्गुबालस्त्रियो निघ्नन् कबन्धखरताडकाः। तपस्वी यदि काकुत्स्थः कीदृक् कथय पातकी॥१२०॥

ज०म० अभ्याहितजनप्रश्ने तापसे कस्मात्संरम्भ इत्याह पङ्गुबाले त्यादि। पङ्गुमङ्गविकलं कबन्धं बालं खरं स्त्रियं ताडकां निघ्नन् व्यापादयन् यदि तपस्वी काकुत्स्थः कीदृक् पातकीति कथय इदं किमीरीयुक्ती॥१२०॥

भ० पङ्गुबालेत्यादि। कस्मात् संरम्भस्तव तापसे इत्यस्योत्तरमाह पङ्गु कबन्धं बालं खरं स्त्रियं ताडकाञ्च निघ्नन् रामो यदि तपस्वी तदा पातकी कीदृगिति त्वं कथय॥१२०॥

अभिमानफलं जानन्महत्त्वं कथमुक्तवान्। रत्ना दिलाभशून्यत्वान्निष्फलं रामविग्रहं॥१२१॥

ज०म० यदुक्तं यं विनिर्जित्य स्त्रियो रत्नभूमयश्च न लभ्यन्त इत्याह अभीत्यादि। अभिमानः फलं यस्य महत्त्वस्य तज्जानन् रत्नादि लाभशून्यं रामविग्रहं कथं निष्फलमुक्तवानसि विग्रहे सति अभिमानफलं महत्त्वं स्यात्॥१२१॥

भ० अभीत्यादि। न सर्व्वरात्रकल्याण्य इत्यादि यदुक्तं तदुत्तर मिदं अभिमानमेव फलं यस्य तन्महत्त्वं जानन् त्वं कथं रामवि ग्रहं रत्नादिलाभशून्यत्वात् निष्फलं उक्तवान् अभिमानस्य फल त्वात्॥१२१॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



**परस्त्रीभोगहरणं धर्म्मएव नराशिनां। सुखमस्तीत्यभाषिष्ठाः का मे साशङ्कता त्वयि॥१२२॥**

परेत्यादि। सीतां प्रत्यर्पयन् धर्म्ममाप्नुहीत्येतदप्ययुक्तमित्याह परस्त्रीणां हरणं परेषाम्भोगहरणञ्च इयमपि नराशिनां धर्म्म एव आचारएव अतोसुखमस्तीत्यभाषिष्ठाः अभिहितवानसीति सीतां प्रत्यर्पयन् धर्म्ममाप्नुहीति लुङि रूपं भयात्प्रत्यर्पयसि चेदाह का मे साशङ्कता त्वयीति त्रैलोक्यविजयित्वात् त्वयीति हनूमद्व्यपदेशेन रामं सूचयति॥ १२२॥ ज०म०

परेत्यादि। धर्म्मं प्रत्यर्पयन् सीतामित्यादि यदुक्तं तदप्ययुक्तमित्याह परेषां स्त्रीणां भोगानाञ्च यद्धरणं तदेव नराशिनां राक्षसानां धर्म्म आचारः अतएव सुखमस्ति इति हेतोः सीतां प्रत्यर्पयन् धर्म्ममित्यादि अभाषिष्ठाः उक्तवानसि त्वां रूपं भयात् सीतां प्रत्यर्पयिष्यति चेदाह का मे मम त्वयि साशङ्कता भयवत्ता त्रैलोक्यविजयित्वात् त्वयीति रामव्यपदेशेन हनूमतीति॥१२२॥ भ०

**ब्रूहि दूरविभिन्नानामृद्धिशीलक्रियान्वयैः। हनूमन् कीदृशं सख्यं नरवानररक्षसां॥१२३॥**

सङ्गच्छ-रामसुग्रीवावित्येतदपि न घटतइत्याह। ब्रूहीत्यादि ऋद्ध्या विभूत्या शीलेन स्वभावेन क्रियया अनुष्ठानेन अन्वयेन कुलेन दूरविभिन्नानां नरादीनां कीदृशं सख्यमिति हनूमन् त्वमेव ब्रूहि॥ १२३॥ ज०म०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० ब्रूहीत्यादि। संगच्छ रामसुग्रीवाविति यदुक्तं तदयुक्त मित्याह हे हनूमन् त्वमेव ब्रूहि नरवानरराक्षसानां सख्यं कीदृशं कीदृशानां छन्दसा सम्पत्या शीलेन स्वभावेन क्रियया अनुष्ठानेन अन्वयेन कुलेन चातिविभिन्नानां ॥ १२३ ॥

एकोद्वाभ्यां विराधस्तु जिताभ्यामविवक्षितः। हत श्छलेन मूढोऽयं तेनापि तव कः स्मयः ॥ १२४ ॥

ज०म० विराधादिभिर्ज्ञापितोऽस्मि यादृगरिरित्यत्रोत्तरमाह एक इत्यादि। एकेनापि विराधेन प्रथमं द्वावपि जितौ ताभ्यां पश्चा द्धतः तत्रापि न प्रकाशं अपि तु छलेन यतोऽसौ मूढोऽल्पबुद्धिः तथाप्यविवक्षितः शौर्य्यान्न प्रतीतः तेनापि हतेन तव विस्मयोजातः ॥ १२४ ॥

भ० एकइत्यादि। विराधादिभिर्न च न ज्ञापितोयादृगित्यस्यो त्तरमिदं एकेनापि विराधेन द्वावपि जिताविति जिताभ्यां द्वाभ्यां पश्चात् छलेन विराधोऽपि हतः यतोऽसौ मूढः अल्पबुद्धिः एको ऽद्वितीयः अविवक्षितः अप्रसिद्धः शौर्य्येणाप्रथितोवा तेनापि हतेन तव कोविस्मयोजातः ॥ १२४ ॥

मन्नियोगाच्च मारीचः पलायनपरायणः। युयु त्सारहितोरामं ममारापहरन् वने ॥ १२५ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



मन्नीत्यादि। मारीचस्तु यतोराममपहरन् ममार मन्नियोगा ज०म०
दादेशात् पलायनपरायणः अपसर्पणनिष्टः सन् पलायनपरा
यणइति परस्य नामरूपत्वादनुपसर्गत्वान्न लत्वं युयुत्सारहितः
योद्धुमिच्छारहितः मन्नियोगादिति अत्ययोत्तरपदयोश्चेति
अस्मदोमदादेशः॥ १२५॥

मदित्यादि। मारीचेन च ज्ञापितइत्यस्योत्तरमाह मारी भ०
चस्तु मन्निदेशतः पलायनतत्परः सन् वने रामं अपहरन् योद्धु
मिच्छया रहितोममार तेन तव कोविस्मयइति भावः॥ १२५॥

निजघानान्यसंसक्तं सत्यं रामोलतामृगं। त्वमेव
ब्रूहि सञ्चिन्त्य युक्तं तन्महतां यदि॥ १२६॥

निजघानेत्यादि। रामोलतामृगं वानरं वालिनं निजघानेति ज०म०
सत्यमेतत् किन्तु अन्यसंसक्तं सुग्रीवेण सह युध्यमानं हतवान्
तच्च त्वमेव सञ्चिन्त्य निश्चित्य ब्रूहि युक्तं तन्महतां यदि॥ १२६॥

निजेत्यादि। वालिवधोऽप्ययुक्तइत्याह लतामृगं वालिनं भ०
रामोनिजघान कीदृशं अन्यसंसक्तं सुग्रीवेण सह युध्यमानं सत्यं
साधुं सत्यं तथ्यं वा निजघानेत्यनेन ब्रूहीत्यनेन वा सम्बन्धः हे हनू
मन् त्वमेव सञ्चिन्त्य ब्रूहि तद्यदि महतां युक्तं॥ २६॥

पुंसा भक्ष्येण बन्धूनामात्मानं रक्षितुं वधः। क्षमि
ष्यते दशास्येन क्वत्येयं तव दुर्म्मतिः॥ १२७॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० पुंसेत्यादि। आत्मानं रक्षितुं पुंसा भक्ष्येण भक्षणार्हेण सतां बन्धूनां खरदूषणादीनां बधाद्दशास्येन क्षमिष्यते सहिष्यते कत्थेयं कभवेयं तव दुर्मतिर्दुष्टबुद्धिः कथम्बादाव्ययात्त्यप् अमेहक्कत सित्रेभ्यइति परिगणनात् ॥ १२७ ॥

भ० पुंसेत्यादि। आत्मानं गोपितुं यस्मादिति यदुक्तं तस्योत्तर मिदं भक्ष्यार्हेण पुंसा रामेण आत्मानं रक्षितुं बन्धूनां खरदूषणा दीनां बधोमारणं दशास्येन क्षमिष्यते सहिष्यते इयं तव दुर्म्मतिः दुर्बुद्धिः कत्या कभवा कुत्र जातेत्यर्थः त्यव्राद्यचिरेत्यादिना त्यः ॥ १२७ ॥

कपिर्जगाद दूतोऽहमुपायं तव दर्शने। द्रुमराक्ष सविध्वंसमकार्षं बुद्धिपूर्व्वकं॥ १२८॥

ज०म० इदानीं कपिर्दशाननोक्तं दूषयन्नाह कपिरित्यादि। तव दर्शने अन्यउपायोनास्तीति बुद्धिपूर्व्वकं बुद्ध्वा निरूप्य द्रुमभङ्गं राक्षसविनाशञ्च उपायमकार्षं कृतवानस्मीति कपिर्जगाद अन्यथा दूतोऽहमागतइति मदावलिप्तः कोमां गणयेत् अतः सदृशमेव मया कृतमिति॥ १२८॥

भ० कपिरित्यादि। इदानीं रावणोक्तं क्रमेण दूषयन् कपिराह तत्र प्रथमं किं दूतसदृशं तवेत्यस्योत्तरमाह कपिर्जगाद किन्त दित्याह दूतोऽहं तव दर्शने द्रुमाणां राक्षसानाञ्च विनाशरूप

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



मुपायं अकार्षं कृतवानसि बुद्धिपूर्व्वकं बुद्धा निरूप्य अन्यथा दूतो ऽयमागतइति कोमां गणयेत् अतः सद्दशमेव कृतमिति ॥ १२८ ॥

आत्रिकूटमकार्षुर्ये त्वत्कानिर्ज्जङ्गमं जगत्। दश ग्रीव कथं ब्रूषे तानबध्यान्महीपतेः ॥ १२९ ॥

आत्रीत्यादि। हे दशमूर्द्धन् ये त्वत्काः लङ्काग्रामणीकाः कबन्धा दयः सएषां ग्रामणीरिति कन् आत्रिकूटं त्रिकूटपर्व्वतमभि व्याप्य जगत् निर्जङ्गमं निर्जन्तुकमकार्षुः तान् महीपतेः रामस्य कथमबध्यान् ब्रूषे अशिष्टनिग्रहोहि महीपतेर्धर्मः जङ्गमइति गमेर्यङ् लुगन्तस्यापि रूपं ॥ १२९ ॥ ज०म०

आत्रीत्यादि। पङ्गुवालस्त्रियइत्यादि यदुक्तं तदुत्तरमाह ये त्वत्कास्त्वत्सेवकाः कबन्धादयस्त्रिकूटपर्व्वतमभिवाप्य जगत् निर्ज्जङ्गमं निर्ज्जन्तुकं अकार्षुः कृतवन्तः कुत्स्यामनिरूपं त्वां सेवन्तइति ढघेकादिति कः त्वमेव मुख्योयेषामिति वा तवामी इति वा विकारसंघेत्यादिना कः युष्मदस्मदोस्त्वाहावित्यादिना एकत्वे त्वदादेशः हे दशग्रीव तान् महीपतेराज्ञोरामस्याबध्यान् कथं ब्रूषे अशिष्टनिग्रहोहि महीपतेर्धर्म्मः ॥ १२९ ॥ भ०

अभिमानफलं प्राप्तं यत्त्वया रामविग्रहे। विनेशु स्तेन शतशः कुलान्यसुररक्षसां ॥ १३० ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० अभीत्यादि। मा भूद्रामविग्रहे रत्नादिलाभः अभिमानफलं महत्त्वमस्तीति यत्त्वया प्रोक्तं तेन निमित्तेन शतशोऽनेकशः असुर रक्षसां कुलानि विनेशुः विनष्टानि ॥ १३० ॥

भ० अभीत्यादि। मा भूद्रामविग्रहे रत्नादिलाभोऽभिमानफलं महत्त्वमस्तीति यत्तया प्रोक्तं तेन हेतुना शतशः शतं शतं असुराणां रक्षसाञ्च कुलानि विनेशुर्विनष्टानि ॥ १३० ॥

यत्त्वधर्म्ममधर्म्मत्वं दुर्व्वलं प्रत्यपद्यथाः। रिपौ रामे च निःशङ्कोनैतत्क्षेमङ्करञ्चिरं ॥ १३१ ॥

ज०म० यत्त्वेत्यादि। यदधर्मं परस्त्रीभोगहरणं दुर्व्वलं असारं अश्रेयसां आवाहकत्वात् स्वधर्म्ममात्मीयमाचारं त्वं प्रत्यपद्यथाः प्रतिपन्नवानसि स्वधर्म्मएव नराश्निनामिति लङि थासि रूपं. यच्च रिपौ रामे निःशङ्कः निर्भयः विहरसि का मे साशङ्कता त्वयीति तदेतदुभयमपि न चिरं क्षेमङ्करं कल्याणकरं क्षेमप्रिय मद्रेष्वचेति खच् ॥ १३१ ॥

भ० यदित्यादि। परस्त्रीभोगहरणं यत्त्वधर्म्ममात्मीयमाचारं धर्म्मरहितं दुर्व्वलमसारं प्रत्यपद्यथाः प्रतिपन्नवानसि यच्च रामे रिपौ त्वं निःशङ्कः निर्भयः का मे साशङ्कता त्वयीत्युक्तवान् तदेतदुभयं चिरं क्षेमङ्करं कल्याणदायकं न भविष्यति क्षेमप्रियमद्रात्कुर्व्वेति खः ॥ १३१ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अन्वयादिविभिन्नानां यथा सख्यमनीप्सितं। नैषी
र्विरोधमप्येवं सार्द्धं पुरुषवानरैः॥१३२॥

अन्वेत्यादि। यथा नरादीनां अन्वयादिभिर्दूरविभिन्नत्वात् ज॰म॰
सख्यमनीप्सितं आप्तुमनिष्टं एवं पुरुषवानरैः सार्द्धं विग्रहमपि
नैषीः नेष्टवानसि॥१३२॥

अन्वयेत्यादि। ब्रूहि दूरविभिन्नानामित्यादि यदुक्तं तदुत्त भ॰
रमिदं अन्वयादिविभिन्नानां नरवानररक्षसां यथा सख्यमनी
प्सितं नेष्टं विरोधमप्येवं पुरुषवानरैः सह नैषीः न इच्छ
मायोगे टी॥१३२॥

विराधं तपसां विघ्नं जघान विजितोयदि। वरो
धनुर्भृतां रामः स कथं न विवक्षितः॥१३३॥

विरेत्यादि। तपसां विघ्नं विराधं विहन्यतेऽस्मिन्निति घञर्थे ज॰म॰
कविधानमिति कः ताद्दक् छलेनापि हन्तुं न दोषायेति दर्शयति
धनुर्भृतां वरः श्रेष्ठः सन् विजितोऽभिभूतोऽपि रामोयदि जघान
स कथं न विवक्षितः यतो राममप्यसौ जितवान्॥१३३॥

विराधमित्यादि। एकोद्वाभ्यामिति यदुक्तं तदुत्तरमाह भ॰
धनुर्धराणां श्रेष्ठोऽपि रामः आदौ विजितोऽभिभूतोऽपि सन्
पश्चात्तपसां विघ्नमन्तरायं विराधं यदि जघान तदा कथं स

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



विराधोन विवक्षितः न प्रसिद्धः अपि तु विवक्षितएव सराम इत्यन्ये विहन्यतेऽस्मिन्निति विघ्नः अभिधानादाधारे टक्॥१३३॥

प्रणश्यन्नपि नाशक्रोदत्येतुं बाणगोचरं। त्वयैवोक्तं महामायोमारीचोरामहस्तिनः॥१३४॥

ज॰म॰ प्रणेत्यादि। मारीचः प्रणश्यन्नपि पलायनपरोऽपि सन् महामायः कनकमृगरूपधारित्वात् रामहस्तिनः रामोहस्तीव तस्य बाणगोचरं बाणपदवीं अत्येतुं अतिक्रमितुं नाशक्रोत् न शक्तवानिति त्वयैवोक्तं ममारेत्यभिदधता न मया यदि शक्नोति अतिक्रमितुं न ममार॥१३४॥

भ॰ प्रणश्यन्नित्यादि। मन्नियोगाच्च मारीचइत्यादि यदुक्तं तदुत्तरमाह महती माया यस्य समारीचः प्रणश्यन्नपि पलायमानोऽपि रामहस्तिनोबाणगोचरं बाणपदवीं अत्येतुं अतिक्रमितुं न अशक्नोत् न शक्तोऽभूत् इति तु त्वयैवोक्तं रामोहस्तीव बलवत्वात् एतेन रामस्य धन्विश्रेष्ठत्वमस्त्येवेति सूचितं॥१३४॥

अन्यासक्तस्य यद्वीर्य्यं न त्वं स्मरसि वालिनः। मूर्च्छावान्नमतः सन्ध्यां ध्रुवं तद्वाङ्‌पीडितः॥१३५॥

अन्येत्यादि। सन्ध्यादेवतां नमतो अन्यासक्तस्य वालिनोयद्वीर्य्यं सामर्थ्यं तत् ध्रुवमवश्यं त्वं न स्मरसि न चेतयसि कुतः वाङ्‌पीडितः

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



सन् मूर्च्छावान् जातः अतएव न स्मरसि येनैवमुक्तवानसि॥ १२५॥

अन्येत्यादि। निजघानान्यसंसक्तमित्यादि यदुक्तं तदुत्तर माह अन्यासक्तस्य वालिनोयद्वीर्य्यं तत्त्वं ध्रुवं न स्मरसि कीदृ शस्त्वं सन्ध्यां नमतोवन्दमानस्य तस्य वाहुपीडितः सन् मूर्च्छा वान् एतेन वालिवधेऽपि महत्त्वमस्तीति सूचितं॥ १२५॥ भ०

असद्बन्धुवधोपज्ञं विमुञ्च बलिविग्रहं। सीतामर्पय नन्तव्ये कोपदण्डात्मभूमिभिः॥ १२६॥

निजघानान्यसंसक्तमिति उपसंहरन्नाह असदित्यादि। यतो बलवन्तोऽपि बलीयान् रामः तस्माद्बलिना रामेण सह विग्रहं मुञ्च त्यज कीदृशं बन्धुवधोपज्ञं प्रथमतोज्ञातिविनाशेन विदित मित्यर्थः उपज्ञायतइत्युपज्ञा इगुपधेति कः बन्धुवधस्योपज्ञेति सः उपज्ञोपक्रममिति नपुंसकलिङ्गता तत्सामानाधिकरण्याद सदिति नपुंसकलिङ्गता नन्तव्ये प्रणामार्हे कोपदण्डात्मभूतिभिः सह सीतामर्पय॥ १२६॥ ज०म०

असदित्यादि। तस्मात् बलिना रामेण सह विग्रहं विरोधं विमुञ्च त्यज कीदृशं असतां बन्धूनां बधस्य उपज्ञं प्रथमतोज्ञा तिबधेनावेदितमित्यर्थः उपज्ञायते यतइत्युपज्ञआतइति ङः परमते उपज्ञोपक्रमयोरादिकथने क्लीवत्वं तन्मते असतां बन्धूनां बधस्य उपज्ञा प्रथमतोज्ञानं यस्मादिति बहुव्रीहिः एतेन राव भ०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



णस्य बन्धुवधेन भविष्यतीति यत् ज्ञानमासीत् बलिविग्रहेण तदभावइति सूचितं तस्मात् नन्तव्ये प्रणम्ये रामे कोषादिभिः सीतां समर्पय ॥ १३६ ॥

स्फुटपरुषमसह्यमित्थमुच्चैः सदसि मरुत्तनयेन भाष्यमाणः। परिजनमभितोविलोक्य दाहं दशवदनः प्रदिदेश वानरस्य ॥ १३७ ॥

इति प्रकीर्णकाः॥

इति भट्टिकाव्येऽशोकवनप्रभञ्जनं नाम नवमः सर्गः ॥ ९ ॥

ज०म० स्फुटेत्यादि। इत्थं स्फुटपरुषं उक्तप्रकारेण स्फुटं स्पष्टं परुषं रूक्षं अतएवासह्यं सोढुमशक्यं उच्चैर्महता ध्वनिना सदसि सभायां मरुत्तनयेन भाष्यमाणोऽभिहितः इत्थमित्यनेन वस्तुनः परिसमापितत्वात् तेन वर्त्तमानसामीप्यइति लट् परिजनमभितः उभयपार्श्वे स्थितान् भृत्यान्विलोक्य वानरस्य दाहं प्रदिदेश आदिष्टवान् ॥ १३७ ॥

इति भट्टिकाव्यटीकायां जयमङ्गलायामधिकारकाण्डे चतुर्थः परिच्छेदः। काव्यस्य मारुतिसंयमोनाम नवमः सर्गः ॥ ९ ॥

भ० स्फुटेत्यादि। इत्थमुक्तप्रकारेण स्फुटं स्पष्टं परुषं रूक्षं अतएवासह्यं उच्चैर्महता ध्वनिना सदसि सभायां मरुत्तनयेन

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



हनूमता भाष्यमाणउक्तः सन् अभितउभयपार्श्वे परिजनं विलोक्य दशवदनोरावणोवानरस्य दाहं प्रदिदेश आदिष्टवान् ॥ ७१३॥ इति प्रकीर्णकाः॥

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्री भरत भ० सेनविरचितायां भट्टिटीकायां मुग्धबोधिन्यां नवमः सर्गः॥ ९॥

समाप्तमधिकारकाण्डं॥

अथ सवल्कदुकूलकुथादिभिः परिगतोज्वलदुद्धत वालधिः। उदपतद्दिवमाकुललोचनैर्नृरिपुभिः सभयै रभिवीक्षितः॥ अनुप्रासवत्॥ १॥

शब्दलक्षणमुक्तमपि लक्षयन् काव्यलक्षणार्थं प्रसन्नकाण्डमु ज०म० च्यते काव्यस्याच प्रसन्नत्वात् प्रथमञ्चेदं लक्षणं यत्प्रसन्नतानाम अविद्वदङ्गनाबालप्रतीतार्थं प्रसन्नवदिति शब्दलक्षणं पुनः प्रकीर्ण मेव द्रष्टव्यं तत्रास्मिन् काण्डे चत्वारः परिच्छेदाः अलङ्कार माधुर्य्यप्रदर्शनदोषाः भाषासमावेशश्चेति तत्रालङ्कारोद्विविधः शब्दालङ्कारोऽर्थालङ्कारश्चेति तत्र पूर्व्वोद्विविधः अनुप्रासोयम कश्चेति उभयं दर्शयन्नाह। अथेति। अथ दाहादेशानन्तरं स वानरोवियदाकाशमुदपतत् उत्पतितवान् वल्कं अंशुकं शुल्क वल्कोल्काइति निपातनं आदिशब्दादन्यैरपि मुञ्जादिभिः परि गतः परिवेष्टितः ज्वलनुद्धतऊर्द्धीकृतोवालधिः पुच्छं यस्य सः नृरिपुभिः राक्षसैः सभयैराकुललोचनैरभिवीक्षितः किमयमनु ष्ठास्यतीति अनुप्रासवदिति अनुप्रासोयस्मिन्विद्यतइति तस्य च लक्षणं सरूपवर्णविन्यासमनुप्रासं प्रचक्षतइति॥ १॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० अथ प्रकीर्णकशब्दलक्षणमुक्तं काव्यं लक्षयन् प्रसन्नकाण्ड मारभते काव्यस्यात्र प्रसन्नत्वात् प्रसादः शब्दार्थयोर्गुणविशेषः तत्रास्मिन् काण्डे चत्वारः परिच्छेदाः अलङ्कारस्य माधुर्या दिगुणस्य भाविकस्य भाषासमावेशस्य च दर्शनात् काव्यशो भाजनकोऽलङ्कारः सच द्विविधः शब्दालङ्कारोऽर्थालङ्कारश्च तत्र पूर्व्वोद्विविधः अनुप्रासोयमकश्च तत्र प्रथममनुप्रासशब्दा लङ्कारं प्रदर्शयति। अथेत्यादि। दाहादेशानन्तरं सवानरो वियदाकाशं उदपतत् उद्गतवान् कीदृशः वल्कैस्तरुविशेषल ग्भिर्दुकूलैः चामैः कुथैश्चित्रकम्बलैःआदिशब्दात् कुथादिभिश्च परिगतोवेष्टितः ज्वलन् उद्धूतऊर्द्धीकृतोवालधिः पुच्छं यस्य सः तथा नृरिपुभिः राक्षसैरभिवीक्षितआभिमुख्येन भालितः कीदृशैः किमयं करिष्यतीति सभयैस्त्रासयुक्तैः अतएव आकुललोचनैः आकुलानि इतस्ततः परिक्षिप्तानि लोचनानि येषां वल्कं वल्कलमस्त्रियामित्यमरः कार्पासं वादरं क्षौमं दुकूलाख्यञ्च वल्कलमित्यमरमाला कुथपदस्थाने कुशपदं केचित्पठन्ति वाल हस्तश्च वालधिरित्यमरः द्रुतविलम्बितनामवृत्तमिदं तल्लक्षणं यथा द्रुतविलम्बितमाह नभौभरावितिं। अनुप्रासवदिति अनु प्रासोविद्यतेऽस्मिन्निति सोऽस्मन्नपादतुरिति वतुः वर्णानुवृत्ति रनुप्रासः तथाच वर्णानामनुवृत्तिर्या नातिदूरान्तरश्रुतिः। अनुप्रासः सतेनैव सनाथा काव्यपद्धतिरिति। सरूपवर्णविन्यास मनुप्रासं प्रचक्षतइति च अनुप्रासोद्विविधश्छेकानुप्रासवृत्त्यनु

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



नुप्रासश्च अनेकस्य वर्णस्य सकृत्साहृश्यं छेकानुप्रासः स एवो त्कृष्टत्वादिह प्रदर्शितः॥ १॥

रणपण्डितोऽग्र्यविबुधारिपुरे कलहं स राममहितः कृतवान्। ज्वलदग्निरावणगृहन्च बलात्कलहंस राममहितः कृतवान्॥ युक्पादयमकं॥ २॥

यमकस्यापि लक्षणं तुल्यश्रुतीनां भिन्नानामभिधेयैः परस्परं। वर्णानां यः पुनर्व्वादोयमकन्तन्निरूप्यतइति तदनेकविधं दर्शय न्नाह। रणेति। स कपिः वियदुत्पतितोराममहितोरामपूजितः रणपण्डितोयुद्धकुशलः अग्र्यविबुधारिपुरे अग्र्योयोविबुधः इन्द्रः तस्य योरिपुर्दशाननस्तस्य पुरे लङ्कायां कलहं कृतवान् कलहं सान् रमयतीति कलहंसरामं रमेर्ण्यन्तात्कर्मण्यण् तादृशं राव णगृहं बलाद्दार्य्यमाणोऽपि ज्वलदग्नि दीप्यमानपावकं कृतवान् कृतं विद्यते यस्येति कृतापेक्षीत्यर्थः। अहितः शत्रुः युक्पादय मकमिति युजोर्द्वितीयचतुर्थयोः पादयोर्यमितत्वात्॥ २॥

जं॰मं॰

अथ यमकान्युच्यन्ते तल्लक्षणं यथा तुल्यश्रुतीनां भिन्नानाम भिधेयैः परस्परं। वर्णानां यः पुनर्वादोयमकं तन्निरुच्यतइति अस्य भेदावहवः काव्यप्रकाशादौ दर्शिताः केचनाच दर्शिताः तत्र प्रथमं युक्पादयमकं दर्शयति रणेत्यादि। अग्र्यस्य श्रेष्ठस्य विबुधस्य इन्द्रस्य योऽरिः शत्रुर्दशाननः तस्य पुरे लङ्कायां स

भ॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



सरसां सरसां परिमुच्य तनुं पततां पततां ककुभो बहुशः । सकलैः सकलैः परितः करुणैरुदितैरुदितैरिव खं निचितं ॥ ४ ॥ पादादियमकं ।

ज॰म॰ सरसामित्यादि । सरसां तोयाशयानां तनुं शरीरं सरसां सार्द्रां परिमुच्य त्रासात्त्यक्त्वा पततां पक्षिणां बहुशः बहून्वारान् ककुभो दिशः पततां गच्छतां उदितैः शब्दितैः वदेर्यजादित्वात्सम्प्रसारणं सकलैः समस्तैः सकलैः माधुर्य्यवद्भिः कलशब्दस्य गुणमात्रवृत्तित्वान्न तद्वति वर्त्तते ततश्च सहशब्देन समासो भवति करुणैः कारुण्यजनकैः रुदितैरिव क्रन्दितैरिव परितः समन्तात् खमाकाशं विततं व्याप्तं । पादादियमकमिति पादानामादौ यमितत्वात् ॥ ४ ॥

भ॰ सरसामित्यादि । सरसां जलाशयानां सरसां आर्द्रां स्निग्धां तनुं शरीरं जलाशयमध्यं परिमुच्य भयात् त्यक्त्वा बहुशो बहून् वारान् ककुभो दिशः पततां गच्छतां पततां पक्षिणां उदितैः शब्दितैः खमाकाशं परितः सर्व्वतो निचितं व्याप्तं रुदितैरिव क्रन्दितैरिव सकलैः सम्पूर्णैः सकलैरव्यक्तमधुरैः कलशब्दोऽत्र धर्म्मवचनः किम्वा सर्व्वैरुदितैर्व्वचनैरव्यक्तमधुरध्वनियुक्तैरित्यर्थः वाक्यसमुदायस्यावयवयोगात् करुणैः कारुण्यजनकैः केचित्तु सरसां सम्बन्धिनां पततां सरसां तनुं परिमुच्य भयात् परिशोषेत्याहुः वदेः के शद्दखपाद्योरिति जिः तोटकनामवृत्तं

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



तल्लक्षणं यथा वद तोटकमब्धिसकारयुतं। पादादियमकमिति चतुर्णां पादानामादौ यमकितत्वात्॥ ४॥

न च काञ्चन काञ्चनसद्मचितिं न कपिः शिखिना शिखिना समयौत्। न च न द्रवता द्रवता परितो हिमहानकृता न कृता क्वचन॥ पादमध्ययमकं॥ ५॥

नचेत्यादि। काञ्चनसद्मचितिं सौवर्णगृहसंहतिं काञ्चन काञ्चिदपि शिखिना अग्निना शिखिना ज्वालावता न कपिर्न च समयौत् न च न मिश्रितवान् अपि तु संश्लेषं नीतवान् यौतेर्लुङि उतो वृद्धिर्लुकि हलीति वृद्धिः क च कचिन्नाम हिमहानकृता हिमहानस्य हिमापचयस्य कर्त्रा शिखिना जहातेर्भावे ल्युट् न च न द्रवता न च न विसर्पता अपि तु द्रुतस्ततोगच्छता द्रवता द्रवभावः परितः न न कृता किन्तु कृतैव काञ्चनसद्मचितेरित्यर्थात्। पादमध्ययमकमिति पादानां मध्ये यमितत्वात्॥ ५॥ ज॰म॰

नचेत्यादि। कपिर्हनूमान् काञ्चन काञ्चनसद्मचितिं सौवर्णगृहसंहतिं शिखिना अतिशयितशिखायुक्तेन जाज्वल्यमानेन शिखिना वह्निना न समयौत् इति न अवश्यमेव समयौत् मिश्रितवान् युल मिश्रणेघी रपिद्धस्युतोऽदेर्न्निरिति न्निः अभिधानात् विभक्त्यन्तात् किमस्त्रिचनाविश्येते हिमहानकृता वह्निना परितः सर्व्वतोन च न द्रवता अपि तु गच्छता सता कचन कुत्रापि काञ्चनसद्मचिते भ॰



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



द्रवता द्रवत्वं न हृता अपि तु हृतैव द्रुगतौ शत्र द्रवस्य भाव इति तः हिमस्य हानं नाशं करोतीति क्विप् हानमिति जहातेर नटि रूपं । पादमध्ययमकमिति चतुर्णां पादानां मध्ये यमकितत्वात् ॥ ५ ॥

अवसितं हसितं प्रसितं मुदा विलसितं ह्रसितं स्मरभासितं । न समदाः प्रमदा हतसम्मदाः पुरहितं विहितं न समीहितं ॥ चक्रवालयमकं ॥ ६ ॥

ज॰म॰ अवेत्यादि । हसितं यत्प्रसितं सन्ततप्रवृत्तं नित्यप्रमुदितत्वात्तत्रत्यजनस्य तदग्निसङ्गमादवसितं अपगतं षोऽन्तकर्म्मणीत्यस्य घतिस्यतीतीत्वं मुदा हर्षेण यद्विलसितं शृङ्गारविचेष्टितं लसितं श्लिष्टमनुबद्धमिति यावत् स्मरभासितं मन्मथदीपितं ह्रसितं अल्पीकृतं प्रमदास्त्र स्त्रियः न समदाः सदर्पा न जाताः हतसंमदाः ध्वस्तहर्षाः प्रमदसंमदौ हर्षइति निपातनं यच्च पुरहितं पुरानुकूलं समीहितं कर्त्तुरीप्सितं तन्न विहितं नानुष्ठितमित्यर्थः । चक्रवालयमकमिति मण्डलाकारेण यमितत्वात् तथाहि द्वयोर्द्वयोः पदयोरन्त्यवर्णानां नेमिवदवस्थितत्वात् मध्यस्थवर्णस्याविसदृशस्य नेमिवदिति । तथाचास्य लक्षणं पदानामवसाने तु वाक्ये स्यात्तुल्यवर्णता । प्रतिपादं भवेद्यत्र चक्रवालं तदुच्यतइति ॥ ६ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अवेत्यादि। मुदा हर्षेण यद्धसितं हास्यं प्रहसितं अत्यन्त भं॰ प्रवृत्तमासीत् तदवसितं विनष्टं तत्रत्यलोकानामप्रमुदितत्वात् षोयनाशे अकर्म्मकत्वात् गत्यर्थाढेत्यादिना कर्त्तरि क्तः दोषो मास्यामिति ङिः प्रसितमिति षिन्‌गन्ध्बन्धे इत्यस्य रूपं किञ्च मुदा यत् विलसितं विलासः शृङ्गारचेष्टितं स्मरेण कामेन भासितं उद्दीपितं लसितं संश्लिष्टमासीत् तदप्यवसितमिति सम्बन्धः लषश्लिषिक्रीडे हसितमिति पाठे विलसितमल्पीभूतं प्रमदाश्च स्त्रियोन समदाः न सदर्पाः यतोहतस्वमदानष्टहर्षाजाताः घञलनटइति मदेरल् यच्च पुरहितं नगरानुकूलं समीहितं कर्त्तुमिष्टं तन्न विहितं नानुष्ठितं। चक्रवालयमकमिति मण्डला कारेण यमकितत्वात्तथाहि सर्व्वेषां पादानां अन्त्यवर्णानां सदृ शतया नेमिवदवस्थितत्वात् मध्यस्थवर्णस्य च विसदृशस्य नाभि वदवस्थितत्वात्। मण्डलाकारतालक्षणं यथा पादानामवसाने तु सर्व्वेषां तुल्यरूपता। प्रतिपादं भवेद्यत्र चक्रवालं तदुच्यत इति॥ ६॥

समिद्धशरणा दीप्ता देहे लङ्का मतेश्वरा। समिद्ध शरणादीप्ता देहे लङ्कामतेश्वरा॥ समुद्गयमकं॥ ७॥

समिद्धेत्यादि। देहे अभ्यन्तरभागे समिद्धशरणा उज्ज्वलगृहा ज॰म॰ ततएव दीप्ता शोभावती लङ्का पुरी मतेश्वरा ज्ञातमहादेवा तत्रान्यदेवस्य नामापि न गृह्यते समिधोदधति ऊतवन्तोवेति

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



समिद्धा ऋषयः पूर्व्वस्मादातोऽनुपसर्गे कइति कः द्वितीयस्मादन्येष्वपि दृश्यतइति डः अपिशब्दस्य सर्व्वोपाधिव्यभिचारार्थत्वात् धात्वन्तरादपि भवति झयोहोऽन्यतरस्यामिति पूर्व्वसवर्णः तान् शृणन्ति हिंसन्तीति कृत्यल्युटोबहुलमिति कर्त्तरि ल्युट् समिद्धशरणाराक्षसास्तान् दानमानाभ्यामादीपयति प्रोत्साहयतीति क्विप् समिद्धशरणादीप् तेन रावणेन ताय्यते पाल्यतइति तायतेः कर्म्मणि कारके विवक्षिते संपदादिदर्शनात् क्विप् वेरपृक्तस्येति लोपात्पूर्व्वं लोपोव्योर्व्वलीति लोपः समिद्धशरणादीप्ता रावणस्य पालनीया समिद्धशरणादीप्ता लङ्का देहे दग्धा अलङ्कामोऽस्येत्यलङ्कामः तद्भावः अलङ्कामता तस्यामलङ्कामतायां पर्य्याप्तेच्छायां ईश्वरा लङ्का सर्व्वेच्छासम्पादनात्। समुद्गयमकमिति समुद्गाकारेण यमितत्वात् पाददययोरर्द्धद्वययोश्च संपुटवत्सादृश्यात् ॥ ७ ॥

भ॰ समिद्धेत्यादि। लङ्का देहे दग्धा अर्थात् हनूमता कर्म्मणि ठी कीदृशी देहे अभ्यन्तरभागे समिद्धशरणा उज्ज्वलगृहा शरणं गृहरक्षित्रोरित्यमरः अतएव दीप्ता शोभावती मतेश्वरा मतो ज्ञातईश्वरोमहादेवोयस्यां तत्रान्यदेवस्य नामापि न ज्ञायते इति भावः मतः पूजितइति वा पुनः कीदृशी समिद्धशरणादीप्ता समिधोदधातीति आदन्तत्वात् हनजनादिति डः किम्वा समिधो जुहोतीति तेनैव गमादित्वात् डः समिद्धोमुनिः तं शृणन्ति हिंसन्तीति समिद्धशरणाराक्षसाः शृहगिद्धिंसने कभावेसौ इति कर्त्त

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



र्थ्यनट् नन्द्यादित्वाद्वा तान् मानदानाभ्यामादीपयतीति कर्त्तरि क्विप् समिद्धश्वरणादीप् रावणः तेन ताय्यते पाल्यते इति कर्म्मणि क्विप् तायृङ्पालनसन्तत्योः य्वोर्लोपो हस्यय इति यलोपः समिद्धश्वरणादीपो रावणस्य पालनीयेत्यर्थः किम्वा समिद्धानां दीप्तिमतां देवादीनां शरणेन हिंसनेन अदीपं दीप्त्यभावं तायते पालयति सन्तनुते वेति भावे क्विप् दीपनं दीविति भावे क्विप् पश्चान्नञ् समासः अलङ्कामतेश्वरा अलङ्कामतायां यथेष्टेच्छायां ईश्वरा सर्व्वेच्छायाः सम्पादयित्रीत्यर्थः अलमत्यर्थः कामोऽस्य अलङ्कामः तस्य भावोऽलङ्कामता तस्यामीश्वरेति सप्तमीसमासः वरप्रत्ययान्तादीश्वरशब्दात् स्त्रियामतआवित्याप् भवत्येव औणादिकवरट्प्रत्ययान्तात्तु ङीप् प्रत्यय इति बोध्यं श्रीपतिस्मरणात् नदादावीश्वरशब्दं विभाषया पठन्त्यन्ये गौणादिरयमित्यपरे यद्वा लङ्काभिः कुलटाभिर्मतः पूजितईश्वरोयत्र यद्वा अलमत्यर्थं कामत ईषन्मतईश्वरोयत्र कोरीषदर्थे इति कुशब्दस्य कादेशः लङ्का रक्षःपुरी शाखा डाकिनी कुलटासु चेति विश्वः। समुद्गयमकमिति द्वयोरर्द्धयोः सम्पुटाकारेण यमकितत्वात् तथाच रुद्रभट्टः अर्द्धं पुनरावृत्तं जनयति यमकं समुद्गकं नामेति अर्द्धाभ्यासः समुद्गः स्यादिति दण्डी ॥ ७ ॥

पिशिताशिनामनुदिशं स्फुटतां स्फुटतां जगाम परिविक्लवता। क्लवता जनेन वसुधाचरितं चरितं महत्त्वरहितं महता ॥ काञ्चीयमकं ॥ ८ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज॰म॰ पिशिताशिनामित्यादि। पिशिताशिनां मांसाशिनां राक्षसानामनुदिशन्दिशिदिशि अव्ययीभावे शरत्प्रभृतिभ्यइति टच् स्फुटतां पलायमानानां परिविक्लवता स्फुटतां स्पष्टतां जगाम जनेन चेतरेण क्लवता चलता महता शौर्य्यादिगुणयुक्तेनापि सता यच्चरितं चेष्टितं बहुधा बहुप्रकारं तन्महत्त्वरहितं महता विक्लवमाचरितं अनुष्ठितं भयात्। काञ्चीयमकमिति रसनाकारेण यमितत्वात् तथाद्य पादस्यान्ते परस्यादौ च सदृशो विन्यासः ॥८॥

भ॰ पिशितेत्यादि। पिशिताशिनां राक्षसानां परिविक्लवता व्याकुलता स्फुटतां स्पष्टतां जगाम किंकुर्व्वतां अनुदिशं दिशि दिशि स्फुटतां पलायनेन विकाशं गच्छतां स्फुटशिविकाशे अनु शब्देन वीप्सायामव्ययीभावे शरद्दिपाड्यद्इति अ प्रत्ययः महता शौर्य्यादिगुणयुक्तेनाप्यपरेण जनेन क्लवता चलता महत्त्वरहितं माहात्म्यविवर्जितं चरितं चेष्टितं बहुधा बहुप्रकारैराचरितं कृतं भयात् क्लवज्वलचाले। काञ्चीयमकमिति रसनाकारेण यमकितत्वात् तथाच एकस्यान्तेऽपरस्यादौ सदृशं दृश्यते यदि। तत्काञ्चीयमकं नाम व्याहृतं कविपुङ्गवैरिति एतदेव दण्डिना सन्दष्टयमकमुक्तं तथाहि सन्दष्टयमकस्थानमन्तादीपादयोर्द्वयोरिति ॥८॥

न गजानगजादयितादयिताविगतं विगतं ललितं ललितं। प्रमदा प्रमदामहता महतामरणं मरणं समयात्समयात्॥ यमकावली ॥९॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



नगजेत्यादि ॥ गजाहस्तिनः नगजाः पर्व्वतजाताः अतएव ज॰म॰ दयितादृष्टा न दयिताः न रचिताः दयतिरत्र रचणार्थः विगतं वीनां पचिणाङ्गतं गमनमपि विगतं नष्टं ललितं यदीप्सितं वस्तु तल्ललितं पीडितं प्रमदा योषित् प्रमदा प्रगतोमदोयस्या इति प्रमदा हर्षशून्येत्यर्थः आमहता रोगपीडितेव आमोरोग इवशब्दलोपोऽत्र द्रष्टव्यः अमेन पीडिता पलायनहता वा अमोगत्यादिषु महतां शूराणां अरणं अविद्यमानयुद्धं मरणं विनाशनं समयात् समाप्तं यातेर्लङि रूपं समयात् कालेन। यमकावलीति यमकमाला ॥ ८ ॥

नगेत्यादि। गजाहस्तिनोन दयितान रचिताः जिदयङ् भ॰ ग्रहणेगतौ बधेदानेऽवने कीदृशाः नगजाः पर्व्वतजाः तेनोत्कृष्टा अतएव दयितादृष्टाः परञ्च विगतं वीनां पचिणां गतं गमनं विगतं विनष्टं अग्निदग्धपचत्वात् ललितमीप्सितं वस्तु हारभेदोवा ललितं चलितं भयाकुलजनसंसर्गादन्यत्र गतमित्यर्थः ललितं हारभेदेस्यादीप्सिते चलितेऽपिचेति विश्वः प्रमदा नारी अप्रमदा प्रमदरहिता हर्षशून्या इत्यर्थः प्रगतमदा वा आमहता रोगपीडितेव इवशब्दार्थोऽत्र गम्यते अमक् रोगे घञ् यद्वा अमेन गमनेन हता पीडिता यद्वा अमेन दाहेन हाहाकारशब्देनवह्निशब्देन वा हता व्याकुला अमगतौ शब्दे महतां शूराणां अरणं युद्धरहितं मरणं समयात् कालवशात् समयात् संप्राप्तं यातेर्धी यद्वा महतां जनानां अह खेदेऽद्भुते निश्चये वा तां प्रमदां समया समीपे समयात् कालेन युद्धरहितं मरणं आत् आगतं अतश्च

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



तत्य गमनेदृत्यस्मात् आङ्पूर्व्वात् क्विप् स्त्रियं हित्वा यतोन गच्छन्तीत्यर्थः। यमकावलीति यमकमाला तथाहि पदेषु यत्र सर्व्वेषु सादृश्यं दृश्यते यदि। यमकावलिरुद्दिष्टा शिष्टा यमककोविदैरिति॥ ९॥

न वानरैः परिक्रान्तां महद्भिर्भीमविक्रमैः। नवा नरैः परिक्रान्तां ददाह नगरीं कपिः॥ अयुग्मपाद यमकं॥१०॥

ज०म० नवेत्यादि। वानरैरन्यैर्महद्भिर्महाप्राणैर्भीमविक्रमैः अप्रच्छ शौर्य्यैः शक्रादिभिः न पराक्रान्तां नावष्टब्धां नगरीं लङ्कां नरैर्मनुष्यैर्न च पराक्रान्तां विगृहीतां कपिर्हनूमान् ददाह दग्धवान्। अयुक्पादयमकमिति। प्रथमतृतीययोर्यमितत्वात्॥ १०॥

भ० नवेत्यादि। कपिर्हनूमान् नगरीं ददाह दग्धवान् नगरीं कीदृशीं वानरैर्व्वालिसुग्रीवादिभिर्न पराक्रान्तां न गतां सर्व्वैर्मनुष्यैः कार्त्तवीर्य्यादिभिर्न पराक्रान्तां न विगृहीतां किम्वा अनरैर्मनुष्यभिन्नैर्देवयक्षादिभिरपि नवा पराक्रान्तां न च विगृहीतां कीदृशैर्महद्भिर्महाप्रमाणैर्भीमविक्रमैर्भीमशौर्य्यैः शिवतुल्यपराक्रमैर्व्वा। अयुक्पादयमकमिति। अयुजोः प्रथमतृतीययोर्यमकितत्वात्॥ १०॥

द्रुतं द्रुतं वह्निसमागतं गतं महीमहीनद्युतिरोचितं चितं। समं समन्तादपगोपुरं पुरं परैः परैरप्यनिराकृतं कृतं॥ पादाद्यन्तयमकं॥११॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



द्रुतमित्यादि। यत्पुरं चितं सौवर्णगृहसंहत्या व्याप्तं तद्वह्नि समागतं अग्निसंयुक्तं द्रुतं विलीनं द्रुतं प्रवाहेण प्रवृत्तं द्रुतं शीघ्रं अहीनया उत्कृष्टया द्युत्या तेजसा रोचितं भासितं महीङ्गतं प्राप्तं अपगोपुरं अपगतपुरद्वारं अतएव समन्तात्सर्व्वतः समं तुल्यं कृतं परैः शत्रुभिः परैरपि उत्कृष्टैरपि शक्रादिभिरनिराकृतं अनभिभूतं सत्। पादाद्यन्तसमकमिति पादस्यादावन्ते च यमितत्वात्॥ ११॥ ज॰म॰

द्रुतमित्यादि। पुरं लङ्कां समन्तात् सर्व्वतः समं भूमितुल्यं कृतं उच्चानां द्रुतत्वात् कीदृशं द्रुतं शीघ्रं द्रुतं द्रवीभूतं यतोवह्निसमागतं अग्निसंयुक्तं महीं भूमिं गतं प्रवाहेण प्राप्तं अहीनद्युतिरोचितं अहीनया उत्कृष्टया द्युत्या दीप्त्या रोचितं शोभितं अहीनद्युतिना रावणेन रोचितं अभिलषितमिति केचित् चितं स्वर्णगृहादिभिर्व्याप्तं अतएव वह्नियोगे द्रवत्वमुक्तं अपगोपुरं अपगतपुरद्वारं परैरुत्कृष्टैरपि परैः शत्रुभिरिन्द्रादिभिरनिराकृतं अनभिभूतं द्रुतं शीघ्रे विलीने च विद्राणे चाभिधेयवदिति विश्वः। पादाद्यन्तयमकमिति पादस्यादावन्ते च यमकितत्वात्॥ ११॥ भ॰

नश्यन्ति ददर्श वृन्दानि कपीन्द्रः। हारीण्यवलानां हारीण्यवलानां॥ मिथुनयमकं॥ १२॥

नश्येत्यादि। अवलानां स्त्रीणां अवलानां अविद्यमानरक्षकाणां वृन्दानि समूहान् हारीणि हारवन्ति हारीणि अवश्यं ज॰म॰



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



हरन्ति आवश्यके णिनिः चेतसइत्यर्थात् नश्यन्ति पलायमानानि सन्ति कपीन्द्रोददर्श। मिथुनयमकमिति पादद्वयस्य चक्रवाक मिथुनवदवस्थितत्वात्॥ १२॥

भ० नश्यन्तीत्यादि। कपीन्द्रोहनूमान् अवलानां स्त्रीणां वृन्दानि समूहान् ददर्श दृष्टवान् कीदृशानि नश्यन्ति नाशं प्राप्नुवन्ति पलायमानानि वा हारीणि हारयुक्तानि हारीणि मनोहारीणि ग्रहादित्वात् णिन् अवश्यं हरन्तीति आवश्यके णिन्निति परः कीदृशानां अवलानां अविद्यमानरक्षकाणां अतिक्षशानां वा। तनुमध्याछन्दः लक्षणं यथा त्यौचेत्तनुमध्या। मिथुनयमकमिति पादद्वयस्य चक्रवाकयुगलवत् स्थितत्वात्॥ १२॥

नारीणामपनुनुदुर्न देहखेदान्नारीणाममलसलिला हिरण्यवाप्यः। नारीणामनलपरीतपत्रपुष्पान्नारीणा मभवदुपेत्य शर्म्म वृक्षान्॥ वृन्तयमकं॥ १३॥

ज०म० नारीत्यादि। अरीणां सम्बन्धिन्योहिरण्यवाप्यः सुवर्णघटिता वाप्यः नारीणां स्त्रीणां अग्नितापाद्देहखेदान्नापनुनुदुः नापनीत वत्यः कुतः आरीणामलसलिलाः रीङ् स्रवणइत्यस्मादाङ्पूर्व्वा त्स्वादयओदितइति निष्ठा नत्वं आरीणङ्गतममलं सलिलं यासु हिरण्यवापीष्विति वृक्षांश्चोपेत्य गत्वा तासां शर्म्म सुखं नाभवत् न जातं अनलपरीतपत्रपुष्पत्वाद्वृक्षाणां आरीणां नारीणामिति योज्यं शत्रुसम्बन्धिनीनामित्यर्थः अरीणामिमाइति तस्येदमित्यण्

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



तदन्तात् टिड्ढाणजित्यादिना ङीप् अत्र वृक्षानुपेत्य स्थिताना मित्यध्याहर्त्तव्यं अन्यथा समानकर्त्तृकत्वात् पूर्व्वकाले क्त्वाप्रत्ययेन स्यात्। वृन्तयमकमिति प्रतिपदं पुष्पफलस्येव मूलेऽवस्थितत्वात्॥ १३॥

नारीणामित्यादि। हिरण्यवाप्यः सुवर्णस्थलनिर्म्मितदीर्घिका नारीणां स्त्रीणां देहखेदान् अग्निसन्तापजनितान् न अपनुनुदुः नापनीतवत्यः हिरण्यवाप्यः कीदृश्यः आरीणामलसलिलाः आरीणं द्रुतं अमलं निर्म्मलं सलिलं स्वर्णजलं यासु अग्नितेजसा स्वर्णघटिततीरस्य द्रुतत्वात् स्वर्णजलं तत्र जातमित्यर्थः ओरीङ्‌स्रवणे आङ्पूर्व्वात्क्तः स्वादयोदिति नः किम्वा शुष्कत्वादारीणं द्रुतं जलं यासु रीगिबधेगतौ गत्यर्थत्वात् कर्त्तरि क्तः ल्वादित्वात् क्तस्य नः एवञ्च आरीणां अरिसम्बन्धिनीनां तासां नारीणां वृक्षान् उपेत्य समीपे गत्वा स्थितानां शर्म्म सुखं नाभवत् न जातं स्थितानामित्यध्याहारात् समानकर्तृकता वृक्षान् कीदृशान् अनलपरीतपत्रपुष्पान् अनलेनाग्निना परीतं व्याप्तं पत्रञ्च पुष्पञ्च येषां तान् अतएव न शर्म्म नारीणां कीदृशीनां नारीणां आपो नाराइति प्रोक्तास्तत्र भवानां ततोवा आगतानां वरुणलोकादानीतानामित्यर्थः आरीणामिति अरिशब्दात् तस्येमादिति ष्णः शर्म्म नाभवदित्यत्र पूर्व्वतोनञनुषज्यते केचित्तु अरीणां शत्रूणां हिरण्यवाप्यइति पूर्व्वत्र योजयन्ति नारीणां जलभवानामिति न व्याचक्षते तन्मते परार्द्धेऽपि नञ् विद्यते कचित्तु पुष्पानारीणामिति नद्वयसंयोगवत् पाठोदृश्यते तत्र पूर्व्वोक्तव्याख्यायां न नञ्

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



हरन्ति आवश्यके णिनिः चेतसइत्यर्थात् नश्यन्ति पलायमानानि सन्ति कपीन्द्रोददर्श। मिथुनयमकमिति पादद्वयस्य चक्रवाक मिथुनवदवस्थितत्वात्॥ १२॥

भ० नश्यन्तीत्यादि। कपीन्द्रोहनूमान् अबलानां स्त्रीणां वृन्दानि समूहान् ददर्श दृष्टवान् कीदृशानि नश्यन्ति नाशं प्राप्नुवन्ति पलायमानानि वा हारीणि हारयुक्तानि हारीणि मनोहारीणि ग्रहादित्वात् णिन् अवश्यं हरन्तीति आवश्यके णिन्निति परः कीदृशानां अबलानां अविद्यमानरक्षकाणां अतिकृशानां वा। तनुमध्याछन्दः लक्षणं यथा त्यौचेत्तनुमध्या। मिथुनयमकमिति पादद्वयस्य चक्रवाकयुगलवत् स्थितत्वात्॥ १२॥

नारीणामपनुनुदुर्न देहखेदान्नारीणामलसलिला हिरण्यवाप्यः। नारीणामनलपरीतपत्रपुष्पान्नारीणामभवदुपेत्य शर्म्म वृक्षान्॥ वृन्तयमकं॥ १३॥

ज०म० नारीत्यादि। अरीणां सम्बन्धिन्योहिरण्यवाप्यः सुवर्णघटिता वाप्यः नारीणां स्त्रीणां अग्नितापाद्देहखेदान्नापनुनुदुः नापनीतवत्यः कुतः आरीणामलसलिलाः रीङ् स्रवणइत्यस्मादाङ्पूर्व्वात्स्वादयओदितइति निष्ठा नत्वं आरीणङ्गतममलं सलिलं यासु हिरण्यवापीष्विति वृक्षांश्चोपेत्य गत्वा तासां शर्म्म सुखं नाभवत् न जातं अनलपरीतपत्रपुष्पत्वाद्वृक्षाणां आरीणां नारीणामिति योज्यं शत्रुसम्बन्धिनीनामित्यर्थः अरीणामिमाइति तस्येदमित्यण्

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



तदन्तात् टिड्ढाणञित्यादिना ङीप् अत्र वृक्षानुपेत्य स्थितानामित्यध्याहर्त्तव्यं अन्यथा समानकर्त्तृकत्वात् पूर्व्वकाले क्त्वाप्रत्ययेन स्यात्। वृन्तयमकमिति प्रतिपदं पुष्पफलस्येव मूलेऽवस्थितत्वात्॥ १३॥

नारीणामित्यादि। हिरण्यवाप्यः सुवर्णस्थलनिर्म्मितदीर्घिका नारीणां स्त्रीणां देहखेदान् अग्निसन्तापजनितान् न अपनुनुदुः नापनीतवत्यः हिरण्यवाप्यः कीदृश्यः आरीणामलसलिलाः आरीणं द्रुतं अमलं निर्म्मलं सलिलं स्वर्णजलं यासु अग्नितेजसा स्वर्णघटिततीरस्य द्रुतत्वात् स्वर्णजलं तत्र जातमित्यर्थः आरीङ्यवरणे आङ्पूर्व्वात्क्तः ल्वाद्योदिति नः किम्वा शुष्कत्वादारीणं ईषद्रुतं जलं यासु रीगिवधेगतौ गत्यर्थत्वात् कर्त्तरि क्तः ल्वादित्वात् क्तस्य नः एतच्च आरीणां अरिसम्बन्धिनीनां तासां नारीणां वृक्षान् उपेत्य समीपे गत्वा स्थितानां शर्म्म सुखं नाभवत् न जातं स्थितानामित्यध्याहारात् समानकर्तृकता वृक्षान् कीदृशान् अनलपरीतपत्रपुष्पान् अनलेनाग्निना परीतं व्याप्तं पत्रञ्च पुष्पञ्च येषां तान् अतएव न शर्म्म नारीणां कीदृशीनां नारीणां आपो नारा इति प्रोक्तास्तत्र भवानां ततोवा आगतानां वरुणलोकादानीतानामित्यर्थः आरीणामिति अरिशब्दात् तस्येमा इति ष्णः शर्म्म नाभवदित्यत्र पूर्व्वतोनञनुषज्यते केचित्तु अरीणां शत्रूणां हिरण्यवाप्य इति पूर्व्वत्र योजयन्ति नारीणां जलभवानामिति न व्याचक्षते तन्मते परार्द्धेऽपि नञ् विद्यते क्वचित्तु पुष्पान्नारीणामिति नदयसंयोगवत् पाठो दृश्यते तत्र पूर्व्वोक्तव्याख्यायां न नञ्

भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



नुषङ्गस्य विद्यमानत्वात् केचित्तु आङ्पूर्व्वाद्दर्त्तेरीणादिकट्प्र त्ययः आ समन्तात् रीणां गच्छन्तीनामित्याहुः। प्रहर्षिणीछन्दः लक्षणं यथा त्र्याशाभिर्मनजरगाः प्रहर्षिणीयमिति। वृन्तयमक मिति प्रतिपादं पुष्पफलस्येव मूले वृन्तवदवस्थितत्वात् तथाहि पादादौ सदृशं यस्य प्रतिपादं प्रदृश्यते। तद्वृन्तयमकं नाम कथ्यते कविपुङ्गवैरिति॥ १३॥

अथ लुलितपतत्रिमालं रुग्णासनबाणकेशरतमालं।
सवनं विविक्तमालं सीतां द्रष्टुं जगामालं॥ पुष्प यमकं॥ १४॥

ज०म० अथेत्यादि। दाहानन्तरं लुलितानां चलितानां पतत्रिणां पक्षिणां माला संहतिर्यस्मिन् तद्वनमशोकवनिकाख्यं सकपि र्जगाम रुग्णाः भग्नाः असनादयो यस्मिन्वने तत्रासनः पीतसालः वाणः ग्रन्थिका केशरो नागकेसरो देववल्लभो वा विविक्ताः शुचयो मालाः स्रजो यस्मिन् तद्विविक्तमालं सीतां द्रष्टुं अलं पर्य्याप्तौ सीतां द्रक्ष्यामीति जगाम। पुष्पयमकमिति प्रतिपादं वृन्तादुपरि पुष्पमिवावस्थितत्वात्॥ १४॥

भ० अथेत्यादि। अथ दाहानन्तरं सहनूमान् अलं पर्य्याप्तं सीतां द्रष्टुं वनं अशोकवनिकां जगाम वनं कीदृशं लुलितपत त्रिमालं लुलिता चलिता पतत्रिणां पक्षिणां माला संहतिर्यत्र

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



यद्यपि छन्दःशास्त्रे सानुस्वारस्य गुरुत्वमनुशिष्टं तथापि तथा पादान्तगोऽपि वेति वचनात्तस्य लघुत्वात् प्रथमपादे द्वादशमात्रा भवन्ति किन्तु भवति नेह विषमेजद्दत्यार्य्यायां प्रायिकं तृतीय गणस्याच मध्यगुरुत्वात् सप्तगणादीहन्ताजोनलङ्घच्छठेऽजो विषम इत्यत्र नञः प्रशंसापरत्वमिति टीकाकृतोक्तं जापचमती यपञ्चघसप्तोद्वाणेन दोद्गुरुमजखा गुर्व्विनोए गुणवह्निआगहो देविग्रआसेद इत्यनेन अप्राशस्त्योक्तत्वात् नतु विषमस्यजगणे लक्षणवह्निर्भूता गाथा भवन्तीति वस्तुतः पञ्चिमात्वमिति पाठः मध्ये तकारपाठोलेखकप्रमादात् इग्राभग्रासनादयोयत्र वने असनः पीतसालः वाणोझिण्टीविशेषः केशरं हिङ्गुरिशोक्तं केशरोनागकेशरे सिंहच्छटायां किञ्जल्कपुन्नागवकुलेष्वपीति विश्वः तमालः स्वनामख्यातः विविक्ताः पृथग्भूतामालाः स्रजः पङ्क्तयोयत्र तत्तथा विविक्तः स्यादसम्पृक्ते विविक्तः पूतपूतयोः। चारुवद्दर्शिते धीरैर्विविक्तं रहसि स्मृतमिति विश्वः। पुष्पयमक मिति प्रतिपादान्ते वृत्तोपरि पुष्पवत्स्थितत्वात्॥ १४॥

घनगिरीन्द्रविलङ्घनशालिना वनगता वनजद्युति लोचना। जनमता ददृशे जनकात्मजा तरुमृगेण तरुस्थलशायिनी। पादादिमध्ययमकं॥ १५॥

घनेत्यादि। तरुमृगेण कपिना जनकात्मजा ददृशे दृष्टा ज॰म॰ घनाः निरन्तराः ये गिरीन्द्राः मेघसदृशावा तेषां यल्लङ्घनं अति

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



क्तमणं तेन शालिना युक्तेन कपिना वनगता काननस्था वनद्यु तिलोचना पद्मस्येव कान्तिर्ययोर्लोचनयोः ते तथाविधे लोचने यस्याः नक्रोडादिवद्बहुचइति ङीप् प्रतिषेधः जनमता जनेना वबुद्धा पतिव्रतेयमिति मनुञ्चवबोधनइत्यस्य भूते निष्ठायां रूपं नलोकेति षष्ठीप्रतिषेधः कर्त्तरि तृतीया तस्याञ्च कर्तृकरणइति समासः वर्त्तमाने तु मतिबुद्धीत्यादिना क्तप्रत्ययः क्तस्य च वर्त्तमान इति षष्ठी तस्याञ्च क्तेन च पूजायामिति समासप्रतिषेधः स्यात् तरुस्थलशायिनी तरुमूले यत्स्थलं तत्रैव शयाना सत्यपि शयने तेन व्रतइति णिनिः। आदिमध्ययमकमिति पादानामादौ मध्ये च घननवजनतरुशब्दानां यमितत्वात्॥ १५॥

भ० घनेत्यादि। तेन तरुमृगेण कपिना तरुस्थलशायिनी जन कात्मजा ददृशे कर्मणि रूपं तेन कीदृशेन घनगिरीन्द्रविलङ्घन शालिना घनानिविडाये गिरीन्द्राः पर्व्वतास्तेषां विलङ्घनं विद्य तेऽस्येति अस्त्यर्थे शालिन्प्रत्ययोवोध्यइति शाब्दिकाः यद्वा तेषां विलङ्घनेन शाडितुं शोभितुं शीलं यस्य शाडृश्लाघायां णिनिः डलयोरलयोरेति लत्वं कीदृशी वनगता अशोकवनिकास्थिता पुनः कीदृशी वनजद्युतिलोचना वने जले जायतेइति गमादित्वात् डः वनजं पद्मं कैरवं वा तस्येव द्युतिर्ययोस्तादृशे लोचने यस्याः सा वनं सलिलकाननइत्यमरः पुनः कीदृशी जनेन मता ज्ञाता पतिव्रतात्वेन पूजिता वा नतु जनानामिति षष्ठी तथाचोक्तं कार कषष्ठी न समस्यते इति न्यायात् ज्ञानेच्छापूजेति क्तः तद्योगे प्राप्तापि षष्ठी न स्यात् अयाख्यानित्यता च दृश्यतइति न्यायात्

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



यद्वा वर्त्तमाने क्तोनातीतक्तस्य बाधकइति अतीते वा क्तस्तञ्च चकारात् मनुबोधने धातूनामनेकार्थत्वात् पूजार्थेऽप्यस्य प्रयोगः। आदिमध्ययमकमिति प्रतिपादमादिमध्ययोस्तुल्यत्वात् ॥ १५ ॥

कान्ता सहमाना दुःखं च्युतभूषा। रामस्य वियुक्ता कान्ता सहमाना ॥ विपथयमकं ॥ १६ ॥

कान्तेत्यादि। कान्ता कमनीया सहमाना वेदयमाना दुःखं वियोगजं च्युतभूषणा रामस्य कान्ता प्रिया वियुक्ता वियोगिनी सहमाना सह मानेन वर्त्तत इति वोपसर्जनस्येति सभावविकल्पः दृष्टा इति सम्बन्धः। विपथयमकमिति पादद्वयातिक्रमाद्विपथेन विमार्गेण यमितत्वात् ॥ १६ ॥ ज०म०

कान्तेत्यादि। जनकात्मजा सीता कीदृशी दृष्टा कान्ता कमनीया दुःखं वियोगजं सहमाना तन्नोद्वेगं न करोतीत्यर्थः च्युतभूषा अपगतभूषणा रामस्य कान्ता प्रिया वियुक्ता वियोगिनी सहमाना मानेन चित्तसमुन्नत्या पूजया वा सहिता। विपथयमकमिति पादद्वयातिक्रमाद्विपथेन विमार्गेण यमकितत्वात् तनुमध्याच्छन्दः ॥ १६ ॥ भ०

मितमवददुदारं तां हनूमान्मुदारं रघुवृषभसकाशं यामि देवि प्रकाशं। तव विदितविषादो दृष्टकृत्स्नामिषादः श्रियमनिशमवन्तं पर्व्वतं माल्यवन्तं॥ मध्यान्तयमकं ॥ १७ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



क्रमणं तेन शालिना युक्तेन कपिना वनगता काननस्था वनद्यु तिलोचना पद्मस्येव कान्तिर्ययोर्लोचनयोः ते तथाविधे लोचने यस्याः नक्रोडादिवह्वचइति ङीप् प्रतिषेधः जनमता जनेना वबुद्धा पतिव्रतेयमिति मनुश्चवबोधनइत्यस्य भूते निष्ठायां रूपं नलोकेति षष्ठीप्रतिषेधः कर्त्तरि तृतीया तस्याश्च कर्तृकरणइति समासः वर्त्तमाने तु मतिबुद्धीत्यादिना क्तप्रत्ययः क्तस्य च वर्त्तमान इति षष्ठी तस्याश्च क्तेन च पूजायामिति समासप्रतिषेधः स्यात् तरुस्थलशायिनी तरुमूले यत्स्थलं तत्रैव शयाना सत्यपि शयने तेन व्रतइति णिनिः। आदिमध्ययमकमिति पादानामादौ मध्ये च घननवजनतरुशब्दानां यमितत्वात्॥ १५॥

भ० घनेत्यादि। तेन तरुमृगेण कपिना तरुस्थलशायिनी जन कात्मजा दृदृशे कर्म्मणि रूपं तेन कीदृशेन घनगिरीन्द्रविलङ्घन शालिना घनानिविडाये गिरीन्द्राः पर्व्वतास्तेषां विलङ्घनं विद्य तेऽस्येति अस्त्यर्थे शालिन्प्रत्ययोबोध्यइति शाब्दिकाः यद्वा तेषां विलङ्घनेन शाडितुं शोभितुं शीलं यस्य शाडृश्लाघायां णिनिः डलयोरलयोस्तेति लत्वं कीदृशी वनगता अशोकवनिकास्थिता पुनः कीदृशी वनजद्युतिलोचना वने जले जायतेइति गमादित्वात् डः वनजं पद्मं कैरवं वा तस्येव द्युतिर्ययोस्तादृशे लोचने यस्याः सा वनं सलिलकाननइत्यमरः पुनः कीदृशी जनेन मता ज्ञाता पतिव्रतात्वेन पूजिता वा नतु जनानामिति षष्ठी तथाचोक्तं कार कषष्ठी न समस्यते इति न्यायात् ज्ञानेच्छापूजेति क्तः तद्योगे शःतापि षष्ठी न स्यात् अयास्यानित्यता च दृश्यतइति न्यायात्

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



यद्वा वर्त्तमाने क्तोनातीतक्तस्य बाधकइति अतीते वा क्तस्तच्च चकारात् मनुबोधने धातूनामनेकार्थत्वात् पूजार्थेऽप्यस्य प्रयोगः। आदिमध्ययमकमिति प्रतिपादमादिमध्ययोस्तुल्यत्वात् ॥ १५ ॥

कान्ता सहमाना दुःखं च्युतभूषा। रामस्य वियुक्ता कान्ता सहमाना ॥ विपथयमकं ॥ १६ ॥

कान्तेत्यादि। कान्ता कमनीया सहमाना वेदयमाना दुःखं वियोगजं च्युतभूषणा रामस्य कान्ता प्रिया वियुक्ता वियोगिनी सहमाना सह मानेन वर्त्ततइति वोपसर्जनस्येति सभावविकल्पः दृष्टेइति सम्बन्धः। विपथयमकमिति पादद्वयातिक्रमाद्विपथेन विमार्गेण यमितत्वात् ॥ १६ ॥ ज०म०

कान्तेत्यादि। जनकात्मजा सीता कीदृशी दृष्टेत्यर्थः कान्ता कमनीया दुःखं वियोगजं सहमाना तत्रोद्वेगं न करोतीत्यर्थः च्युतभूषा अपगतभूषणा रामस्य कान्ता प्रिया वियुक्ता वियोगिनी सहमाना मानेन चित्तसमुन्नत्या पूजया वा सहिता। विपथयमकमिति पादद्वयातिक्रमाद्विपथेन विमार्गेण यमकितत्वात् तनुमध्याच्छन्दः ॥ १६ ॥ भ०

मितमवददुदारं तां हनूमान्मुदारं रघुवृषभसकाशं यामि देवि प्रकाशं। तव विदितविषादो दृष्टकृत्स्नामिषादः श्रियमनिशमवन्तं पर्व्वतं माल्यवन्तं॥ मध्यान्तयमकं ॥ १७ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० मितमित्यादि। मितं अल्पाक्षरं अर्थावगाढं तां सीतां हनूमान् मुदा हर्षेण युक्तः अवदत् कथितवान् किमित्याह अरं शीघ्रं हे देवि रघुवृषभसकाशं रामसमीपं माल्यवन्तं पर्व्वतं प्रकाशं प्रकटं यामि तव विदितविषादो ज्ञातावसादः दृष्टकृत्स्नामिषादः वीक्षिताशेषनिशाचरः आमिषं मांसमदन्तीति कर्म्मण्यण् वासरूपो ऽस्त्रियामिति वचनात् अदोऽनन्न इति विट्प्रत्ययेनाणो विकल्पेन वाधनात् श्रियं शोभां अनिशमवन्तं रक्षन्तं पर्व्वतं। मध्यान्तयमकमिति पादस्य मध्ये अन्ते च यमितत्वात्॥ १७॥

भ० मितमित्यादि। हनूमान् मुदा हर्षेण मितमल्पाक्षरमुदारं गभीरार्थं तां अवदत् किमित्याह हे देवि अरं शीघ्रं रघुवृषभस्य रघुश्रेष्ठस्य सकाशं समीपं माल्यवन्तं पर्व्वतं प्रकाशं यथास्यात्तथा यामि तव विदितो ज्ञातो विषादो येन विषादस्य नित्यसापेक्षत्वात् समासः दृष्टः कृत्स्नः सकल आमिषादो राक्षसो येन स तथा अनिशं सततं श्रियं शोभामवन्तं रक्षन्तं माल्यवन्तं नाम पर्व्वतं। मध्यान्तयमकमिति मध्यान्तपादयोर्यमितत्वात्। मालिनीवृत्तं॥ १७॥

उदपतद्वियदप्रगमः परैरुचिरमुन्नतिमत्पृथुसत्त्ववत्। रुचिरमुन्नतिमत्पृथुसत्त्ववत्प्रतिविधाय वपुर्भयदं द्विषां॥ गर्भयमकं॥ १८॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



उदपतदित्यादि। वियदाकाशमुदपतत् उत्पपात परः ज०म०
शत्रुभिरप्रगमः अनभिभवनीयः गमेः ग्रहवृद्दृनिश्चिगमश्चेति
कर्म्मण्यप् कर्त्तृकर्म्मणोः कृतीत्यच विभाषोपसर्गइति मण्डूकप्लुत्या
अनुवर्त्तनीयं सोपसर्गस्य प्रयोगे विभाषाषष्ठी रुचितं शोभितं
वियन्निर्म्मलत्वात् अथवा अप्रगमोऽन्येषामित्यर्थात् परैरुत्कृष्टै
रन्तरीचचारिभिः रुचितं दीपितं उन्नतिमत् उच्छ्राययुक्तं
पृथुसत्त्ववद्भिः प्राणिभिर्युक्तं किं कृत्वा उदपतदित्याह वपुः शरीरं
प्रतिविधाय कृत्वा रुचितान् तुष्टान्मोदयतीति रुचितमुत् ण्यर्थो
ऽत्रान्तर्भूतः द्विषां शत्रूणां भयदं नतिमत् तदानीं देवेषु कृत
शिरःप्रणामत्वात् अथवा रुचितमेवाभीष्टमेव वपुः उन्नतिमत्
विभूतिमत् पृथुसत्त्ववत् विस्तीर्णसत्त्ववत् सत्त्वगुणयुक्तं वा। गर्भय
मकमिति द्वयोः पादयोर्मध्ये पादद्वयस्य यमितत्वात्॥१८॥

उदपतदित्यादि। कपिर्वियदाकाशमुदपतत् उत्पपात भ०
कीदृशः परैः शत्रुभिरप्रगमोऽनभिभवनीयः न प्रगम्यतेऽस्मा
अप्रगमः यद्वा परैः सह नास्ति प्रकृष्टं गमनं यस्येत्यर्थः अतिशी
घ्रगामित्वात् कीदृशं वियत् परैरुत्कृष्टैरन्तरीचगामिभिः रुचिरं
दीपितं पुनः कीदृशं उन्नतिमत् उच्छ्राययुक्तं पृथुसत्त्ववत् महाप्रा
णियुक्तं उन्नतिमदिति सत्त्वविशेषणं वा किं कृत्वोदपतदित्याह
द्विषां शत्रूणां भयदं वपुः शरीरं प्रतिविधाय कीदृशं वपुः रुचि
रमुत् रुचिरान् दृष्टान् मोदतेइति क्विप् नतिमत् तदानीं देवेषु
कृतप्रणामत्वात्। गर्भयमकमिति मध्यपादद्वयस्य यमितत्वात्
॥१८॥



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



बभौ मरुत्वान् विकृतः समुद्रो बभौ मरुत्वान् विकृतः समुद्रः। बभौ मरुत्वान् विकृतः समुद्रो बभौ मरुत्वान् विकृतः समुद्रः॥ सर्व्वयमकं॥१९॥

ज॰म॰ बभावित्यादि। मरुत्वान् हनूमान् पितृत्वेन मरुद्विद्यते अस्येति कृत्वा मतुपइति वत्वं विविधं कृतं वनभङ्गादि कर्म्म येन विविधं वा कृन्ततीति विकृतः इगुपधलक्षणः कः वृक्षादीनां छेदकइत्यर्थः समुद्रो मुद्रयाभिज्ञानेन चूडामणिना सह वर्त्ततइति समुत्पतितो नभसि तेजःपुञ्जइव बभौ दीप्यते स्म इत्ययं प्रथमः पादः। तस्मिन् तथाभूते मरुत्वानिन्द्रः अनुजीवितया मरुतो देवा अस्य सन्तीति कृत्वा विकृतः रावणपरिभवात् विहतदेवाधिपत्यः विकृतः सच समुद्रः मुद्रया अप्सरसा सह वर्त्तमानः समुपलब्धमारुति वृत्तान्तः बभौ हृष्टवान् कपिना तावदिदं कृतं रामः पुनः समूलं छेत्स्यतीति अनेकार्थत्वाद्धातूनां भातिरत्र तुष्टौ वर्त्तते इत्ययं द्वितीयः समुद्रो जलनिधिः मरुत्वान् हनूमदुत्पतनजनितवायुना युक्तः अतएव विकृतोऽतिक्रान्तमर्य्यादः बभौ बभूव अत्र सत्तायां प्रयुक्तइत्ययं तृतीयः सलोकपालो मरुत्वान् महाभूतात्मकेन युक्तः मरुत्वान् पूर्व्ववन्मतुप् मरुत्वानिति व्याख्याने जलाञ्जशोन्त इति जश् स्यात् मुद्रो हर्षस्य दाता पुन्नामे सुखेन यास्यतीति मुदं राति ददातीति आतोऽनुपसर्गे कः विकृतो मन्दगतिः बभौ वाति स्म अत्र गतौ प्रयुक्तइत्ययं चतुर्थः अन्यस्त्वाह यमकेषु क्रियापद

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



स्याभिन्नाभिधेयत्वं न दुष्यतीति तेन दीप्त्यर्थएव योज्यः। सर्व्वंय मकमिति चतुर्णामपि पादानां सदृशत्वात्॥१६॥

वभावित्यादि। मरुद्वायुः पितृत्वेन वेगजनितत्वेन वा विद्यते भं० यस्य सहनूमान् वभौ शुशुभे इत्यन्वयः कीदृशः विविधानि कृतानि वनभङ्गलङ्कादाहादीनि येन सः समुद्रः मुद्रया प्रत्यभिज्ञानेन चूडामणिना सहितः मुद्रा प्रत्ययकारिणीति कोषः इति प्रथमपादार्थः तस्मिंस्तथाभूते सति मरुत्वानिन्द्रोवभौ तुतोष धातूनामनेकार्थत्वात् भातिरत्र तोषे कीदृशः विकृतः पराभवात् विगता क्रिया जगत्परिपालनरूपा यस्य सः समुद्रः मुद्राख्याभिरप्सरोभिः सहितइति द्वितीयपादार्थः समुद्रः सागरोऽपि वभौ चुकोप धातूनामनेकार्थत्वाद्भातिरत्र कोपे पुनःपुनर्व्वानरेण लङ्घनात् कीदृशः मरुत्वान् मरुतोदेवाविद्यन्ते यस्य सः मरुतौ पवनामरावित्यमरः अतएव विकृतः अतिक्रान्तमर्य्यादः वीन् पक्षिणः कृणत्ति वेष्टतेइति विकृतः कृतीधवेष्टे पूर्व्ववत् कः अतिक्रान्तमर्य्यादत्वात् इति तृतीयपादार्थः वाचकत्वेन मरुच्छब्दोविद्यतेऽस्य मरुत्वान् वायुर्वभौ वाति स्म भातिरत्र गत्यर्थः केचित्तु मरुद्वायुर्वान् गच्छन् वभौ सन्धेरनित्यत्वात् न तस्य दत्वं यदुक्तं सन्धिरेकपदे नित्योनित्योधातूपसर्गयोः। सूत्रेष्वपि तथा नित्यः सैवान्यत्र विभाषिता इत्याहुः स्वमते सन्धेरनित्यत्वं एवातोडौरित्यत्र ओकरणेनैवेष्टसिद्धौ डित्करणेन ज्ञापितमिति देवीदासचक्रवर्त्तिनोक्तं कीदृशः विकृतः मन्दगतित्वात् पुनस्तेहादन्यथाभूतः समुद्रः समुत्सहर्षोरोऽग्निर्यस्मात् वायोरग्निसखत्वात् किम्वा

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



बभौ मरुत्वान् विकृतः समुद्रो बभौ मरुत्वान् विकृतः समुद्रः। बभौ मरुत्वान् विकृतः समुद्रो बभौ मरुत्वान् विकृतः समुद्रः॥ सर्व्वयमकं॥१९॥

ज०म० बभावित्यादि। मरुत्वान् हनूमान् पितृत्वेन मरुद्विद्यते अस्येति कृत्वा मतुप् इति वत्वं विविधं कृतं वनभङ्गादि कर्म्म येन विविधं वाकृन्ततीति विकृतः इगुपधलक्षणः कः वृक्षादीनां छेदक इत्यर्थः समुद्रो मुद्रयाभिज्ञानेन चूडामणिना सह वर्त्तत इति समुत्पतितो नभसि तेजःपुञ्ज इव बभौ दीप्यते स्म इत्ययं प्रथमः पादः। तस्मिन् तथाभूते मरुत्वानिन्द्रः अनुजीवितया मरुतो देवा अस्य सन्तीति कृत्वा विकृतः रावणपरिभवात् विहतदेवाधिपत्यः विकृतः सच समुद्रः मुद्रया अप्सरसा सह वर्त्तमानः समुपलब्धमारुति वृत्तान्तः बभौ हृष्टवान् कपिना तावदिदं कृतं रामः पुनः समूलं छेत्स्यतीति अनेकार्थत्वाद्धातूनां भातिरत्र तुष्टौ वर्त्तते इत्ययं द्वितीयः समुद्रो जलनिधिः मरुत्वान् हनूमदुत्पतनजनितवायुना युक्तः अतएव विकृतोऽतिक्रान्तमर्य्यादः बभौ बभूव अत्र सत्तायां प्रयुक्त इत्ययं तृतीयः सलोकपालो मरुत्वान् महाभूतात्मकेन युक्तः मरुत्वान् पूर्व्ववन्मतुप् मरुत्वानिति व्याख्याने जलाञ्झयोऽन्त इति जश् स्यात् मुद्रो हर्षस्य दाता पुत्रो मे सुखेन यास्यतीति मुदं राति ददातीति आतोऽनुपसर्गे कः विकृतो मन्दगतिः बभौ वाति स्म अत्र गतौ प्रयुक्त इत्ययं चतुर्थः अन्यस्त्वाह यमकेषु क्रियापद

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



स्याभिन्नाभिधेयत्वं न दुष्यतीति तेन दीप्त्यर्थ एव योज्यः। सर्व्वंच
मकमिति चतुर्णामपि पादानां सदृशत्वात्॥ १९॥

बभावित्यादि। मरुद्वायुः पितृत्वेन वेगजनितत्वेन वा विद्यते भ०
यस्य स हनूमान् बभौ शुशुभे इत्यन्वयः कीदृशः विविधानि
कृतानि वनभङ्गलङ्कादाहादीनि येन सः समुद्रः मुद्रया प्रत्यभि
ज्ञानेन चूडामणिना सहितः मुद्रा प्रत्ययकारिणीति कोषः इति
प्रथमपादार्थः तस्मिंस्तथाभूते सति मरुत्वानिन्द्रोबभौ तुतोष
धातूनामनेकार्थत्वात् भातिरत्र तोषे कीदृशः विकृतः पराभवात्
विगता क्रिया जगत्परिपालनरूपा यस्य सः समुद्रः मुद्राख्या
भिरप्सरोभिः सहितइति द्वितीयपादार्थः समुद्रः सागरोऽपि
बभौ चुकोप धातूनामनेकार्थत्वाद्भातिरत्र कोपे पुनःपुनर्व्वान
रेण लङ्घनात् कीदृशः मरुत्वान् मरुतोदेवाविद्यन्ते यस्य सः
मरुतौ पवनामरावित्यमरः अतएव विकृतः अतिक्रान्तमर्य्यादः
वीन् पक्षिणः कृणन्ति वेष्टतेइति विकृतः कृतीधवेष्टे पूर्व्ववत् कः
अतिक्रान्तमर्य्यादत्वात् इति तृतीयपादार्थः वाचकत्वेन मरुच्छ
ब्दोविद्यतेऽस्य मरुत्वान् वायुर्बभौ वाति स्म भातिरत्र गत्यर्थः केचि
त्तु मरुद्वायुर्वान् गच्छन् बभौ सन्धेरनित्यत्वात् न तस्य दत्वं यदुक्तं
सन्धिरेकपदे नित्योनित्योधातूपसर्गयोः। सूत्रेष्वपि तथा नित्यः
सैवान्यत्र विभाषिता इत्याहुः समते सन्धेरनित्यत्वं एवातोडेरि
त्यत्र ओकरणेनैवेष्टसिद्धौ डित्करणेन ज्ञापितमिति देवीदासच
क्रवर्त्तिनोक्तं कीदृशः विकृतः मन्दगतित्वात् पुनस्तेहादन्यथाभूतः
समुद्रः समुत्सहर्षोरोऽग्निर्यस्मात् वायोरग्निसखत्वात् किम्वा

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



स इति विशेष्यपदं स लोकपालत्वेन प्रसिद्धो वायुरित्यर्थः मुदं मीतिं गात्रसंसर्गात् राति ददातीति मुद्रः इत्ययं चतुर्थपादार्थः सर्व्वत्र भातेर्दीप्त्यर्थत्वमेव युक्तमिति केचित् नैकं पदं द्विःप्रयोज्यं प्रायेणैकार्थत्वेन तेनात्र भातिर्नानार्थत्वेन प्रयुक्तो न दोषावहः। सर्व्वयमकमिति पादचतुष्टयस्य तुल्यरूपत्वात् कण्ठाभरणेन महायमकमिदमुक्तं तथाहि एकाकारचतुष्पादं महायमकमुच्यते इति रुद्रटमते पङ्क्तिरिति नाम तदुक्तं अन्योन्यं पश्चिमयो रावृत्या पादयोर्भवति पुच्छः। सर्व्वैः सार्द्धं युगपत्प्रथमस्य जायते पङ्क्तिरिति ॥ १९ ॥

अभियाता वरं तुङ्गं भूभृतं रुचिरं पुरः। कर्कशं प्रथितं धाम ससत्वं पुष्करेक्षणं । अभियातावरं तुङ्गं भूभृतं रुचिरं पुरः। कर्कशं प्रथितं धाम ससत्वं पुष्करेक्षणं ॥ महायमकं ॥ २० ॥

ज०म० अभियातेत्यादि। भूभृतं रामं वरं श्रेष्ठं तुङ्गं महाकुलीनत्वादिति सर्व्वेषामुपरि स्थितं गुणैरुचिरं सर्व्वाङ्गसुन्दरं पुरोऽग्रतो वक्षःस्थले कर्कशं लोमशं प्रथितं लोके प्रख्यातं धाम गृहं वर्णाश्रमधर्म्माणां ससत्त्वं पराक्रमयोगात् पुष्करेक्षणं पद्मलोचनं अभियाता आभिमुख्येन यास्यति हनूमान् लुटि रूपं अभियातेत्यादि भूभृतं पर्व्वतं यत्राङ्गदादयः स्थिताः तमभियाः अभिगच्छता हनू

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



मता कुतः पुरीलङ्कायाः सकाशात् पुष्करे आकाशे धाम तेजः
क्षणं मुहूर्त्तं प्रथितं विस्तारितं अभियातीत्यन्येभ्योऽपि दृश्यत इति
क्विप् तृतीयैकवचने आतोधातोरित्याकारलोपे अभियेति रूपं
कीदृशं अतावरं सातत्येनाततीति पचाद्यच् अतोवायुः आदित्यो
वा आवृणोतीत्यप् आवरः अतश्चावरं यतस्तुङ्गं उच्चैस्तरं रुचिरं
तुष्टिदं रुचिं रातीति कर्कशं कठिनस्वभावं ससत्त्वं प्राणियुक्तं। महा
यमकमिति श्लोकस्यैकस्य द्वितीयेन श्लोकेन यमितत्वात्॥ २०॥

अभीत्यादि। अर्थादत्र हनूमान् कर्त्ता भूभृतं राजानं रामं　भ०
अभियाता अभिगमिष्यति लुटं रूपं यद्वा भूभृतं अभियाता आभि
मुख्येन गन्ता हनूमान् बभौ भाति स्मेति पूर्व्वेणान्वयः क्वचिदप
वादविषयेऽप्युत्सर्गोऽपि प्रवर्त्तत इति कृद्योगेऽपि कर्म्मणि द्वितीया
किम्वा शीलार्थत्वं विवक्षितं किम्वा अभियोगे द्वितीया भूभृतं
कीदृशं वरं श्रेष्ठं तुङ्गं सर्व्वेषामुपरि स्थितं महाकुलीनत्वात्
रुचिरं सर्व्वाङ्गसुन्दरं पुरोऽग्रे वक्षःस्थले कर्कशं महापुरुषत्वात्
कठिनं लोमशं वा प्रथितं लोकविख्यातं धाम गृहं गुणानामित्य
र्थात् तेजःस्वरूपं वा ससत्त्वं सपराक्रमं सत्त्वगुणयुक्तं वा पुष्करे
क्षणं पुष्करवत् पद्मवदीक्षणे लोचने यस्य तं किम्वा युद्धार्थं
पुष्करं शरं ईक्षते पश्यतीति नन्द्यादित्वादनः। अभीत्यादि तेन
हनूमता पुरीलङ्कायाः सकाशात् यत्राङ्गदादयः सन्ति तं भूभृतं
पर्व्वतं अभि लक्ष्यीकृत्य याता गच्छता पुष्करे आकाशे धाम
तेजः क्षणं मुहूर्त्तं प्रथितं विस्तारितं यातेति यातेः शतः भूभृतं
कीदृशं वरं व्रियतेऽसौ वरं कर्म्मण्यप् देवादिभिरङ्गदादिभिर्व्वा

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



वृतमित्यर्थः किम्वा वरं श्रेष्ठं किम्वा भूभृतं अभि लक्षीकृत्य या गच्छता यातीति याः कर्त्तरि क्विप् धोरालोपोऽच्यघाविति टापरे आलोपः अतावरं अतति सातत्येन गच्छतीति अतोवायुः सूर्य्यादिर्वा अतसातत्यगमने पचादित्वादन् आवृणोतीत्यावरः अत्रापि पचादित्वादन् अतस्यावरमिति समासः पर्व्वतविशेषणं यतस्तुङ्गमत्युच्चं किम्वा भूभृतं अता गच्छता अततीति अत् कर्त्तरि क्विप् अभिया अविद्यमानभयेन हनूमद्विशेषणं आवरं आवृणोति अर्थात् सूर्य्यादीन् तुङ्गत्वादित्यावरं पूर्व्ववत् पुनः कीदृशं पर्व्वतं रुचिरं तुष्टिदं रुचिं राति ददाति हनजनादितिडः कर्कशं कठिनं पाषाणमयत्वात् ससत्त्वं प्राणिभिर्हिंस्रादिभिर्युक्तं पुष्करं पङ्कजे व्योम्नि पयः करिकराग्रयोः। औषधद्वीपविहगतीर्थराजोरगान्तरे। पुष्करं तूर्य्यवक्त्रे च काण्डे खड्गफलेऽपिचेति विश्वः। महायमकमिति आद्यश्लोकस्य द्वितीयश्लोकेन यमकितत्वात् तथाच रुद्रटः अर्द्धं पुनरावृत्तं जनयति यमकं समुद्गकं नाम। श्लोकस्तु महायमकमिति॥ २०॥

चित्रं चित्रमिवायातोविचित्रं तस्य भूभृतं। हरयोवेगमासाद्य सन्त्रस्तामुमुहुर्मुहुः॥ आद्यन्तयमकं॥ २१॥

ज०म० चित्रमित्यादि। भूधरं पर्व्वतं चित्रं गैरिकादिभिर्नानावर्णं अतएव चित्रमिवालेख्यमिव आयातः आगच्छतस्तस्य हनूमतः वेगश्चवश्चित्रं अद्भुतमासाद्य प्राप्य हरयः कपयः सन्त्रस्ताः

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



सभयाः मुमुक्षुः मोहङ्गताः मुक्षुः चणं श्लोकाद्यन्तयमकमिति श्लोकस्यादावन्ते च यमितत्वात्॥ २१॥

चित्रमित्यादि। तस्य हनूमतश्चित्रमद्भुतं वेगं समासाद्य प्राप्य हरयः कपयः सन्त्रस्ताः सन्तोमुहुर्व्वारंवारं मुमुहुर्म्मोहमुपागताः तस्य कीदृशस्य भूभृतं पर्व्वतमायातः आगच्छतः यातेः शतृ: कीदृशं भूभृतं विचित्रं गैरिकादिभिर्नानावर्णं अतएव चित्रमिव आलेख्यमिव आद्यन्तयमकमिति श्लोकस्यादावन्ते च यमितत्वात्॥२१॥

गच्छन् सवारीण्यकिरत्पयोधेः कूलस्थितांस्तानि तरूनधुन्वन्। पुष्पास्तरांस्तेऽङ्गसुखानतन्वंस्तान् किन्नरामन्मथिनोऽध्यतिष्ठन्॥ आदिदीपकं॥ २२॥

अर्थालङ्कारस्तु दीपकरूपकादिभेदेनानेकप्रकारः तत्रवाक्यार्थप्रकाशनाद्दीपकमुच्यते तदादिमध्यान्तभेदात्त्रिविधमिति दर्शयन्नाह॥ गच्छन्नित्यादि। सहनूमान् वेगेन गच्छन् पयोधेर्वारीणि वेगजेन वायुना अकिरत् विक्षिप्तवान् तानि वारीणि अधिक्षिप्तानि कूलस्थितांस्तरूनधून्वन् कम्पितवन्ति धूञ्कम्पन् इति सौवादिकः ते तरवः कम्पिताः पुष्पास्तरान् पुष्पाणां प्रकरान् आस्तीर्य्यन्तइति च्छदोरप् अङ्गसुखान् मृदुस्पर्शत्वात् कायस्य सुखहेतूनतन्वन् विस्तारितवन्तः तान् पुष्पास्तरान् किन्नराः मन्मथिनः कामवन्तः अध्यतिष्ठन् अध्यासितवन्तः अधिशीङित्यादिनाधिक

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



वृतमित्यर्थः किम्वा वरं श्रेष्ठं किम्वा भूभृतं अभि लक्ष्मीकृत्य या गच्छता यातीति याः कर्त्तरि क्विप् धोरालोपोऽच्चघाविति टापरे आलोपः अतावरं अतति सातत्येन गच्छतीति अतोवायुः सूर्य्यादिर्व्वा अतसातत्यगमने पचादित्वादन् आवृणोतीत्यावरः अत्रापि पचादित्वादन् अतस्यावरमिति समासः पर्व्वतविशेषणं यतस्तुङ्गमत्युचं किम्वा भूभृतं अता गच्छता अततीति अत् कर्त्तरि क्विप् अभिया अविद्यमानभयेन हनूमद्विशेषणं आवरं आवृणोति अर्थात् सूर्य्यादीन् तुङ्गत्वादित्यावरं पूर्व्ववत् पुनः कीदृशं पर्व्वतं रुचिरं तुष्टिदं रुचिं राति ददाति हनजनादितिडः कर्कशं कठिनं पाषाणमयत्वात् ससत्त्वं प्राणिभिर्हिंस्रादिभिर्युक्तं पुष्करं पङ्कजे व्योम्नि पयः करिकराग्रयोः। औषधद्वीपविहगतीर्थराजोरगान्तरे। पुष्करं तूर्य्यवक्त्रे च काण्डे खङ्गफलेऽपिचेति विश्वः। महायमकमिति आद्यश्लोकस्य द्वितीयश्लोकेन यमकितत्वात् तथाच रुद्रटः अर्द्धं पुनरावृत्तं जनयति यमकं समुद्गकं नाम। श्लोकस्तु महायमकमिति॥ २०॥

चित्रं चित्रमिवायातोविचित्रं तस्य भूभृतं। हरयोवेगमासाद्य सन्त्रस्तामुमुहुर्मुहुः॥ आद्यन्तयमकं॥२१॥

ज०म० चित्रमित्यादि। भूधरं पर्व्वतं चित्रं गैरिकादिभिर्नानावर्णं अतएव चित्रमिवालेख्यमिव आयातः आगच्छतस्तस्य हनूमतः वेगञ्चवश्चित्रं अद्भुतमासाद्य प्राप्य हरयः कपयः सन्त्रस्ताः

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



सभयाः मुमुक्षुः मोहङ्गताः मुक्षुः ख्यणं श्लोकाद्यन्तयमकमिति श्लोकस्यादावन्ते च यमितत्वात्॥ २१॥

चित्रमित्यादि। तस्य हनूमतश्चित्रमद्भुतं वेगं समासाद्य प्राप्य भ० हरयः कपयः सन्त्रस्ताः सन्तोमुक्षुर्व्वारंवारं मुमुक्षुर्म्मोहमुपागताः तस्य कीदृशस्य भूभृतं पर्व्वतमायातः आगच्छतः यातेः शतृः कीदृशं भूभृतं विचित्रं गैरिकादिभिर्नानावर्णं अतएव चित्रमिव आलेख्यमिव आद्यन्तयमकमिति श्लोकस्यादावन्ते च यमितत्वात्॥ २१॥

गच्छन् सवारीण्यकिरत्पयोधेः कूलस्थितांस्तानि तरूनधुन्वन्। पुष्पास्तरांस्तेऽङ्गसुखानतन्वंस्तान् किन्नरामन्मथिनोऽध्यतिष्ठन्॥ आदिदीपकं॥ २२॥

अर्थालङ्कारस्तु दीपकरूपकादिभेदेनानेकप्रकारः तत्र वाक्या ज०म० र्थप्रकाशनाद्दीपकमुच्यते तदादिमध्यान्तभेदात्त्रिविधमिति दर्शयन्नाह॥ गच्छनित्यादि। सहनूमान् वेगेन गच्छन् पयोधेर्वारीणि वेगजेन वायुना अकिरत् विक्षिप्तवान् तानि वारीणि अधिक्षिप्तानि कूलस्थितांस्तरूनधून्वन् कम्पितवन्ति धून्कम्पन् इति सौवादिकः ते तरवः कम्पिताः पुष्पास्तरान् पुष्पाणां प्रकरान् आस्तीर्य्यन्तइति च्छदोरप् अङ्गसुखान् मृदुस्पर्शत्वात् कायस्य सुखहेतूनतन्वन् विस्तारितवन्तः तान् पुष्पास्तरान् किन्नराः मन्मथिनः कामवन्तः अध्यतिष्ठन् अध्यासितवन्तः अधिशीङित्यादिनाधिक

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



रणस्य कर्मसंज्ञा आदिदीपकमिति क्रियापदस्यादौ श्रूयमाण त्वात् द्विविधं ह्यादिदीपकं एकतिङनेकतिङ्सहितञ्च तत्र यत्पूर्व्वं तदेकमप्यनेकार्थप्रकाशकं यथाह भामहः मदोजनयति प्रीतिमानन्दं मानभङ्गुरं यत्प्रियासङ्गमोत्कण्ठामसह्यां मनसः शुचमिति यत्तु द्वितीयं तत्समस्तवाक्यार्थप्रकाशकं यथेदमेव तत्र ह्युत्तरेषां वाक्यार्थानामाद्येनैव दीपनात् तस्मिन्नसति शेषाणामस्फुटत्वात् पूर्व्वकं परित्यज्य द्वितीयस्य प्रदर्शनं यत् तत्प्रतीपदीपकं नाम चतुर्थमस्तीति दर्शनार्थं तद्यथा तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं मा कृथाः सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनान्। मान्यान्मानय विद्विषोऽप्यनुनय प्रख्यापय स्वान् गुणान् कीर्त्तिं पालय दुःखिते कुरु दयामेतत्सतां चेष्टितमिति शेषोयदत्र परस्परमसंबद्धमिति ॥ २२ ॥

भ० अथ शब्दालङ्कारं प्रदर्श्य अर्थालङ्कारं दर्शयति स च वक्र प्रकारो रूपकदीपकादिभेदात् तत्रादौ दीपकं दर्शयति गच्छन्नि त्यादि। सहनूमान् गच्छन् वेगजेन वायुना पयोधेर्व्वारीणि अकि रत् क्षिपविक्षेपे तानि वारीणि विक्षिप्तानि सन्ति कूलस्थितान् तरून् अधुन्वन् अकम्पयन् धुञ्कम्पने इति तरवः कम्पिताः सन्तः पुष्पाणा मास्तरणानि अतन्वन् तनद्विस्तारे अङ्गसुखान् शरीरे सुखज नकान् मृदुस्पर्शत्वात् तान् पुष्पास्तरान् किन्नराः मन्मथिनः कामि नः सन्त. अध्यतिष्ठन् अध्यवात्सुः कर्म क्रियेत्यादिना उक्त ठत्व आदिदीपकमिव गच्छन्नित्यादावुपादानात् तदेव सर्व्वां क्रियां

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



द्दीपयति अन्यासां तन्मूलत्वात् अकिरदिति यदादौ दत्तं तेनै वान्यासामपि क्रियाणामुद्दीपनादिति केचित् तथाहि अकिरदिति क्रियापदेन कीर्णानि वारीणि इति योजना एवं सर्व्वत्र॥ २२॥

स गिरिं तरुषण्डमण्डितं समवाप्य त्वरया लता मृगः। स्मितदर्शितकार्य्यनिश्चयः कपिसैन्यैर्मुदितैरम ण्डयत्॥ अन्तदीपकं॥ २३॥

सगिरिमित्यादि। स लतामृगो हनूमान् प्रयोजककर्त्ता गिरिमङ्गदादिभिरध्यासितं तरुषण्डमण्डितं त्वरया वेगेन समवाप्य कपिसैन्यैर्मुदितैर्हृष्टैः प्रयोज्यकर्तृभिः अमण्डयत् मडि भूषायामिति भौवादिकः चौरादिके तु कपिसैन्यैः करणभूतै रिति योज्यं मुदितत्वे कारणमाह स्मितदर्शितकार्य्यनिश्चयः ईष द्धसितप्रकटीकृतसीतोपलब्धिनिश्चयः। अन्तदीपकमिति अमण्ड यदिति क्रियापदस्यान्ते निर्द्दिष्टत्वात्॥ २३॥ ज॰म॰

सगिरिमित्यादि। स लतामृगः कपिर्हनूमान् प्रयोजककर्त्ता अङ्गदादिभिरध्यासितं गिरिं त्वरया वेगेन समवाप्य मुदितै र्हृष्टैः कपिसैन्यैः प्रयोज्यैरमण्डयत् शोभयामास गिरिमिति काका क्षिगोलकन्यायेन उभयत्र सम्बध्यते भौवादिकमडिधातोः प्रेरणे ञिः किम्वा स लतामृगः कर्त्ता त्वरया गिरिं समवाप्य कपिसैन्यैः करणभूतैरमण्डयत् शोभते स्म चौरादिकमडिधातो रूपं किमडि भूषे गिरिं कीदृशं तरुषण्डैर्वृक्षसमूहैर्मण्डितं भूषितं कपिसैन्यानां भ॰



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



रणस्य कर्म्मसंज्ञा आदिदीपकमिति क्रियापदस्यादौ श्रूयमाण त्वात् द्विविधं ह्यादिदीपकं एकतिङनेकतिङ्सहितञ्च तत्र यत्पूर्व्वं तदेकमप्यनेकार्थप्रकाशकं यथाह भामहः मदोजनयति प्रीतिमानन्दं मानभङ्गुरं यत्प्रियासङ्गमोत्कण्ठामसह्यां मनसः शुचमिति यत्तु द्वितीयं तत्समस्तवाक्यार्थप्रकाशकं यथेदमेव तत्र ह्युत्तरेषां वाक्यार्थानामाद्येनैव दीपनात् तस्मिन्नसति शेषाणामस्फुटत्वात् पूर्व्वकं परित्यज्य द्वितीयस्य प्रदर्शनं यत् तत्प्रतीपदीपकं नाम चतुर्थमस्तीति दर्शनार्थं तद्यथा तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं मा कृथाः सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनान्। मान्यान्मानय विद्विषोऽप्यनुनय प्रख्यापय स्वान् गुणान् कीर्त्तिं पालय दुःखिते कुरु दयामेतत्सतां चेष्टितमिति शेषोयदत्र परस्परमसंबद्धमिति ॥ २२ ॥

भ० अथ शब्दालङ्कारं प्रदर्श्य अर्थालङ्कारं दर्शयति सच वक्त्र प्रकारो रूपकदीपकादिभेदात् तत्रादौ दीपकं दर्शयति गच्छन्नि त्यादि। सहनूमान् गच्छन् वेगजेन वायुना पयोधेर्व्वारीणि अकि रत् क्षिपविक्षेपे तानि वारीणि विक्षिप्तानि सन्ति कूलस्थितान् तरून् अधुन्वन् अकम्पयन् धुञ्कम्पने ते तरवः कम्पिताः सन्तः पुष्पाणा मास्तरणानि अतन्वन् तनदुञ्विस्तारे अङ्गसुखान् शरीरे सुखज नकान् मृदुस्पर्शत्वात् तान् पुष्पास्तरान् किन्नराः मन्मथिनः कामि नः सन्त. अध्यतिष्ठन् अध्यवात्सुः कर्म्म क्रियेत्यादिना ङस्य ढत्व आदिदीपकमिव गच्छन्नित्यादावुपादानात् तदेव सर्व्वां क्रियां

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



द्दीपयति अन्यासां तन्मूलत्वात् अकिरदिति यदादौ दत्तं तेने वान्यासामपि क्रियाणामुद्दीपनादिति केचित् तथाहि अकिरदिति क्रियापदेन कीर्णानि वारीणि इति योजना एवं सर्व्वत्र॥ २२॥

स गिरिं तरुषण्डमण्डितं समवाप्य त्वरया लता मृगः। स्मितदर्शितकार्य्यनिश्चयः कपिसैन्यैर्मुदितैरम ण्डयत्॥ अन्तदीपकं॥ २३॥

सगिरिमित्यादि। स लतामृगो हनूमान् प्रयोजककर्त्ता गिरिमङ्गदादिभिरध्यासितं तरुषण्डमण्डितं त्वरया वेगेन समवाप्य कपिसैन्यैर्मुदितैर्हृष्टैः प्रयोज्यकर्तृभिः अमण्डयत् मडि भूषायामिति भौवादिकः चौरादिके तु कपिसैन्यैः करणभूतै रिति योज्यं मुदितत्वे कारणमाह स्मितदर्शितकार्य्यनिश्चयः ईष द्धसितप्रकटीकृतसीतोपलब्धिनिश्चयः। अन्तदीपकमिति अमण्ड यदिति क्रियापदस्यान्ते निर्द्दिष्टत्वात्॥ २३॥ ज॰म॰

सगिरिमित्यादि। स लतामृगः कपिर्हनूमान् प्रयोजककर्त्ता अङ्गदादिभिरध्यासितं गिरिं त्वरया वेगेन समवाप्य मुदितै र्हृष्टैः कपिसैन्यैः प्रयोज्यैरमण्डयत् शोभयामास गिरिमिति काका क्षिगोलकन्यायेन उभयत्र सम्बध्यते भौवादिकमडिधातोः प्रेरणे ञिः किम्वा स लतामृगः कर्त्ता त्वरया गिरिं समवाप्य कपिसैन्यैः करणभूतैरमण्डयत् शोभते स्म चौरादिकमडिधातोरूपं किमडि भूषे गिरिं कीदृशं तरुषण्डैर्वृक्षसमूहैर्मण्डितं भूषितं कपिसैन्यानां भ॰

३ य

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



मुदितत्वे हेतुमाह स्मितेति स्मितेन ईषद्धास्येन दर्शितो ज्ञापितः कार्य्यस्य सीतादर्शनरूपस्य निश्चयो येन षण्डं पद्मादिसंघाते षण्डः स्यान्नोपतावपीति विश्वः सुन्दरीछन्दः तल्लक्षणं यथा अयुजोर्यदि सौ जगौयुजो:सभराल्गौयदि सुन्दरी तदेति अत्र वाक्य भेदाभावेऽपि अमण्डयदित्यन्तिमक्रियापदेन सम्पूर्णवाक्योपकारादन्तदीपकं किम्वा गिरिमवाप्य तं स्वयममण्डयत् कपिसैन्यैस्यामण्डयदिति वाक्यभेदोऽत्र मन्तव्यः॥ २३॥

गरुडानिलतिग्मरश्मयः पततां यद्यपि सम्मताजवे।
अचिरेण कृतार्थमागतं तममन्यन्त तथाप्यतीव ते॥
मध्यदीपकं॥ २४॥

ज०म० गरुडेत्यादि। पततां गच्छतां मध्ये यद्यपि गरुडादयोजवे वेगविषये सम्मताः अभिमताः तथापि तं हनूमन्तं अचिरेणैव कालेन कृतार्थं कृतकृत्यमागतं अतीव जविनं ते कपयः अमन्यन्त मन्यतेर्लङि रूपं। मध्यदीपकमिति क्रियापदस्य मध्ये निर्दिष्टत्वात्॥ २४॥

भ० गरुडेत्यादि। गरुडवायुसूर्य्यायद्यपि पततां गच्छतां मध्ये जवे वेगविषये लोकस्य सम्मता अभिमतास्तथापि ते कपयस्तं हनूमन्तं अतीव जववन्तं अमन्यन्त ज्ञातवन्तः मन्यौङ्बोधे यतो अचिरेणैव कालेन कृतार्थं कृतकार्य्यमागतं। मध्यदीपकमिति

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



सम्मतादृत्यसामन्यन्तेत्यस्य वा क्रियापदस्य मध्ये निर्दिष्टत्वात् विद्यासागरस्तु जवइति कारकपदं मध्ये श्रूयमाणमतीवेत्यपि दीपयतीति कारकदीपकमिदमित्याह॥ २४॥

व्रणकन्दरलीनशस्त्रसर्पः पृथुवक्षःस्थलकर्कशोरुभित्तिः। च्युतशोणितबद्धधातुरागः शुशुभे वानरभूधरस्तदासौ॥ रूपकं॥ २५॥ अस्यैव भेदाश्चपरे चत्वारः॥

रूपकमनेकविधं दर्शयन्नाह। व्रणेत्यादि। असौ वानरो ज॰म॰ भूधरइव वानरभूधरः उपमितमित्यादिना समासः तदा तस्मिन्वानरमध्यगमनकाले कृतार्थः शुशुभे शोभते स्म व्रणानि शस्त्रक्षतानि कन्दराणीव शस्त्राणि सर्पाइव शस्त्रसर्पाः व्रणकन्दरेषु लीना' शस्त्रसर्पायस्य वक्षःस्थलं कर्कशोरुभित्तिरिव सा पृथुला विस्तीर्णा यस्य सः शोणितं बद्धधातुरागइव स्निष्ट गैरिकादिरागइव स च्युतोयस्य सर्व्वंत्र उपमितमित्यादिना समासः। रूपकमिति सावयवेन भूधरेणोपमानेन सावयवस्य कपेरुपमेयस्य तत्स्वभावतयाध्यारोपितत्वात् यथोक्तं उपमानेन तुल्यत्वमुपमेयस्य रूप्यते। गुणानां समतां दृष्ट्वा रूपकं नाम तद्विदुरिति॥ २५॥

व्रणेत्यादि। असौ वानरस्वरूपभूधरस्तदा वानरमध्यगमन भ॰ काले शुशुभे दीप्यते स्म कीदृशः व्रणानि शस्त्रहतस्वरूपाणि

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कन्दराणि तेषु लीनाः प्रशस्तस्वरूपाः सर्पा यस्य पृथु विस्तीर्णं वक्षःस्थलमेव कर्कशोरः कठिनोरुभित्तिर्यस्य शोणितमेव बहु धातुरागः स्निष्टगैरिकादिरागश्च्युतोयश्च रूपकमिति व्रणादीनां कन्दरादिभिरिह सादृश्यं न वाच्यं किन्तु अभेद एव विवक्षितः स च यद्यपि वाधितस्तथापि सादृश्यातिशयव्यञ्जनात्तथात्वं गम्यते यदुक्तं उपमैव तिरोभूतभेदा रूपकमिष्यतइति उपमानेन यत्तु त्वमुपमेयस्य रूप्यते। गुणानां समतां दृष्ट्वा रूपकञ्चैव तद्विदुरिति च यदि व्रणादि कन्दरादीव वानरोभूधरइवेत्युपमानसमासे उच्यते तदेतदेव लुप्तोपमोदाहरणं बोद्धव्यं यद्वा उपमानस मासेऽपि रूपकत्वमिति मते उदाहरणमिदं तथाच सरस्वतीक ण्ठाभरणे यदोपमानशब्दानां गौणवृत्तिरुपाश्रया। उपमेये भवेद्वृत्तिस्तदा तद्रूपकं विदुरिति॥ २५॥

चलपिङ्गलकेशरहिरण्यलताः स्फुटनेत्रपङ्क्तिमणि संहतयः। कलधौतसानवइवाथ गिरेः कपयोवभुः पवनजागमने॥ एतद्विशिष्टोपमायुक्तं रूपकं॥ २६॥

ज०म० चलेत्यादि। अथ पवनजागमने हनूमदागमने कपयो गिरेस्तस्यैव कलधौतसानवइव सौवर्णैकदेशाइव वभुः शोभन्ते स्म पिङ्गलकेसराणि पिङ्गलसटाः तानि हिरण्यलताइव स्व र्णलताइव तास्ताश्चयेषां कपीनां नेत्रपङ्क्तयोमणिसंहतयइव

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ताः स्फुटा उज्ज्वलायेषामिति एतदपि रूपकमेव किन्तु कलधौतत्वेन सानूनां विशिष्टत्वाद्विशिष्टोपमायुक्तं कमलकं नाम॥ २६॥

चलेत्यादि। अथानन्तरं कपयोऽङ्गदादयः पवनजस्य हनूमतश्चागमने बभुः शोभन्ते स्म तस्यैव गिरेः कलधौतसानवइव स्वर्णसानवइव कलधौतं रूप्यहेम्नोरिति विश्वः कीदृशाः पिङ्गकेशराणि कपिलशटाएव हिरण्यलतास्तास्वलास्वज्ज्वलायेषां नेत्रपङ्क्तयएव मणिसंहतयस्ताः स्फुटाउज्ज्वलायेषां। इदमपि रूपकमेव केशराणां लतात्वेन नेत्राणां मणित्वेन च रूपणात् किन्तु कलधौतसानूनां विशिष्टत्वाद्विशिष्टोपमायुक्तमिति॥ २६॥

कपितोयनिधीन् प्लवङ्गमेन्दुर्मदयित्वा मधुरेण दर्शनेन। वचनामृतदीधितीर्वितन्वन्नकृतानन्दपरीतनेत्रवारीन्॥ एतच्छेषार्थान्ववसितमवतंसकं॥ २७॥

कपीत्यादि। प्लवङ्गमइन्दुरिव प्लवङ्गमेन्दुः कपयस्तोयनिधयइव कपितोयनिधीन् मधुरेण सुखेन दर्शनेन मदयित्वा हर्षयित्वा मदीहर्षग्लपनयोरिति घटादित्वान्मित्त्वे ह्रस्वत्वं वचनानि अमृतमयदीधितयइव वचनामृतदीधितीर्वितन्वन् विस्तारयन् लोकवृत्तान्तसम्बोधकमाह्लादकं वचनमुदाहरन्नित्यर्थः आनन्देन हर्षेण परीतं सञ्जातं नेत्रवारि येषां तानेवम्विधानकृत कृतवान्। एतद्रूपकं शेषार्थान्ववसितं रूपितादन्योऽर्थः आनन्दपरीतनेत्रवारीनिति स शेषः तेनान्ववसितं युक्त

Digitized by eGangotri and Sarayu Trust.



कन्दराणि तेषु लीनाः प्रस्तस्वरूपाः सर्पा यस्य पृथु विस्तीर्णं वक्षःस्थलमेव कर्कशोरुः कठिनोरुभित्तिर्यस्य शोणितमेव बहु धातुरागः स्निग्धगैरिकादिरागश्च्युतो यत्र रूपकमिति व्रणादीनां कन्दरादिभिरिह सादृश्यं न वाच्यं किन्तु अभेद एव विवक्षितः स च यद्यपि वाधितस्तथापि सादृश्यातिशयव्यञ्जनात्तथात्वं गम्यते यदुक्तं उपमैव तिरोभूतभेदा रूपकमिष्यत इति उपमानेन यत्तु त्त्वमुपमेयस्य रूप्यते। गुणानां समतां दृष्ट्वा रूपकस्यैव तद्विदुरिति च यदि व्रणादि कन्दरादीव वानरोभूधर इवेत्युपमानसमासे उच्यते तदेतदेव लुप्तोपमोदाहरणं बोद्धव्यं यद्वा उपमानसमासेऽपि रूपकत्वमिति मते उदाहरणमिदं तथा च सरस्वतीकण्ठाभरणे यदोपमानशब्दानां गौणवृत्तिरुपाश्रया। उपमेये भवेद्‌वृत्तिस्तदा तद्रूपकं विदुरिति ॥ २५ ॥

चलपिङ्गलकेशरहिरण्यलताः स्फुटनेत्रपङ्क्तिमणिसंहतयः। कलधौतसानव इवाथ गिरेः कपयो बभुः पवनजागमने॥ एतद्विशिष्टोपमायुक्तं रूपकं॥ २६॥

ज०म० चलेत्यादि। अथ पवनजागमने हनूमदागमने कपयो गिरेस्तस्यैव कलधौतसानव इव सौवर्णैकदेशा इव बभुः शोभन्ते स्म पिङ्गलकेसराणि पिङ्गलसटाः तानि हिरण्यलता इव सुवर्णलता इव ताश्चलायेषां कपीनां नेत्रपङ्क्तयो मणिसंहतय इव

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ताः स्फुटा उज्ज्वलायेषामिति एतदपि रूपकमेव किन्तु कलधौतत्वेन सानूनां विशिष्टत्वादिविशिष्टोपमायुक्तं कमलकं नाम॥ २६॥

चलेत्यादि। अथानन्तरं कपयोऽङ्गदादयः पवनजस्य हनूमतश्चागमने बभुः शोभन्ते स्म तस्यैव गिरेः कलधौतसानवइव स्वर्णसानवइव कलधौतं रूप्यहेम्नोरिति विश्वः कीदृशाः पिङ्गकेशराणि कपिलशटाएव हिरण्यलतास्ताश्चलाश्चञ्चलायेषां नेत्रपङ्क्तयएव मणिसंहतयस्ताः स्फुटाउज्ज्वलायेषां। इदमपि रूपकमेव केशराणां लतात्वेन नेत्राणां मणित्वेन च रूपणात् किन्तु कलधौतसानूनां विशिष्टत्वादिविशिष्टोपमायुक्तमिति॥ २६॥

भ०

कपितोयनिधीन् प्लवङ्गमेन्दुर्मदयित्वा मधुरेण दर्शनेन। वचनामृतदीधितीर्वितन्वन्नकृतानन्दपरीतनेत्रवारीन्॥ एतच्छेषार्थान्ववसितमवतंसकं॥ २७॥

न०म०

कपीत्यादि। प्लवङ्गमइन्दुरिव प्लवङ्गमेन्दुः कपयस्तोयनिधयइव कपितोयनिधीन् मधुरेण सुखेन दर्शनेन मदयित्वा हर्षयित्वा मदीहर्षग्लपनयोरिति घटादित्वान्मित्त्वे ह्रस्वत्वं वचनानि अमृतमयदीधितयइव वचनामृतदीधितीर्वितन्वन् विस्तारयन् लोकवृत्तान्तसम्बोधकमाह्लादकं वचनमुदाहरन्नित्यर्थः आनन्देन हर्षेण परीतं सञ्जातं नेत्रवारि येषां तानेवम्विधानकृत कृतवान्। एतद्रूपकं शेषार्थान्ववसितं रूपितादन्योऽर्थः आनन्दपरीतनेत्रवारीनिति स शेषः तेनान्ववसितं युक्त

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



मवतंसकं नाम विसदृशस्यार्थस्य लपितत्वात् तदेवान्यैः खण्डरूपकमित्युच्यते ॥ २७ ॥

भ० कपीत्यादि। प्लवङ्गमो हनूमानेव इन्दुः कपीनेव समुद्रान् मधरेण प्रेमदर्शनेन मदयित्वा हर्षयित्वा वचनान्येव अमृतदीधितीः सुधासम्बन्धिकिरणान् वितन्वन् युद्धवृत्तान्तबोधकमाह्लादकवचनमुदाहरन् आनन्देन हर्षेण परीतं संजातं नेत्रवारि येषां तानेवंविधान् अकृत कृतवान मदीहर्षग्लपनयोः घटादित्वात् ह्रस्वः एतच्छेषार्थान्ववसितमवतंसकमिति एतद्रूपकं उक्तादन्यः शेषः रूपकादन्यः इत्यर्थः रूपितार्थादन्यार्थआनन्दपरीतनेत्रवारीनकृतेत्येवंरूपः तेनावसितं युक्तं अवतंसं नाम विसदृशस्यार्थस्योक्तत्वात् एतदेवान्यैः खण्डरूपकमित्युक्तं ॥ २७ ॥

परिखेदितविन्ध्यवीरुधः परिपीतामलनिर्झराम्भसः।
दुधुवुर्म्मधुकाननं ततः कपिनागा मुदिताङ्गदाज्ञया॥
अर्द्धरूपकं ॥ २८ ॥

ज०म० परिखेदितेत्यादि। ततउत्तरकालं कपयोनागा इव हस्तिन इव कपिनागाः मुदितस्याङ्गदस्याज्ञया मधुकाननं सुग्रीवस्य क्रीडोद्यानं दुधुवुः कम्पितवन्तः मधून्युपभुज्य संभ्रममकुर्व्वन्नित्यर्थः परिखेदिताः परिमृदिताः विन्ध्यवीरुधोविन्ध्यलतागुल्मा यैः परिपीतममलनिर्झराम्भोयैः। अर्द्धरूपकमिति पश्चिमार्द्धे कपिनागा इति रूपितं ॥ २८ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



परीत्यादि। ततोऽनन्तरं कपयएव नागाहस्तिनोमुदितस्य हृष्टस्याङ्गदस्याज्ञया मधुकाननं सुग्रीवस्योद्यानं दुधुवुः कम्पितवन्तः मधुवनं भङ्क्त्वा भुक्तवन्तइत्यर्थः कीदृशाः परिखेदिताः मर्द्दिताविन्ध्यपर्व्वतस्य वीरुधोलतायैः ते तथा परिपीतं निर्म्मलं निर्झरजलं यैः नागाः काननं धुन्वन्त्येवेति रूपणमर्द्धरूपकमित्युक्तं कपिनागादृत्युत्तरार्द्धे रूपितं नतु पूर्व्वार्द्धे॥ २८॥ भ०

विटपिमृगविषादध्वान्तनुद्वानरार्कः प्रियवचनमयूखैर्ब्बोधितार्थारविन्दः। उदयगिरिमिवाद्रिं संप्रमुच्याभ्यगात् खं नृपहृदयगुहास्थं घ्नन् प्रमोहान्धकारं॥ एतदन्वर्थोपमायुक्तललामकं॥ २९ ॥

विटपीत्यादि। वानरार्कः वानरोऽर्कइव वानरार्कः उदयगिरिमिवाद्रिं पर्व्वतं महेन्द्रं सम्प्रमुच्य खमाकाशमभ्यगात् अभिगतवान् विटपिमृगाणां योविषादआसीत् कथं सीतान्वेषणीयेति सध्वान्तमिव तं नुदतीति क्विप् प्रियवचनानि मयूखाइव तैः करणभूतैः बोधितमर्थारविन्दं येन अर्थः सीतोपलब्धिः सोऽरविन्दमिव नृपहृदयं गुहेव तत्र तिष्ठतीति नृपहृदयगुहास्थं प्रमोहोविषादोऽन्धकारइव तं घ्नन् हनिष्यन् वर्त्तमानसमीपत्वात् भविष्यति लट्। एतदिति रूपकं अन्वर्थयोपमया युक्तं ललामनाम यतउदेत्यस्मादित्युदयः अकर्त्तरि च कारके सच् स चासौ ज०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



मवतंसकं नाम विसदृशस्यार्थस्य रूपितत्वात् तदेवान्यैः खण्डरूपकमित्युच्यते॥ २७॥

भ॰ कपीत्यादि। प्लवङ्गमो हनूमानेव इन्दुः कपीनेव समुद्रान् मधुरेण प्रेमदर्शनेन मदयित्वा हर्षयित्वा वचनान्येव अमृतदीधितीः सुधासम्बन्धिकिरणान् वितन्वन् युद्धवृत्तान्तबोधकमाह्लादकवचनमुदाहरन् आनन्देन हर्षेण परीतं संजातं नेत्रवारि येषां तानेवंविधान् अकृत कृतवान मदीहर्षग्लपनयोः घटादित्वात् ह्रस्वः एतच्छ्लेषार्थान्ववसितमवतंसकमिति एतद्रूपकं उक्तादन्यः श्लेषः रूपकादन्यः इत्यर्थः रूपितार्थादन्यार्थआनन्दपरीतनेत्रवारीनकृतेत्येवंरूपः तेनावसितं युक्तं अवतंसं नाम विसदृशस्यार्थस्योक्तत्वात् एतदेवान्यैः खण्डरूपकमित्युक्तं ॥ २७॥

परिखेदितविन्ध्यवीरुधः परिपीतामलनिर्झराम्भसः।
दुधुवुर्मधुकाननं ततः कपिनागा मुदिताङ्गदाज्ञया॥
अर्द्धरूपकं॥ २८॥

ज॰म॰ परिखेदितेत्यादि। ततउत्तरकालं कपयोनागाइव हस्तिनइव कपिनागाः मुदितस्याङ्गदस्याज्ञया मधुकाननं सुग्रीवस्य क्रीडोद्यानं दुधुवुः कम्पितवन्तः मधून्युपभुज्य संभ्रममकुर्व्वन्नित्यर्थः परिखेदिताः परिमृदिताः विन्ध्यवीरुधोविन्ध्यलतागुल्मायैः परिपीतममलनिर्झराम्भोयैः। अर्द्धरूपकमिति पश्चिमार्द्धे कपिनागाइति रूपितं॥ २८॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



परीत्यादि। ततोऽनन्तरं कपयएव नागाहस्तिनोमुदितस्य हृष्टस्याङ्गदस्याज्ञया मधुकाननं सुग्रीवस्योद्यानं दुधुवुः कम्पित वन्तः मधुवनं भङ्क्त्वा भुक्तवन्तइत्यर्थः कीदृशाः परिखेदिता मर्द्दिताविन्ध्यपर्व्वतस्य वीरुधोलतायैः ते तथा परिपीतं निर्म्मलं निर्झरजलं यैः नागाः काननं धुन्वन्त्येवेति रूपणमर्द्धरूपकमि त्युक्तं कपिनागादृत्युत्तरार्द्धे रूपितं नतु पूर्व्वार्द्धे॥ २८॥ भ०

विटपिमृगविषादध्वान्तनुद्वानरार्कः प्रियवचन मयूखैर्व्वोधितार्थारविन्दः। उदयगिरिमिवाद्रिं संप्रमु च्याभ्यगात् खं नृपहृदयगुहास्थं घ्नन् प्रमोहान्ध कारं॥ एतदन्वर्थोपमायुक्तललामकं॥ २९॥

विटपीत्यादि। वानरार्कः वानरोऽर्कइव वानरार्कः उदयगि रिमिवाद्रिं पर्व्वतं महेन्द्रं सम्प्रमुच्य खमाकाशमभ्यगात् अभिगत वान् विटपिमृगाणां योविषादआसीत् कथं सीतान्वेषणीयेति स ध्वान्तमिव तं नुदतीति क्विप् प्रियवचनानि मयूखाइव तैः करण भूतैः वोधितमर्थारविन्दं येन अर्थः सीतोपलब्धिः सोऽरविन्द मिव नृपहृदयं गुहेव तत्र तिष्ठतीति नृपहृदयगुहास्थं प्रमोहो विषादोऽन्धकारइव तं घ्नन् हनिष्यन् वर्त्तमानसमीपत्वात् भविष्यति लट्। एतदिति रूपकं अन्वर्थयोपमया युक्तं ललाम नाम यतउदेत्यस्मादित्युदयः अकर्त्तरि च कारके सच् स चासौ जं०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



गिरिमिवेत्यनुगतार्थता यत्रान्वर्थता नास्त्युपमायाः तदुपमा युक्तमेव रूपकं द्रष्टव्यं॥ २८॥

भ० विटपीत्यादि। स वानररूपोऽर्कउदयाचलमिव अद्रिं महेन्द्राद्रिं संप्रमुच्य खमाकाशं अभ्यगात् आभिमुख्येन गतवान् कीदृशः विटपिमृगाणां वानराणां योविषादः सीतानुपलब्धि जनितः सएव ध्वान्तमन्धकारस्तं नुदति अपसारयतीति क्विप् प्रियवचनरूपैर्मयूखैर्बोधितानि विकाशितानि अर्थरूपाणि सीतोपलब्धिरूपाणि पद्मानि येन नृपस्य रामस्य हृदयरूपायां गुहायां तिष्ठन्तं प्रमोहरूपमन्धकारं घ्नन् विनाशयिष्यन् वर्त्तमान सामीप्ये वर्त्तमानलोपचारात् शतृः एतदपि रूपकं अन्वर्थोपमा युक्तं ललामकं नाम तथाहि उदेत्यस्मादित्युदयः अपादानेऽल् सचासौ गिरिश्चेति अनुगतार्थत्वमुदयगिरिशब्दस्य योगार्थस्याश्रयात् उदयगिरिमिवेत्युपमा दर्शिता विषादादीनां ध्वान्तत्वादिना रूपणं॥ २९॥

रघुतनयमगात्तपोवनस्थं विधृतजटाजिनवल्कलं हनूमान्। परमिव पुरुषं नरेण युक्तं समशमवेशसमाधिनानुजेन॥ इवोपमा॥ ३०॥

ज०म० उपमालङ्कारं दर्शयन्नाह। रघुतनयमित्यादि। हनूमान् रघुतनयमगात् प्राप्तवान् तपः प्रधानं वनं तपोवनं तत्र स्थितं विधृता जटा अजिनञ्चर्म्म वल्कलञ्च येन तं अनुजेन कनीयसा

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ्रात्रा लक्ष्मणेन समास्तुल्याः शमावेशाः समाधयश्च यस्य तेन युक्तं परममुत्तमं पुरुषमिव पुरुषोत्तममिव नरेण युक्तं वदरिकाश्रमे नरनारायणयोस्तपश्चर्य्यया स्थितत्वात् इवोपमेति इव शब्देनोपमार्थस्य गम्यमानत्वात्। उपमायालक्षणं विरुद्धेनोपमानेन देशकालक्रियादिभिः। उपमेयस्य यत्साम्यं गुणमात्रेण सोपमेति अत्र विरुद्धदेशकालक्रियागुणः पुरुषोत्तमउपमानं तेन रामस्योपमेयस्य तपोवनस्थत्वेन विधृतजटाजिनवल्कलत्वेन नरानुकारिलक्ष्मणेनानुगतत्वेन च गुणमात्रेण साम्यमुपमानं ॥ ३० ॥

रविमित्यादि। हनूमान् रघुतनयं रामं अगात् प्राप्तवान् कीदृशं तपःप्रधानं वनं तपोवनं तत्र स्थितं विधृतं जटामृगचर्म्म वल्कलञ्च येन समास्तुल्याः शमः शान्तिर्व्वेशोजटावल्कलादिधारणं समाधिर्ध्यानञ्च यस्य तादृशेन अनुजेन कनीयसा लक्ष्मणेन युक्तं नरेण मुनिना युक्तं परं पुरुषमिव नारायणमिव नरनारायणयोर्व्वदरिकाश्रमे तपश्चर्य्यायां स्थितत्वात्। पुष्पिताग्राछन्दः लक्षणं यथा अयुजिनयुगरेफतोयकारोयुजितुनजौजरगाश्चपुष्पिताग्रेति। इवोपमेति इव शब्देनोपमायागम्यमानत्वात् उपमालक्षणं यथा विरुद्धेनोपमानेन देशकालक्रियादिभिः उपमेयस्य साम्यं यद्गुणमात्रेण सोपमेति अत्र विरुद्धदेशकालक्रियादिगुणयुक्तः पुरुषोत्तमउपमानं तेन रामस्य उपमेयस्य तपोवनस्थत्वेन विधृतजटत्वेन लक्ष्मणानुचरत्वेन च गुणमात्रेण साम्यादुपमा इव



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



गिरिश्चेत्यनुगतार्थता यत्रान्वर्थता नास्त्युपमायाः तदुपमा युक्तमेव रूपकं द्रष्टव्यं॥ २८॥

भ॰ विटपीत्यादि। स वानररूपोऽर्कउदयाचलमिव शृङ्गं महेन्द्राद्रिं संप्रमुच्य खमाकाशं अभ्यगात् आभिमुख्येन गतवान् कीदृशः विटपिमृगाणां वानराणां योविषादः सीतानुपलब्धि जनितः सएव ध्वान्तमन्धकारस्तं नुदति अपसारयतीति क्विप् प्रियवचनरूपैर्मयूखैर्बोधितानि विकाशितानि अर्थरूपाणि सीतोपलब्धिरूपाणि पद्मानि येन नृपस्य रामस्य हृदयरूपायां गुहायां तिष्ठन्तं प्रमोहरूपमन्धकारं घ्नन् विनाशयिष्यन् वर्त्तमान सामीप्ये वर्त्तमानलोपचारात् शतृः एतदपि रूपकं अन्वर्थोपमा युक्तं ललामकं नाम तथाहि उदेत्यस्मादित्युदयः अपादानेऽल् सचासौ गिरिश्चेति अनुगतार्थत्वमुदयगिरिशब्दस्य योगार्थस्याश्रयात् उदयगिरिमिवेत्युपमा दर्शिता विषादादीनां ध्वान्तत्वादिना रूपणं॥ २९॥

रघुतनयमगात्तपोवनस्थं विधृतजटाजिनवल्कलं हनूमान्। परमिव पुरुषं नरेण युक्तं समशमवेशसमाधिनानुजेन॥ इवोपमा॥ ३०॥

ज॰म॰ उपमालङ्कारं दर्शयन्नाह। रघुतनयमित्यादि। हनूमान् रघुतनयमगात् प्राप्तवान् तपः प्रधानं वनं तपोवनं तत्र स्थितं विधृता जटा अजिनञ्चर्म्म वल्कलञ्च येन तं अनुजेन कनीयसा

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ्रात्रा लक्ष्मणेन समास्तुल्याः शमावेशाः समाधयश्च यस्य तेन युक्तं परममुत्तमं पुरुषमिव पुरुषोत्तममिव नरेण युक्तं वदरिकाश्रमे नरनारायणयोस्तपश्चर्य्यया स्थितत्वात् इवोपमेति इव शब्देनोपमार्थस्य गम्यमानत्वात्। उपमायालक्षणं विरुद्धेनोपमानेन देशकालक्रियादिभिः। उपमेयस्य यत्साम्यं गुणमात्रेण सोपमेति अत्र विरुद्धदेशकालक्रियागुणः पुरुषोत्तमउपमानं तेन रामस्योपमेयस्य तपोवनस्थत्वेन विधृतजटाजिनवल्कलत्वेन नरानुकारिलक्ष्मणेनानुगतत्वेन च गुणमात्रेण साम्यमुपमानं ॥३०॥

रविरित्यादि। हनूमान् रघुतनयं रामं अगात् प्राप्तवान् कीदृशं तपःप्रधानं वनं तपोवनं तत्र स्थितं विधृतं जटामृगचर्म्म वल्कलञ्च येन समास्तुल्याः शमः शान्तिर्वेशोजटावल्कलादि धारणं समाधिर्ध्यानञ्च यस्य तादृशेन अनुजेन कनीयसा लक्ष्मणेन युक्तं नरेण मुनिना युक्तं परं पुरुषमिव नारायणमिव नरनारायणयोर्व्वदरिकाश्रमे तपश्चर्य्यायां स्थितत्वात्। पुष्पिताग्राछन्दः लक्षणं यथा अयुजिनयुगरेफतोयकारोयुजितुनजौजरगाश्चपुष्पिताग्रेति। इवोपमेति इव शब्देनोपमायागम्यमानत्वात् उपमालक्षणं यथा विरुद्धेनोपमानेन देशकालक्रियादिभिः उपमेयस्य साम्यं यद्गुणमात्रेण सोपमेति अत्र विरुद्धदेशकालक्रियादिगुणयुक्तः पुरुषोत्तमउपमानं तेन रामस्य उपमेयस्य तपोवनस्थत्वेन विधृतजटत्वेन लक्ष्मणानुचरत्वेन च गुणमात्रेण साम्यादुपमा इव



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



शब्द उपमाद्योतकः तथाच दण्डी इववद्वायथाशब्दा ज्ञेयाः सादृश्यसूचकादृति ॥ ३० ॥

करपुटनिहितं दधत् स रत्नं परिविरलाङ्गुलिनिर्गताल्पदीप्ति। तनुकपिलघनस्थितं यथेन्दुं नृपमनमत्परिभुग्नजानुमूर्द्धा ॥ यथोपमा ॥ ३१ ॥

ज०म० यथेवशब्द उपमार्थसूचकस्तथान्योऽपीति दर्शयन्नाह । करपुटनिहितमित्यादि । करपुटे करयुग्मे निहितं न्यस्तं रत्नं सीताचूडामणिं परिविरलाङ्गुलिभ्योनिर्गताअल्पादीप्तयोयस्य तद्रत्नं दधद्धारयन् स हनूमान् नृपं राममनमत् प्रणतवान् परिभुग्ने अवनते जानुनी मूर्द्धा च यस्य हनूमतः यथेन्दुं इन्दुमिव तनुः अच्छः कपिलश्च योघनः मेघः तत्र स्थितमिन्दुमिव रत्नं । यथोपमेति यथाशब्देनोपमार्थस्य गम्यमानत्वात् ॥ ३१ ॥

भ० करेत्यादि । परिभुग्ने कुटिलीकृते जानुनी मस्तकञ्च यस्य तथाभूतः सन् स हनूमान् नृपं रामं अनमत् प्रणतवान् कीदृशः रत्नं सीताचूडामणिं दधत् धारयन् कीदृशं करपुटे निहितमर्पितं परितोविरलाभ्योऽङ्गुलिभ्योनिर्गता अल्पा दीप्तिर्यस्य स तथा अतएव तनुरल्पः कपिलोयोघनोमेघस्तत्र स्थितं इन्दुं यथा येन रूपेण दधाति तथा रत्नं दधदिति सम्बन्धः। यथोपमेति यथाशब्देनोपमानस्य गम्यमानत्वात् ॥ ३१ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



रुचिरोन्नतरत्नगौरवः परिपूर्णामृतरश्मिमण्डलः।
समदृश्यत जीविताशया सह रामेण वधूशिरोमणिः॥
सहोपमा॥ ३२॥

रुचिरइत्यादि। वधूशिरोमणिः सीताचूडामणिः उन्नतं महद्रत्नगौरवं महार्घ्यादिलक्षणं यस्य रुचिरोदीप्तिमांश्चासौ उन्नतरत्नगौरवश्चेति सः परिपूर्णस्यामृतरश्मेश्चन्द्रमसोमण्डल मिव मण्डलं यस्य सः रामेण समदृश्यत संदृष्टः कर्म्मणि लङ् जीविताशया सह सार्द्धं तद्दर्शनतोजीवितोऽस्मीति तदाशया सहसा रुचिरा तुष्टिदा रुचिं राति ददातीति कृत्वा उन्नतरत्नगौरवा दुन्नतं रत्नेष्विव गौरवं बहुमानोयस्यामिति परिपूर्णममृतममरणं रश्मिमण्डलं यस्यामिति सहोपमेति सहशब्देन जीविताशया उपमाद्योतनात्॥ ३२॥ ज०म०

रुचिरइत्यादि। रामेण वध्वाः सीतायाः शिरोमणिः समदृश्यत संदृष्टः कर्म्मणि घो जीवितोऽस्मीति या प्रत्याशा-तया सदृशः सहशब्दोऽत्र सादृश्यार्थः उभयसाधर्म्म्यमाह रुचिरोन्नतरत्नगौरवः उन्नतं महद्रत्नगौरवं बहुमूल्यत्वादिलक्षणं गुरुत्वाख्यगुणविशेषोवा यस्य स तथा ततोरुचिरः शोभायुक्तश्चासावुन्नतरत्नगौरवश्चेति कर्म्मधारयः जीविताशापि रुचिं तुष्टिं राति ददातीति रुचिराउन्नतरत्नेष्विव गौरवं बहुमानोयस्यामिति भावः परिपूर्णस्यामृतरश्मेश्चन्द्रस्येव मण्डलं वक्राकारत्वं यस्य भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



शब्द उपमाद्योतकः तथाच दण्डी इववद्वायथाशब्दा ज्ञेयाः सादृश्यसूचकादिति ॥ ३० ॥

करपुटनिहितं दधत् स रत्नं परिविरलाङ्गुलिनिर्गताल्पदीप्ति। तनुकपिलघनस्थितं यथेन्दुं नृपमनमत्परिभुग्नजानुमूर्द्धा ॥ यथोपमा ॥ ३१ ॥

ज०म० यथेवशब्द उपमार्थसूचकस्तथान्योऽपीति दर्शयन्नाह। करपुटनिहितमित्यादि। करपुटे करयुग्मे निहितं न्यस्तं रत्नं सीताचूडामणिं परिविरलाङ्गुलिभ्योनिर्गताऽल्पादीप्तिर्यस्य तद्रत्नं दधद्धारयन् स हनूमान् नृपं राममनमत् प्रणतवान् परिभुग्ने अवनते जानुनी मूर्द्धा च यस्य हनूमतः यथेन्दुं इन्दुमिव तनुः अल्पः कपिलश्च योघनः मेघः तत्र स्थितमिन्दुमिव रत्नं। यथोपमेति यथाशब्देनोपमार्थस्य गम्यमानत्वात्॥ ३१॥

भ० करेत्यादि। परिभुग्ने कुटिलीकृते जानुनी मस्तकञ्च यस्य तथाभूतः सन् स हनूमान् नृपं रामं अनमत् प्रणतवान् कीदृशः रत्नं सीताचूडामणिं दधत् धारयन् कीदृशं करपुटे निहितमर्पितं परितोविरलाभ्योऽङ्गुलिभ्योनिर्गता अल्पा दीप्तिर्यस्य स तथा अतएव तनुरल्पः कपिलोयोघनोमेघस्तत्र स्थितं इन्दुं यथा येन रूपेण दधाति तथा रत्नं दधदिति सम्बन्धः। यथोपमेति यथाशब्देनोपमानस्य गम्यमानत्वात्॥ ३१ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



रुचिरोन्नतरत्नगौरवः परिपूर्णामृतरश्मिमण्डलः।
समदृश्यत जीविताशया सह रामेण वधूशिरोमणिः॥
सहोपमा॥ ३२॥

रुचिरइत्यादि। वधूशिरोमणिः सीताचूडामणिः उन्नतं महद्रत्नगौरवं महार्घ्यादिलक्षणं यस्य रुचिरोदीप्तिमांश्चासौ उन्नतरत्नगौरवश्चेति सः परिपूर्णस्यामृतरश्मेश्चन्द्रमसोमण्डलमिव मण्डलं यस्य सः रामेण समदृश्यत संदृष्टः कर्म्मणि लङ् जीविताशया सह सार्द्धं तद्दर्शनतोजीवितोऽस्मीति तदाशया सहसा रुचिरा तुष्टिदा रुचिं राति ददातीति कृत्वा उन्नतरत्नगौरवादुन्नतं रत्नेष्विव गौरवं बहुमानोयस्यामिति परिपूर्णममृतममरणं रश्मिमण्डलं यस्यामिति सहोपमेति सहशब्देन जीविताशया उपमाद्योतनात्॥ ३२॥ ज०म०

रुचिरइत्यादि। रामेण वध्वाः सीतायाः शिरोमणिः समदृश्यत संदृष्टः कर्म्मणि घो जीवितोऽस्मीति या प्रत्याशा तया सदृशः सहशब्दोऽत्र सादृश्यार्थः उभयसाधर्म्म्यमाह रुचिरोन्नतरत्नगौरवः उन्नतं महद्रत्नगौरवं बहुमूल्यत्वादिलक्षणं गुरुत्वाख्यगुणविशेषोवा यस्य स तथा ततोरुचिरः शोभायुक्तस्तासावुन्नतरत्नगौरवश्चेति कर्म्मधारयः जीविताशापि रुचिं तुष्टिं राति ददातीति रुचिराउन्नतरत्नेष्विव गौरवं बहुमानोयस्यामिति भावः परिपूर्णस्यामृतरश्मेश्चन्द्रस्येव मण्डलं वक्राकारत्वं यस्य भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



स तथा आशापक्षे परिपूर्णमस्तमिव रश्मिमण्डलं यस्यां जीविताशायां सत्यां शरीरस्य तेजस्वित्वसम्भवात् परिपूर्णमस्तं नामरणेन रश्मिमण्डलं यस्यामिति केचित्। सहोपमेति सह शब्देन जीविताशासादृश्यसूचनात् चूडामणिदर्शनेन तस्य जीविताशा जातेति व्यङ्ग्यार्थः॥ ३२॥

अवसन्नरुचिं वनागतं तमनामृष्टरजोविधूसरं।
समपश्यदपेतमैथिलिं दधतं गौरवमात्रमात्मवत्॥
तद्धितोपमा॥ ३३॥

ज॰म॰ अवसन्नरुचिमित्यादि। तं शिरोमणिं आत्मवदात्मानमिव समपश्यद्रामः तेन तुल्यमिति वतिः अवसन्नरुचिं मन्दप्रभं वेणीवन्धनमलिनत्वात् इतरश्च सशोकत्वात् वनागतं अशोकवनिकाख्याद्वनादागतं इतरं पितुरादेशाद्वनमागतं सुप्तुपेति सः अनामृष्टं अनपनीतं यद्रजः तेन विधूसरं उभयमपि अपेतमैथिलिं अपेता मैथिली येन यस्माद्वा दधतं गौरवमात्रं गुरुत्वमेव न दीप्त्यादिकं इतरं माहात्म्यं दधतं। तद्धितोपमेति तद्धितप्रत्ययेनोपमार्थस्याभिधानात्। तदत्र कल्पवादयोऽपि तद्धितप्रत्यया द्रष्टव्याः॥ ३३॥

भ॰ अवेत्यादि। रामस्तं शिरोमणिमात्मवदात्मानमिव समपश्यत् संदृष्टवान् उभयसाधर्म्यमाह अवसन्नरुचिं मन्दप्रभं वेणीबन्धेन मलिनत्वात् अमार्ज्जनाद्वा आत्मपक्षे सशोकत्वात् वनागतं

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अशोकवनिकायाः समागतं पक्षे पितुरादेशात् वनमायातं अना मृष्टरजोविधूसरं अनामृष्टं अनपनीतं यद्रजोभूमौ शयनाद्दृष्टं तेन विधूसरं पाण्डरं धूसरशब्दोदन्त्यमध्यः मद्दिषधूसरितः सरि तस्तटइति प्रयोगात् अपेतमैथिलिं अपेता मैथिली यस्मात् वज्र प्रेयसीत्युदाहरणेन घृतःकइत्यस्य प्रायिकत्वसूचनान्न कप्रत्ययः गवावादेरिति ह्रस्वः किम्बा मैथिल्याः सकाशादपेतं भ्रष्टं अपेतस्य पूर्व्वनिपातोऽभिधानात् राजदन्तादित्वादिति परः गौरव मात्रं केवलं गुरुत्वाख्यगुणविशेषं दधतं धारयन्तं न दीपनादि आत्मपक्षे माहात्म्यं तद्धितोपमेति तद्धितसंज्ञकेन चत्स्यादइति क्तवत्प्रत्ययेन सादृश्याभिधानात् एवं कल्पादयोऽपि सादृश्य सूचकाः स्वमते तद्धितस्य तसंज्ञा॥ ३३॥

सामर्थ्यसम्पादितवाञ्छितार्थश्चिन्तामणिः स्यान्न कथं हनूमान्। सलक्ष्मणोभूमिपतिस्तदानीं शाखा मृगानीकपतिश्च मेने॥ लुप्तोपमा॥ ३४॥

सामर्थ्येत्यादि। सामर्थ्येन शक्त्या सम्पादितोनिष्पादितोवाञ्छि तोऽभिलषितोऽर्थोयेन स हनूमान् कथञ्चिन्तामणिश्चिन्तामणि रिव न स्यात् इति तदानीं मेने ज्ञातवान् सलक्ष्मणः सह लक्ष्मणेन भूमिपतीरामः शाखामृगानीकपतिश्च सुग्रीवः। लुप्तोपमेति चिन्तामणिरित्यत्रेवशब्दार्थस्य गम्यमानत्वात् लुप्तोपमेति॥ ३४॥ ज॰म॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



स तथा आशापक्षे परिपूर्णममृतमिव रश्मिमण्डलं यस्यां जीविताशायां सत्यां शरीरस्य तेजस्वित्वसम्भवात् परिपूर्णममृते नामरणेन रश्मिमण्डलं यस्यामिति केचित्। सहोपमेति सह शब्देन जीविताशासादृश्यसूचनात् चूडामणिदर्शनेन तस्य जीवि ताशा जातेति व्यङ्ग्यार्थः॥ २२॥

अवसन्नरुचिं वनागतं तमनामृष्टरजोविधूसरं।
समपश्यदपेतमैथिलिं दधतं गौरवमात्रमात्मवत्॥
तद्धितोपमा॥ २३॥

ज॰म॰ अवसन्नरुचिमित्यादि। तं शिरोमणिं आत्मवदात्मानमिव समपश्यद्रामः तेन तुल्यमिति वतिः अवसन्नरुचिं मन्दप्रभं वेणी बन्धनमलिनत्वात् इतरच्च सशोकत्वात् वनागतं अशोकवनिका ख्याद्वनादागतं इतरं पितुरादेशाद्वनमागतं सुप्तुपेति सः अनामृष्टं अनपनीतं यद्रजः तेन विधूसरं उभयमपि अपेत मैथिलिं अपेता मैथिली येन यस्माद्वा दधतं गौरवमात्रं गुरुत्वमेव न दीप्त्यादिकं इतरं माहात्म्यं दधतं। तद्धितोपमेति तद्धितप्रत्ययेनोपमार्थस्याभिधानात्। तदत्र कल्पवादयोऽपि तद्धितप्रत्यया द्रष्टव्याः॥ २३॥

भ॰ अवेत्यादि। रामस्तं शिरोमणिमात्मवदात्मानमिव सम पश्यत् संदृष्टवान् उभयसाधर्म्यमाह अवसन्नरुचिं मन्दप्रभं वेणी बन्धेन मलिनत्वात् अमार्ज्जनाद्वा आत्मपक्षे सशोकत्वात् वनागतं

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अशोकवनिकायाः समागतं पक्षे पितुरादेशात् वनमायातं अना मृष्टरजोविधूसरं अनामृष्टं अनपनीतं यद्रजोभूमौ शयनाद्भूमं तेन विधूसरं पाण्डरं धूसरशब्दोदन्त्यमध्यः सहिषधूसरितः सरि तस्तटइति प्रयोगात् अपेतमैथिलिं अपेता मैथिली यस्मात् वक्र प्रेयसीत्युदाहरणेन घृतःकद्दत्यस्य प्रायिकत्वसूचनान्न कप्रत्ययः गवावादेरिति ह्रस्वः किम्वा मैथिल्याः सकाशादपेतं भ्रष्टं अपेतस्य पूर्व्वनिपातोऽभिधानात् राजदन्तादित्वादिति परः गौरव मात्रं केवलं गुरुत्वाख्यगुणविशेषं दधतं धारयन्तं न दीपनादि आत्मपक्षे माहात्म्यं तद्धितोपमेति तद्धितसंज्ञकेन चत्प्रत्ययइति कृतवत्प्रत्ययेन सादृश्याभिधानात् एवं कल्पादयोऽपि सादृश्य सूचकाः स्वमते तद्धितस्य तत्संज्ञा॥ ३३॥

सामर्थ्यसम्पादितवाञ्छितार्थश्चिन्तामणिः स्यान्न कथं हनूमान्। सलक्ष्मणोभूमिपतिस्तदानीं शाखा मृगानीकपतिश्च मेने॥ लुप्तोपमा॥ ३४॥

सामर्थ्येत्यादि। सामर्थ्येन शक्त्या सम्पादितोनिष्पादितोवाञ्छि तोऽभिलषितोऽर्थोयेन स हनूमान् कथञ्चिन्तामणिश्चिन्तामणि रिव न स्यात् इति तदानीं मेने ज्ञातवान् सलक्ष्मणः सह लक्ष्मणेन भूमिपतीरामः शाखामृगानीकपतिश्च सुग्रीवः। लुप्तोपमेति चिन्तामणिरित्यत्रेवशब्दार्थस्य गम्यमानत्वात् लुप्तोपमेति॥ ३४॥ ज०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ॰ सामर्थ्येत्यादि। तदानीं तस्मिन् चूडामणिप्राप्तिसमये लक्ष्मण सहितो भूमिपतीरामः शाखामृगानीकस्य कपिसैन्यस्य पतिः सुग्रीवस्य इति मेने ज्ञातवान् किमित्याह हनूमान् कथं चिन्तामणिरिव न स्यात् स्यादेव यतः सामर्थ्येन स्वशक्त्या सम्पादितोवाञ्छितार्थोयेन लुप्तोपमेति इवशब्दस्य गम्यमानत्वादनुच्चारात् तथाच कण्ठाभरणे लोपे सामान्यधर्म्माणां द्योतकस्य च योपमा। प्रतीयमाने सादृश्ये द्वयोर्लुप्तेति तां विदुरिति॥ ३४॥

युष्मानचेतन् क्षयवायुकल्पान् सीतास्फुलिङ्गं परिगृह्य जाल्मः।लङ्कावनं सिंहसमोऽधिशेते मर्त्तुं द्विषन्नित्यवदद्धनूमान्॥ समोपमा॥ ३५॥

ज॰म॰ युष्मानित्यादि। युष्मान्रामादीन् क्षयवायुकल्पान् प्रलयकाल महावायुसदृशान् अचेतन् अजानन् चितीसंज्ञानइति भौवादिकः द्विषन् दशाननः जाल्मः मूर्खः सीतास्फुलिङ्गं सीतामग्निकणमिव परिगृह्यादाय लङ्कां वनमिवाधिशेते मर्त्तुं मरिष्यामीति सिंहसमइत्यवदद्धनूमान्। समोपमेति समशब्देनोपमाया अभिधानात् अत्र निभसदृशादयोऽपि द्रष्टव्याः॥ ३५॥

भ॰ युष्मानित्यादि। हनूमान् इति अवदत् किमित्याह सिंहसमः सिंहइव जाल्मोऽसमीक्ष्यकारी द्विषन् शत्रूरावणः सीतां स्फूलिङ्गमिवाग्निकणमिव परिगृह्य युष्मान् रामादीन् क्षयवायु

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कल्पान् प्रलयकालसम्बन्धिवायुसदृशात् अचेतन् अजानन् मर्त्तुं प्राणान् त्यक्तुं लङ्कां वनमिव अधिशेते अधिवसति सिंहोऽप्युपलादन्यमगणयित्वा वने वसतीति सादृश्यं। समोपमेति समशब्देन उपमाभिधानात् एवं निभसदृशादयोद्रष्टव्याः॥ ३५॥

अहृत धनेश्वरस्य युधि यः समेतमायोधनं तमहमितोविलोक्य विबुधैः कृतोत्तमायोधनं। विभवमदेन निह्नुतह्रियातिमात्रसम्पन्नकं व्यथयति सत्पथादधिगताथ वेह सम्पन्नकं॥ अर्थान्तरन्यासः॥ ३६॥

इदानीमलङ्कारान्तराण्याह अहृतेत्यादि। योद्विषन्युधि संग्रामे समेतमायः समेता प्राप्ता माया येनेति तृतीयार्थे बहुव्रीहिः मायावीत्यर्थः धनेश्वरस्य धनदस्य धनमहृत हृतवान् ह्रस्वादङ्गादिति सिचोलोपः तं विबुधैर्देवैः सह कृतोत्तमायोधनं कृतमहासंग्रामं निह्नुता अपलपिता ह्रीर्लज्जा येन विभवमदेन तेन निह्नुतह्रिया अतिमात्रं सुष्ठु सम्पन्नकं युक्तं येन परस्त्रियमपहृत्यानीतवानसौ तं विलोक्य अहमितः प्राप्तः विभवमदोलज्जां त्याजयतीत्यमुमेवार्थं अनुसृत्यार्थान्तरमाह अथवेति अथवा शब्दे निपातसमुदायः यस्मादर्थे वर्त्तते यस्मादिह लोके संपत् विभूतिरधिगता प्राप्ता सत्पथात् सन्मार्गात् कं न व्यथयति चलयति व्यथिरत्र चलने वर्त्तते। अर्थान्तरन्यासइति उक्तादर्थादन्यस्योपन्यासात् यथोक्तं। उपन्यसन

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



मर्थस्य प्रक्रान्तादपरस्य यत्। ज्ञेयः सोऽर्थान्तरन्यासः पूर्व्वार्था नुगतौ यथेति ॥ ३६ ॥

भ० अहृतेत्यादि। योद्विषन् शत्रुर्धनेश्वरस्य कुवेरस्य धनं अहृत हृतवान् हृगुङुर्संढीस्यनिमिति कित्वान्न गुणः झसस्यादिति सिलोपः कीदृशः युधि संग्रामे ससेता प्राप्ता माया येन सम्बद्धा माया यत्रेति वा तं विलोक्य अहमितआगतः कीदृशं विबुधैर्देवैः सह कृतोत्तमायोधनं कृतमहायुद्धं निह्नुतह्रिया अपनीतलज्जेन विभवमदेन ऐश्वर्य्यमत्ततया अतिमात्रमतिशयेन सम्पन्नकं युक्तं विकारसंहेत्यादिना कुत्सायां कः प्रस्त्रियमपहृत्याप्यानयतीति निर्लज्जलं विभवमदोलज्जां त्याजयतीति अर्थान्तरन्यासमाह अथवा यस्मात् अधिगता प्राप्ता सम्पत् विभूतिरिह लोके कं जनं सत्पथात् सदाचारात् न व्यथयति न चालयति अपि तु सर्व्वमेव व्यथङ्दुःखेचाले भये अत्र चलनार्थः अथवेत्यव्ययं यस्मादर्थे। नन्दनं नाम छन्दः लक्षणं यथा नजभजरैस्तुरेफसहितैः शिवैर्हयैर्नन्दनमिति अत्र तृतीयपादे नवमाक्षरस्य प्रह्वेवेति पिङ्गलसूत्रेण गुरुत्वविकल्पविधानात् लघुत्वं तथा च माघे प्राप्तनाभिह्रदमज्जनमाशुइति यदा तीव्रप्रयत्नेन संयोगादेवगौरवं। न च्छन्दोभङ्गमयाऽऽज्ञस्तदा दोषाय सूरयइति कण्ठाभरणं केचित्तु संयोगे गुरुत्वात् छन्दोभङ्गः स्यादिति शङ्कया निह्नुतह्रियेत्यत्र निह्नुतभियेति पाठं कल्पयन्ति अर्थान्तरन्यासइति ज्ञेयः सोऽर्थान्तरन्यासोयोऽन्यत् प्रस्तुत्य किञ्चन। तत्साधनसमर्थस्य न्यासो

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भिन्नस्य वस्तुन इति उपन्यसन् समर्थस्य प्रक्रान्तादपरस्य यत् ज्ञयः सोऽर्थान्तरन्यासः पूर्व्वार्थानुगतो यथेत्यन्योऽपि ॥ ३६ ॥

ऋद्धिमान्राक्षसोमूढश्चित्रं नासौ यदुद्धतः। कोवा तुहेरनार्य्याणां धर्म्म्ये वर्त्मनि वर्त्तितुं ॥ आक्षेपः ॥ ३७ ॥

ऋद्धिमानित्यादि। यदसावुद्धतोदुर्वृत्तः न तच्चित्रमाश्चर्य्यं जं०म० यस्मादसौ ऋद्धिमान्राक्षसस्च उभयथा विमूढ इत्येतदुक्तमिति प्रतिषेधयन्नाह कोवेति किमनेनोक्तेन यस्मादनार्य्याणां तद्विधानां धर्म्म्ये धर्म्मादनपेते वर्त्मनि मार्गे वर्त्तितुङ्कोवा हेतुः किन्नाम कारणं नैवेत्यर्थः। आक्षेप इति प्रतिषेधोनाम यथोक्तं प्रतिषेध इवेष्टस्य योविशेषाभिधित्सया। आक्षेप इति तं सन्तः शंसन्ति द्विविधो यथेति अत्र पूर्व्वार्द्धेनोक्तो यइष्टोऽर्थः तस्य कोवेत्यादिना विशेषप्रतिपादने इच्छया प्रतिषेध इति स च उक्तवक्ष्यमाणविषयभेदाद्विविधः अय मुक्तविषयः ॥ ३७ ॥

ऋद्धिमानित्यादि। असौ रावणोयदुद्धतोदुर्व्वृत्तोभवति भ० तन्न चित्रं नाश्चर्य्यं यस्मादसौ ऋद्धिमान् सम्पत्तियुक्तोराक्षसस्च उभयथापि मूढोविचारशून्यएव एतदुक्तं प्रतिषेधयन्नाह कोवेति अथवा किमनेनोक्तेन यस्मात् अनार्य्याणां उद्धतानां तादृशानां धर्म्म्ये धर्म्मादनपेते वर्त्मनि सदाचारे वर्त्तितुं स्थातुं कोवा हेतुः न कोऽपीत्यर्थः अतएवासावुद्धतः किम्टद्ध्यादिहेतुचिन्तयेति

३ ल

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भाव: वाशब्दआक्षेपद्योतकः आक्षेपप्रतिषेधइति। निषेधोवक्तु मिष्टस्य योविशेषाभिधित्सया। वक्ष्यमाणोक्तविषयः सआक्षेपो द्विधामतइति अयन्तूक्ताक्षेपः पूर्व्वार्द्धेनोक्तोयइष्टस्तस्य कोवेत्या दिना विशेषाभिधानेच्छया प्रतिषेधात् ॥३७॥

तस्याधिवासे तनुरुत्सुकासौ दृष्टा मया रामपतिः प्रमन्युः। कार्य्यस्य सारोऽयमुदीरितोवः प्रोक्तेन शेषेण किमुद्धतेन॥ आक्षेपएव॥३८॥

ज०म० तस्येत्यादि। तस्य रावणस्याधिवासे लङ्कायां असौ रामपतिः सीता मया दृष्टा रामः पतिर्यस्याइति विभाषा सपूर्व्वस्येति नका राभावपक्षे रूपं तनुः कृशाङ्गी वोतोगुणवचनादिति ङीषोवि कल्पः उत्सुका सोत्कण्ठा प्रमन्युः प्रकृष्टशोका ऊङुतङत्यूङ्न भवति तच्चायोपधादिति वर्त्तते अयङ्कार्य्यस्यास्सदायत्तस्य सारः शरीरं सीतादर्शनं उदीरितः कथितः वोयुष्मभ्यं शेषेणोद्धतेन अशोकवनिकाभङ्गादिना किं प्रोक्तेन न किञ्चित्प्रयोजनं सएवेत्य यमप्याक्षेपएव किन्तु वक्ष्यमाणविषयः अत्र पूर्व्वार्द्धेनोक्तोयदृष्टो ऽर्थः तस्य विशेषाभिधित्सया प्रोक्तेनेत्यादिना शेषार्थप्रतिषेधः ॥३८॥

भ० तस्येत्यादि। तस्य रावणस्य अधिवासे लङ्कायां रामपतिः सीता मया दृष्टा रामः पतिर्यस्याइति वहुव्रीहिः परमते वहु व्रीहौ पत्युरिकारस्य नकारईप्प्रत्ययश्च विभाषितः तेन राम

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



पत्नी रामपतिश्चेति पदद्वयं समते बहुव्रीहौ रामपतिरित्यादि भवत्येव रामपत्नीत्यादौ तु नारीसखीत्यादिना निपातितस्य पत्नीशब्दस्य ग्रहणं पत्नीशब्दो रूढो भार्य्यावाचकः तेन षष्ठीसमासः कामेकपत्नीं व्रतदुःखशीलामित्यादौ कर्म्मधारयश्च वाच्यः कीदृशी तनुः कृशाङ्गी गुणाद्वोतइति पक्षे ईप्प्रत्ययाभावः उत्सुका उत्कण्ठावती त्वयीत्यर्थात् त्वत्सङ्गमभिलषमाणेत्यर्थः केचिदाहुः तनुषा शरीरेणाप्युत्सुका किंपुनर्म्मनसा तथाच स्यात्तनुस्तनुषा सार्द्धं धनुषा च धनुस्तथेति शब्दभेदः प्रमन्युः प्रकृष्टशोका अयं कार्य्यस्य मद्विधेयस्य सारउत्कृष्टभागोवोयुष्मभ्यमुदीरितउक्तः अशेषेणापरेण उद्धवेन उच्चावचेन प्रोक्तेन किं न किञ्चित् प्रयोजनं सएवेति आक्षेपएव किन्तु वक्ष्यमाणविषयकइति भेदः पूर्वार्द्धेनोक्तस्य दृष्टार्थस्य विशेषाभिधित्सया प्रोक्तेनेत्यादिना शेषार्थप्रतिषेधात् ॥ ३८ ॥

समतां शशिलेखयोपयायादवदाता प्रतनुः क्षयेण सीता। यदि नाम कलङ्कइन्दुलेखामतिवृत्तो लघयेन्न चापि भावी॥ व्यतिरेकः॥ ३९ ॥

समतामित्यादि। सीता अवदाता शुद्धा प्रतनुः प्रकर्षेण तन्वी क्षयेण दौर्व्बल्येन एतावता तुल्यधर्म्मत्वाच्छशिलेखया तुल्यतां समतामुपयायात् उपगच्छेत् यदि कलङ्कोनामापरोऽतिवृत्तोऽतिक्रान्तः इन्दुलेखां न लघयेत् न न्यूनयेत् तथा भावी आगामी    ज०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



नालघयिष्यद्यदि न चैवं न स्याच्चन्द्रलेखया न समेति भावः व्यति रेकइति अयं व्यतिरेकोनामा अन्वयः पूर्व्वार्द्धेनोपमानोपमे ययोरर्थौदर्शितः तस्य पश्चादर्द्धेन भेददर्शनात्। यथोक्तं उपमा नवतोऽर्थस्य यद्विशेषनिदर्शनं। व्यतिरेकं तमिच्छन्ति विशेषोत्पाद नाद्यथेति॥ ३८॥

भ॰ समतामित्यादि। सीता शशिलेखया चन्द्रकलया समतां तुल्यतां उपयायात् प्राप्नुयात् कीदृशी अवदाता शुद्धा चन्द्रले खाप्यवदाता शुक्ला चयेण दौर्व्वल्येन प्रतनुः अतिकृशा शशिले खापि चयेण रोगविशेषेण प्रतनुः यदि नामातिवृत्तोऽतीतो भावी भविष्यंश्च कलङ्कस्तामिन्दुलेखां न लघयेत् नातिशयेन न्यूनां कुर्य्यात् कलङ्कस्य भूतलाङ्काविलाच सा चन्द्रलेखयापि न समेति भावः लघुशब्दात् लिःकृत्याख्यानेञिरिति ञिः ञीमंश्च डिदिति डित्वात् टेर्लोपः नामेत्यव्ययं प्रकाशसम्भावनाक्रोधाभ्यु पगमकुत्सनेषु व्यतिरेकइति उपमानाद्यदन्यस्य व्यतिरेकः सएव सइति अन्यस्य उपमेयस्य व्यतिरेकआधिक्यं॥ ३८॥

अपरीक्षितकारिणा गृहीतां त्वमनासेवितवृद्धप ण्डितेन। अविवाधितनिष्ठुरेण साध्वीं दयितां त्रातु मलं घटस्व राजन्॥ विभावना॥ ४०॥

ज॰म॰ अपरीक्षितकारिणेत्यादि। अपरीक्षितकारिणा अविचारित करणशीलेन अनासेवितवृद्धपण्डितेन अपर्य्युपासितज्ञानवृद्ध

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



सत्पथेन अविरोधितनिष्ठुरेणानपक्ततोऽपि क्रूरः सन् यः शत्रुः तेन गृहीतां साध्वीं पतिव्रतां दयितामिष्टां त्राणार्हां त्रातुं रक्षितु मलं पर्य्याप्तं त्वं घटस्व यतस्व हे राजन्नित्यवदद्धनूमान्। विभाव नेति परीक्षा सेवा विरोधनञ्चेति तिस्रः क्रियाः तासां यः प्रतिषेधः नञा तेन अपरीक्षापूर्व्वकं यत्करणं तथा वृद्धसेवापूर्व्वकं यत्प ण्डितत्वं यच्चाविरोधपूर्व्वकं निष्ठुरत्वं तस्य क्रियाफलस्य विभावना त्प्रकाशनात्। यथोक्तं क्रियायाः प्रतिषेधेन तत्फलस्य विभावनात्। ज्ञेया विभावनैवासौ सान्वर्थं कथ्यते यथेति ॥ ४० ॥

अपेत्यादि। हे राजन् दयितां सीतां प्रियां त्रातुं रक्षितुं भ० त्वमलमत्यर्थं घटस्व चेष्टस्व यतः साध्वीं पतिव्रतां अपरीक्षित कारिणा अविचारितकरणशीलेन अनासेवितवृद्धपण्डितेन वृद्ध मनुपास्यैव पण्डितेन पण्डितम्मन्येन अविवाधितेनानपक्ततेनापि सता निष्ठुरेण क्रूरेण रावणेनेत्यर्थाद्गृहीतां इत्यवदद्धनूमानिति सम्बन्धः। विभावनेति परीक्षावृद्धसेवाविवाधनैर्व्विनापि करणपा ण्डित्यनैष्ठुर्य्याणां तत्फलानां स्वाभाविकत्वेन प्रकाशनात्। तथाच क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावनेति काव्यप्रकाशः। प्रसिद्ध हेतुव्यावृत्त्या यत्किञ्चित् कारणान्तरं। यत्र स्वाभाविकत्वं वा विभाव्यं सा विभावनेति दण्डी ॥ ४० ॥

स च विक्लवसत्त्वसङ्कुलः परिशुष्यन्नभवन्महाहृदः। परितः परितापमूर्च्छितः पतितश्चाम्बु निरभ्रमीप्सितं ॥ ४१ ॥ समासोक्तिः ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० स चेत्यादि। स च रामो महाह्रदः महाह्रदसमः सीताविरहात् विक्लवेनाकुलेन सत्त्वेन चेतसा संकुलो व्याप्तः परिशुष्यन् शोषमुपगच्छन् परितः समन्तात् परितापमूर्च्छितः शोकसन्तापेन मूर्च्छान्वितोऽभवत् भूतः अनन्तरं चाम्बु जलं सीतावार्त्ताश्रवणमीप्सितं अभिप्रेतं निरभ्रमाकस्मिकं पतितमित्येकोऽर्थः महाह्रदः परिशुष्यन् विक्लवैः सत्त्वैर्मत्स्यादिभिः संकुलो व्याप्तः परितापमूर्च्छितः परितापेन मूर्च्छितः अर्कतापान्वितोऽभवत् अम्बु च निरभ्रं विना मेघेन पतितमिति द्वितीयः समासोक्तिः यथोक्तं। यत्रोक्तेर्गम्यतेऽन्योऽर्थस्तत्समानविशेषणः। सा समासोक्तिरुदिता संक्षिप्तार्थतया यथेति एवञ्च कृत्वा अयं श्लेषाद्भिद्यते श्लेषे हि द्वयोरपि श्रूयमाणत्वात्॥ ४१॥

भ० सचेत्यादि। स च रामो महाह्रद इव अभवत् अथ निरभ्रं मेघं विनापि आकस्मिकं ईप्सितं अभिलषितं सीतावार्त्ताश्रवणस्वरूपमम्बु जलं पतितं प्राप्तं अभवच पतितञ्चेति चकारद्वयं तुल्यकालतासूचनार्थं कीदृशः विक्लवेन विरहव्याकुलेन सत्त्वेन चेतसा संकुलो व्याप्तः परिशुष्यन् कार्श्यमुपगच्छन् परितः समन्तात् परितापेन शोकसन्तापेन मूर्च्छितः मोहं प्राप्तः महाह्रदोऽपि परिशुष्यन् विक्लवैः सत्त्वैर्जन्तुभिर्मत्स्यादिभिः संकुलः परितापेन सूर्य्यातपेन मूर्च्छितो यदा भवति तदेप्सितमम्बु विना मेघेन पतितं। सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः। आत्मनि व्यवसाये च चित्ते प्राणिषु जन्तुष्विति विश्वः। समासोक्तिरिति साक्षान्महाह्रदमात्रोपादानेऽपि तत्तुल्यविशेषणतया रामस्य गम्यमानत्वात् संक्षेपे

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



णान्वयस्योक्तिरित्यर्थः। यदुक्तं यत्रोक्तेर्गम्यतेऽन्योऽर्थस्तत्समानविशेषणः। सा समासोक्तिरुदिता संक्षेपार्थतया तथेति। अन्यत्रापि वस्तु किञ्चिदभिप्रेत्य तद्वदन्यस्य वस्तुनः। उक्तिर्संक्षिप्तरूपत्वात् समासोक्तिरिहेष्यते इति। अतएव श्लेषाद्भेदः तत्र द्वयोरपि श्रूयमाणत्वात्॥ ४१॥

अथ लक्ष्मणरूपतुल्यवेशं गमनादेशविनिर्गताग्रहस्तं। कपयोऽनुययुः समेत्य रामं नतसुग्रीवगृहीतसादराज्ञं॥ ४२॥ अतिशयोक्तिः॥

अथेत्यादि। अथ वार्त्ताश्रवणानन्तरं कपयः समेत्य मिलित्वा रामममनुययुः अनुगतवन्तः लक्ष्मणेन तुल्यं रूपं वेशश्च यस्य रामस्य गमनाय प्रयाणाय आदेशः तदर्थं विनिर्गतौ अग्रहस्तौ यस्य नतेन प्रणतेन सुग्रीवेण गृहीता प्रतिष्ठिता सादराज्ञा यस्य तं रामं। अतिशयोक्तिरिति अतिशयाभिधानात् अत्र सुष्ठ्वपि नामासौ लक्ष्मणे च तुल्यरूपवेशः स्यात् न तु प्रत्यक्षप्रमाणपरिच्छेद्य इति लोकातिक्रान्तवचनमेतद्वचनं अवश्यञ्च कश्चिद्विशेषोऽस्ति यथोक्तं निमित्ततोयत्र वचोलोकातिक्रान्तगोचरं। मन्यन्तेऽतिशयोक्तिं तामलङ्कारतया यथेति॥ ४२॥ ज०म०

अथेत्यादि। सीतावार्त्ताश्रवणानन्तरं कपयः समेत्य मिलित्वा रामं अनुययुः अनुगतवन्तः कीदृशं लक्ष्मणेन तुल्यं रूपं वेशश्च यस्य तं रामदुःखेन लक्ष्मणोऽधिकं दुःखितः सीतावार्त्ताश्रवणाच्च भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० स चेत्यादि। स च रामोमहाह्रदः महाह्रदसमः सीताविरहात् विक्लवेनाकुलेन सत्त्वेन चेतसा संकुलोव्याप्तः परिशुष्यन् शोषमुपगच्छन् परितः समन्तात् परितापमूर्च्छितः शोकसन्तापेन मूर्च्छान्वितोऽभवत् भूतः अनन्तरं चाम्बु जलं सीतावार्त्ताश्रवणमीप्सितं अभिप्रेतं निरभ्रमाकस्मिकं पतितमित्येकोऽर्थः महाह्रदः परिशुष्यन् विक्लवैः सत्त्वैर्मत्स्यादिभिः संकुलोव्याप्तः परितापमूर्च्छितः परितापेन मूर्च्छितः अर्कतापान्वितोऽभवत् अम्बु च निरभ्रं विना मेघेन पतितमिति द्वितीयः समासोक्तिः यथोक्तं। यत्रोक्तेर्गम्यतेऽन्योऽर्थस्तत्समानविशेषणः। सा समासोक्तिरुदिता संक्षिप्तार्थतया यथेति एवञ्च कृत्वा अयं श्लेषाद्भिद्यते श्लेषे हि द्वयोरपि श्रूयमाणत्वात्॥ ४१॥

भ० सचेत्यादि। स च रामोमहाह्रदइव अभवत् अथ निरभ्रं मेघं विनापि आकस्मिकं ईप्सितं अभिलषितं सीतावार्त्ताश्रवणस्वरूपमम्बु जलं पतितं प्राप्तं अभवच्च पतितञ्चेति चकारद्वयं तुल्यकालतासूचनार्थं कीदृशः विक्लवेन विरहव्याकुलेन सत्त्वेन चेतसा संकुलोव्याप्तः परिशुष्यन् कार्श्यमुपगच्छन् परितः समन्तात् परितापेन शोकसन्तापेन मूर्च्छितः मोहं प्राप्तः महाह्रदोऽपि परिशुष्यन् विक्लवैः सत्त्वैर्जन्तुभिर्मत्स्यादिभिः संकुलः परितापेन सूर्यातपेन मूर्च्छितोयदा भवति तदेप्सितमम्बु विना मेघेन पतितं। सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः। आत्मनि व्यवसाये च चित्ते प्राणिषु जन्तुष्विति विश्वः। समासोक्तिरिति साक्षान्महाह्रदमाचोपादानेऽपि तत्तुल्यविशेषणतया रामस्य गम्यमानत्वात् संक्षेपे

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



णान्वयस्योक्तिरित्यर्थः। यदुक्तं यत्रोक्तेर्गम्यतेऽन्योऽर्थस्तत्समानविशेषणः। सा समासोक्तिरुदिता संक्षेपार्थतया तथेति। अन्यत्रापि वस्तु किञ्चिदभिप्रेत्य तद्वदन्यस्य वस्तुनः। उक्तिसंक्षिप्तरूपत्वात् समासोक्तिरिहेष्यते इति। अतएव श्लेषाद्भेदः तत्र द्वयोरपि श्रूयमाणत्वात्॥ ४१॥

अथ लक्ष्मणरूपतुल्यवेशं गमनादेशविनिर्गताग्रहस्तं। कपयोऽनुययुः समेत्य रामं नतसुग्रीवगृहीतसादराज्ञं॥ ४२॥ अतिशयोक्तिः॥

अथेत्यादि। अथ वार्त्ताश्रवणानन्तरं कपयः समेत्य मिलित्वा रामममनुययुः अनुगतवन्तः लक्ष्मणेन तुल्यं रूपं वेशश्च यस्य रामस्य गमनाय प्रयाणाय आदेशः तदर्थं विनिर्गतौ अग्रहस्तौ यस्य नतेन प्रणतेन सुग्रीवेण गृहीता प्रतिष्ठिता सादराज्ञा यस्य तं रामं। अतिशयोक्तिरिति अतिशयाभिधानात् अत्र सुष्ठ्वपि नामासौ लक्ष्मणे च तुल्यरूपवेशः स्यात् न तु प्रत्यक्षप्रमाणपरिच्छेद्य इति लोकातिक्रान्तवचनमेतद्वचनं अवश्यञ्च कश्चिद्विशेषोऽस्ति यथोक्तं निमित्ततो यत्र वचो लोकातिक्रान्तगोचरं। मन्यन्तेऽतिशयोक्तिं तामलङ्कारतया यथेति॥ ४२॥ ज॰म॰

अथेत्यादि। सीतावार्त्ताश्रवणानन्तरं कपयः समेत्य मिलित्वा रामं अनुययुः अनुगतवन्तः कीदृशं लक्ष्मणेन तुल्यं रूपं वेशश्च यस्य तं रामदुःखेन लक्ष्मणोऽधिकं दुःखितः सीतावार्त्ताश्रवणाच्च भ॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



रामादप्यधिकं हृष्टइति लक्ष्मणेन तुल्यतोक्ता। कपीनां गमनाय प्रस्थानाय आदेश आज्ञा तदर्थं विनिर्गतोऽग्रहस्तोयस्य तं हस्तशब्दस्यैकदेशवृत्तितया अग्रशब्देन कर्म्मधारयः अन्ये तु राजदन्तादौ पठन्ति प्रणतेन सुग्रीवेण गृहीता सादराज्ञा यस्य तं। अतिशयोक्तिरिति अतिशयार्थप्रतिपादनात् अत्र हि आज्ञानन्तरमेव कपीनामनुगमनेनैव भक्त्यतिशयत्वं लक्ष्मणतुल्यताभिधानेन तद्गतहर्षशोकातिशयत्वञ्च तथाच विवक्षायाविशेषस्य लोकसीमातिवर्त्तिनी। असावतिशयोक्तिः स्यादलङ्कारोत्तमा च सा। सा तु प्रायोगुणानाञ्च क्रियाणाञ्चोपकल्प्यते। नहि द्रव्यस्य जातेर्व्वा भवत्यतिशयः क्वचिदिति॥ ४२॥

कपिपृष्ठगतौ ततोनरेन्द्रौ कपयश्च ज्वलिताग्निपिङ्गलाक्षाः। मुमुचुः प्रययुर्द्रुतं समीयुर्व्वसुधां व्योम महीधरं महेन्द्रं॥ यथासंख्यं॥ ४३॥

ज॰म॰ कपिपृष्ठगतावित्यादि। ततोऽनन्तरं नरेन्द्रौ रामलक्ष्मणौ कपयश्च सर्व्वएते मुमुचुः वसुधां त्यक्तवन्तः प्रययुर्व्योम आकाशं महेन्द्रं महीधरं समीयुः गतवन्तः लिटः कित्त्वे गुणाभावाद्धातोरियङ् नरेन्द्रौ किम्भूतौ कपिपृष्ठगतौ हनूमन्तमारूढौ यथासंख्यमिति मुमुचुरित्यादिना क्रियाणां वसुधादीनाञ्च कर्म्मणामनुक्रमशोनिर्द्देशात्। यथोक्तं भूयसामुपदिष्टानां क्रियाणामथ कर्म्मणां। क्रमशोयोऽनुनिर्द्देशो यथासंख्यं तदुच्यतइति॥ ४३॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कपीत्यादि। ततोऽनन्तरं कपिपृष्ठगतौ वानरपृष्ठस्थौ नरेन्द्रौ भ०
रामलक्ष्मणौ ज्वलदग्निवत् पिङ्गलशरीराः कपयश्च वसुधां
पृथ्वीं मुमुचुः त्यक्तवन्तः व्योमाकाशं प्रययुः प्रयातवन्तः महे
न्द्राख्यं पर्व्वतं द्रुतं समीयुः सङ्गतवन्तः। यथासंख्यमिति क्रियाप
दानां कर्म्मपदानाञ्च क्रमेणान्वयात् यदुक्तं काव्यप्रकाशे यथा
संख्यं क्रमेणैव क्रमिकाणां समन्वयइति अन्यचाप्युक्तं भूयसामुप
दिष्टानामर्थानां समधर्म्मिणां। क्रमशोयोऽर्थनिर्देशोयथासंख्यं
तदुच्यतइति॥ ४३॥

स्थितमिव परिरक्षितुं समन्तादुदधिजलौघपरि
स्रवाद्धरित्रीं। गगनतलवसुन्धरान्तराले जलनिधिवेग
सहंप्रसार्य्य देहं॥ उत्प्रेक्षा॥ ४४॥

स्थितमित्यादि। उदधिजलौघात्समन्ततोयः परिस्रवो ज०म०
विनाशः तस्माद्धरित्रीं परिरक्षितुमिव गगनतलवसुन्धरयो
रन्तराले देहं शरीरं जलनिधिवेगं सहतइति मूलविभुजादि
त्वात्कः प्रसार्य्य स्थितं महेन्द्रं समीयुः। उत्प्रेक्षेति यथोक्तं अविवक्षि
तसामान्यात्किञ्चिच्चोपमया सह। अतद्गुणक्रियारोपादुत्प्रेक्षाति
शयान्वितेति अत्र महीधरसामान्यस्यापि विवक्षितत्वादविवक्षितं
सामान्यत्वं रक्षितुमिवेति किञ्चिदुपमया सह महेन्द्रगिरेरतद्गु
णतेया रक्षणक्रियायोगः गगनतलं वसुन्धरां व्याप्य स्थितमित्यति
शयान्विता॥ ४४॥



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० स्थितमित्यादि। कीदृशं महेन्द्रं उदधेर्ज्जलौघेन परिप्लवात् विनाशात् समन्तादाप्लवनाद्वा धरित्रीं पृथिवीं परिरक्षितुमिव समन्तात् त्रातुमिव गगनतलवसुन्धरयोराकाशपृथिव्योरन्तराले मध्ये जलनिधिवेगसहं देहं प्रसार्य्य विस्तार्य्य स्थितं सहेः पचादित्वादच् परिप्लुङोभावेऽल् परिप्लवामिति पाठे पचादित्वादच् चञ्चलां व्याकुलां वा परिप्लवश्चञ्चलः स्यादाकुलेऽपि परिप्लवइति विश्वः। उत्प्रेक्षेति अन्यथावस्थितावृत्तिश्चेतनस्येतरस्य वा। अन्यथोत्प्रेक्षते यत्र तामुत्प्रेक्षां विदुर्व्बुधाइति अत्र स्वाभाविकाद्यावापृथिव्योरन्तराले स्थितिः पृथिवीरक्षणार्थतया सम्भाव्यते अन्यस्त्वाह अविवक्षितसामान्यात् किञ्चिचोपमया सह। अतद्गुणक्रियायोगादुत्प्रेक्षातिशयान्वितेति तत्र महीधरसामान्याविवक्षितत्वादत्राविवक्षितसामान्यत्वं परिरक्षितुमिवेति प्रयोगात् किञ्चिचोपमया सह योगित्वं महेन्द्रगिरेरतद्गुणतया रक्षणक्रियायोगः गगनतलवसुन्धरान्तरालं व्याप्य स्थितमित्यतिशयान्वितत्वं इवशब्दोऽप्युत्प्रेक्षाव्यञ्जकः॥ ४४॥

विषधरनिलये निविष्टमूलं शिखरशतैः परिमृष्टदेवलोकं। घनविपुलनितम्बपूरिताशं फलकुसुमाचितवृक्षरम्यकुञ्जं॥ वार्त्ता॥ ४५॥

ज०म० विषधरनिलयइत्यादि। विषधरनिलये पाताले निविष्टमूलं महेन्द्रं शिखरशतैः करणभूतैः परिमृष्टः संस्पृष्टो देवलोको येन घनैर्निरन्तरैर्विपुलैर्विस्तीर्णैर्नितम्बैर्मेखलाभागैः पूरिता व्याप्ता

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



आशादिशो येन फलकुसुमान्वितैर्वृक्षैः रम्यं कुञ्जं गहनं यस्मिन् वार्त्तेति तत्त्वार्थकथनात्सा द्विविधा विशिष्टा निर्विशिष्टा च तत्र या पूर्व्वा सा स्वभावोक्तिरुदिता यथेयमेव तथाचोक्तं स्वभावोक्ति रलङ्कारइति केचित्प्रचक्षते अर्थस्य तादवस्थ्यञ्च स्वभावोऽभि हितोयथेति निर्विशिष्टावार्तानामालङ्कारः यथोक्तं गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः। इत्येवमादिकं काव्यं वार्त्तामेतां प्रचक्षतइति ॥ ४५ ॥

विषधरेत्यादि। पुनः कीदृशं महेन्द्रं विषधरनिलये पाताले भ० निविष्टं मूलं यस्य तं शिखराणां शतैः करणभूतैः परिमृष्टः स्पृष्टोदेवलोकः स्वर्गोयेन घनैर्निरन्तरालैर्विपुलैर्विशालैर्घनेन मेघेन विपुलैर्वा नितम्बैर्मध्यभागैः पूरिता व्याप्ता आशादिशोयेन फलेन पुष्पेण चाचितैर्व्याप्तैर्वृक्षैरम्यं कुञ्जं लतादिपिहितस्थलं यत्र तं तथा। वार्त्तेति तत्त्वार्थकथनात् सा द्विविधा विशिष्टा निर्विशिष्टा च तत्र पूर्व्वा स्वभावोक्तिरुच्यते यदुक्तं स्वभावोक्तिर लङ्कारइति केचित्प्रचक्षते अर्थस्य तादवस्थ्यञ्च स्वभावइति कथ्यते इति निर्विशिष्टा तु सैव वार्त्तालङ्कारः यथोक्तं गतोऽय मस्तमादित्योयान्ति वासाय पक्षिणः इत्येवमादिकं काव्यं वार्त्ता मेतां प्रचक्षतइति प्रकृते तु स्वभावोक्तिरूपैव वार्त्ता बोध्या॥ ४५॥

मधुकरविरुतैः प्रियाध्वनीनां सरसिरुहैर्दयितास्य हास्यलक्ष्म्याः। स्फुटमनुहरमाणमादधानं पुरुषपतेः सहसा परं प्रमोदं ॥ प्रेयः ॥ ४६ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० मधुकरविरुतैरित्यादि। प्रियाध्वनीनां सीतासम्बन्धिनां जल्पितानां मधुकरविरुतैः स्फुटं स्पष्टमनुहरमाणमनुकुर्व्वन्तं सादृश्यमित्यर्थात् दयितायाः सीतायाः यदास्यं हासश्चैतयो र्लक्ष्म्याः सरसिरुहैस्सादृश्यमनुहरमाणं सन्तं महेन्द्रं तत्र पद्मै रास्यलक्ष्म्याः कुमुदैर्हासलक्ष्म्याः अथवा कृत्यार्थैरिति षष्ठी अनुहरमाणशब्दस्य तुल्यार्थत्वात् सदृशीभवन्तमित्यर्थः पुरुषपते रामस्य सहसा तत्क्षणं आगतमात्रस्येत्यर्थः परमुत्कृष्टं प्रमोद मादधानं जनयन्तं समीयुः। प्रेयदिति प्रियतमवस्त्वभिधानात् ॥ ४६ ॥

भ० मधुकरेत्यादि। पुनः कीदृशं महेन्द्रं मधुकराणां भ्रमराणां विरुतैः शब्दैः प्रियायाः सीतायाजल्पितानां स्फुटं व्यक्तं अनुहर माणं सादृश्यं दर्शयन्तं धातोरनेकार्थत्वात् अनुहरमाणमनुकुर्व्व न्तमित्यन्ये सरसिरुहैः पद्मैर्दयितायाः सीतायाः आस्यस्य मुखस्य हास्यस्य च लक्ष्म्या अपि अनुहरमाणं पद्मविकाशस्यात्र हास्यसा म्येन पद्मैस्तदनुहरणमुक्तं अन्ये तु सरसिरुहपदेन कुमुदमप्युच्यते तस्यापि सरःसम्भूतत्वात् तेन पद्मैरास्यलक्ष्म्याः कुमुदैर्हास्यलक्ष्म्या श्चानुहरमाणमित्याहुः अतएव पुरुषपतेरामस्य सहसा तत्क्ष णमागतमात्रस्यैव परमुत्कृष्टं प्रमोदमानन्दं दधानं कुर्व्वन्तं जनयन्तमित्यर्थः एतेन यात्रायां मङ्गलमपि सूचितं प्रेयदिति प्रियतरवस्त्वभिधानात् ॥ ४६ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ग्रहमणिरसनं दिवोनितम्बं विपुलमनुत्तमलब्धकान्तियोगं। च्युतघनवसनं मनोभिरामं शिखरकरैर्मदनादिव स्पृशन्तं॥ रसवत्॥ ४७॥

ग्रहेत्यादि। दिवोनितम्बं मध्यभागं ग्रहाः मणिरसनेव यस्य विपुलं विस्तीर्णं न विद्यते उत्तमोऽस्मादित्यनुत्तमं अतिशयवान् लब्धः कान्त्या योगो येन च्युताघनोवसनमिव यस्मात् शिखरैः करैरिव मदनादिव स्पृशन्तं महेन्द्रं। रसवदिति दिवोगिरेश्च स्त्रीपुंसयोरिव शृङ्गाररसाभिधानात् तथाचोक्तं रसवद्दर्शित स्पृष्टं शृङ्गारादिरसं यथेति॥ ४७॥ ज॰म॰

ग्रहेत्यादि। पुनः कीदृशं महेन्द्रं शिखररूपकरैर्मदनात् कामाद्धेतोरिव दिवआकाशस्य नितम्बं मध्यभागं स्पृशन्तं कीदृशं नितम्बं ग्रहमणिरसनं ग्रहाश्चन्द्रादयोमणिनिर्म्मिता रसना काञ्ची यत्र विपुलं विस्तीर्णं अनुत्तमलब्धकान्तियोगं न विद्यते उत्तमोयस्मात् लब्धः कान्तियोगोयेन पश्चात् कर्म्मधारयः च्युतघनवसनं च्युताघनोमेघोवसनमिव यस्मात् एतेन प्रावृट्कालोऽपि सूचितः अतएव मनोभिरामं चित्तानन्दकरं अत्र दिवोनायिकासाम्यं महेन्द्रस्य नायकसाम्यं व्यङ्ग्यं। रसवदिति दिवोगिरेश्च स्त्रीपुंसयोरिव शृङ्गाररसस्याभिधानात्। तथाच दण्डी रसवद्रसभाषणमिति॥ ४७॥ भ॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० मधुकरविरुतैरित्यादि। प्रियाध्वनीनां सीतासम्बन्धिनां जल्पितानां मधुकरविरुतैः स्फुटं स्पष्टमनुहरमाणमनुकुर्व्वन्तं सादृश्यमित्यर्थात् दयितायाः सीतायाः यदास्यं हासश्चैतयो र्लक्ष्म्याः सरसिरुहैस्सादृश्यमनुहरमाणं सन्तं महेन्द्रं तत्र पद्मै रास्यलक्ष्म्याः कुमुदैर्हासलक्ष्म्याः अथवा कृत्यार्थैरिति षष्ठी अनुहरमाणशब्दस्य तुल्यार्थत्वात् सदृशीभवन्तमित्यर्थः पुरुषपते रामस्य सहसा तत्क्षणं आगतमात्रस्येत्यर्थः परमुत्कृष्टं प्रमोद मादधानं जनयन्तं समीयुः। प्रेयदूति प्रियतमवस्त्वभिधानात् ॥ ४६ ॥

भ० मधुकरेत्यादि। पुनः कीदृशं महेन्द्रं मधुकराणां भ्रमराणां विरुतैः शब्दैः प्रियायाः सीतायाजल्पितानां स्फुटं व्यक्तं अनुहर माणं सादृश्यं दर्शयन्तं धातोरनेकार्थत्वात् अनुहरमाणमनुकुर्व्व न्तमित्यन्ये सरसिरुहैः पद्मैर्दयितायाः सीतायाः आस्यस्य मुखस्य हास्यस्य च लक्ष्म्या अपि अनुहरमाणं पद्मविकाशस्याच हास्यसा म्येन पद्मैस्तदनुहरणमुक्तं अन्ये तु सरसिरुहपदेन कुमुदमप्युच्यते तस्यापि सरःसम्भूतत्वात् तेन पद्मैरास्यलक्ष्म्याः कुमुदैर्हास्यलक्ष्म्या श्चानुहरमाणमित्याहुः अतएव पुरुषपतेरामस्य सहसा तत्क्ष णमागतमात्रस्यैव परमुत्कृष्टं प्रमोदमानन्दं दधानं कुर्व्वन्तं जनयन्तमित्यर्थः एतेन यात्रायां मङ्गलमपि सूचितं प्रेयदूति प्रियतरवस्त्वभिधानात् ॥ ४६ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ग्रहमणिरसनं दिवोनितम्बं विपुलमनुत्तमलब्ध कान्तियोगं। च्युतघनवसनं मनोभिरामं शिखरकरै मदनादिव स्पृशन्तं॥ रसवत्॥ ४७॥

ग्रहेत्यादि। दिवोनितम्बं मध्यभागं ग्रहाः मणिरसनेव यस्य विपुलं विस्तीर्णं न विद्यते उत्तमोऽस्मादित्यनुत्तमं अतिशयवान् लब्धः कान्त्या योगो येन च्युतोघनोवसनमिव यस्मात् शिखरैः करैरिव मदनादिव स्पृशन्तं महेन्द्रं। रसवदिति दिवोगिरेश्च स्त्रीपुंसयोरिव शृङ्गाररसाभिधानात् तथाचोक्तं रसवद्दर्शित स्पृष्टं शृङ्गारादिरसं यथेति॥ ४७॥ ज॰म॰

ग्रहेत्यादि। पुनः कीदृशं महेन्द्रं शिखररूपकरैर्मदनात् कामाद्धेतोरिव दिवआकाशस्य नितम्बं मध्यभागं स्पृशन्तं कीदृशं नितम्बं ग्रहमणिरसनं ग्रहाश्चन्द्रादयोमणिनिर्म्मिता रसना काञ्ची यत्र विपुलं विस्तीर्णं अनुत्तमलब्धकान्तियोगं न विद्यते उत्तमोयस्मात् लब्धः कान्तियोगोयेन पश्चात् कर्म्मधारयः च्युत घनवसनं च्युतोघनोमेघोवसनमिव यस्मात् एतेन प्रावृट् कालोऽपि सूचितः अतएव मनोभिरामं चित्तानन्दकरं अत्र दिवोनायिकासाम्यं महेन्द्रस्य नायकसाम्यं व्यङ्ग्यं। रसवदिति दिवोगिरेश्च स्त्रीपुंसयोरिव शृङ्गाररसस्याभिधानात्। तथाच दण्डी रसवद्रसभाषणमिति॥ ४७॥ भ॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



प्रचपलमगुरुम्भरासहिष्णुं जनमसमानमनूर्ज्जितं विवर्ज्य। कृतवसतिमिवार्णवोपकण्ठे स्थिरमतुलोन्नतिमूढतुङ्गमेघं ॥ ऊर्ज्जस्वी ॥ ४८ ॥

ज०म० प्रचपलमित्यादि। जनं लोकं प्रचपलं अस्थिरं अगुरुं लघुं अतएव भरासहिष्णुं अनूर्जितं अनहङ्कारं विवर्ज्यैवासमानत्वात् अर्णवस्य समुद्रस्योपकण्ठे समीपे कृतवसतिं कृतावस्थानं महेन्द्रं समीयुः तदेवासमानत्वाद्दर्शयन्नाह स्थिरं अचलं अतुलोन्नतिं असाधारणमहत्वमूढतुङ्गमेघं तद्धृतमहामेघं आश्रयणीयत्वात् ऊर्ज्जस्वीति साहङ्कारवस्त्वभिधानात् ॥ ४८ ॥

भ० प्रचपलमित्यादि। पुनः कीदृशं महेन्द्रं जनं लोकं विवर्ज्य त्यक्त्वा विजनत्वात् अर्णवस्य समुद्रस्य उपकण्ठे समीपे आत्मसदृशत्वात् कृता वसतिर्येन स्थिरमचलं अतुलोन्नतिं महोच्छ्रायं एतेन गुरुत्वमूर्ज्जितत्वञ्च सूचितं ऊढतुङ्गमेघं धृतमहामेघं भारसहत्वात् जनवर्ज्जने हेतुमाह प्रचपलेति कीदृशं जनं असमानं स्वस्यासदृशं असमानत्वं दर्शयन्नाह प्रचपलं अस्थिरं अगुरुं लघुं अतएव भारासहनशीलं अनूर्ज्जितं दर्पशून्यं दुर्ब्बलं वा जनस्यासदृशत्वात् त्यागः स्वसदृशस्यार्णवस्य समीपे वासश्च युक्तः। ऊर्ज्जस्वीति साहङ्कारवस्त्वभिधानात् यदुक्तं ऊर्जस्विरूढाहङ्कारमिति ॥ ४८ ॥

स्फटिकमणिगृहैः सरत्नदीपैः प्रतरुणकिन्नरगीतनिस्वनैश्च। अमरपुरमतिं सुराङ्गनानां दधतमदुष्यमनल्पकल्पवृक्षं ॥ पर्य्यायोक्तं ॥ ४९ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



स्फटिकमणिगृहैरित्यादि। स्फटिकमणिगृहैः रत्नदीपयुतैः प्रतरुणानां किन्नराणां गीतनिस्वनैश्च हेतुभूतैः अमरपुरमतिं स्वर्गबुद्धिं सुराङ्गनानां दधतं जनयन्तं अदुःखं न विद्यते दुःखमस्मिन्निति सुखहेतुमित्यर्थः वहुकल्पवृक्षं समीयुः। पर्य्यायोक्तिरिति अमरपुरमतिं दधतमित्यनेन पर्य्यायेण वचनगत्या तदेवामरपुरमिति प्रतिपादनात् तथाचोक्तं पर्य्यायोक्तं यदन्येन प्रकारेणाभिधीयतइति॥ ४८॥ ज॰म॰

स्फटिकेत्यादि। पुनः कीदृशं महेन्द्रं रत्नदीपसहितैः स्फटिकमणीनां गृहैः प्रकृष्टतरुणानां किंपुरुषाणां गीतनादैश्च हेतुभिः सुराङ्गनानां देवस्त्रीणां अमरपुरमतिं स्वर्गबुद्धिं दधतं जनयन्तं अदुःखं नास्ति दुःखं यत्र सुखहेतुमित्यर्थः अनल्पा वहवः कल्पवृक्षा यत्र तं एवंभूतं महेन्द्रं समीयुरित्यन्वयः। पर्य्यायोक्तमिति अमरपुरमतिं दधतमिति पर्य्यायेण वचनभङ्ग्या तदेवामरपुरमिति प्रतिपादनात्। यदुक्तं अर्थमिष्टमनाख्याय तस्यैवार्थस्य सिद्धये। यत्प्रकारान्तराख्यानं पर्य्यायोक्तं तदुच्यतइति अन्यत्रापि पर्य्यायोक्तं यदन्येन प्रकारेणाभिधीयतइति काव्यप्रकाशेऽपि पर्य्यायोक्तं विना वाच्यवाचकत्वेन वस्तु यदिति॥ ४९॥ भ॰

॥ ७॥ कु॥ अथ ददृशुरुदीर्णधूमधूम्रां दिशमुदधिव्यवधिं समेतसीतां। सहरघुतनयाः प्लवङ्गसेनाः पवनसुताङ्गुलिदर्शितामुदग्राः॥ समाहितं॥५०॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



प्रचपलमगुरुम्भरासहिष्णुं जनमसमानमनूर्ज्जितं विवर्ज्य । कृतवसतिमिवार्णवोपकण्ठे स्थिरमतुलोन्नतिमूढतुङ्गमेघं ॥ ऊर्ज्जस्वी ॥ ४८ ॥

ज॰म॰ प्रचपलमित्यादि । जनं लोकं प्रचपलं अस्थिरं अगुरुं लघुं अतएव भरासहिष्णुं अनूर्जितं अनहङ्कारं विवर्ज्यैवासमानत्वात् अर्णवस्य समुद्रस्योपकण्ठे समीपे कृतवसतिं कृतावस्थानं महेन्द्रं समीयुः तदेवासमानत्वाद्दर्शयन्नाह स्थिरं अचलं अतुलोन्नतिं असाधारणमहत्वमूढतुङ्गमेघं तद्भृतमहामेघं आश्रयणीयत्वात् ऊर्ज्जस्वीति साहङ्कारवस्त्वभिधानात् ॥ ४८ ॥

भ॰ प्रचपलमित्यादि । पुनः कीदृशं महेन्द्रं जनं लोकं विवर्ज्य त्यक्त्वा विजनत्वात् अर्णवस्य समुद्रस्य उपकण्ठे समीपे आत्मसदृशत्वात् कृता वसतिर्येन स्थिरमचलं अतुलोन्नतिं महोच्छ्रायं एतेन गुरुत्वमूर्ज्जितत्वञ्च सूचितं ऊढतुङ्गमेघं धृतमहामेघं भारसहत्वात् जनवर्ज्जने हेतुमाह प्रचपलेति कीदृशं जनं असमानं स्वस्यासदृशं असमानत्वं दर्शयन्नाह प्रचपलं अस्थिरं अगुरुं लघुं अतएव भारासहनशीलं अनूर्ज्जितं दर्पशून्यं दुर्व्बलं वा जनस्यासदृशत्वात् त्यागः स्वसदृशस्यार्णवस्य समीपे वासस्य युक्तः । ऊर्ज्जस्वीति साहङ्कारवस्त्वभिधानात् यदुक्तं ऊर्जस्विरूढाहङ्कारमिति ॥ ४८ ॥

स्फटिकमणिगृहैः सरत्नदीपैः प्रतरुणकिन्नरगीतनिस्वनैश्च । अमरपुरमतिं सुराङ्गनानां दधतमदुष्यमनल्पकल्पवृक्षं ॥ पर्य्यायोक्तं ॥ ४९ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



स्फटिकमणिगृहैरित्यादि। स्फटिकमणिगृहैः रत्नदीपयुक्तैः प्रतरुणानां किन्नराणां गीतनिस्वनैश्च हेतुभूतैः अमरपुरमतिं स्वर्गबुद्धिं सुराङ्गनानां दधतं जनयन्तं अदुःखं न विद्यते दुःखमस्मिन्निति सुखहेतुमित्यर्थः बहुकल्पवृत्तं समीयुः। पर्य्यायोक्तिरिति अमरपुरमतिं दधतमित्यनेन पर्य्यायेण वचनगत्या तदेवामरपुरमिति प्रतिपादनात् तथाचोक्तं पर्य्यायोक्तं यदन्येन प्रकारेणाभिधीयतइति ॥ ४९ ॥ ज॰म॰

स्फटिकेत्यादि। पुनः कीदृशं महेन्द्रं रत्नदीपसहितैः स्फटिकमणीनां गृहैः प्रकृष्टतरुणानां किंपुरुषाणां गीतनादैश्च हेतुभिः सुराङ्गनानां देवस्त्रीणां अमरपुरमतिं स्वर्गबुद्धिं दधतं जनयन्तं अदुःखं नास्ति दुःखं यत्र सुखहेतुमित्यर्थः अनल्पा बहवः कल्पवृत्ता यत्र तं एवंभूतं महेन्द्रं समीयुरित्यन्वयः। पर्य्यायोक्तमिति अमरपुरमतिं दधतमिति पर्य्यायेण वचनभङ्ग्या तदेवामरपुरमिति प्रतिपादनात्। यदुक्तं अर्थमिष्टमनाख्याय तस्यैवार्थस्य सिद्धये। यत्प्रकारान्तराख्यानं पर्य्यायोक्तं तदुच्यतेइति अन्यत्रापि पर्य्यायोक्तं यदन्येन प्रकारेणाभिधीयतइति काव्यप्रकाशेऽपि पर्य्यायोक्तं विना वाच्यवाचकत्वेन वस्तु यदिति ॥ ४९ ॥ भ॰

॥ ७ ॥ क्तु ॥ अथ ददृशुरुदीर्णधूमधूम्रां दिशमुदधिव्यवधिं समेतसीतां। सहरघुतनयाः प्लवङ्गसेनाः पवनसुताङ्गुलिदर्शितामुदच्चाः ॥ समाहितं ॥ ५० ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० अथेत्यादि। अथ प्राप्तेरनन्तरं प्लवङ्गसेनाः सहरघुतनयाः दिशं ददृशुः उदधिव्यवधिं सजलधिव्यवधानां दक्षिणामित्यर्थः उपसर्गेघोः किः उदीर्णेन महता धूमेन धूम्रामस्पष्टां समेतसीतां सङ्गता सीतानयेति तृतीयार्थे बहुव्रीहिः पवनसुतस्याङ्गुल्या दर्शितां उदक्षाः ऊर्द्धीकृताक्षाः बहुव्रीहौ सक्थ्यक्ष्णोरिति षच् षित्त्वन्णोङीष् न भवति तस्यानित्यत्वात् तेन दंष्ट्रेत्युपपन्नं भवति समाहितमिति अनन्यमनस्कतया दिशोऽवलोकनात् ॥ ५० ॥

भ० अथेत्यादि। महेन्द्रप्राप्तेरनन्तरं रघुतनयाभ्यां रामलक्ष्मणाभ्यां सहिता वानरसेनाः उदक्षा उन्नतनेत्राः सत्यः समुद्रव्यवधानां दक्षिणां दिशं ददृशुः कीदृशीं उदीर्णेन महता धूमेन धूम्रां कृष्णलोहितां ऋगिगत्यां क्तो रूपं समेता सङ्गता सीता यां यत्र वा पवनसुतस्य हनूमतोऽङ्गुल्या दर्शितां निर्दिष्टां उदक्षा इति उन्नतमूर्द्धीकृतमक्षं चक्षुर्यासां इन्द्रियसामान्यवाचिनोऽप्यक्षशब्दस्य विशेषपरत्वान्नेत्रवाचकत्वं किम्वा सक्थ्यक्ष्णः षः स्वाङ्गइति षप्रत्ययान्तस्य उदक्षशब्दस्य स्वस्रादौ पाठस्तेन नमनसंख्यास्वस्रादेरिति ईप्प्रत्ययनिषेधः नदादिपाठस्यानित्यत्वादिति कालापाः माचादित्वादिति वासवताः प्लवङ्गसैन्यादिति पठन्त्यन्ये। समाहितमिति दक्षिणदिगवलोकनं स्वतएव जायमानं हनूमदङ्गुलिदर्शितत्वेन सुकरत्वात् समाहितं यदुक्तं समाधिः सुकरं कार्य्यं कारणान्तरयोगतइति अन्यत्रापि किञ्चिदारभमाणस्य कार्य्यं दैववशात्पुनः। तत्साधनसमापत्तिर्यदाऽस्त्समाहितमिति जयमङ्गलायान्तु एकचित्ततया दिशोऽवलोकनात् समाहितमित्युक्तं ॥ ५० ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



जलनिधिमगमन्महेन्द्रकुञ्जात्प्रचयतिरोहिततिग्म रश्मिभासः। सलिलसमुदयैर्म्महातरङ्गैर्भुवनभरक्षम मप्यभिन्नवेलं॥ उदारं॥ ५१॥

जलनिधिमित्यादि। महेन्द्रकुञ्जात् जलनिधिमगमन् गतवत्यः प्लवङ्गसेनाः छदित्वाच्छेरङ् प्रचयेन उच्चतया तिरोहिता स्तिग्मरश्मिभासोयेन निकुञ्जेन तस्मान्निकुञ्जात् सलिलसमुदयैर्म हातरङ्गैर्महोर्म्मिभिः भुवनस्य भरणे क्षममपि शक्तमपि भूभरण इति क्रैयादिकः तस्य क्षतेरपि रूपं अभिन्नवेलं अनतिक्रान्त मर्य्यादं जलनिधिं उदारमिति उदात्तमित्यर्थः महानुभावता प्रतिपादनात् यतोमहातरङ्गैर्जलसमूहैर्भुवनभरक्षममपि अभि न्नवेलमिति द्विविधमुदारं महानुभावतया विविधरत्नयोगा च्चेति इयं महानुभावता दर्शिता॥ ५१॥ ज०म०

जलनिधिमित्यादि। सरघुतनयाः प्लवङ्गसेनामहेन्द्रकुञ्जात् जलनिधिमगमन् श्रीगमॢगत्यां छदित्वात् ख्यां ङः प्रचयेन समू हेन तिरोहिताआच्छादितास्तिग्मरश्मेः सूर्य्यस्य भासोदीप्तयो याभिस्ताः प्लवङ्गसेनानां विशेषणं प्रचयेन उच्चतया तिरोहिता स्तिग्मरश्मिभासोयेन तस्मादिति कुञ्जविशेषणं वा कीदृशं जल निधिं महान्तस्तरङ्गाऊर्म्मयोयेषु तैः सलिलसमुदयैर्जलसमूहै र्भुवनस्य पृथिव्याभरणे पूरणे क्षमं शक्तमपि अभिन्नवेलमनति क्रान्तमर्य्यादं। उदात्तमिति महानुभावताप्रतिपादनात् महा भ०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज॰म॰ अथेत्यादि। अथ प्राप्त्यनन्तरं प्लवङ्गसेनाः सहरघुतनयाः दिशं ददृशुः उदधिव्यवधिं सजलधिव्यवधानां दक्षिणामित्यर्थः उपसर्गद्योतकः उदीर्णेन महता धूमेन धूम्रामस्पष्टां समेतसीतां सङ्गता सीतानयेति तृतीयार्थे बहुव्रीहिः पवनसुतस्याङ्गुल्या दर्शितां उदक्षाः ऊर्द्धीकृताक्षाः बहुव्रीहौ सक्थ्यक्ष्णोरिति षच् षित्त्वक्षणोङीष् न भवति तस्यानित्यत्वात् तेन दंष्ट्रेत्युपपन्नं भवति समाहितमिति अनन्यमनस्कतया दिशोऽवलोकनात्॥ ५०॥

भ॰ अथेत्यादि। महेन्द्रप्राप्त्यनन्तरं रघुतनयाभ्यां रामलक्ष्मणाभ्यां सहिता वानरसेनाः उदक्षा उन्नतनेत्राः सत्यः समुद्रव्यवधानां दक्षिणां दिशं ददृशुः कीदृशीं उदीर्णेन महता धूमेन धूम्रां कृष्णलोहितां ऋगिगत्यां कौ रूपं समेता सङ्गता सीता यां यत्र वा पवनसुतस्य हनूमतोऽङ्गुल्या दर्शितां निर्दिष्टां उदक्षा इति उन्नतमूर्द्धीकृतमक्षं चक्षुर्यासां इन्द्रियसामान्यवाचिनोऽप्यक्षशब्दस्य विशेषपरत्वान्नेत्रवाचकत्वं किम्वा सक्थ्यक्ष्णः षःस्वाङ्गइति षप्रत्ययान्तस्य उदक्षशब्दस्य स्वस्रादौ पाठस्तेन नमनसंख्याखस्रादेरिति ईप्प्रत्ययनिषेधः नदादिपाठस्यानित्यत्वादिति कालापाः माक्षादित्वादिति वासवताः प्लवङ्गसैन्यादिति पठन्त्यन्ये। समाहितमिति दक्षिणदिगवलोकनं स्वतएव जायमानं हनूमदङ्गुलिदर्शितत्वेन सुकरत्वात् समाहितं यदुक्तं समाधिः सुकरं कार्य्यं कारणान्तरयोगतइति अन्यत्रापि किञ्चिदारभमाणस्य कार्य्यं दैववशात्पुनः। तत्साधनसमापत्तिर्यदाऽहुस्तत्समाहितमिति जयमङ्गलायान्तु एकचित्ततया दिशोऽवलोकनात् समाहितमित्युक्तं॥ ५०॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



जलनिधिमगमन्महेन्द्रकुञ्जात्प्रचयतिरोहिततिग्म रश्मिभासः। सलिलसमुदयैर्महातरङ्गैर्भुवनभरक्षम मप्यभिन्नवेलं॥ उदारं॥ ५१॥

जलनिधिमित्यादि। महेन्द्रकुञ्जात् जलनिधिमगमन् गतवत्यः प्लवङ्गसेनाः लुदित्वाच्चेरङ् प्रचयेन उच्चतया तिरोहिता स्तिग्मरश्मिभासो येन निकुञ्जेन तस्मान्निकुञ्जात् सलिलसमुदयैर्म हातरङ्गैर्महोर्म्मिभिः भुवनस्य भरणे क्षममपि शक्तमपि भूभरण इति क्रियादिकः तस्य क्षितेरपि रूपं अभिन्नवेलं अनतिक्रान्त मर्य्यादं जलनिधिं उदारमिति उदात्तमित्यर्थः महानुभावता प्रतिपादनात् यतोमहातरङ्गैर्जलसमूहैर्भुवनभरक्षममपि अभि न्नवेलमिति द्विविधमुदारं महानुभावतया विविधरत्नयोगा च्चेति इयं महानुभावता दर्शिता॥ ५१॥ ज॰म॰

जलनिधिमित्यादि। सरघुतनयाः प्लवङ्गसेनामहेन्द्रकुञ्जात् जलनिधिमगमन् ओगम्लृगत्यां लुदित्वात् ग्वां ङः प्रचयेन समू हेन तिरोहिता आच्छादिता स्तिग्मरश्मेः सूर्य्यस्य भासोदीप्तयो याभिस्ताः प्लवङ्गसेनानां विशेषणं प्रचयेन उच्चतया तिरोहिता स्तिग्मरश्मिभासोयेन तस्मादिति कुञ्जविशेषणं वा कीदृशं जल निधिं महान्तस्तरङ्गाऊर्म्मयोयेषु तैः सलिलसमुदयैर्जलसमूहै र्भुवनस्य पृथिव्याभरणे पूरणे क्षमं शक्तमपि अभिन्नवेलमनति क्रान्तमर्य्यादं। उदात्तमिति महानुभावताप्रतिपादनात् महा भ॰



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



नुभावत्वन्तु महातरङ्गजलसमूहैर्भुवनभरणसमर्थस्याप्यभिन्नवेल त्वात् तथाचोक्तं आशयस्य विभूतेर्वा यन्महत्त्वमनुत्तमं। उदात्तं नाम तं प्राङरलङ्कारं मणीषिणइति उदारमिति पाठेऽप्ययमे वार्थः द्विविधमिदं महानुभावत्वात् नानारत्नयोगित्वाच्च आद्य मत्रोक्तं ॥ ५१ ॥

पृथुगुरुमणिशुक्तिगर्भभासा ग्लपितरसातलसंभ तान्धकारं। उपहतरविरश्मिवृत्तिमुच्चैः प्रलघुपरि प्लवमानवज्रजालैः ॥ उदारमेव ॥ ५२ ॥

ज०म० द्वितीयमाह पृथ्वित्यादि। पृथवोमहान्तः गुरवस्तु न परि च्छेद्याः मणयोमौक्तिका यासां शुक्तीनां तथाविधानां गर्भस्य भासा दीप्त्या ग्लपितं चयितं रसातले संभृतमुपचितमन्धकारं येन तं उच्चैरुपरि प्रलघूनामल्पानां परिप्लवमानानां वज्राणां यानि जालानि समूहाः तैरुपहतारविरश्मिवृत्तयोयस्मिन् सः तं जल निधिमगमन् यद्वज्रं वारिणि तरति तत्प्रशस्तमित्युक्तं एतदेवाप रेऽन्येन वाक्यार्थेनान्यथाविदुः। नानारत्नवियुक्तं यत्तल्किलोदा रमुच्यतेइति ॥ ५२ ॥

भ० द्वितीयं दर्शयति पृथ्वित्यादि। कीदृशं जलनिधिं पृथवोमहान्तो गुरवोगुरुत्वाख्यगुणविशेषयुक्ताये मणयोमौक्तिकानि तेषां याः शुक्तयः तासां गर्भभासा अन्तर्लीनदीप्त्या ग्लपितं नाशितं रसा

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



तले पाताले सम्भृतमुपचितमन्धकारं येन तं मुक्तास्फोटः स्त्रियां शुक्तिरित्यमरः उच्चैरुपरि प्रलघूनां लघुतमानामतएव परिप्लवमानानां तरतां वज्राणां हीरकाणां जालैः समूहैरुपहता रविरश्मिवृत्तयोयेन यत्र वा तं यद्वज्रं जले तरति तत्प्रशस्तं यदुक्तं रत्नपरीक्षायां गुरूणि सर्व्वरत्नानि वज्रमेकं परं लघु। भिद्यन्तेऽन्यानि वज्रेण तन्न केनापि भिद्यतइति। उदात्तमेवेति विविधरत्नर्द्धियुक्तत्वात् यदुक्तं पूर्व्वत्राशयमाहात्म्यमत्राभ्युदयगौरवं। विवक्षितमिति व्यक्तमुदात्तं द्वयमप्यदइति अन्यत्रापि नानारत्नर्द्धियुक्तं यत्तचोदात्तं किलोच्यतइति॥ ५२॥

समुपचितजलं विवर्द्धमानैरमलसरित्सलिलैर्विभावरीषु। स्फुटमवगमयन्तमूढवारीन् शशधररत्नमयान्महेन्द्रसानून्॥ उदारमेव॥ ५३॥

समुपचितजलमित्यादि। विभावरीषु रात्रिषु विवर्द्धमानै रमलैः सरित्सलिलैः समपचितजलं उदधिं स्पष्टमवगमयन्तं बोधयन्तं किमित्याह महेन्द्रसानून् शशधररत्नमयान् चन्द्रकान्तस्वभावान् ऊढवारीन् धृतवारीन् अन्यथा कथं धीयते जलं यदि चन्द्रकान्तसानवोन स्युः उदारमेवेति रत्नयोगात् ॥ ५३॥ ज०म०

समुपेत्यादि। कीदृशं जलनिधिं विभावरीषु रात्रिषु विवर्द्धमानै रमलसरित्सलिलैः निर्म्मलनदीजलैः समुपचितजलं अतएव महे भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



नुभावत्वन्तु महातरङ्गजलसमूहैर्भुवनभरणसमस्याप्यभिन्नवेल त्वात् तथाचोक्तं आशयस्य विभूतेर्वा यन्महत्त्वमनुत्तमं। उदात्तं नाम तं प्राङ्करलङ्कारं मणीषिणइति उदारमिति पाठेऽप्ययमे वार्थः द्विविधमिदं महानुभावत्वात् नानारत्नयोगित्वाच्च आद्य मत्रोक्तं ॥ ५१ ॥

पृथुगुरुमणिशुक्तिगर्भभासा ग्लपितरसातलसंभ तान्धकारं। उपहतरविरश्मिवृत्तिमुच्चैः प्रलघुपरि स्नवमानवज्रजालैः ॥ उदारमेव ॥ ५२ ॥

ज०म० द्वितीयमाह पृथ्वित्यादि। पृथवोमहान्तः गुरवस्तु न परि च्छेद्याः मणयोमौक्तिका यासां शुक्तीनां तथाविधानां गर्भस्य भासा दीप्त्या ग्लपितं च्चयितं रसातले संभृतमुपचितमन्धकारं येन तं उच्चैरुपरि प्रलघूनामल्पानां परिस्नवमानानां वज्राणां यानि जालानि समूहाः तैरुपहतारविरश्मिवृत्तयोयस्मिन् सः तं जल निधिमगमन् यद्वज्रं वारिणि तरति तत्प्रशस्तमित्युक्तं एतदेवाप रेऽन्येन वाक्यार्थेनान्यथाविदुः। नानारत्नवियुक्तं यत्तत्किलोदा रमुच्यतेइति ॥ ५२ ॥

भ० द्वितीयं दर्शयति पृथ्वित्यादि। कीदृशं जलनिधिं पृथवोमहान्तो गुरवोगुरुत्वाख्यगुणविशेषयुक्ताये मणयोमौक्तिकानि तेषां याः शुक्तयः तासां गर्भभासा अन्तर्लीनदीप्त्या ग्लपितं नाशितं रसा

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



तले पाताले सम्भृतमुपचितमन्धकारं येन तं मुक्तास्फोटः स्त्रियां शुक्तिरित्यमरः उच्चैरुपरि प्रलघूनां लघुतमानामतएव परिप्लवमानानां तरतां वज्राणां हीरकाणां जालैः समूहैरुपहता रविरश्मिवृत्तयो येन यत्र वा तं यद्वज्रं जले तरति तत्प्रशस्तं यदुक्तं रत्नपरीक्षायां गुरूणि सर्व्वरत्नानि वज्रमेकं परं लघु। भिद्यन्तेऽन्यानि वज्रेण तन्न केनापि भिद्यतइति। उदात्तमेवेति विविधरत्नर्द्धियुक्तत्वात् यदुक्तं पूर्व्वचाश्रयमाहात्म्यमत्राभ्युदय गौरवं। विवक्षितमिति व्यक्तमुदात्तं द्वयमप्यदइति अन्यत्रापि नानारत्नर्द्धियुक्तं यत्तचोदात्तं किलोच्यतइति॥ ५२॥

समुपचितजलं विवर्द्धमानैरमलसरित्सलिलैर्विभावरीषु। स्फुटमवगमयन्तमूढवारीन् शशधररत्नमयान्महेन्द्रसानून्॥ उदारमेव॥ ५३॥

समुपचितजलमित्यादि। विभावरीषु रात्रिषु विवर्द्धमानैरमलैः सरित्सलिलैः समुपचितजलं उदधिं स्पष्टमवगमयन्तं बोधयन्तं किमित्याह महेन्द्रसानून् शशधररत्नमयान् चन्द्रकान्तस्वभावान् ऊढवारीन् धृतवारीन् अन्यथा कथं धीयते जलं यदि चन्द्रकान्तसानवो न स्युः उदारमेवेति रत्नयोगात् ॥ ५३॥ ज० म०

समुपेत्यादि। कीदृशं जलनिधिं विभावरीषु रात्रिषु विवर्द्धमानैरमलसरित्सलिलैः निर्म्मलनदीजलैः समुपचितजलं अतएव महे भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



न्दूमानून् ग्रग्रधररत्नमयान् प्रचुरचन्द्रकान्तमयान् तत्स्वरूपान् वा अवगमयन्तं बोधयन्तं ऊढवारीन् धृतजलान् यदि तत्र चन्द्रकान्तमयाः सानवोन स्युस्तदा कथमूढजलाः स्युः ततश्च कथं वा तत्समीपे नदीनां जलवृद्धिरिति तदनुमानमिति भावः। उदात्तमेवेति रत्नयोगात् उदात्तं वस्तुनः सम्पदिति काव्यप्रकाशः॥ ५३॥

भुवनभरसहानलङ्घ्यधाम्नः पुरुरुचिरत्नभृतोगुरुदेहान्। अमविधुरविलीनकूर्म्मनक्रान्दधतमुदूढभुवोगिरीनहींश्च॥ श्लिष्टं॥ ५४॥

ज॰म॰ भुवनभरसहानित्यादि। गिरीन् भुवनभरसहान् अहींश्च तादृशानेव दधतं जलनिधिमगमन् गिरीनलङ्घ्यधाम्नः अहींश्चानभिभवनीयतेजसः गिरीन् पुरुरुचिरत्नभृतः अहींश्च महारुचिरत्नभृतः गिरीन् गुरुदेहान् अहींश्च महाकायान् अमविधुराः अमपीडिताः निलीनाः कूर्म्मानक्राश्च येषु ताम् गिरीनहींश्चोदूढभुवोधृतवसुधान् गिरीनहींश्च नष्टव्यग्रमानिति नुलं पूर्व्वस्यानुनासिकः श्लिष्टमिति। उपमानेनोपमेयत्वस्य साधनात् तथा चोक्तं विशेषणेन श्लिष्टं। उपमानेन यत्तत्त्वमुपमेयस्य साध्यते। क्रियागुणाभ्यां नाम्ना च श्लिष्टं तदभिधीयतइति अत्रोपमानभूतैरहिभिरुपमेयभूतानां गिरीणां तत्वस्य तादृूप्यस्य भुवनभरादितादृूप्यक्रियया तद्गुणेन च साधनेन गिरिभिरहिभिश्च नाम्ना च शब्देन भुवने भरसहानित्यादिना साध्यमानत्वात् रूपकमपीदृशमेव किन्तु श्लिष्टस्य भेदेनोपमानोपमेययोर्य्युगपत्प्रयोगात्

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



रूपके पुनरेकस्यैवोपमेयपुरुषस्य व्याघ्र उपमानं तथाचोक्तं लक्षणं रूपके ऽपीदं विद्यते काममत्र तु। दृष्टः प्रयोगोयुगपदुपमानोपमेययोरिति तदुक्तं। लक्षणं श्लिष्टं सहोक्त्युपमाहेतुनिर्द्देशात्त्रिविधं यथोक्तं श्लेषादेवार्थवचसोरस्य च क्रियते भिदा। तत्सहोक्त्युपमाहेतुनिर्द्देशात्त्रिविधं यथेति तत्रेदं सहोक्तिश्लिष्टमुक्तं गिरीनहींश्चेति सहोक्त्या निर्द्देशात्॥ ५४॥

भुवनेत्यादि। पुनः कीदृशं जलनिधिं गिरीन् पर्व्वतान् अहीन् सर्पांश्च दधतं पर्व्वतसर्पयोर्युगपद्विशेषणान्याह भुवनभरसहान् जगतां भारस्य सहान् दृढत्वात् बलवत्त्वाच्च सहेःपचादित्वादच् अलङ्घ्यधाम्नः अनभिगम्यस्थानान् अहिपक्षे अनभिभवनीयतेजसः पुरुरुचिरत्नभृतः प्रचुरदीप्तिमद्रत्नधारकान् रत्नोत्पत्तिस्थानत्वात् फणारत्नयोगाच्च गुरुदेहान् अलघुमहाशरीरान् श्रमविधुरविलीनकूर्म्मनक्रान् श्रमेण विधुराविकलाः सन्तोविलीनाः संश्लिष्टाः कच्छपाः कुम्भीराश्च येषु उदूढभुवो धृतभूमीन् पर्व्वतोपरि वालुकासञ्चयेन भूम्यूत्पत्तेः भूमिधारकस्य शेषनागस्य तत्र सत्त्वाच्च एवमेवम्भूतं जलनिधिमगमन्निति सम्बन्धः श्लिष्टमिति श्लिष्टमिष्टमनेकार्थमेकरूपान्वितं वचः। तदभिन्नपदं भिन्नपदप्रायमिति द्विधा तदिहाभिन्नपदं दर्शितं पदभङ्गाभावात् तत्पुनस्त्रिविधं तथाचोक्तं श्लेषादेवार्थवचसोर्यस्य च क्रियते भिदा। तत्सहोक्त्युपमाहेतुनिर्देशात्त्रिविधं यथेति। तदिदं सहोक्तिलक्षणं श्लिष्टमुक्तं गिरीनहींश्चेति सहोक्त्या निर्देशात् अन्यद्वयं क्रमेणाग्रे उदाहरिष्यति॥ ५४॥

भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



प्रदृष्टुरुमुक्तशीकरौघान् विमलमणिद्युति संभृतेन्द्रचापान्। जलमुच इव धीरमन्द्रघोषान् चितिपरितापहृतोमहातरङ्गान् ॥ श्लिष्टमेव ॥ ५५ ॥

ज॰म॰ प्रदृष्टुरित्यादि। महातरङ्गान् जलमुचइव मेघानिव प्रदृष्टुः प्रदृष्टवत्यः उरवोमहान्तोमुक्ताः प्रकीर्णाः शीकरौघायेषु अमलमणिद्युतयएव सन्ततानि इन्द्रचापानि येषु धीरमन्द्रघोषान् मधुरगम्भीरध्वनीन् चितिपरितापहृतः पृथिवीसन्तापहारिणः इदमपि यथानिर्दिष्टविशेषणात् श्लिष्टं जलमुचइवेत्युपमाननिर्देशात् ॥ ५५ ॥

भ॰ प्रदृष्टुरित्यादि। सहरघुतनयाः प्लवङ्गसेनाजलमुचइव मेघानिव महतस्तरङ्गान् ऊर्म्मीन् प्रदृष्टुः मेघतरङ्गयोर्युगपद्विशेषणान्याह उर्व्विति उरवोमहान्तोमुक्ताः कीर्णाः शीकरौघायेषु तान् निर्म्मलरत्नदीप्तयएव ताभिः करणभूताभिर्वा सम्भृतानि इन्द्रचापानि यत्र तदुक्तं अकाले शक्रचापानामुदयस्तु यतोभवेत्। असौ धन्यतरोज्ञेयोवज्रमूल्योमहामणिरिति मेघपचे अमलमणीनामिव द्युतिर्येषां तादृशानि उद्धृतेन्द्रचापानि यत्र धीरमन्द्रघोषान् मधुरगभीरध्वनीन् चितिपरितापहृतः पृथिवीसन्तापहारिणः। श्लिष्टमेवेति पूर्व्वोक्तलचणसत्त्वात् किन्तु जलमुचइवेत्युपमानिर्देशादुपमाश्लिष्टमिदं ॥ ५५ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



विद्रुममणिकृतभूषामुक्ताफलनिकररञ्जितात्मानः।
बभुरुदकनागरुग्नावेलातटशिखरिणोयत्र ॥ हेतु
श्लिष्टमेव ॥ ५६ ॥

विद्रुमेत्यादि। वेलातटशिखरिणोयत्रेति जलनिधौ बभुः जं॰मं॰
शोभन्ते स्म ते समीयुरिति वक्ष्यमाणेन सम्बन्धः वेलातटाः शिखरि
णश्चेति द्वन्द्वः शेषाणि विशेषणान्युभयत्र तुल्यानि इदमपि यथा
निर्द्दिष्टमेव किन्तु हेतुश्लिष्टं हेतुद्वारेण विशेषणानां निर्द्देशात्
विद्रुममणिकृतभूषत्वात् जलहस्तिभग्नत्वाच्च बभुरिति ॥ ५६ ॥

विद्रुमेत्यादि। यत्र जलनिधौ वेलातटशिखरिणोबभुः शोभन्ते भ॰
स्म तमीयुरित्यग्रिमश्लोकेनान्वयः वेलातटाश्च शिखरिणश्चेति
द्वन्द्वः उभयं विशिनष्टि विद्रुमैः प्रवालैर्म्मणिभिश्च कृता भूषा
येषु ते तथा मुक्तामणीनां उत्कृष्टमौक्तिकानां मुक्तानां मणीनाञ्च
वा निकरेण समूहेन रञ्जिता आत्मानोदेहाः प्रदेशायेषां उद
कनागरुग्नाजलहस्तिभग्नाः श्लिष्टमेवेति पूर्व्वोक्तलक्षणसत्वात्
किन्तु हेतुश्लिष्टमिदं युगपदुभयविशेषणानां हेतुत्वेनैव निर्देशात्
प्रवालमणिकृतालङ्कारत्वात् मुक्तामणिदीप्तिरञ्जितरूपत्वात्
उदकनागभग्नत्वाच्च बभुरित्यर्थः ॥ ५६ ॥

भृतनिखिलरसातलः सरलः शिखरिसमोर्म्मिति
रोहितान्तरीक्षः। कृतइह परमार्थतोजलौघोजल
निधिमीयुरतः समेत्य मायां ॥ अपह्नुतिः ॥ ५७ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० भृतनिखिलरसातलइत्यादि। एवंगुणविशिष्टोजलौघः कुत इह प्रदेशे परमार्थतः परमार्थेन विद्यते। किं तर्हि माया यतः पूरिताशेषपातालत्वात् सरत्नत्वात् शिखरसमैरूर्म्मिभिः पिहितान्तरीचत्वाच्च सराघवाः प्लवङ्गसेनाः समेत्य मायामिव जलधिमीयुः ज्ञातवत्यः सर्व्वे गत्यर्थाज्ज्ञानार्थाइति भृञ् भरणइति भौवादिकः अपह्नुतिरिति मायामित्यन्तर्गतोपमारूपतया निर्द्देशात् विद्यमानार्थस्य चापह्नवात् तथाचोक्तं अपह्नुतिरितीष्टा च किञ्चिदन्तर्गतोपमा। भूतार्थापह्नवादेषा क्रियतेस्याभिदा यथेति ॥ ५७ ॥

भ० भृतेत्यादि। सहरघुतनयाः प्लवङ्गसेनाः समेत्य मिलिला जलनिधिं अतः कारणात् मायामिव ईयुर्ज्ज्ञातवत्यः सर्व्वेषां गत्यर्थानां ज्ञानार्थत्वात् किं कारणं तदाह इह प्रदेशे जलौघः कुतः परमार्थतस्तत्त्वेन विद्यते कीदृशः भृतनिखिलरसातलः पूरिताशेषपातालः रत्नैः सहितः पर्व्वततुल्यतरङ्गैराच्छादिताकाशः जलस्यैतादृशत्वासम्भवादियं खलुमायेति भावः। अपह्नुतिरिति जलनिधिमुपमेयमसत्यं कृत्वा मायामिवेत्युपमानस्य सत्यतया व्यवस्थापितत्वात् तथाचोक्तं प्रकृतं यन्निषिध्यान्यत् साध्यते सा त्वपह्नुतिरिति अन्यत्रापि अपह्नुतिरभीष्टा च किञ्चिदन्तर्गतोपमा। भूतार्थापह्नवात् ज्ञेया क्रियतेऽस्याभिदा यथेति ॥ ५७ ॥

शशिरहितमपि प्रभूतकान्तिं विबुधहृतश्रियमप्यनष्टशोभं। मथितमपि सुरैर्द्दिवं जलौघैः समभिभवन्तमविद्यतप्रभावं॥ विशेषोक्तिः ॥ ५८ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



शशिरहितमित्यादि। शशिरहितमपि मुग्धचन्द्ररहितमपि ज०म०
प्रभूतकान्तिं पद्मरागादिरत्नावभासितत्वात् विबुधहृतश्रियमपि
अनष्टशोभं सर्व्वदा शोभास्पदत्वात् सुरैर्मथितमपि दिवमाकाशं
जलौघैः समभिभवन्तं अत्युच्छ्रितत्वात् तदेवमविचलप्रभावं अख
ण्डिताभिमानमीयुः ज्ञातवत्यः विशेषोक्तिरिति शश्यादेरेकदे
शस्य विगमेऽपि प्रभूतकान्त्या गुणान्तरेण स्तुतिविशेषस्य प्रति
पादनात् यथोक्तं एकदेशस्य विगमे या गुणान्तरसंस्तुतिः।
विशेषप्रथनायासौ विशेषोक्तिर्मता यथेति॥५८॥

शशीत्यादि। कीदृशं जलनिधिमीयुः शशिरहितमपि चन्द्रेण भ०
विरहितमपि प्रभूतकान्तिं प्रचुरदीप्तिं नानारत्नोपशोभितत्वात्
विबुधहृतश्रियमपि देवहृतलक्ष्मीकमपि अनष्टशोभं सकलशो
भास्पदत्वात् सुरैर्मथितमपि जलौघैर्दिवमाकाशं सम्यगभिभवन्तं
अत्युच्छ्रितत्वात् अतएव अविचलितप्रभावं अखण्डितमहिमानं
विशेषोक्तिरिति चन्द्रादेरेकदेशस्य वैकल्येऽपि तत्कार्य्यप्रभूत
कान्त्यादिना गुणान्तरेण विशेषस्य प्रतिपादनात् तथाचोक्तं गुण
जातिक्रियादीनां यत्र वैकल्यदर्शनं। विशेषदर्शनायैव सा विशेषो
क्तिरिष्यते। अन्यत्रापि एकदेशस्य विगमे या गुणान्तरसंस्तुतिः।
विशेषप्रथनायासौ विशेषोक्तिर्म्मता यथेति॥५८॥

क्षितिकुलगिरिशेषदिग्गजेन्द्रान् सलिलगतामिव
नावमुद्वहन्तं। धृतविधुरधरं महावराहं गिरिगुरु
पोत्रमपीहितैर्जयन्तं॥ व्याजस्तुतिः॥५९॥



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० भृतनिखिलरसातलइत्यादि। एवंगुणविशिष्टोजलौघः कुत इह प्रदेशे परमार्थतः परमार्थेन विद्यते। किं तर्हि माया यतः पूरिताशेषपातालत्वात् सरत्नत्वात् शिखरसमैरूर्म्मिभिः पिहिता न्तरीचत्वाच सराघवाः स्रवङ्गसेनाः समेत्य मायामिव जलधि मीयुः ज्ञातवत्यः सर्व्वे गत्यर्थाज्ज्ञानार्थाइति भृञ् भरणइति भौवादिकः अपह्नुतिरिति मायामित्यन्तर्गतोपमारूपतया निर्द्दे शात् विद्यमानार्थस्य चापह्नवात् तथाचोक्तं अपह्नुतिरितीष्टाच किञ्चिदन्तर्गतोपमा। भूतार्थापह्नवादेषा क्रियतेस्याभिदा यथेति ॥५७॥

भ० भृतेत्यादि। सहरघुतनयाः स्रवङ्गसेनाः समेत्य मिलिला जलनिधिं अतः कारणात् मायामिव ईयुर्ज्ञातवत्यः सर्व्वेषां गत्य र्थानां ज्ञानार्थत्वात् किं कारणं तदाह इह प्रदेशे जलौघः कुतः परमार्थतस्त्वेन विद्यते कीदृशः भृतनिखिलरसातलः पूरिता शेषपातालः रत्नैः सहितः पर्व्वततुल्यतरङ्गैराच्छादिताकाशः जलस्यैतादृशत्वासम्भवादियं खलुमायेति भावः। अपह्नुतिरिति जलनिधिमुपमेयमसत्यं कृत्वा मायामिवेत्युपमानस्य सत्यतया व्यवस्थापितत्वात् तथाचोक्तं प्रकृतं यन्निषिध्यान्यत् साध्यते सा त्व पह्नुतिरिति अन्यत्रापि अपह्नुतिरभीष्टा च किञ्चिदन्तर्गतोपमा। भूतार्थापह्नवात् ज्ञेया क्रियतेऽस्याभिदा यथेति॥ ५७॥

**शशिरहितमपि प्रभूतकान्तिं विबुधहृतश्रियमप्य नष्टशोभं। मथितमपि सुरैर्द्दिवं जलौघैः समभिभव न्तमविन्तप्रभावं॥ विशेषोक्तिः ॥५८॥**

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



शशिरहितमित्यादि। शशिरहितमपि मुग्धचन्द्ररहितमपि प्रभूतकान्तिं पद्मरागादिरत्नावभासितत्वात् विबुधहृतश्रियमपि अनष्टशोभं सर्व्वदा शोभास्पदत्वात् सुरैर्मथितमपि दिवमाकाशं जलौघैः समभिभवन्तं अत्युच्छ्रितत्वात् तदेवमविच्युतप्रभावं अखण्डिताभिमानमीयुः ज्ञातवत्यः विशेषोक्तिरिति शशादेरेकदेशस्य विगमेऽपि प्रभूतकान्त्या गुणान्तरेण स्तुतिविशेषस्य प्रतिपादनात् यथोक्तं एकदेशस्य विगमे या गुणान्तरसंस्तुतिः। विशेषप्रथनायासौ विशेषोक्तिर्मता यथेति॥५८॥ ज॰म॰

शशीत्यादि। कीदृशं जलनिधिमीयुः शशिरहितमपि चन्द्रेण विरहितमपि प्रभूतकान्तिं प्रचुरदीप्तिं नानारत्नोपशोभितत्वात् विबुधहृतश्रियमपि देवहृतलक्ष्मीकमपि अनष्टशोभं सकलशोभास्पदत्वात् सुरैर्म्मथितमपि जलौघैर्दिवमाकाशं सम्यगभिभवन्तं अत्युच्छ्रितत्वात् अतएव अविवच्छितप्रभावं अखण्डितमहिमानं विशेषोक्तिरिति चन्द्रादेरेकदेशस्य वैकल्येऽपि तत्कार्य्यप्रभूतकान्त्यादिना गुणान्तरेण विशेषस्य प्रतिपादनात् तथाचोक्तं गुणजातिक्रियादीनां यत्र वैकल्यदर्शनं। विशेषदर्शनायैव सा विशेषोक्तिरिष्यते। अन्यत्रापि एकदेशस्य विगमे या गुणान्तरसंस्तुतिः। विशेषप्रथनायासौ विशेषोक्तिर्म्मता यथेति॥५८॥ भ॰

क्षितिकुलगिरिशेषदिग्गजेन्द्रान् सलिलगतामिव नावमुद्वहन्तं। धृतविधुरधरं महावराहं गिरिगुरुपोत्रमपीहितैर्जयन्तं॥ व्याजस्तुतिः॥५९॥



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० क्षितीत्यादि। क्षितिं पृथिवीं कुलगिरीन् कुलपर्व्वतान् शेषं नागराजं दिग्गजेन्द्रानैरावतादीन् सलिलगतामिव नावमुद्वहन्तं जलनिधिं महावराहं धृतविधुरधरं धृता उद्धृता विधुरा विक्लवा धरा मही येनेति गिरिगुरुपोत्रं गिरिवत् गुरु पोत्रं यस्य तमपीहितैश्चेष्टितैर्जयन्तं जलनिधिमीयुः। व्याजस्तुतिरिति क्षित्यादिधारणादधिकगुणस्य जलनिधेस्तोत्रव्यपदेशेन वराहेण तुल्यत्वात् तमपि महावराहं जयन्तमिति किञ्चिद्विधातुमिच्छया निन्दनात् तथाचोक्तं दूराधिकगुणस्तोत्रव्यपदेशेन तुल्यता। किञ्चिद्विधित्सया निन्दा व्याजस्तुतिरसौ यथेति॥ ५६॥

भ० क्षितीत्यादि। जलनिधिमीयुरिति सम्बन्धः कीदृशं क्षितिं कुलपर्व्वतान् शेषं नागराजं दिग्गजेन्द्रानैरावतादींश्च सलिलगतां नौकामिव उद्वहन्तं दधतं अतएव महावराहमपि ईहितैश्चेष्टितैर्जयन्तं कीदृशं महावराहं धृतविधुरधरं धृता उद्धृता विधुरा प्रलये व्याकुला धरा पृथिवी येन गिरिवत् गुरु महत् पोत्रं मुखं यस्य समुद्रपक्षे पोत्रं तरङ्गः व्याजस्तुतिरिति जलनिधेः कोमहिमा यः सदा क्षित्यादिभारं सेवकवत् वहतीत्यपीनिन्दां कृत्वा महावराहं जयन्तमिति प्रशंसनात् यद्वा भगवज्जयमप्यापाततोनिन्दात्वेनोक्ता तत्साद्दृश्यप्रदर्शनेन स्तुतिरुक्ता तथाचोक्तं यदि निन्दति वा स्तौति व्याजस्तुतिरसौ मता। दोषाभासा गुणाएव भजन्ते यत्र सन्निधिमिति अन्यैस्तु क्षित्यादि धारणादधिकगुणस्य जलनिधेः स्तोत्रव्यपदेशेन महावराहतुल्यत्वात् तमपि महावराहमीहितैर्जयन्तमिति किञ्चिद्विधित्सया निन्द

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



नाद्याजस्तुतिरित्युक्तं तथाहि दूराधिकगुणस्तोत्रव्यपदेशेन तुल्यता। किञ्चिद्विधित्सया निन्दा व्याजस्तुतिरसौ मतेति ॥ ५९॥

गिरिपरिगतचञ्चलापगान्तं जलनिवहं दधतं मनोभिरामं। गलितमिव भुवो विलोक्य रामं धरणिधरस्तनशुक्लपट्टचीनं ॥ उपमारूपकं ॥ ६० ॥

गिरिपरीत्यादि। गिरिभिः परिगताः संश्लिष्टाः चञ्चला विलोला आपगास्तानद्यन्ता यस्मिन् जलनिवहे तं जलनिवहं दधतं धारयन्तं समुद्रमीयुः कीदृशमिव जलनिवहं रामं भर्त्तारं विलोक्य हृष्टायाद्रत्यर्थप्राप्तं ततश्च पूर्व्वकालेऽक्का भुवः पृथिव्या इव धरणिधरस्तनयोः शुक्लपट्टस्य चीनमिव गलितं उपमारूपकमिति तथोक्तं उपमानस्य तद्भावमुपमेयस्य रूपयन्। योवदत्युपमाभेदमुपमारूपकं यथेति ॥ ६० ॥ ज॰म॰

गिरिपरीत्यादि। कीदृशं जलनिधिं जलस्य निवहं समूहं दधतं धारयन्तं कीदृशं जलनिवहं गिरिभिः परिगताः संश्लिष्टाश्चञ्चला नद्यन्तानद्यवयवायत्र तं मनोभिरामं स्वपतिं विलोक्य हर्षवशात् जायारूपायाभुवः पृथिव्याधरणिधरस्य पर्व्वतस्य स्तनरूपस्य गलितं स्रस्तं शुक्लवर्णपटाञ्चलमिव उपमारूपकमिति उपमासहितं रूपकमित्यर्थः। अत्र उपमानेन स्तनेन उपमेयस्य कस्यचिद्धरणीधरस्य स्तनत्वं रूपितं गलितं पट्टचीनमिवेत्युपमापि निर्द्दिष्टा तथाचोक्तं उपमानेन तद्भावमुपमेयस्य रूपयन् भ॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० क्षितीत्यादि। क्षितिं पृथिवीं कुलगिरीन् कुलपर्व्वतान् शेषं नागराजं दिग्गजेन्द्रानैरावतादीन् सलिलगतामिव नावमुद्वहन्तं जलनिधिं महावराहं धृतविधुरधरं धृता उद्धृता विधुरा विक्लवा धरा मही येनेति गिरिगुरुपोत्रं गिरिवत् गुरु पोत्रं यस्य तमपीहितैश्चेष्टितैर्जयन्तं जलनिधिमीयुः। व्याजस्तुतिरिति क्षित्यादिधारणादधिकगुणस्य जलनिधेस्तोत्रव्यपदेशेन वराहेण तुल्यत्वात् तमपि महावराहं जयन्तमिति किञ्चिद्विधातुमिच्छया निन्दनात् तथाचोक्तं दूराधिकगुणस्तोत्रव्यपदेशेन तुल्यता। किञ्चिद्विधित्सया निन्दा व्याजस्तुतिरसौ यथेति॥ ५६॥

भ० क्षितीत्यादि। जलनिधिमीयुरिति सम्बन्धः कीदृशं क्षितिं कुलपर्व्वतान् शेषं नागराजं दिग्गजेन्द्रानैरावतादींश्च सलिलगतां नौकामिव उद्वहन्तं दधतं अतएव महावराहमपि ईहितैश्चेष्टितैर्जयन्तं कीदृशं महावराहं धृतविधुरधरं धृता उद्धृता विधुरा प्रलये व्याकुला धरा पृथिवी येन गिरिवत् गुरु महत् पोत्रं मुखं यस्य समुद्रपक्षे पोत्रं तरङ्गः व्याजस्तुतिरिति जलनिधेः कोमहिमा यः सदा क्षित्यादिभारं सेवकवत् वहतीत्यपीनिन्दां कृत्वा महावराहं जयन्तमिति प्रशंसनात् यद्वा भगवज्जयमप्यापाततोनिन्दात्वेनोक्ता तत्साद्दृश्यप्रदर्शनेन स्तुतिरुक्ता तथाचोक्तं यदि निन्दति वा स्तौति व्याजस्तुतिरसौ मता। दोषाभासा गुणाएव भजन्ते यत्र सन्निधिमिति अन्यैस्तु क्षित्यादि धारणादधिकगुणस्य जलनिधेः स्तोत्रव्यपदेशेन महावराहतुल्यत्वात् तमपि महावराहमीहितैर्जयन्तमिति किञ्चिद्विधित्सया निन्द

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



नाम्नाव्याजस्तुतिरित्युक्तं तथाहि दूराधिकगुणस्तोत्रव्यपदेशेन तुल्यता। किञ्चिद्विधित्सया निन्दा व्याजस्तुतिरसौ मतेति ॥ ५९॥

गिरिपरिगतचञ्चलापगान्तं जलनिवहं दधतं मनोभिरामं। गलितमिव भुवो विलोक्य रामं धरणिधरस्तनशुक्लपट्टचीनं ॥ उपमारूपकं ॥ ६०॥

गिरिपरीत्यादि। गिरिभिः परिगताः संस्पृष्टाः चञ्चला विलोला आपगान्तानद्यन्तायस्मिन् जलनिवहे तं जलनिवहं दधतं धारयन्तं समुद्रमीयुः कीदृशमिव जलनिवहं रामं भर्त्तारं विलोक्य हृष्टायाद्रत्यर्थप्राप्तं ततश्च पूर्व्वकालोक्ता भुवः पृथिव्या इव धरणिधरस्तनयोः शुक्लपट्टस्य चीनमिव गलितं उपमारूपकमिति तथोक्तं उपमानस्य तद्भावमुपमेयस्य रूपयन्। योवदत्यु पमाभेदमुपमारूपकं यथेति ॥ ६०॥ ज०म०

गिरिपरीत्यादि। कीदृशं जलनिधिं जलस्य निवहं समूहं दधतं धारयन्तं कीदृशं जलनिवहं गिरिभिः परिगताः संश्लिष्टाश्चञ्चला नद्यन्तानद्यवयवायत्र तं मनोभिरामं स्वपतिं विलोक्य हर्षवशात् जायारूपायाभुवः पृथिव्याधरणिधरस्य पर्व्वतस्य स्तनरूपस्य गलितं स्रस्तं शुक्लवर्णपटाञ्चलमिव उपमारूपकमिति उपमासहितं रूपकमित्यर्थः। अत्र उपमानेन स्तनेन उपमेयस्य कस्यचिद्धरणीधरस्य स्तनत्वं रूपितं गलितं पट्टचीनमिवेत्युपमापि निर्दिष्टा तथाचोक्तं उपमानेन तद्भावमुपमेयस्य रूपयन् भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



यद्दद्त्युपमानं तदुपमारूपकं यथेति अन्यत्राप्युक्तं दृष्टं साधर्म्यवैधर्म्यदर्शनान्मुख्यगौणयोः। उपमाव्यतिरेकाख्यं रूपकद्वितयं यथेति ॥ ६० ॥

अपरिमितमहाद्भुतैर्व्विचित्रश्च्युतमलिनः शुचिभिर्म्महानलङ्घ्यैः। तरुमृगपतिलक्ष्मणक्षितीन्द्रैः समधिगतोजलधिः परं बभासे ॥ तुल्ययोगिता ॥ ६१ ॥

ज०म० अपरिमितमहाद्भुतैरित्यादि। तरुमृगपतिलक्ष्मणक्षितीन्द्रैः सुग्रीवलक्ष्मणरामैः समधिगतः प्राप्तोजलधिः परं सुष्ठु बभासे शोभते स्म कीदृशैः कीदृशइत्याह अपरिमितमहाद्भुतैर्विचित्रः नानाद्भुतः शुचिभिर्विमलैः च्युतमलिनोनिर्म्मलोऽलङ्घ्यैरनभिभवनीयैः महान् अनभिभवनीयः एवञ्च कृत्वा तेनापि ते समधिगताः परम्बभासिरइति तुल्ययोगितेति न्यूनानामपि तेषां सुग्रीवादीनां विशिष्टेन जलनिधिना महाद्भुतत्वादिगुणसाम्यविवक्षया तुल्यस्य कार्य्यस्य भासनलक्षणस्यानुष्ठानेन तुल्ययोगात् तथा चोक्तं। न्यूनस्यापि विशिष्टेन गुणसाम्यविवक्षया। तुल्यकार्य्यक्रियायोगादित्युक्ता तुल्ययोगितेति ॥ ६१ ॥

भ० अपरिमितेत्यादि। तरुमृगाणां वानराणां पत्या सुग्रीवेण लक्ष्मणेन क्षितीन्द्रेण रामेण च समधिगतः प्राप्तोजलधिः परमत्यर्थं बभासे शोभते स्म क्रमेण सुग्रीवादीनां समुद्रस्य च तुल्यानि

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



विशेषणान्याह अपरिमितमहाश्चर्य्यैर्विचित्रः आश्चर्य्यान्वितः च्युतमलिनः शुचिभिर्विमलैः महान् अनभिभवनीयः अलङ्घ्यै रनभिभवनीयैः एवञ्च सति तुल्यरूपत्वात्तेन समधिगतास्तेऽपि बभासिरे इत्यर्थाद्गम्यते तुल्ययोगितेति उपमानानामपि सुग्री वादीनां विशिष्टेन जलधिना गुणसाम्यविवक्षया तुल्यकार्य्यस्य भासनलक्षणस्य योगात् तथाचोक्तं विवक्षितगुणोत्कर्षै यत्समी कृत्य कस्यचित्। कीर्त्तनं स्तुतिनिन्दार्थं सा स्मृता तुल्ययोगितेति अन्यत्राप्युक्तं न्यूनस्यापि विशिष्टेन गुणसाम्यविवक्षया। तुल्यकार्य्य क्रियायोगादित्युक्ता तुल्ययोगितेति ॥ ६१ ॥

न भवति महिमा विना विपत्तेरवगमयन्निव पश्यतः पयोधिः। अविरतमभवत् क्षणे क्षणेऽसौ शिखरिपृथुप्रथितप्रशान्तवीचिः॥ निदर्शनं ॥ ६२ ॥

नभवतीत्यादि। महिमा महत्त्वं विना विपत्तेः विनाशम्विना न भवति पृथग्विनेत्यादिना पञ्चमी नास्त्येव तन्महत्त्वं यस्य विनाशो नास्तीत्येवमवगमयन् बोधयन्निव पयोधिस्तान्पश्यतो रामादीन् अविरतमविच्छेदेन शिखरिवत् पृथवः प्रथिताः प्रशान्ताश्च वीच योयस्य सएवं क्षणे क्षणे अभवत् भूतवान् निदर्शनेति प्रतिक्षणं वीचीनां पृथुलप्रशान्तत्वभवनक्रिययैव महिमभवनस्य तदर्थस्य विपत्तिफलस्य उपादानात् न यथैव वतिशब्दानां प्रयोगात् तथाचोक्तं क्रिययैव तदर्थस्य विशिष्टस्योपदर्शनात्। दृष्टा निदर्शना नाम यथेव वतिभिर्विनेति ॥ ६२ ॥

ज॰म॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० नभवतीत्यादि। विपत्तेर्विना विनाशं विना महिमा महत्त्वं न भवति अन्यारभ्येति विनायोगे पञ्चमी नास्त्येव तन्महत्त्वं यस्य विपत्तिर्नास्तीति पश्यतो रामादीन् अवगमयन्निव बोधयन्निव असौ पयोधिरविरतं अविच्छेदेन क्षणे क्षणे शिखरिपृथुप्रथितप्रशान्तवी चिरभवत् पर्व्वतवत् पृथवो महान्तः प्रथिताः प्रकाशिताः पश्चात् प्रशान्ताश्च वीचयस्तरङ्गा यस्य स तथा महता विपत्तौ खेदोन कर्त्तव्य इति रामं इत्युपदिष्टमिति पश्यत इत्यस्य भावः। निदर्शन मिति प्रतिक्षणं वीचीनां पृथुलप्रशान्तिक्रियां दर्शयित्वा अन्यत्रापि महिम्नो विपत्तिफलस्योपादानात् तथाचोक्तं अर्थान्तरप्रवृत्तेन किञ्चित्तत्सदृशं फलं। सदसत्त्वा निदर्श्येत यदि स्यात्तन्निदर्शनमिति अन्यत्राप्युक्तं क्रिययैव तदर्थस्य विशिष्टस्योपदर्शनात्। इष्टं निद र्शनं नाम यथेव वतिभिर्विनेति कार्य्यः शब्दो यथा घट इत्यादिवत् यथा शब्दादिभिर्विनेदं निदर्शनमिति ॥ ६२ ॥

मृदुभिरपि बिभेद पुष्पबाणैर्जलशिशिरैरपि मारु तैर्ददाह। रघुतनयमनर्थपण्डितोऽसौ न च मदनः क्षतमाततान नार्च्चिः ॥ विरोधः ॥ ६३ ॥

ज०म० मृदुभिरित्यादि। समुद्रोपकण्ठे रामस्य मदनावस्थामाह मदनोऽनर्थपण्डितः निष्प्रयोजनकुशलः पुष्पबाणैरपि मृदुभिः रघुतनयं बिभेद न चासौ क्षतं खण्डनमाततान जनितवान् जल शिशिरैर्मारुतैस्तमेव रघुतनयं ददाह नचासावर्च्चिर्ज्वालामात

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



तान विरोधइति पुष्पवाणानां यन्मार्दवं मरुताञ्च जलसंसर्गाद्य च्छैत्यं तयोर्भेददाहलक्षणे क्रिये विरुद्धे तयोरभिधानात् तयोश्च क्रिययोर्वा विरोधिनी क्रिया क्षतार्च्चिषोरवतानालक्षणास्थाः कामोद्रेकप्रतिपादनाभिधानात् तथाचोक्तं गुणस्य च क्रिया यावा विरुद्धान्यक्रियाभिधा। याविशेषाभिधानाय विरोधन्तं विदुर्य्य थेति॥ ६३॥

मृदुभिरित्यादि। समुद्रान्तिके सीतास्मरणात् रामस्य कामा वस्थामाह मदनोमृदुभिरपि पुष्पवाणैरघुतनयं विभेद न चासौ तावतापि क्षतं खण्डनं आततान कृतवान् सजलशीतलै रपि मारुतैस्तं ददाह नचासावर्च्चिराततान अतएवासौ अनर्थ पण्डितः निष्प्रयोजने कर्म्मणि कुशलः विरोधइति पुष्पवाणानां यन्मार्दवं मारुतानाञ्च जलसंसर्गात् यच्छैत्यं तयोर्भेददाहलक्षणं क्रियाद्वयं विरुद्धमभिहितं तयोश्च क्रिययोर्व्विरुद्धं क्षतार्च्चिषोरक रणं तेन कामोत्कर्षरूपोविशेषः प्रतिपादितः अयञ्च विरोधोन वास्तवः भेददाहाभ्यां पीडामात्रस्य लक्षितत्वात् तथाचोक्तं विरु द्धानां पदार्थानां यत्र संसर्गदर्शनं। विशेषसाधनायैव सविरोधः स्मृतोयथेति। अन्यत्राप्युक्तं गुणस्य च क्रियायावा विरुद्धार्थक्रिया भिदा। या विशेषाभिधानाय विरोधं तं विदुर्यथेति॥ ६३॥

भ०

अथ मलिनप्रभौ दिनान्ते जलधिसमीपगताव तीतलोकौ। अनुकृतिमितरेतरस्य मूर्त्त्योर्द्दिनकर राघवनन्दनावकार्ष्टां॥ उपमेयोपमा॥ ६४॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० अथेत्यादि। यथोक्तवस्त्वनन्तरं मृदुमलिनप्रभौ मृदुरप्रचण्डा मलिना प्रभा ययोः तौ दिनकरराघवनन्दनौ रघोरपत्यं राघवः दशरथस्तन्नन्दनो रामः दिनान्ते अन्योन्यस्य दिवाकरो रामस्य रामोऽपि दिवाकरस्येति मूर्त्त्योर्देहयोरनुकृतिमिवानुकारमिव यथोक्तधर्म्मतुल्यतया अकार्ष्टां कृतवन्तौ अतीतलोकौ त्यक्तलोकौ उपमेयोपमेति तयोः पर्य्यायेण उपमानोपमेयत्वात् तथाचोक्तं उपमानोपमेयत्वं यत्र पर्य्यायतोभवेत्। उपमेयोपमां धीराब्रुवते तां यथोदितामिति ॥ ६४ ॥

भ० अथेत्यादि। अनन्तरं दिनकरः सूर्य्यो राघवस्य दशरथस्य नन्दनो रामो दिनस्यान्ते सन्ध्याकाले अन्योन्यस्य मूर्त्त्योः शरीरयोरनुकृतिमनुकारं अकार्ष्टां कृतवन्तौ तुल्यधर्म्मत्वात् सूर्य्यो रामस्य मुर्त्तेरनुकृतिं रामोऽपि सूर्य्यस्य मूर्त्तेरनुकृतिं चकारेत्यर्थः द्वयोस्तुल्यतां दर्शयति तौ कीदृशौ मृदुरप्रचण्डा मलिना प्रभा ययोः सूर्य्यस्य दिनान्तवशात् रामस्य शोकाच्छ्रमादिशयनाच समुद्रसमीपं गतौ त्यक्तलोकौ च। उपमेयोपमेति इतरेतरशब्देन समानधर्म्मत्वात् पर्य्यायेणोपमानोपमेयत्वकथनात् तथाचोक्तं उपमानोपमेयत्वं यच पर्य्यायतोभवेत्। उपमेयोपमां धीराब्रुवते तां यथोदितामिति ॥ ६४ ॥

अपहरदिव सर्व्वतोविनोदान् दयितगतं दधदेकधासमाधिं। घनरुचि ववृधे ततोऽन्धकारं सहरघुनन्दनमन्मथोदयेन ॥ सहोक्तिः ॥ ६५ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अपहरदित्यादि। ततस्तूत्तरकालं दिवसे ये विनोदाः चेतसः संस्थापकाः तान्सर्व्वतः सर्व्वान् सर्व्वेण वा प्रकारेण अद्यादित्वात्तसिः अपहरदिव अपनयदिवान्धकारं दयितगतं प्रियागतञ्च समाधिं चित्तैकाग्रतां एकधा एकप्रकारं दधत् धारयत् घनरुचिवकुलच्छायं ववृधे वर्द्धते स्म सह रघुनन्दनमन्मथोदयेन तदानीं तस्य कामोदयोऽपि ववृधे सहोक्तिरिति अन्धकारमन्मथाश्रितयोर्वर्द्धनक्रिययोस्तुल्यकालयोः ववृधइत्यनेन पदेन कथनात् तथाचोक्तं तुल्यकालक्रिये यत्र वस्तुद्वयसमाश्रिते वाक्येनैकेन कथ्येते सहोक्तिः सा मता यथेति॥ ६५॥ ज०म०

अपहरदित्यादि। ततोदिनान्तादुत्तरकालं अन्धकारं रघुनन्दनस्य रामस्य कामोदयेन सह ववृधे तदानीमन्धकारो रामस्य कामोदयोऽपि प्रवृद्धइत्यर्थः उभयविशेषणमाह सर्व्वतोविनोदान् अपहरदिव दिवसे ये विनोदाश्चित्तप्रसादकाः तान् सर्व्वान् सर्व्वप्रकारेण वा अपनयदिव पक्षे विभक्तिव्यत्ययः दयितगतं समाधिं चित्तैकाग्रतां एकधा एकप्रकारं दधत् जनयत् घनरुचिमेघवत्श्यामं निविडच्छायं वा कामोदयपक्षे दयिताविषये निविडा श्रद्धा यस्मात् दयितगतमित्यत्र प्रमदवनमित्यादिवत् ह्रस्वः वस्तुतस्तु दयितशब्देन सामान्यविवक्षया भार्य्याप्युच्यते अन्धकारोऽस्त्रियां ध्वान्तमित्यमरः। सहोक्तिरिति अन्धकारकामोदयाश्रितयोर्वृद्धिक्रिययोस्तुल्यकालयोर्व्वृधेइत्यनेनाभिधानात्। तथाचोक्तं तुल्यकालक्रिये यत्र वस्तुद्वयसमाश्रिते। पदेनैकेन कथ्येते सहोक्तिः सा मता यथेति॥६५॥ भ०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अधिजलधि तमः क्षिपन् हिमांशुः परिददृशेऽथ दृशां कृतावकाशः। विदधदिव जगत्पुनः प्रलीनं भवति महान् हि परार्थएव सर्व्वः॥ परिवृत्तिः॥ ६६॥

ज॰म॰ अधिजलधीत्यादि। अथ हिमांशुरन्धकारवर्द्धनानन्तरं अधिजलधि जलधेरुपरि विभक्त्यर्थेऽव्ययीभावः तमः क्षिपन् अपनयन् परिददृशे दृष्टः दृशां चक्षुषां कृतावकाशः दत्तप्रसरः जगल्लोकं प्रलीनं तिरोभूतं पुनर्विदधदिव सृजन्निव कस्मात्तेनैवं कृतमित्याह यस्माद्योमहान् ससर्व्वः परार्थएव परप्रयोजन एव भवति परिवृत्तिरिति दृशां कृतावकाशइत्यनेन विशिष्टस्य वस्तुनआदानात् तमः क्षिपन्नित्यनेनास्य वस्तुनः अपोहात् भवतीत्यादिना अर्थान्तरन्यासात् तथाचोक्तं विशिष्टस्य यदादानं अन्यापोहेन वस्तुनः। अर्थान्तरन्यासवती परिवृत्तिरसौ यथेति ॥६६॥

भ॰ अधीत्यादि। अथान्धकारवृद्ध्यनन्तरं हिमांशुश्चन्द्रोजनैः परिददृशे दृष्टः कीदृशः अधिजलधि समुद्रे तमोऽन्धकारं क्षिपन् नाशयन् अधिजलधीति सप्तम्यर्थेऽव्ययीभावः दृशां चक्षुषां कृतावकाशः दत्तावसरः प्रलीनं तिरोभूतं जगत् पुनर्विदधदिव सृजन्निव कुतस्तेनैवं कृतमित्याह हि यस्मात् सर्व्वएव महान् जनः परार्थएव परप्रयोजनएव भवति परिवृत्तिरिति दृशां कृतावकाशइत्यनेन विशिष्टस्य वस्तुनआदानात् तमः क्षिपन्इत्यनेन च कस्यचिद्वस्तुनोऽपोहात् भवति हीत्यादिना अर्थान्तरन्यासात्

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



तथाचोक्तं विशिष्टस्य यदादानमन्यापोहेन वस्तुनः। अर्थान्तर न्यासवती परिवृत्तिरसौ यथेति विद्यासागरस्तु तमःसम्बन्धिन मवकाशं नेत्रेष्वाधाय तत्सम्बन्धिनः क्षेपणस्य तमसि विधानात् परिवृत्तिरियमित्याह तथाचोक्तं अर्थानां योविनिमयः परि वृत्तिस्तु सा यथेति॥ ६६॥

अघनिरयमसौ कुतोनिरभ्रे शितशरवर्षमसत्त्व दप्यशार्ङ्गं। इति मदनवशोभुजः शशाङ्के रघुतनयोन च निश्चिकाय चन्द्रं॥ ससन्देहः॥ ६७॥

अघनिरित्यादि। असौ यश्चन्द्रः किमयमघनिर्वज्रं असौ ज॰म॰ कुतोनिरभ्रे नभसि कुतः यतोऽसौ मेघादुत्पद्यतइति उत निशि तानां शराणां वर्षं तदप्यशार्ङ्गमविद्यमानधनुः असदविद्य मानमित्ययं मदनवशः कामाभिभूतोभुजः क्षणं शशाङ्कं शशा ङ्कविषये रघुतनयोऽभूदित्यर्थात् द्रष्टव्यं न च चन्द्रं निश्चिकाय निश्चिनोति स्म विभाषाचेरिति कुत्वं ससन्देहइति अघनिशर वर्षाभ्यां उपमेयस्य चन्द्रस्य तत्त्वं अघनिशरवर्षमिति प्रयोक्तुरभि धानात् कुतोनिरभ्रे तदप्यशार्ङ्गमिति पुनरुपमानोपमेययोर्भेदा भिधानात् न निश्चिकाय चन्द्रमिति स्तुत्यर्थं सन्देहवचोभिधा नाच्च तथाचोक्तं उपमानोपमेयस्य तत्त्वञ्च वदतः पुनः। ससन्दे हवचः स्तुत्यै ससन्देहं विदुर्यथेति॥ ६७॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० अशनिरित्यादि। रघुतनयो रामः कामवशः सन् चन्द्रं न च निश्चिकाय न निर्णीतवान् किन्तु मुग्धः क्षणं इत्येवं शशाङ्के वितर्कितवान् किमित्याह अयमशनिर्वज्ज्रः असावशनिर्निरभ्रे नभसि कुतः यतो मेघादेवाशनिरुत्पद्यते किमिदं निशितानां शराणां वर्षं तदपि कुतः यतस्तदशार्ङ्गं अविद्यमानधनुरभूत् धनुषा विना न भवतीत्यर्थः शशाङ्क इति पाठे इत्येवं मदनवश श्चन्द्रविषयेऽभूत् न च चन्द्रं निश्चिकायेति योज्यं। ससन्देह इति उपमेयस्य चन्द्रस्य उपमानाशनिशरवर्षरूपत्वमभिधाय कुत इत्यादिना पुनरुपमानोपमेययोर्भेदाभिधानात् तावतापि नच निश्चिकाय चन्द्रमिति ससन्देहवचोभिधानाच्च तथाचोक्तं उपमानेन यत्तत्त्वं भेदञ्च वदतः पुनः। ससन्देहवचःस्तुत्यै सस न्देहं विदुर्ब्बुधा इति॥ ६७॥

कुमुदवनचयेषु कीर्णरश्मिः क्षततिमिरेषु च दिग्व धूमुखेषु। वियति च विललास तद्वदिन्दुर्विलसति चन्द्रमसो न यद्वदन्यः॥ अनन्वयः॥ ६८॥

ज०म० कुमुदवनचयेष्वित्यादि। कुमुदवनानां चयेषु समूहेषु दिग्वधू मुखेषु वियति च क्षततिमिरेषु खण्डिततमस्सु यतस्तेषु विकीर्ण रश्मिः क्षिप्तमयूखः विललास तद्वदिन्दुः शोभते स्म चन्द्रमसः सकाशात् अन्यो यद्वद्यथा न विलसति तथा विललास इदमुक्तं भवति इन्दुर्विललास चन्द्र इवेति अनन्वय इति तल्लक्षणस्य

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



साम्यस्याविवचातश्चन्द्रस्योपमानोपमेयत्वात् तथाचोक्तं यत्र तेनैव तस्य स्यादुपमानोपमेयता। सादृश्यस्याविवचातस्तमित्याहुरनन्वयमिति॥ ६८॥

कुमुदेत्यादि। इन्दुस्तद्वदिन्दुवत् विललास शोभते स्म चन्द्रादन्यः कोऽपि यद्वत् इन्दुवन्न विलसति इन्दुः कीदृशः कुमुदवनानां चयेषु समूहेषु दिग्वधूनां मुखेषु वियति आकाशे च चततिमिरेषु खण्डितान्धकारेषु कीर्णरश्मिः प्रसारितकिरणः केचित्तु इन्दुस्तद्वत्तथा विललास यद्वत् यथा चन्द्रमसोऽन्येन विलसतीत्याह। एवं सति चन्द्रस्योपमानत्वमुपमेयत्वञ्च न स्यात्। अन्ये तु इन्दुर्यथा विललास तथा तदन्येन विलसतीत्यर्थे चन्द्रस्योपमानत्वञ्चोक्तं स्यादित्याहुः। अनन्वय इति चन्द्रस्योपमानोपमेयत्वकथनेनान्यस्य तत्सादृश्यस्य निरासात् तथाचोक्तं रुद्रटे सा स्यादनन्वयाख्या यत्रैक्यं वस्त्वन्यदसदृशमिति। स्वस्य स्वयमेव भवेदुपमानञ्चोपमेयञ्च॥ ६८॥

शरणमिव गतं तमोनिकुञ्जे विटपिनिराकृतचन्द्ररश्म्यरातौ। पृथुविषमशिलान्तरालसंस्थं सजलघनद्युति भीतवत्ससाद॥ उत्प्रेचावयवः॥ ६९॥

शरणमित्यादि। पृथुविषमशिलानां यान्यन्तरालानि तेषु संस्थं सन्तिष्ठमानं सत्तमः निकुञ्जे गहने विटपिभिर्निराकृतासन्द्रस्य रश्मय एवारातयो यस्मान्निकुञ्जात् तस्मिन्ससाद

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



विलीनं शरणमिव यथा कश्चित् भीतोदुर्गे निलीयते सजलस्य घनस्येव द्युतिर्यस्य तमसः उत्प्रेचावयवदिति भीतवत्समादेति उपमाश्लेषलक्षणस्य श्लिष्टस्यार्थेन योगात् शरणमिव गतमित्युत्प्रेक्षायोगात् विटपिनिराकृतचन्द्ररश्म्यरातौविति रूपकार्थेन योगात् तथाचोक्तं श्लिष्टस्यार्थेन संयुक्तः किञ्चिचोत्प्रेक्षयान्वितः। रूपकार्थेन च पुनरुत्प्रेचावयवोयथेति। विटपितिरस्कृतचन्द्ररश्मियोगइति पाठान्तरं तत्र रूपकार्थोनास्तीति असंपूर्णलक्षणता ॥ ६९ ॥

भ० शरणमित्यादि। सजलस्य मेघस्य इव द्युतिर्यस्य तत् तमोऽन्धकारं पृथुविषमशिलायामन्तराले स्थितं सत् निकुञ्जे शरणं गतमिव शरणापन्नमिव ससाद विलीनं भीतवत् यथा कश्चिद्भीतो दुर्गवनान्तरे विलीयते निकुञ्जे कीदृशे विटपिभिर्वृक्षैर्निराकृता चन्द्ररश्मिरूपा अरातयस्तमःशत्रवोयस्मात् उत्प्रेचावयवदिति भीतवत् ससादेत्युपमाश्लेषरूपश्लिष्टस्यार्थेन योगात् शरणमिव गतमित्युत्प्रेक्षायायोगात् विटपिनिराकृतचन्द्ररश्म्यरातावितिरूपकार्थेन योगाच तथाचोक्तं श्लिष्टस्यार्थेन संयुक्तः कञ्चिचोत्प्रेक्षयान्वितः। रूपकार्थेन च पुनरुत्प्रेचावयवोयथेति चन्द्ररश्मियोगइति पाठे रूपकार्थोनास्तीत्यसम्पूर्णलक्षणता ॥ ६९ ॥

अथ नयनमनोहरोऽभिरामं स्मरइव चित्तभवोऽप्यवामशीलः। रघुसुतमनुजोजगाद वाचं सजलघनस्तनयित्नुतुल्यघोषः ॥ संहृष्टिः ॥ ७० ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अथेत्यादि। अथ चन्द्रदर्शनानन्तरं रघुसुतं राममभिरामं कामाभिभूतत्वादाभिमुख्येन रम्यत इति अनुजः कनीयान् भ्राता वाचं वक्ष्यमाणं जगाद गदितवान् नयनमनोहरः प्रेक्षणीय इत्यर्थः इति तुल्ययोगिता न्यूनस्य लक्षणस्याधिकेन रामेण सहा भिरमणीयगुणसाम्यविवक्षया अभिरमणतुल्यक्रियायोगात् स्मर इव चित्तभवोऽपि तस्य चेतसि सदा भवतीति श्लिष्टं तथाप्यवाम शीलोऽप्रतिकूल इति विरोधः स्मरस्तु वामशीलः सजलघन स्तनयित्नुना शब्देन तुल्योघोषोयस्य संसृष्टिरिति वक्रलङ्कार योगात् तथाचोक्तं पराभिभूता संसृष्टिर्व्वक्रलङ्कारयोगतः। रचिता रत्नमालेन सा चैवं कथ्यते यथा॥ ७०॥ ज॰म॰

अथेत्यादि। चन्द्रोदयदर्शनानन्तरं रघुसुतं रामं अभिरामं सुन्दरं अनुजोलक्ष्मणोवाच्यं वक्ष्यमाणं जगाद कीदृशः स्मरइव काम इव नयनमनोहरः तदुभयानन्दकः चित्तभवः रामस्य चित्ते विद्यमानः अवामशीलः अनुकूलस्वभावः चित्तभवोहि कामोऽवामशीलोभवति तत्पथप्रवर्त्तकत्वात् अयन्तु न तथेत्या पाततोविरोधसूचनायापिशब्दः सजलनिविडमेघतुल्यशब्दः। संसृष्टिरिति नानालङ्कारसंसर्गात् तथाहि स्मर इवेत्युपमा नयन मनोहर इति तुल्ययोगिता चित्तभव इति श्लेषः अवामशील इति विरोधः सजलघनेत्यादिना पुनरुपमा। तथाचोक्तं संसृष्टिरिति विज्ञेया नानालङ्कारसङ्कर इति॥ ७०॥ भ॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



पतिवधपरिलुप्तलोलकेशीर्नयनजलापहृताञ्जनौष्ठरागाः। कुरु रिपुवनिता जहीहि शोकं क च शरणं जगतां भवान् क मोहः॥ आशीः॥ ७१॥

ज०म० पतीत्यादि। पतिवधेन परिलुप्ता भ्रष्टा लोलाः केशा यासां रिपुवनितानां नयनजलेनाश्रुणा अपहृतमञ्जनमोष्ठरागश्च यासान्ताः मन्दोदरीप्रभृतीः कुरु शोकं जहीहीत्याशंसे किं क भवान् जगतां शरणमाश्रयः क च मोहइति आशीरिति दृष्टस्याशंसनात् तथाचोक्तं आशीरिति च केषाञ्चिदलङ्कारतया मता। सौहृदस्य विरोधोक्तौ प्रयोगोऽस्याश्च तद्यथेति॥ ७१॥

भ० पतीत्यादि। किं जगादेत्याह रिपोरावणस्य वनिताः स्त्रियः पतिवधात् परिलुप्ता भ्रष्टा लोलाश्चञ्चलाः केशा यासां नयनजलेनापहृतमञ्जनमोष्ठरागश्च यासां तथाविधाः कुरु शोकं जहीहि त्यज इत्याशंसे यतोजगतां शरणं रचिता भवान् क मोहश्च क वा असम्भावनायां कद्वयं। आशीरिति दृष्टार्थाशंसनात् तथा चोक्तं आशीर्नामाभिलषिते वस्तुन्याशंसनं यथेति अन्यत्रापि आशीरिति च केषाञ्चिदलङ्कारतया मता। सौहृदस्याविरोधोक्तौ प्रयोगोऽस्याश्च तादृशइति॥ ७१॥

अधिगतमहिमा मनुष्यलोके वत सुतरामवसीदति प्रमादी। गजपतिरुरुशैलशृङ्गवर्ष्मा गुरुरवमज्जति पङ्कभाङ् दारु॥ हेतुः॥ ७२॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अधिगतमहिमेत्यादि। मनुष्यलोके योऽधिगतमहिमा प्राप्ता धिपत्यः स प्रमादी शोकादिषु प्रमादवान् वत कष्टमवसीदति न कार्य्यसमर्थोभवति कुतएतदित्याह गजपतिः उरुशैलशृङ्ग वर्ष्मा महाशैलशृङ्गप्रमाणं वर्ष्म वपुर्य्यस्य सः पङ्कभाक् पङ्कभज तीति भजोण्विः पङ्कमवतीर्णः सन् अवमज्जति अवसीदति यस्मा दसौ गुरुः न पुनर्दारु काष्ठं तस्मान्मुञ्च शोकं हेतुरिति गजपते र्हेतुद्वारेण निर्देशात् अयमर्थान्तरोद्रष्टव्यः॥ ७२॥ ज॰म॰

अधीत्यादि। अधिगतमहिमा प्राप्ताधिपत्योऽपि मनुष्यलोके प्रमादी कार्य्येऽनवधानवान् सन् वत कष्टं सुतरां अवसीदति कार्य्यासमर्थोभवति कुतइत्याह उरुशैलशृङ्गवर्ष्मा महापर्व्वत शिखरप्रमाणशरीरोगजपतिः पङ्कभाक् पङ्कमवतीर्णः सन् अव मज्जति पङ्के प्रविशति यस्मादसौ गुरुः न तु दारु काष्ठं मज्जति लघुत्वात् तस्मान्महतां प्रमादोविनाशहेतुः न तु लघीयसां तत्कारणं शोकं संत्यजेति भावः। हेतुरिति गजपतेर्हेतुद्वारेण निर्देशात् तथाचोक्तं हेतुमता सह हेतोरभिधानमभेदकृद्यच। सोऽलङ्कारोहेतुः स्यादन्येभ्यः पृथग्भूतः॥ ७२॥ भ॰

बोद्धव्यं किमिव हि यत्त्वया न बुद्धं किं वा ते निमिषि तमप्यबुद्धिपूर्व्वं। लब्धात्मा तव सुकृतैरनिष्टशङ्की स्नेहौघोघटयति मां तथापि वक्तुं॥ निपुणं॥ ७३॥



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० बोद्धव्यमित्यादि। किमिव तद्बोद्धव्यं ज्ञातव्यमस्ति नैवेत्यर्थः यत्त्वया न बुद्धं बुद्धा विज्ञेयं तव किञ्चिच्चेष्टितमपि नोपेक्षापूर्व्वकं यतो निमिषितमप्यक्ष्णोर्निमीलनमपि बुद्धिपूर्व्वकं नैवेत्यर्थः यद्येवं किमित्यस्माकमुपदिशसीत्याह लब्धात्मेति तथापि सुकृतैर्लब्धात्मा लब्धजन्मा स्नेहौघः स्नेहसमूहः अनिष्टशङ्की अनिष्टशङ्कनशीलः मामवक्तुमवदेति घटयति निपुणमिति अर्थावगाढत्वादस्य चोदात्तेऽन्तर्भावो द्रष्टव्यः भाविकत्वमित्यलङ्कारउक्तः तदन्यविषयत्वात्पृथक् प्रदर्शयिष्यति॥ ७२॥

भ० बोद्धव्यमित्यादि। यत्त्वया न बुद्धं तद्बोद्धव्यं किमिवास्ति अपि तु न किञ्चिदेव इवशब्दोऽसम्भावनायां तव निमिषितमपि चक्षुषो निमीलितमपि किम्वा अबुद्धिपूर्व्वकं नैवेत्यर्थः अतो न किञ्चिदपि चेष्टितं तवानवधानपूर्व्वकमिति भावः अतो यद्यपि भवतो नोपदेशो युक्तस्तथापि सुकृतैस्तव सुष्टुकर्म्मभिरस्मत्पुण्यैर्वा लब्धात्मा प्राप्तस्वरूपो जातः स्नेहसमूहस्तवानिष्टशङ्काशीलः मां वक्तुं घटयति त्वामुपदेष्टुं मां प्रेरयति इत्यनुजो जगादेति पूर्व्वेणान्वयः निपुणमिति कनिष्ठस्य ज्येष्ठोपदेशानौचित्येऽपि नैपुण्येनोक्तत्वात् निपुणनामायमलङ्कार इति शाश्व इति विद्यासागरः अस्य प्रेयस्यन्तर्भाव इति देवनाथः प्रेयः प्रियतराख्यानमिति तल्लक्षणात् उदात्तमध्येऽन्तर्भाव इति जयमङ्गला॥ ७२॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



सौमित्रेरिति वचनं निशम्य रामोजृम्भावान् भुज युगलं विभज्य निद्रान्। अध्यष्ठाच्छिशयिषया प्रवालतल्पं रक्षायै प्रतिदिशमादिशन् प्लवङ्गान्॥ ७४॥

इति भट्टिकाव्ये प्रसन्नकाण्डे काव्यालङ्कारोनाम दशमः सर्गः॥ १०॥

सौमित्रेरित्यादि। इत्येवं लक्ष्मणस्य वचनं निशम्य श्रुत्वा रामो ज॰म॰ जृम्भावान् जातजृम्भिकः जृम्भणं जृम्भा गुरोश्चहलइत्यकारः शप् निद्रान् निद्राङ्गच्छन् द्राकुत्सितायांगतावित्यस्मादादादिकस्य निपूर्व्वस्य शतरि रूपं शिशयिषया शयितुमिच्छया भुजयुगलं विभज्य एकं शिरःस्थाने न्यस्य द्वितीयं शरीरस्योपरि प्रसार्य्येत्यर्थः विभुज्येति पाठान्तरं तत्र क्रोडभागे वक्रीकृत्येत्यर्थः प्रवालतल्पं पल्लवशयनीयं अध्यष्ठात् अधिष्ठितवान् गातिस्थेति सिचो लुक् प्राक्सितेत्यादिना षत्वं समुद्रदिदृक्षया नियमपूर्व्वं सुप्यापेत्यर्थः रक्षायै रक्षानिमित्तं प्लवङ्गमानादिशन् नियोजयन् प्रतिदिशं दिशि दिशि अव्ययीभावे शरत्प्रभृतिभ्यइति टच् तत्र दिक् शब्दस्य पठितत्वात्॥ ७४॥

इति भट्टिकाव्यटीकायां जयमङ्गलायां प्रसन्नकाण्डे काव्यालङ्कारदर्शनः प्रथमः परिच्छेदः सीताभिज्ञानदर्शनोनाम काव्यस्य दशमः सर्गः॥ १०॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० सौमित्रेरित्यादि। इत्येवं लक्ष्मणस्य वचनं निशम्य श्रुत्वा रामः प्रतिदिशं दिशि दिशि रक्षणार्थं प्लवङ्गान् वानरान् आदिशन् जृम्भावान् सन् निद्रान् निद्राङ्गच्छन् शिशयिषया शयितुमिच्छया प्रवालशय्यामध्यष्ठात् अधिष्ठितवान् भुजयुगलं विभुज्य भुग्नं कृत्वा एकं शिरःस्थाने निवेश्य अपरञ्चोरःस्थाने शिरसउपरि वा निवेश्येत्यर्थः विगुह्येति पाठे तत्र क्रोडोपरि वक्रीकृत्येत्यर्थः निद्रानिति निपूर्व्वात् द्रालस्वप्ने इत्यस्मात् शतृः अध्यष्ठादिति अधिपूर्व्वतिष्ठतेर्ध्यांसिः भूस्थेत्यादिना सेर्लुक् गीकइत्यादिना षत्वं कर्म्मक्रियेत्यादिना आधारस्य कर्म्मत्वं प्रतिदिशमिति वीप्सायामव्ययीभावः शरद्विपाडयइत्यादिना अप्रत्ययः॥ ७४॥

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरतसेनविरचितायां मुग्धबोधिन्यां भट्टिटीकायां प्रसन्नकाण्डे काव्यालङ्कारदर्शनं नाम प्रथमः परिच्छेदः काव्यस्य सीताभिज्ञानदर्शनं दशमः सर्गः॥१०॥

अथास्तमासेदुषि मन्दकान्तौ पुण्यक्षयेणेव निधौ कलानां। समाललम्बे रिपुमित्रकल्पैः पद्मैः प्रहासः कुमुदैर्व्विषादः॥ १॥

ज०म० माधुर्य्यमपि काव्यस्य गुणउक्तः तथाचोक्तं श्राव्यं नातिसमस्तार्थं काव्यं मधुरमिष्यतइति तत्प्रदर्शनार्थं लङ्कागतप्रभातवर्णनमधिकृत्याह अथेति अथानन्तरं कलानां निधौ चन्द्रमसि अस्तं पर्व्वतमासेदुषि गतवति यथा कस्मिंश्चित् पुण्यक्षयेणावसानमासे

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



दुषि भाषायां सदवसेति लिटः क्वसुरादेशः मन्दकान्ताविव्य स्तगमने पूर्व्वलिङ्गं दर्शयति रिपुकल्पैः पद्मैः प्रहासः विकाशः मित्रकल्पैः कुमुदैर्विषादः संकोचः समाललम्बे समालम्बितः ॥ १ ॥

अथेत्यादि । अथ गुणाः प्रदर्श्यन्ते यतः अलङ्कृतमपि काव्यं न काव्यं गुणवर्ज्जितं। गुणयोगस्ततोमुख्योगुणालङ्कारयोगयोः। वामनादिभिर्दशगुणामन्यन्ते ते तु श्लेषः प्रसादः समता माधुर्य्यं सुकुमारता। अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयइति अन्ये तु और्जित्यमर्थसौख्यञ्च गाम्भीर्य्यमर्थविस्तरः। संक्षेपः समितत्व ञ्च भाविकत्वं गतिस्तथा। रतिव्यक्तिस्तथा प्रौढिः प्रेयानथ सुश ब्दताइत्येतानप्यधिकान् गुणानाहुः। काव्यप्रकाशकृता तु माधु र्य्यौजः प्रसादाख्यास्त्रयस्तेन पुनर्दशेत्युक्तं तन्मते माधुर्य्यप्रकाशक एवायं सर्गआरभ्यते तथाचोक्तं कण्ठाभरणे शृङ्गारएव मधुरः स च प्रह्लादनोरसः। तन्मयं काव्यमाश्रित्य माधुर्य्यं प्रतितिष्ठतीति अत्र सर्गे प्रसादगुणोऽपि द्रष्टव्यः तत्र लङ्कागतप्रभातवर्णनं प्रस्तू यते। अथानन्तरं यथा पुण्यक्षयेण कश्चिदस्तं याति तथा कलानां निधौ चन्द्रे मन्दकान्तौ मन्दप्रभे अस्तं पर्व्वतमासेदुषि प्राप्तिषति रिपुकल्पैः पद्मैः प्रहासोविकाशः पक्षे प्रकृष्टहासः मित्रकल्पैः कुमु दैर्विषादः सङ्कोचः पक्षे विषण्णता समाललम्बे अथास्तमासेदुषीति श्लेषोऽत्र शब्दगुणः तथाचोक्तं गुणः सुश्लिष्टपदता श्लेषइत्युपदि श्यते। इति प्रसादोऽप्यत्रास्ति प्रसिद्धार्थपदत्वं यत् प्रसादोऽसौ नि गद्यतइति लक्षणं पद्मैः प्रहासइत्यत्र माधुर्य्यं गुणोयापृथकृपदता

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



काव्ये तन्माधुर्य्यमुदाहृतमिति न्यायात् आसेदुषीत्यत्र सुशब्दतापि व्युत्पत्तिः सुप्तिङा या तु प्रोच्यते सा सुशब्दतेति वचनात् पद्मैः प्रहासइत्यत्र समाधिरप्यस्ति समाधिः सोऽन्यवर्गाणां यदन्यत्रापि रोपणं प्रहासश्चेतनाधर्मः सचान्यत्राधिरोपितइति एवमन्यत्रापि गुणनिरूपणं कर्त्तव्यं ॥ १ ॥

दूरं समारुह्य दिवः पतन्तं भृगोरिवेन्दुं विहितोपकारं। बद्धानुरागोऽनु पपात तूर्णं तारागणः संभृतशुभ्रकीर्त्तिः ॥ २ ॥

ज०म० दूरमित्यादि। दूरमाकाशस्य भागमारुह्य पश्चात्तत एवाकाशात् भृगोरिव प्रपातादिव पतन्तमिन्दुं तारापतिमनु पश्चात् तारागणः विहितोपकारं तदुदयेन तारागणाप्यायनात्तद्बद्धानुरागः अस्तगमनकाले अनुगतरक्तभावः संभृता विपुलीकृता शुभ्रा निर्मला कीर्त्तिर्येन स तारागणः पपात यथा कस्मिंश्चित्स्वामिनि भृगोः पतति पश्चात्स्वामिभक्त्या भृत्यलोको बद्धानुरागः संभृतशुभ्रकीर्त्तिः पतति तद्वदिति ॥ २ ॥

भ० दूरमित्यादि। दिवआकाशस्य दूरं भागमारुह्य पश्चात्तत एव सकाशात् भृगोः प्रपाताद्यपर्व्वतोच्चभागादिव पतन्तमधस्ताद्गच्छन्तमिन्दुं विहितोपकारं तदुदये तारागणस्याप्यायनात्तारापतित्वाच्च तारागणस्तमनुपपात अनुजगाम तमनु

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



लच्यीकृत्य पपातेति वा कीदृशः बद्धानुरागः अस्तगमनकाले रक्तत्वात् सम्भृता उपचिता शुभ्रा निर्म्मला कीर्त्तिर्येन अन्योऽपि भार्य्यागणोऽनुरक्तः सन् पतिमनुगच्छन् निर्म्मलकीर्त्तिर्भवति अत्रोदारत्वमर्थगुणः आशयस्य यदुत्कृष्टत्वदुदारत्वमिष्यत इति लक्षणात् समत्वगुणोऽप्यत्र चन्द्रस्यास्तगमने ताराणामप्य स्तत्वात् तथाचोक्तं अनैयम्यं क्रमतया समत्वमभिधीयतइति प्रसादोऽप्यर्थगुणोऽत्र लोकप्रसिद्धार्थत्वात् तदुक्तं यत्तु प्राकच्यम र्थस्य प्रसादः सोऽभिधीयतइति ॥ २ ॥

क्व ते कटाक्षाः क्व विलासवन्ति प्रोक्तानि वा तानि ममेति मत्वा। लङ्काङ्गनानामवबोधकाले तुलाम नारुह्य गतोऽस्तमिन्दुः ॥ ३ ॥

क्वतइत्यादि। ये कटाक्षाः सविलासास्तिर्य्यग्दृष्टयः यानि ज॰म॰ च प्रोक्तानि जल्पितानि विलासवन्ति तदुभयं क्व मम विद्यते लङ्काङ्गनानान्तु मुखेन्दवः सकटाक्षाः सविलासाः जल्पिताश्च अतोयावन्न विबुध्यन्ते तावदपक्रमणं युक्तमिति मत्वा निरूप्य तुलामनारुह्य समानतामलब्ध्वा निःसंशयोवा भूत्वा तत्प्रबोध काले लङ्काङ्गनानामेवं गतोऽस्तमिन्दुः ॥ ३ ॥

क्वतेइत्यादि। मम ते प्रसिद्धाः विलासवन्तः कटाक्षाः क्व भ॰ तानि वा विलासवन्ति प्रहृष्टजल्पितानि क्व न सन्त्येवेत्यर्थः लङ्का स्त्रीणान्तु लङ्कामुखेन्दुषु तदुभयमप्यस्ति अतएव यावत्तदुदयो

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



न भवति तावदपक्रमणं युक्तमिति मत्वा तुलां तत्साम्यं अनारुह्य अप्राप्य लङ्कास्त्रीणां प्रबोधसमये जागरणकाले इन्दुरस्तंगतः विलासवन्तीति पुंनपुंसकविशेषणत्वेऽपि सामान्यत्वान्नपुंसकत्वं नपुंसकानपुंसकयोर्नपुंसकमेवेति श्रीपतिसूत्रेण वा नपुंसकत्वं तात्कालिकविशेषस्तु विलासोऽङ्गक्रियोक्तिषु । प्रसिद्धानुभूतार्थविषयतच्छब्दो यच्छब्दं नापेक्षत इति काव्यप्रकाशः अत्रौर्जित्यं गुणः और्जित्यं गाढबन्धनेति तल्लक्षणात् माधुर्य्यमप्यत्र पूर्व्ववत् सुकुमारतापि अनिष्ठुराक्षरप्रायं सुकुमारमिहेष्यत इति न्यायात् उदात्ततापि विलासवन्तीति श्लाघ्यविशेषणात् तदुक्तं श्लाघ्यैर्व्विशेषणैर्योगो यस्तु साम्यादुदात्ततेति गाम्भीर्य्यमप्यर्थगुणोऽत्र विलासादीनां शास्त्रादेव ज्ञानात् । तथाचोक्तं शास्त्रार्थं सव्यपेक्षत्वं गाम्भीर्य्यमभिधीयत इति ॥ ३ ॥

मानेन तल्पेष्वयथामुखीना मिथ्याप्रसुप्तैर्गमितत्रियामाः । स्त्रीभिर्न्निशातिक्रमविक्लवाभिर्दृष्टेऽपि दोषे पतयोऽनुनीताः ॥ ४ ॥

ज०म० मानेनेत्यादि । पतयस्तल्पेषु शयनीयेषु मानेनायथामुखीनाः परावृत्तमुखाः यथामुखसंमुखस्य दर्शनं खः परावृत्तत्वात् प्रतिबिम्बाश्रयवक्त्रेषु योषितां प्रतिबिम्बमिव मनोन प्रसादी भवतीत्येवं मिथ्याप्रसुप्तैरलीकनिद्राभिः गमितत्रियामाः प्रेरित प्रथमादिप्रहराः दृष्टेऽपि दोषे गोत्रस्खलितादौ स्त्रीभिरनु

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



नीतायतोनिशातिक्रमात्पर्य्यवसानात् विक्लवाविक्लवाख्या: ॥ ४ ॥

मानेनेत्यादि। स्त्रीभिर्दृष्टेऽपि दोषे गोत्रस्खलनादौ पत्यनु नयेन स्वस्वामनखिलादिदोषे ज्ञातेऽपि वा पतयोऽनुनीताः अनुनयकरणे हेतुमाह कीदृशीभिः निशाया अतिक्रमात् पर्य्यव सानात् विक्लवाभिः कीदृशाः पतयः चाटूक्तिपादपतनेनापि प्रियामप्रसन्नां बुद्धा मानेन तल्पेषु शय्यासु अयथामुखीनाः परावृत्तमुखाः किमियं करिष्यतीति ज्ञातुं मिथ्याप्रसुप्तैरलीक निद्राभिर्गमितरात्रयः अतिवाहितप्रहरत्रयादृत्यन्ये अयथा मुखीनाद्गति मुखस्यानतिक्रमः प्रियाभिमुखस्थितलक्षणोयथामुखं ततः स्वार्थे ईनः ततोनञ्समासः विद्यासागरस्तु यथामुखं संमुखं दृश्यते अस्मिन्निति ईनः पश्चान्नञ्सम्बन्धः यथाशब्दोऽभि मुखे वर्त्तते अव्ययानामनेकार्थत्वादित्याह स्वमतेऽपि तथा विका रसंधेत्यादावादिशब्दात् अन्ये तु यथामुखमिति सादृश्यनिपा तनाच्चिन्त्यमित्याहुः अत्र कान्तिरर्थगुणः दोषे दृष्टेऽपि पत्यनु नयात् तथाचोक्तं कान्तिर्दीप्तरसत्वं स्यादिति समाधिरप्यत्रा र्थगुणः मिथ्याप्रसुप्तत्वात् व्याजावलम्बनं यत्तु स समाधिरिति स्मृतइति ॥ ४ ॥

ईर्ष्याविरुग्णाः स्थिरबद्धमूलानिरस्तनिःशेषशुभ प्रतानाः। आप्यायितानेत्रजलप्रसेकैः प्रेमद्रुमाः संरु रुहुः प्रियाणां ॥ ५ ॥



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ज०म० ईर्ष्याविरुग्णाइत्यादि। प्रियाणां प्रेमद्रुमाः प्रेमाणि द्रुमा इव स्थिरं निश्चलं बद्धमूलं उत्पत्तिकारणं येषां ते ईर्ष्या विरुग्णाः अतएव निरस्ताः निःशेषाः शुभाएव हसितजल्पिता दयः प्रतानाः शाखायेषां ते प्रसादनानन्तरं नेत्रजलप्रसेकै राप्यायिताः संरुरुहुः पुनर्नवीभूताः स्थिरबद्धमूलत्वात्॥॥ ५॥

भ० ईर्ष्येत्यादि। प्रियाणां प्रेयसां प्रेयसीनां वा एकशेषादुभ येषां प्रेमाणि द्रुमाइव संरुरुहुः पुनः पल्लविताः यतोनेत्र जलप्रसेकैः आप्यायिताः प्रीणिताः स्थिरबद्धमूलाः स्थिरं निश्चलं बद्धं सम्बद्धं मूलमुत्पत्तिकारणं येषां कीदृशाः पूर्व्वमीर्ष्यया परो त्कर्षाचमया विरुग्णाभग्नाः अतएव निरस्तानिःशेषाः शुभा एव हसितजल्पितादयएव प्रतानाः शाखास्तेषां विस्तारोवा येषां अन्येऽपि स्थिरबद्धमूलावृक्षाभग्नाअपि हतप्रतानाअपि जलसेकैराप्यायिताः सन्तः संरोहन्तीति भावः। प्रौढिरत्रार्थगुणः विवक्षितार्थनिर्व्वाहः काव्ये प्रौढिरिति स्मृता प्रेम्णोद्रुमत्वनिर्व्वा हात्॥ ५॥

ततः समाशङ्कितविप्रयोगः पुनर्नवीभूतरसोऽवि तृष्णः। स्मरस्य सत्त्वं पुनरुक्तभावं नावर्त्तमानस्य विवेद लोकः॥ ६॥

ज०म० ततइत्यादि। प्रेमद्रुमरोहणानन्तरं लोकः समाशङ्कित विप्रयोगोविप्रयोगोऽस्माकमासन्नवर्त्तीति पुनर्नवीभूतरसः अभि

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



नवीभूतसुरतेच्छः स्मरस्य कामस्य वर्त्तमानस्य पुनःपुनः प्रव र्त्तनात् अवितृष्णः साभिलाषः सन्तमपि विद्यमानमपि पुनरुक्त भावं पौनःपुन्यं न विवेद आशङ्कितप्रयोगत्वादपूर्व्वमिव ज्ञात वानित्यर्थः॥ ६ ॥

ततइत्यादि। प्रेमसंरोहाद्धेतोरनन्तरं वा आवर्त्तमानस्य पुनःपुनः प्रवर्त्तमानस्य स्मरस्य कन्दर्पस्य पुनरुक्तभावं पौनःपुन्यं सन्तं विद्यमानमपि लोकोन विवेद न ज्ञातवान् यतोरात्रिग मनेनाशङ्कितविरहः अतएव पुनर्नवीभूतसुरतेच्छः अतएवावि तृष्णः तृष्णाविगमरहितः पुनस्तृष्णोदयात् अधितृष्णइति पाठे अधिकतृष्णइत्यर्थः अत्रापि कान्तिगुणोदीप्तरसत्वात् प्रेयोऽप्यस्ति प्रेयस्त्वर्थेष्वभीष्टता अभीष्टस्य कामस्य प्रतिपादनात्॥ ६ ॥ भ०

वृत्तौ प्रकाशं हृदये कृतायां सुखेन सर्व्वेन्द्रियसम्भ वेन। सङ्कोचमेवासहमानमस्थादशक्तवदञ्चित मानि चक्षुः॥ ७॥

वृत्तावित्यादि। सुरतकाले श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानां इन्द्रि याणां शब्दस्पर्शरूपरसगन्धग्रहणात् सर्व्वेन्द्रियसम्भवं सुखं अथवा सर्व्वमिन्द्रियं यत्रेति सर्व्वेन्द्रियः कायः तत्सम्भवं सुखं सर्व्वेन्द्रि यसम्भवं सुखं तथा ह्यालिङ्गनचुम्बनदर्शनच्छेदनेषु पुरुषोपसृष्टेषु तत्र प्रयुज्यमाने काये सुखमुत्पद्यते तेन सुखेन हृदये चेतसि प्रकाशं स्पष्टं वृत्तौ कृतायां चक्षुर्व्वञ्चितमिवात्मानं मन्यमानं ज० म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



आत्ममानेखस्येति णिनिः सङ्कोचमेव निमीलनमेवाख्यात् अनु ष्ठितवत् असहमानमिति सर्व्वेन्द्रियसम्भवस्य सुखस्य हृदये वृत्तिं सोढुमपारयदित्यर्थः अशक्तवत् यथा कश्चिदसमर्थोऽन्य सम्भवां सम्पदं सोढुमसहमानः सङ्कोचमनुतिष्ठति॥ ७॥

भ० वृत्तावित्यादि। सुखेन हृदये चेतसि प्रकाशं स्पष्टं वृत्तौ स्थितौ कृतायां सत्यां चक्षुः कर्तृ सङ्कोचं निमीलनमपि असह मानमेवाख्यात् कुचसंकोचे इत्यस्माद्दज् यतोवञ्चितमानि सङ्कोचे सति क्षणमपि रूपादर्शनेनात्मानं वञ्चितमिव मन्यते अशक्त वत्यथा असमर्थं चक्षुर्निष्पन्दं भवति तथा प्रियाङ्गे निष्पन्द मित्यर्थः यद्वा सुखस्य हृदि वृत्तौ सत्यां हृदयाप्रवेशेन वञ्चित मिवात्मानं मत्वा चक्षुः सङ्कोचं मुद्रितमेवाख्यात् असहमानं हृद यस्य सुखं सोढुमसमर्थमिव अशक्तवत् यथा कश्चिदसमर्थोऽन्य सम्पदं असहमानः सङ्कोचितएव तद्वत् यद्वा अशक्तवत् यथा असमर्थं चक्षुरुन्मीलनाक्षमं सत् मुद्रितमेव तिष्ठति तद्वत् सुरतान्ते नेत्रनिमीलनस्योत्प्रेक्षेयं कुचकौटिल्ये खेलने इत्यस्मात् पचादित्वादनि कुटादित्वाद्गुणाभावः सुखेन कीदृशेन सर्व्वेन्द्रिय सम्भवेन रतिकाले स्वस्वविषयसम्बन्धैः सर्व्वैरिन्द्रियैर्युगपदु त्पादितेन यद्वा सर्व्वाणि इन्द्रियाणि यस्य स सर्व्वेन्द्रियः कायः तेनोत्पादितेन प्रौढिरत्र गुणः विशिष्टा भणितिर्या स्यात् प्रौढिं तां कवयोविदुः। उचितनिमलीनस्यासहनजन्यत्वात् पूर्व्ववन्मा धुर्य्यमपि शब्दगुणोऽत्र पृथक्पदत्वात्॥ ७॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



पीने भटस्योरसि वीक्ष्य भुग्नांस्तनुत्वचः पाणिरुहान् सुमध्या । इच्छाविभङ्गाकुलमानसत्वाद्भर्त्रे नखेभ्यश्च चिरं जुजूरे ॥ ८ ॥

पीनेइत्यादि । काचित्सुमध्या सुमध्यमा नखैः व्यापद्यमाना अहमप्यस्य क्षतं विधास्यामीति भटस्योरसि पीने कठिने भुग्नान् कुञ्चितान् भग्नानिति पाठान्तरं पाणिरुहान्नखान्वीक्ष्य भर्त्रे नखेभ्यश्च चिरं जुजूरे क्रुध्यति स्म कथमस्य वक्षः कठिनं मम च नखास्तनुत्वचोन कठिनाइति पूरीजूरीहिंसावयोहान्योरित्यस्यात्मनेपदिनो रूपं क्रुधद्रुहेत्यादिना सम्प्रदानसंज्ञा कस्माज्जुजूरइत्याह इच्छाविभङ्गाकुलमानसत्वात् चिकीर्षिताकरणेनाकुलचित्तत्वात् ॥ ८ ॥ ज०म०

पीनेइत्यादि । कापि सुमध्या दयितेन नखैः खण्ड्यमाना अहमप्यस्य क्षतं विधास्यामीति मत्वा भटस्य योधस्य पीने कठिने उरसि दत्तान् पाणिरुहान् नखान् मृदुत्वात् भग्नान् कुण्ठितान् भुग्नानिति पाठे कुटिलान् वीक्ष्य दृष्ट्वा चिकीर्षाविभङ्गेन व्याकुलचित्ततया भर्त्रे नखेभ्यश्च चिरं चिरकालं व्याप्य जुजूरे क्रुध्यति स्म ञजूरीयीज्यानौवधे अनेकार्थत्वात् कोपेऽपि यस्मै दित्से त्यादिना संप्रदानत्वं शास्त्रव्यपेक्षत्वं गाम्भीर्य्यमत्र गुणः कामशास्त्रे मानावसाने स्थानविशेषे नखक्षतदानस्योक्तत्वात् ॥ ८ ॥ भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



स्रस्ताङ्गचेष्टोविनिमीलिताक्षः स्वेदाम्बुरोमोद्गमगम्यजीवः। अशेषनष्टप्रतिभापटुत्वोगाढोपगूढोदयितैर्ज्जनोऽभूत्॥ ९॥

ज०म० स्रस्ताङ्गचेष्टइत्यादि। दयितैर्गाढोपगूढः आलिङ्गितस्त्रीजनः सन् अशेषनष्टप्रतिभापटुत्वोऽभूत् अशेषं नष्टं प्रतिभायाबुद्धेः पटुत्वं यस्येति एवञ्च कृत्वा स्रस्ताङ्गचेष्टोऽपगतकायव्यापारः विनिमीलिताक्षः सुखानुभवान्निमीलितलोचनः मृतस्तर्हीत्याह स्वेदाम्बुरोमोद्गमगम्यजीवः स्वेदाम्बुरोमोद्गमाभ्यां लिङ्गाभ्यां गम्यमानसंज्ञः॥ ९॥

भ० स्रस्तेत्यादि। स्त्रीजनोदयितैर्गाढालिङ्गितः सन् अशेषनष्टप्रतिभापटुत्वोऽभूत् अशेषं समस्तमेव नष्टं प्रतिभायाः बुद्धेः पटुत्वं यस्य अतएव स्रस्ताङ्गचेष्टः अपहृतदेहव्यापारः सुखानुभवात् विनिमीलितलोचनः स्वेदजलरोमाञ्चाभ्यां गम्यमानजीवः जनशब्दोऽत्र स्त्रीजातिवाचकः तेन दयितैरित्यत्र वहुत्वमदुष्टं गाढालिङ्गनकारित्वेन गौरवे वहुत्वं वा कान्तिरत्र गुणादीप्तरसत्वात्॥ ९॥

तमः प्रसुप्तं मरणं सुखं नु मूर्च्छा नु माया नु मनोभवस्य। किं तत्कथं वेत्युपलब्धसंज्ञा विकल्पयन्तोऽपि न संप्रतीयुः॥ १०॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



तमइत्यादि। कामुकाअपि सुरतावस्थायाउत्तरकालं उपलब्धसञ्ज्ञा विकल्पयन्ति तमोनु किमन्धकारं प्रसुप्तं नु किं प्रकर्षेण सुप्तं मरणं नु मरणावस्था नु सुखन्नु मूर्च्छा नु मनोभवस्य वा मायेति किं तद्भवति कथं वा केन प्रकारेण तत्स्यात् इत्येवं विकल्पयन्तोऽपि न सम्प्रतीयुः न परमार्थं ज्ञातवन्तइत्यर्थः ॥ १० ॥ ज॰म॰

तमइत्यादि। कामुकाअपि सुरतावस्थायाउत्तरकालमुपलब्धचैतन्याः सन्तोविकल्पयन्तीत्याह किं तमः प्रागन्धकारं वृत्तं वस्त्वन्तरानुपलम्भात् प्रसुप्तं वा प्रसुप्तिर्यत्र स्वप्नोऽपि न दृश्यते मरणं वा अचेष्टत्वात् सुखं वा अनुभूयमानत्वात् मूर्छा मोहोवा कृतस्याप्यस्मरणान्मनोभवस्य कामस्य माया वा किन्तद्भवत् केन प्रकारेण वेति एवं विकल्पयन्तोऽपि न संप्रतीयुः परमार्थं न निश्चितवन्तः पूर्ववदत्र माधुर्य्यं गुणः ॥ १० ॥ भ॰

वक्षस्तनाभ्यां मुखमाननेन गात्राणि गात्रैर्घटयन्नमन्दं। स्मरातुरोनैव तुतोष लोकः पर्य्याप्तता प्रेम्णि कुतोविरुद्धा ॥ ११ ॥

वक्षइत्यादि। वक्षोमुखगात्राणि स्वानि स्तनादिभिः स्त्रीसम्बन्धिभि र्घटयन्संश्लेषयन् अमन्दं दृढं ङमोर्ह्रस्वादचिङमुट् स्मरातुरोलोकोनैव तुतोष तुष्टिं न जगाम यतः पर्य्याप्तता प्रेम्णि कुतोविरुद्धा नैव तस्याविरुद्धत्वात् ॥ ११ ॥ ज॰म॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ॰ वघ इत्यादि। स्मरातुरो लोकः कामार्त्तोजनः स्वकीयं हृद यादि स्त्रीस्तनादिना अमन्दं दृढं घटयन् संश्लेषयन् नैव तुतोष न तृप्तिं जगाम कुत इत्याह प्रेम्णि पर्य्याप्तता इच्छाविच्छेदः कुतो भवेत् यतः सा विरुद्धा कान्तिरत्रापि गुणः ॥ ११ ॥

स्वस्ताङ्गयष्टिः परिरभ्यमाणा संदृश्यमानाप्युपसंहृ ताक्षी। अनूढमाना शयने नवोढा परोपकारैकरसैव तस्थौ ॥ १२ ॥

ज॰म॰ स्वस्ताङ्गयष्टिरित्यादि। काचिन्नवोढा परिरभ्यमाणा पत्या आलिङ्ग्यमाना स्वस्ताङ्गयष्टिः न प्रतीपमालिङ्गति संदृश्य मानापि मुखमुन्नमय्य उपसंहृताक्षी निमीलितलोचना न प्रतीपं पश्यति मानं नैवाचरतीति अगूटमानापि असंहृतमानापि एवंविधापि सती परोपकारैकरसैव तस्थौ भर्तुरुपकारैकाभि प्रायैव अवस्थिता नात्मोपकाराय ॥ १२ ॥

भ॰ स्वस्ताङ्गयष्टिरित्यादि। काचिन्नवोढा शयने शय्यायां परो पकारैकरसा पत्युपकारमात्राभिप्रायैव तस्थौ न तु स्वोपका राय यतः परिरभ्यमाणा दयितेनालिङ्ग्यमाना स्वस्ताङ्गयष्टिर्न प्रत्यालिङ्गनं करोति नापि प्रतीपा मुखमुन्नमय्य संदृश्यमानापि उपसंहृताक्षी निमीलितनेत्रा न पश्यति मानेनैवं करोतीति चेदाह अनूढमाना अधृतमाना लज्जयैव तथा करोतीत्यर्थः। पूर्ब्बवन्माधुर्य्यादिगुणोऽत्र बोध्यः एवमग्रेऽपि ॥ १२ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



आलिङ्गितायाः सहसा त्रपावांस्त्रासाभिलाषानुगतोरतादौ विश्वासितायारमणेन बद्धा विमर्द्दरम्योमदनोबभूव॥१३॥

आलिङ्गितायाइत्यादि। कस्याश्चिद्वध्वारतात्प्राक् रमणेन सहसा तत्क्षणं आलिङ्गितायास्त्रपावान्मदनोबभूव रतादौ रतारम्भे त्रासाभिलाषाभ्यामनुगतोबभूव विश्वासितायाः शनैर्विश्वासं कारितायाः विमर्द्दरम्योबभूव त्रासाभावात्॥१३॥ ज॰म॰

आलिङ्गितायाइत्यादि। रतादौ रतात्प्राक् रमणेन कान्तेन सहसा अकस्मादालिङ्गितायाः कस्याश्चिद्वध्वामदनस्त्रपावान् लज्जावान् त्रासेनाभिलाषेण चानुगतश्च बभूव किम्वा आलिङ्गनेन सहसा त्रपावान् रतादौ सुरतारम्भे त्रासाभिलाषाभ्यामनुगतः पश्चात् शनैःशनैर्विश्वासितायाविश्वासं प्रापितायाः तस्या एव मदनोविमर्द्देन रम्योबभूव त्रासाभावात्॥१३॥ भ॰

सामोन्मुखेनाच्छुरिता प्रियेण दत्तेऽथ काचित्पुलकेन भेदे। अन्तःप्रकोपापगमाद्विलोला वशीकृता केवलविक्रमेण॥१४॥

सामोन्मुखेनेत्यादि।अथ काचित्कोपान्मानवती प्रियेण सामोन्मुखेन सामपरेण प्रसादयता आच्छुरिताख्येन नखकर्म्मणा ज॰म॰



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



संस्पृष्टा सती पुलकेन रोमाञ्चेन भेदे उद्गमे दत्ते सति अन्तः प्रकोपस्यापगमात् विलोला विलोलबुद्धिः केवलविक्रमेण हठाद्ग्रहणेनैव वशीकृतोपभुक्तेत्यर्थः ॥ १४ ॥

भ० सामोन्मुखेनेत्यादि। काचिन्मानिनी सामोन्मुखेन प्रसादनोद्यतेन प्रियेणाङ्कुरिता आङ्कुरिताख्येन नखकर्म्मणा स्पृष्टा अथानन्तरं पुलकेन रोमाञ्चेन भेदे उद्गमे दत्ते सति अन्तःप्रकोपस्यापगमात् विलोला चञ्चलबुद्धिः सासुरते साभिलाषा वा केवलविक्रमेण हठाद्ग्रहणमात्रेण वशीकृता उपभुक्ता भावं ज्ञात्वा प्रसादनान्तरमकृतप्रसादनान्तरेण प्रियेण यद्गण्डस्थलान्तरे अङ्गुष्ठाग्रनखेन ताड्यते तदाङ्कुरितमुच्यते ॥ १४ ॥

गुरुर्दधाना परुषत्वमन्या कान्तापि कान्तेन्दुकराभिमृष्टा। प्रह्लादिता चन्द्रशिलेव तूर्णं क्षोभात्स्रवत्स्वेदजला बभूव ॥ १५ ॥

ज०म० गुरुरित्यादि। अन्यापि काचित् स्त्री कान्ता कमनीयरूपा गुरुः धीरा वोतोगुणवचनादिति वा ङीप् न भवति दधाना परुषत्वं नैष्ठुर्य्यं कान्तेन भर्त्रा इन्दुनेव कराभिमृष्टा सती प्रह्लादिता सुखिता क्षोभात् चेतसोविकारात् तूर्णं स्रवत्स्वेदजला बभूव चन्द्रशिलेव चन्द्रमणिरिव सा गरीयसी कान्ता परुषत्वं काठिन्यं दधाना इन्दुना कराभिमृष्टा प्रह्लादिता सुखितेव क्षोभात्स्वप्रकृतिविकारात् स्रवज्जला भवति ॥ १५ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



गुरुरित्यादि। अन्या कान्ता परुषत्वं नैष्ठुर्य्यं दधानापि कान्ते भ० नेन्दुनेव कान्तस्य चन्द्रस्य वा करेण हस्तेन किरणेन चाभिमृष्टा सती ततः प्रह्लादिता आनन्दिता च सती चोभाच्चेतसोविकारात् तूर्णं स्रवत्स्वेदजला बभूव चन्द्रशिलेव चन्द्रकान्तमणिरिव कीदृशी गुरुर्गौरवान्विता चन्द्रशिलापि हि गुरुत्वाख्यगुणयुक्ता कान्ता मनोहरा परुषत्वं काठिन्यं दधानापि कान्तेन कमनीयेन इन्दुना कराभिमृष्टा प्रह्लादिता प्रकाशिताच सती चोभात् स्वप्रकृतिविपर्य्ययात् स्रवज्जला भवति गुरुरिति गुणाद्वोतइति पक्षे ईपप्रत्ययाभावः॥ १५॥

शशाङ्कनाथापगमेन धूम्रां मूर्च्छापरीतामिव निर्व्विवेकां। ततः सखीव प्रथितानुरागा प्राबोधयत् द्यां मधुरारुणश्रीः॥ १६॥

शशाङ्केत्यादि। ततोऽनन्तरं यथा काचित्स्त्री नाथस्य भर्त्तु ज०म० रपगमेन वियोगेन धूम्रा मलिना मूर्च्छापरीता निश्चेतना अतएव निर्विवेका विवेक्तुमशक्ता सती सख्या प्रकाशितस्नेहया प्रबोध्यते तद्वद्यामाकाशं शशाङ्कनाथस्यापगमेन अस्तगमनेन धूम्रां धूसरतां गतां निर्विवेकां अविद्यमानविशेषां अरुणश्रीः आदित्यलक्ष्मीरिति मधुराभिनवा प्रथितानुरागा प्राबोधयत्प्र काशितवती॥ १६॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० अथाङ्केत्यादि। ततोऽनन्तरं अरुणस्य सूर्य्यस्य तत्सारथेर्वा श्रीर्द्यामाकाशं प्राबोधयत् प्रकाशितवती सखीव यथा सखी काञ्चित् स्त्रियं प्रबोधयति कीदृशीं द्यां नाथस्य चन्द्रस्यापगमेन धूम्रां धूसरां स्त्री च नाथस्य भर्त्तुरपगमनेन विरहेण धूम्रा मलिना भवति मूर्च्छापरीतामिव अचेतनामिव सापि स्त्री मोह परिगता भवति निर्विवेकां न विद्यते विवेकोयत्र तादृशीं सापि स्त्री सदसद्विवेकशून्या सख्या प्रबोध्यते अरुणश्रीः कीदृशी प्रथितानुरागा प्रकाशितरक्तभावा मधुरा प्रिया अभिनवत्वात् सखी च प्रकाशितस्नेहा मधुरा प्रियभाषिणी च भवति॥ १६॥

अवीततृष्णोऽथ परस्परेण क्षणादिवायातनिशाव सानः। दुःखेन लोकः परवानिवागात्समुत्सुकः स्वप्ननि केतनेभ्यः॥ १७॥

ज०म० अवीत्यादि। अथानन्तरं लोकः परस्परेणान्योन्येन दयितो दयितया दयितापि दयितेन अवितृष्णः अनपगतसम्भोगाभिलाषः अतएव क्षणादिव द्रुतमिवायातं निशावसानं यस्य समुत्सुकः उत्कण्ठितः परवानिव पराधीनइव स्वप्ननिकेतनेभ्यः वासगृहेभ्योदुःखेन अगात् निर्गतवान्॥ १७॥

भ० अवीतेत्यादि। अथानन्तरं लोकः समुत्सुकः समुत्कण्ठितोऽपि परवान् पराधीनइव कार्य्यगौरवात् स्वप्ननिकेतनेभ्यः शयन

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



गृहेभ्यो दुःखेनागात् निर्गतवान् यतः परस्परेण अन्योन्येन दयितोदयितया दयिता दयितेन अवीततृष्णः अविगतसम्भोगाभिलाषः अतएव क्षणादिव द्रुतमिवागतं निशावसानं यस्य स तथा सुखेन कालवञ्चलाज्ञानात्॥ १७॥

अर्द्धोत्थितालिङ्गितसन्निमग्नो रुद्धः पुनर्यान् गमनेऽनभीप्सुः। व्याजेन निर्याय पुनर्निवृत्तस्त्यक्तान्यकार्य्यः स्थितएव कश्चित्॥ १८॥

अर्द्धोत्थितेत्यादि। शयनात् अर्द्धमुत्थितं यस्येत्यर्द्धोत्थितः आहिताग्न्यादिषु द्रष्टव्यः शयनस्य वा अर्द्धादुत्थितइति योज्यं स चालिङ्गितोदयितया सन्निमग्नः शयने सुप्तः पुनर्यान्निर्गच्छन् रुद्धोविधृतः गमने अनभीप्सुरपि निर्य्याय निमित्तव्याजेन पुनर्निवृत्तः प्रविष्टस्त्यक्तान्यकार्य्यः स्थितएव कश्चित्कामी॥ १८॥ ज॰म॰

अर्द्धोत्थितेत्यादि। कश्चित् कामुकः शयनादर्द्धोत्थितोदयितया आलिङ्गितः सन् पुनः सन्निमग्नः सुप्तः पुनरपि यान् गन्तुमुद्यतः सन् दयितया रुद्धोवारितः अतएव गमनेऽनभीप्सुरिच्छारहितोऽपि गुर्व्वादिभयान्निर्याय निर्गत्य व्याजेन रोगादिच्छलेन पुनर्निवृत्तःसन् कार्य्यान्तरं त्यक्ता स्थितएव शयनगृहइत्यर्थात् अर्द्धोत्थितइति शयनादर्द्धमुत्थितं यस्येत्यग्न्याहितादित्वात् क्तान्तस्य विभाषया परनिपातइति परः स्वमते नियमानिर्देशा भ॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



दविरोधएव यद्वा अर्द्धेनोत्थितइति विग्रहः। अथनस्यार्द्धादु त्थितइति वा अर्द्धोत्थितः सन् आलिङ्गितः सन् सन्निमग्नइति क्रमसमासः॥ १८॥

तालेन सम्पादितसाम्यशोभं शुभावधानं स्वरबद्ध रागं। पदैर्गतार्थं नृपमन्दिरेषु प्रातर्ज्जगुर्म्मङ्गलव त्तरुण्यः॥ १९॥

ज०म० तालेनेत्यादि। नृपमन्दिरेषु रावणादिराजवेश्मसु प्रभात काले तरुणीमङ्गलवत् मङ्गलोपेतं जगुः गायन्ति स्म तालेन क्रियाकालमानेन संपादिता साम्यशोभा यत्र गायनक्रियायां शुभावधानं शोभनमवधानं चित्तैकाग्रता यत्र स्वरबद्धरागं षड्जादिभिः स्वरैर्व्वद्धोग्रामरागोयत्र पदैः सुप्तिङन्तैर्गतार्थं परिच्छिन्नार्थं निरर्थकपदरहितमित्यर्थः अनेन स्वरगत पदगतं लयगतमवधानगतमिति चतुर्व्विधं गीतमाख्यातं॥ १९॥

भ० तालेनेत्यादि। नृपमन्दिरेषु राजगृहेषु प्रातः प्रभातसमये तरुणीमङ्गलयुक्तं यथा स्यात्तथा जगुर्गायन्ति स्म तालेन चच्चत्पु टादिना सम्पादिता साम्यस्य लयस्य शोभा यत्र गानक्रियायां तालः कालक्रियामानं लयः साम्यमथास्त्रियामित्यमरः साम्यं नृत्यगीतवाद्यानां समत्वमित्यर्थः शुभं शोभनमवधानं चित्तैका ग्रता यत्र स्वरैः षड्जादिभिर्व्वद्धोऽनुगतोरागोयत्र पदैर्विभक्त्य

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



न्तैर्गतः परिछिन्नोऽर्थोयत्र निरर्थकरहितमित्यर्थः तेन स्वरगतं लयगतं पदगतमवधानगतञ्चेति चतुर्विधं गीतमुक्तं नृपशब्दो राजनि रूढोरावणादिष्वपि प्रवर्त्तते॥ १९॥

दुरुत्तरे पङ्कइवान्धकारे मग्नं जगत्सन्ततरश्मिरज्जुः। प्रनष्टमूर्त्तिप्रविभागमुद्यन् प्रत्युज्जहारेव ततो विवस्वान्॥ २०॥

दुरुत्तरइत्यादि। अन्धकारे पङ्कइव दुरुत्तरे दुःखेनोत्ती- ज०म० र्य्यतइति मग्नं प्रविष्टं जगद्यतः प्रनष्टमूर्त्तिप्रविभागं प्रनष्टः स्थावरजङ्गममूर्त्तीनां प्रविभागोयस्मिन् तद्विवस्वानुद्यन् उद्गच्छन् सन्ततरश्मिरज्जुः प्रविततारश्मयोमयूखाएव रज्जवोयेन सः प्रत्युज्जहारेव उद्धृतवानिव ततइत्यन्धकारात्॥ २०॥

दुरुत्तरइत्यादि। विवस्वान् सूर्य्यउद्यन् उद्गच्छन् दुःखेनो- भ० त्तरितुं शक्ये पङ्के इवान्धकारे मग्नं जगत् ततोऽन्धकारात् प्रत्युज्जहारेव उद्धृतवानिव कीदृशोविवस्वान् सन्तताविस्तृता रश्मयोरज्जवइव येन तादृशः अन्योऽपि मग्नं वस्तु रज्जुभिरुद्धरति जगत् कीदृशं प्रनष्टोऽदृश्यः स्थावरजङ्गममूर्त्तीनां प्रविभागोयत्र तादृशमन्धकारमग्नत्वात् दुरुत्तरइति दुःखेनोत्तीर्य्यते यदिति ईषद्दुःसोरिति कर्म्मणि खल् उद्यन्निति इनः शतरि यिणोऽच्यणाविति यत्वं॥ २०॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



पीतौष्ठरागानि हृताञ्जनानि भास्वन्ति लोलैरलकै र्मुखानि । प्रातः कृतार्थानि यथा विरेजुस्तथा न पूर्व्वे द्युरलङ्कृतानि ॥ २१ ॥

ज०म० पीतौष्ठरागानीत्यादि । मुखानि वधूनामित्यर्थात् यथा प्रातः प्रभाते विरेजुः तथा पूर्व्वेद्युः पूर्व्वस्मिन्नहनि अलङ्कृतानि न रेजुः तेषामकृतार्थत्वात् तानि पुनः कृतार्थानि कृतकार्य्याणि यतो दयितैः पीतौष्ठरागाणि ओष्ठचुम्बनात् हृताञ्जनानि चक्षुषोरपि चुम्बनात् अपगतकज्जलानि लोलैराकुलैरलकैः कचग्रहाकर्षणात् भास्वन्ति दीप्तिमन्ति ॥ २१ ॥

भ० पीतौष्ठेत्यादि । मुखानि वधूनामित्यर्थात् प्रातःकाले यथा विरेजुः शुशुभिरे न तथा पूर्व्वेद्युः पूर्व्वस्मिन् दिवसे अलङ्कृतानि कृतसाधनान्यपि विरेजुः अकृतार्थत्वेन तादृगुल्लासाभावात् प्रातस्तु कृतकार्य्याण्येव यतोदयितैः पीतौष्ठरागानि ओष्ठचुम्बनात् पीत ओष्ठरागोयत्र हृताञ्जनानि आनन्दाश्रुपतनाच्चक्षुषोश्चुम्बनाद्वा अपगतकज्जलानि कामशास्त्रे नेत्रचुम्बनमभिहितं तथाहि नयनयुगकपोलं दन्तवासोमुखान्तः स्तनजघनललाटं चुम्बनस्थानमाहुरिति लोलैः करेण कराकर्षणात् चञ्चलैः अलकैश्चूर्णकुन्तलैर्भास्वन्ति शोभमानानि ॥ २१ ॥

प्रजागराताम्रविलोचनान्तानिरञ्जनालक्तकपत्रलेखाः । तुल्याइवासन् परिखेदतन्व्योवासच्युताः सेवितमन्मथाभिः ॥ २२ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



प्रजागरादित्यादि। भर्तृभिः सहैकत्र यच्छयनं सहवासः तस्मा च्च्युताः काश्चित् स्त्रियः सेवितमन्मथाभिः अनुष्ठितसुरताभिः तुल्यादिवासन् यतः प्रजागराताम्रविलोचनान्ताः दयितागमन प्रतीक्षणाद्यः प्रजागरस्तेन ताम्रनेत्रपर्य्यन्ताः नायातइति गृही तप्रसाधनतया निरञ्जनालक्तकपत्रलेखाः यदिवा अन्यत्र शयित इति रोदनात् निरञ्जनाः चित्तोन्माथादितस्ततः पादविक्षे पात् विगतालक्तकाः शयने प्रतिक्षणमुद्वर्त्तनपरिवर्त्तनात्क पोलादिभ्योनिष्पत्रलेखाइति खेदाच्च तन्व्यः कृशाङ्ग्यः॥ २२॥ ज॰म॰

प्रजागरादित्यादि। कान्तैः सहैकत्र शयनं वासस्तस्माच्च्युताः काश्चित् स्त्रियः सेवितमन्मथाभिरनुष्ठितसुरताभिस्तुल्यादिव आसन् कीदृश्यः दयितस्यागमनप्रतीक्षणाद्यः प्रजागरस्तेना ताम्रेविलोचनान्तोयासां उपभुक्तानामपि सुरतासक्तत्वादेव प्रजागरः निरञ्जनानिरलक्तकानिष्पत्रलेखास्च विरहेण प्रसाध नाभावात् किम्वा रोदनान्निरञ्जनाः चित्तोन्मादादितस्ततः पाद विक्षेपेण निरलक्तकाः शयने मुहुः परिवर्त्तनान्निष्पत्रलेखाः उपभुक्ता अपि चुम्बनादानन्दाश्रुपाताद्वा निरञ्जनाविपरीत सुरतान्निरलक्तकाः चुम्बनताडनाभ्यां कपोलयोस्तनयोश्च निष्प त्रावलीकाभवन्ति परिखेदात् विरहदुःखात् पक्षे सुरताम र्द्दात् कृशाङ्ग्यः जागर्त्तेर्घञि अलि वा जाग्रोऽणवीनिति गुणे जागरः सेमक्तात्सरोरिति अप्रत्यये स्त्रीत्वप्रसङ्गात् किम्वा अप्रत्ययेऽभिधानं नियामकमित्युक्तेः स्त्रीत्वाविवक्षा केचित्तु अप्र भ॰



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



त्वयान्तस्य स्त्रीत्वात प्रजागराताम्रविलोचनान्तादिति समस्त पदं पठन्ति तन्निरर्थकं जागर्य्या जागरा द्वयोरित्यमरवचनात् ॥ २२ ॥

आवद्धनेत्राञ्जनपङ्कलेखस्ताम्बलरागं वहुलं दधानः। चकार कान्तोऽप्यधरोऽङ्गनानां सहोषितानां पतिभिर्लघुत्वं ॥ २३ ॥

ज०म० आवद्धेत्यादि। कासाञ्चिदङ्गनानां पतिभिः सहोषितानामप्य धरः लघुत्वं दौर्भाग्यं चकार सूचितवानित्यर्थः यतस्ताईप्सितसु रताप्राप्ता रुदितास्ततस्य वद्धोलग्नोनेत्राञ्जनपङ्कलेशोयस्य सोऽ धरोदयितैरपीतत्वाच्च वहुलं ताम्बूलरागं दधानः कान्तोऽपि लघुत्वं चकार ॥ २३ ॥

भ० आवद्धेत्यादि। कासाञ्चिदङ्गनानां पतिभिः सहोषितानां स्वभावतः कान्तोऽपि अधरोलघुत्वं चकार दौर्भाग्यं सूचितवानि त्यर्थः अनुपभुक्तत्वात् अधरः कीदृशः रोदनादावद्धोलग्नोनेत्रा ञ्जनपङ्कस्य लेशोऽल्पभागोयत्र तादृशः दयितैरपीतत्वाद्वहुलं प्रचुरं ताम्बूलरागं दधानः ॥ २३ ॥

चक्षूंषि कान्तान्यपि साञ्जमानि ताम्बूलरक्तञ्च सरागमोष्ठं। कुर्व्वन् सवासञ्च सुगन्धि वक्त्रं चक्रे जनः केवलपक्षपातं ॥ २४ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



चक्षूंषीत्यादि। कान्तान्यपि शोभनान्यपि चक्षूंषि विकचोत्पलद्युतित्वात् साञ्जनानि कुर्व्वन् स्त्रीजनः प्रातर्गृह्यमाणप्रधानत्वात् सरागं चोष्ठं स्वभावतोविम्बफलाकारत्वात् ताम्बूलरक्तं कुर्व्वन स्वभावतश्च सुगन्धि वक्त्रं सवासं मुखं वाससुक्तं कुर्व्वन् केवलपक्षपातं समलं चक्रे अञ्जनादीनां निरर्थकत्वात्॥ २४॥ ज०म०

चक्षूंषीत्यादि। स्त्रीजनः स्वभावतः कान्तान्यपि नेत्राणि अञ्जनयुक्तानि कुर्व्वन् स्वभावतः सरागमोष्ठं ताम्बूलरक्तं कुर्व्वन् स्वभावतः सुगन्धि वक्त्रं सवासं कर्पूरादिमुखवाससुक्तं कुर्व्वन् केवलं पक्षपातं प्रसादनस्नेहञ्चक्रे अञ्जनादीनां निरर्थकत्वात् ॥ २४ ॥ भ०

क्षतैरसञ्चेतितदन्तलब्धैः संभोगकालेऽवगतैः प्रभाते। अशङ्कतान्योन्यकृतं व्यलीकं वियोगवाह्योऽपि जनोऽतिरागात्॥ २५॥

क्षतैरित्यादि। अस्यामया दत्तं अस्य च मयेति संभोगकाले रागान्धतया असंचेतितान्यज्ञातानि दन्तेभ्योलब्धानि यानि क्षतानि चितसंचेतनइति स्वार्थिकणयन्तस्य रूपं प्रभातकाले अवगतैर्दृष्टैः वियोगवाह्योऽपि सुप्तोऽपि कामिजनः अतिरागात् अतिस्नेहात् अन्योन्यकृतं अन्योन्येन कृतं व्यलीकं अपराधं अशंकत विकल्पितवान् लङि रूपं किमस्यान्यया हताशया दत्तमिति योषिदशंकत पुरुषोऽपि किमन्येन धूर्तेनास्यादति॥ २५॥ ज०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० क्षतैरित्यादि। वियोगवाह्योऽपि विरहेणायुक्तोऽपि जनोऽति रागादतिखेदात् क्षतैरन्योन्येन कृतं व्यलीकमपराधमशङ्कत शङ्कितवान् यां इयं किमस्यान्यया कान्तया दत्तं क्षतमिति योषिदशङ्कत पुरुषोऽपि किमस्याअन्येन प्रच्छन्नकामुकेन दत्तं क्षतमिति शङ्कते स्म कुतइत्याह कीदृशैः क्षतैः सम्भोगकाले रागा न्धतया असञ्चेतितानि अज्ञातानि दन्तेभ्योलब्धानि यानि तैः चिनक्संज्ञाने प्रभातकालेऽवगतैर्ज्ञातैर्दर्शनात् ॥ २५ ॥

नेत्रेषुभिः संयुतपक्ष्मपत्रैः कर्णान्तकृष्टैरुरुकेशपूलाः। स्तनोरुचक्रास्ततकर्णपाशाः स्त्रीयोधमुख्या जयिनोविचेरुः ॥ २६ ॥

ज०म० नेत्रेषुभिरित्यादि। नेत्राणि इषवइव तैः संयुतानि संयुक्तानि पक्ष्माण्येव पत्राणि येषां तैः कर्णान्तकृष्टैः कर्णान्तविश्रान्तैः उपल चिताः स्त्रियोयोधमुख्याइव उरुकेशपूलाउरवोमहान्तः केशाः पूलाइव येषां स्तनोरुचक्राः स्तनाः उरूणि चक्राणीव येषां ततकर्णपाशाः तताः कर्णाः पाशाइव येषां ते जयिनोलब्धविजया विचेरुः भ्रान्ताः ॥ २६ ॥

भ० नेत्रेषुभिरित्यादि। स्त्रियोयोधमुख्याइव योद्धृश्रेष्ठाइव विचे रुर्भ्रमन्ति स्म संयुतानि संयुक्तानि पक्ष्माण्येव पत्राणि पत्रायत्र तैः कर्णान्तकृष्टैः कटाक्षदशायां कर्णान्तप्रेरितैर्नेत्रैरिषुभिरिवं उप

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



लचिता उरवोमहान्तः केशाः शूलानीव येषां श्यामत्वात् दीर्घत्वात्कामपीडाकारित्वाच्च स्तनामहाचक्राणीव येषां विशालपारिमाण्डल्यात् ततः कर्णाः पाशाइव येषां कार्मुकमानबन्धनयोग्यत्वात् अतएव जयिनः पुंजयनशीलाः॥ २६॥

पयोधरांश्चन्दनपङ्कदिग्धान् वासांसि चाश्लिष्टमृजानि दृष्ट्वा। स्त्रीणां सपत्न्योजहृषुः प्रभाते मन्दायमानानुशयैर्मनोभिः॥ २७॥

पयोधरानित्यादि। चन्दनपङ्कदिग्धान् आप्लुतचन्दनत्वात् वस्त्राणि च अमृष्टमृजानि अनपनीतशुद्धभावानि स्त्रीणां दृष्ट्वा प्रभाते तत्सपत्न्योमनोभिः न वाह्यं जहृषुः हृष्टाः अप्राप्तसुरतत्वान्मन्दायमानानुशयैः आभिः सह शयितादूति तासु ये अनुशयाः अत्यान्तयेजाताः ते मन्दायमानाः शनैःशनैस्तनूभवन्तोयेषु मनःसु तैरित्यर्थः॥ २७॥ ज॰म॰

पयोधरानित्यादि। स्त्रीणां चन्दनपङ्कैर्दिग्धान् लिप्तान् पयोधरान् स्तनान् दृष्ट्वा अश्लिष्टमृजानि अनपनीतशुक्लशुद्धभावानि वासांसि च वस्त्राणि च दृष्ट्वा प्रभाते तासां सपत्न्योमनोभिः करणभूतैः तैरुपलचितावा जहृषुः हृष्टाः कीदृशैः मन्दायमानोऽनुशयः क्रोधोयत्र पूर्वं भर्त्रा सह सपत्नीनामेकत्रवासात् क्रोधउत्पन्नः पश्चात्तासां सम्भोगाभावज्ञानात् क्रोधस्य भ॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



मन्दायमानत्वं हर्षस्य जातः सम्भोगे हि मर्दनात चन्दनच्युतिर्व्वे स्रमालिन्यञ्च स्यात्॥ २७॥

स्मरातुरे चेतसि लब्धजन्मा रराज लोलोऽपि गुणापहार्य्यः। कुतूहलान्नेत्रगवाक्षसंस्थः पश्यन्निवा न्योन्यमुखानि रागः॥ २८॥

ज०म० स्मरातुरइत्यादि। दंपत्योः प्रातरन्योन्यस्य मुखं पश्यतोः चक्षुषोरागोवर्ण्यते स्मरातुरे कामातुरे चेतसि लब्धजन्मा लब्धोदयः रागोरक्तभावः नेत्रगवाक्षसंस्थः नेत्रयोर्गवाक्षयोरिव स्थितः कुतूहलात् कौतुकात् अन्योन्यस्य मुखानि पश्यन्निव कीदृशं कामिन्यामुखं कामुकस्य मुखं वेति गुणापहार्य्यः तत्प्रति पक्षेण शुक्लगुणेन अपनेयः अतएव लोलोऽपि अचिरस्थाय्यपि रराज॥ २८॥

भ० स्मरातुरेइत्यादि। दम्पत्योः प्रातरन्योन्यमुखं पश्यतोर्नेत्र रक्तिमा उत्प्रेक्ष्यते रागोरक्तभावोनेत्रयोर्गवाक्षयोरिव स्थितः सन् कुतूहलादन्योन्यमुखानि पश्यन्निव कीदृशं कामिन्याः कामुकस्य वा मुखमिति विलोकयन्निव रराज शोभतेस्म कीदृशः स्मरातुरे चेतसि लब्धजन्मा लब्धोदयः गुणेन तत्प्रतिपक्षेण शुक्ल रूपेणापहार्य्योऽपनेयः अतएव लोलश्चञ्चलः अचिरस्थाय्यपि रराजेत्युत्कर्षः किम्वा रागोऽनुरागः गुणापहार्य्योमुखसौन्द र्य्येण वशीकृतः॥ २८॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



गतेऽतिभूमिं प्रणये प्रयुक्ता न बुद्धिपूर्व्वं परिलुप्त संज्ञः। आत्मानुभूतानपि नोपचारान् स्मरातुरः संस्मरति स्म लोकान्॥ २९ ॥

गतइत्यादि। प्रणये विश्रम्भे अतिभूमिं गते प्रकृष्टावस्थां प्राप्ते सति ये अबुद्धिपूर्व्वं अनिरूप्य स्वयं प्रयुक्ताः उपचाराम् नखदन्तक्षतादयः तानात्मानुभूतानपि प्रातर्न स्मरति स्म कामि लोकः इदमिदं मया प्रयुक्तमिति यतः सुरतावस्थायां स्मरातुर तया विलुप्तसंज्ञोभूटइति॥ २६॥ ज॰म॰

गतेइत्यादि। प्रणये प्रेम्णि अतिभूमिं प्रकृष्टावस्थां गते सति अबुद्धिपूर्व्वमविचार्य्य सुरतकाले स्वयं प्रयुक्तान् कृतानपि उपचारान् नखदन्तक्षतादीनात्मानुभूतानपि तदानीं स्मरातुरत्वेन परिलुप्तसंज्ञत्वात् लोकः प्रभाते न स्मरति स्म प्रणयः प्रेम्णि विश्रम्भे याच्ञाप्रसरयोरपीति रुद्रः॥ २६॥ भ॰

वस्त्रैरनत्युल्वणरम्यवर्णैर्व्विलेपनैः सौरभलक्षणीयैः। आस्यैश्च लोकः परितोषकान्तैरसूचयल्लब्धपदं रहस्यं॥ ३०॥

वस्त्रैरित्यादि। वस्त्रैः विलेपनैः सौरभलक्षणीयैः सुरभि तया परिच्छेद्यैः आस्यैश्च व्यपगताधररागैः परितोषकान्तैर्लिङ्ग भूतैः रहसि भवं सुरतं लब्धपदं प्राप्तचिह्नं लोकः प्रकाशयति स्म ३०॥ ज॰म॰

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



भ० वस्त्रैरित्यादि। लोकोवस्त्रादिचिह्नैरहस्यं रहसि भवं सुरतमसूचयत् प्रकाशितवान् कीदृशं लब्धपदं प्राप्तचिह्नं कामिषु प्राप्तावसरं वा वस्त्रैः कीदृशैरनत्युल्वणरम्यवर्णैः परिम्लदितत्वाद्दनुद्भटरमणीयवर्णैः अनतिविशदरम्यवर्णैर्वा अल्पश्लिष्टैरित्यर्थः उल्वणं विशदं स्फुटमिति कोषः विलेपनैः कीदृशैः सौरभलक्षणीयैः सौरभेन शरीरगतसुरभित्वमात्रेण लक्षणीयैरनुमेयैः आस्यैः कीदृशैः परितोषकान्तैरधररागपत्रावल्यादिलेपेऽपि परितोषेण कृतार्थता जनितानन्देन कमनीयैः॥ ३०॥

प्रातस्तरां चन्दनलिप्तगात्राः प्रच्छाद्य हस्तैरधरान् वदन्तः। शाम्यन्निमेषाः सुतरां युवानः प्रकाशयन्ति स्म निगूहनीयं॥ ३१॥

ज०म० प्रातस्तरामित्यादि। गुरुजनोनखदशनक्षतं माद्राक्षीदिति युवानः प्रातस्तरां प्रत्यूषसि चन्दनलिप्तगात्राहस्तैरधरान् प्रच्छाद्य वदन्तोऽपि शाम्यन्निमेषा अनिमिषितनेत्रागूहनीयं सुतरां प्रकाशयन्ति स्म नूनमेते सत्कृताः येन एवमाचरन्तीति॥ ३१॥

भ० प्रातस्तरामित्यादि। महति प्रातःकाले नखक्षतादिसङ्गोपनार्थं चन्दनेन लिप्तगात्रा अपि दन्तक्षतसङ्गोपनार्थं गुरुसमीपे हस्तैरधरं प्रच्छाद्य वदन्तोऽपि जागरणजनितनिद्राव्यपगमार्थं शाम्यन्निमेषानिमेषं वारयन्तोऽपि युवानः निगद्दनीयं सङ्गोपनीयं

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



सुरतं सुतरामतिशयेन प्रकाशयन्ति स्म सङ्गोपनेनैव नखच्तता द्यनुमानात् यद्वा शाम्यन्निमेषाः सन्तः प्रकाशयन्ति निमेषाणां भावत्यागदर्शनात् सौच्म्यमत्र गुणः तत्सौक्ष्म्यमुच्यते यत्र सूक्ष्मार्थस्यापि दर्शनं। अत्र सुरतस्य संगुप्ततया सूक्ष्मत्वं॥ ३१॥

जितेऽपि लोके मधुरेण वामे किमुद्यतं भ्रूधनुरप्रसह्यं। हन्तुं क्षमो वा वद लोचनेषुर्दिग्धो विषेणेव किमञ्जनेन॥ ३२॥

जितइत्यादि। हे वामे प्रतिकूलवर्त्तिनि मधुरेणाविकृतेन साम्ना लोके अस्मद्विधे जितेऽपि वशीकृतेऽपि भ्रूधनुरप्रसह्यं प्रसोढुमशक्यं उद्यतं उत्क्षिप्तं अथवा विलोचनेषुर्नेत्रशरः स्वत एव हन्तुं क्षमः ततः किमञ्जनेनेव विषेण दिग्धो विषलिप्तइति वद कथय॥ ३२॥ ज०म०

जितइत्यादि। युवानइत्यूचुरित्यग्रिमश्लोकेनान्वयः हे वामे प्रतिकूलवर्त्तिनि लोकेऽस्मद्विधे मधुरेण माधुर्य्यगुणेन स्वभावसिद्धोपायेन प्रियवचनेन वा जितेऽपि पराभूतेऽपि वशीकृतेऽपि सोढुमशक्यं भ्रूरूपधनुः किमर्थमुद्यतमुत्क्षिप्तं अयञ्च लोचनरूपशरः स्वयमेवास्मान् हन्तुं क्षमः समर्थः तत्किं विषेणेवाञ्जनेन वा दिग्धो लिप्तः तत्त्वं वद वतेति पाठे खेदे स्वभावैरेव कार्य्यस्य सिद्धौ किमधिककल्पनया भाविकत्वमत्र गुणः अहं त्वदायत्तएवेत्यभिप्रायप्रकाशात् साभिप्रायोक्तिविन्यासो भाविकत्वं प्रचक्षते इति॥ ३२॥ भ०



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



दन्तच्छदे प्रज्ज्वलिताग्निकल्पे ताम्बूलरागस्तृणभारतुल्यः। न्यस्तः किमित्यूचुरुपेतभावा गोष्ठीषु नारीस्तरुणीर्युवानः॥ ३३॥

ज०म० दन्तच्छद इत्यादि। प्रज्ज्वलिताग्निकल्पे स्वभावलोहितत्वात् दन्तच्छदे ओष्ठे ताम्बूलरागः किमिति न्यस्तः तृणभारतुल्यः निष्प्रयोजनत्वात् इत्येवमूचुर्युवानः प्रातरित्यर्थात् उपेतभावाः जातानुरागाः गोष्ठीषु स्थिता नारीस्तरुणीरिति॥ ३३॥

भ० दन्तेत्यादि। दन्तच्छदे ओष्ठे ताम्बूलरागः किमर्थं न्यस्तः कीदृशे प्रज्ज्वलितवह्निसदृशे स्वभावतो लोहितत्वादसह्यदाहकत्वाच्च कीदृशः तृणभारसमो निष्प्रयोजनत्वादत्युद्दीपकत्वाच्च वह्नौ तृणप्रक्षेपो भृशमुद्दीपको भवति इत्येवं युवानस्तरुणा उपेतभावा उपगतरागाः सन्तस्तरुणीनारीगोष्ठीषु स्त्रीसभासु स्थिता ऊचुः॥ ३३॥

## युग्मकं।

सुखावगाह्यानि युतानि लक्ष्म्या शुचीनि सन्तापहराण्युरूणि। प्रबुद्धनारीमुखपङ्कजानि प्रातः सरांसीव गृहाणि रेजुः॥ ३४॥

ज०म० सुखावगाह्यानीत्यादि। प्रातः प्रभाते गृहाणि सरांसीव रेजुः सुखावगाह्यानि निरुपद्रवत्वात्सुखेनावगाह्यन्ते युतानि लक्ष्म्या देवतारूपया शुचीनि पवित्राणि सन्तापहराणि घर्म्मादिक्लेशाप

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



हारीणि उरूणि महान्ति प्रबुद्धानि विनिद्राणि नारीमुखान्येव पङ्कजानि यत्रेति ॥ ३४ ॥

सुखेत्यादि। प्रातः प्रभातकाले गृहाणि सरांसीव रेजुः शोभन्ते स्म कीदृशानि सुखहेतुरवगाहो यत्र तानि लक्ष्म्या सम्पत्त्या शोभया वा युतानि शुचीनि पवित्राणि सन्तापहराणि घर्म्मादिक्लेशापहारीणि उरूणि महान्ति प्रबुद्धानि विनिद्राणि नारीमुखान्येव पद्मे तानीव पङ्कजानि येषु ॥ ३४ ॥ भ०

संमृष्टसिक्तार्च्चितचारुपुष्पैरामोदवद्द्रव्यसुगन्धभागैः। लक्ष्मीर्व्विजिग्ये भवनैः सभृङ्गैः सेव्यस्य देवैरपि नन्दनस्य ॥ ३५ ॥

संमृष्टेत्यादि। देवैः सेव्यस्यापि नन्दनस्य लक्ष्मीर्भवनैः प्रातर्व्विजिग्ये विजिता आदौ संमृष्टरजांसि अपनीतरजांसि पश्चात्सिक्तानि पूर्व्वापरकालसमासः अर्चितानि पूजितानि प्रशस्तानि चारूणि शोभनानि पुष्पाणि येषु भवनेषु संमृष्टसिक्तानि च तानि अर्चितचारुपुष्पाणि चेति विशेषणसमासः आमोदवन्ति यानि द्रव्याणि चन्दनादीनि तैः सुगन्धभागएकदेशोयेषां तैः गन्धस्य तदेकान्तग्रहणादित्वं न भवति सभृङ्गैरामोदभृतत्वात् ॥ ३५ ॥ ज०म०

संमृष्टेत्यादि। देवैरिन्द्रादिभिरपि सेव्यस्य नन्दनवनस्य लक्ष्मीः सम्पत्तिः शोभा वा भवनैर्गृहैः प्रातर्विजिग्ये जिता कर्म्मणि ठो भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



कीदृशैः पूर्व्वं संमृष्टानि अपनीतरजांसि पश्चात् सिक्तानि संमृष्ट सिक्तानि पूर्व्वकालस्यापरकालेनेति कर्म्मधारयइति परः खमते एकार्थतास्त्येव अर्चितानि पूजितानि चारूणि शोभमानानि पुष्पाणि येषु तानि पश्चात् संमृष्टसिक्तानि अर्च्चितचारुपुष्पाणि चेति पुनः कर्म्मधारयः आमोदवद्भिर्द्रव्यैश्चन्दनादिभिः सुग न्धाभागाएकदेशायेषां सुरभिपूतेरित्यादौ गन्धशब्दोगुण वाचीति टीकाकृद्वचनादभिधानाद्वा इप्रत्ययाभावः भृङ्गैरामो दानुसारित्वाद्भ्रमरैः सह वर्त्तमानानि नन्दनमप्येवं भवति उदा त्तता गुणोऽसंमृष्टसिक्तेत्यादिभिर्व्विशेषणैर्य्योगात् यैर्विशेषणैर्य्यो गोयस्तु साम्यादुदात्तता॥ ३५॥

अक्ष्णोः पतन्नीलसरोजलोभाद्भृङ्गः करेणाल्पधिया निरस्तः। ददंश ताम्राम्बुरुहाभिसन्धिस्तृष्णातुरः पाणितलेऽपि धृष्णुः॥ ३६॥

ज०म० अक्ष्णोरित्यादि। नीलसरोजलोभात् नीलकमलमेतदित्य क्ष्णोः पतन्निलीयमानोभृङ्गः अल्पधिया अल्पबुद्ध्या कयाचित् करेण निरस्तः क्षिप्तः सन् ताम्राम्बुरुहाभिसन्धिः रक्तपद्ममेत दित्यभिसन्धिरभिप्रायोयस्य भृङ्गस्य स धृष्णुः प्रगल्भः पाणितले ऽपि ददंश दष्टवान् तामित्यर्थात्॥ ३६॥

भ० अक्ष्णोरित्यादि। नीलसरोजमेतदिति मत्वा तल्लोभात् चक्षु षोः पतन् भृङ्गः कयाचिदल्पधिया मुग्धया करेण निरस्तः सन्

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



पाणितलेऽपि तां ददंश दष्टवान् यतः करं दृष्ट्वा रक्तपद्ममिति त्यभिसन्धिरभिप्रायो यस्य कीदृशः तृष्णातुरः तृष्णाव्यग्रः धृष्णुः प्रगल्भः सौकुमार्य्यमत्र गुणः अक्ष्णोः करस्य चोत्पललेन निरूपणात् अनिष्ठुरत्वं यत् प्राज्ञः सौकुमार्य्यं तदुच्यते॥ ३६॥

विलोलतां चक्षुषि हस्तवेपथुं भ्रुवोर्व्विभङ्गं स्तनयुग्मवल्गितं। विभूषणानां क्वणितञ्च षट्पदो गुरुर्यथा नृत्यविधौ समादधे॥ ३७॥

विलोलतामित्यादि। यथा गुरुर्नृत्याचार्य्यो नृत्यकर्म्मणि कस्याश्चिच्चक्षुषि विलोलतां चलतां हस्तवेपथुं हस्तकम्पं भ्रुवोर्विभङ्गं नतोन्नतिं स्तनयुग्मवल्गितं प्रचलितं भूषणानां क्वणितं शिञ्जितं जनयति तद्वद्वा षट्पदोऽपि तत्समादधे विहितवान् ॥३७॥ जं०मं०

विलोलतामित्यादि। यथा गुरुर्नृत्याचार्य्यो नृत्यकर्म्मणि शिक्षायां कस्याश्चिच्चक्षुषि विलोलतां चाञ्चल्यं हस्तयोर्वेपथुं कम्पं भ्रुवोर्व्विभङ्गमन्यथाकरणं स्तनयुगलस्य वल्गितं चलनं विभूषणानामलङ्काराणां क्वणितं शिञ्जितं समादधे जनयति तथा षट्पदोऽपि समादधे कृतवान् भ्रमरबाधया काचिन्नृत्यमिव चकारेत्यर्थः प्रौढिरत्र गुणश्चक्षुर्विलोलताप्रभृतिभिर्नृत्यस्य निर्व्वाहात् विवक्षितार्थनिर्व्वाहः काव्ये प्रौढिरिति स्मृता॥ ३७॥ भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अथानुकूलान् कुलधर्म्मसम्पदो विधाय वेशान् सुदिवः पुरीजनः। प्रबोधकाले शतमन्युविद्विषः प्रचक्रमे राजनिकेतनं प्रति॥ ३८॥

ज०म० अथानुकूलानित्यादि। अथानन्तरं पुरीजनो लङ्कानिवासिजनः प्रतिदिनमवाप्तकल्याणत्वात् सुदिवः सुप्रातेत्यादिना समासान्तनिपातनं य थास्वं कुलधर्म्मस्य पुरस्य या संपद्विभूतिः तस्या अनुकूलान् वेशान्नेपथ्यानि विधाय कृत्वा शतमन्युविद्विषो रावणस्य प्रबोधकाले राजनिकेतनं प्रत्यभिलक्ष्य प्रचक्रमे गन्तुं प्रवृत्तः प्रोपाभ्यां समर्थाभ्यामिति तङ्॥ ३८॥

भ० अथेत्यादि। अनन्तरं पुरीजनो लङ्कानिवासिजनो वेशान् विधाय कृत्वा शतमन्युविद्विषदिन्द्रशत्रोरावणस्य प्रबोधकाले निद्राभङ्गसमये राजगृहं प्रति लक्ष्यीकृत्य प्रचक्रमे गन्तुं प्रवृत्तः प्रोपादारम्भे इति मं कीदृशान् कुलधर्म्मस्य कुलाचारस्य या सम्पद्विभूतिस्तस्या अनुकूलान् सदृशान् कुलोचितानित्यर्थः कीदृशः सुदिवः प्रतिदिनं प्राप्तकल्याणत्वात् शोभनं दिवा यस्य दिवाशब्दः सप्तम्यन्ताव्ययइति ये वदन्ति तन्मते शोभनं दिवा दिवसे कर्म्म यस्येति विग्रहः राजादित्वात् सुदिवो निपातितइति कालापाः स्वादिभ्यो दिवादेरिति सूत्रेण डप्रत्ययमाह क्रमदीश्वरः स्वमते स्वार्थेऽणः तस्यात्वविवक्षया वृद्धेरभावः॥ ३८॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



शैलेन्द्रशृङ्गेभ्यइव प्रवृत्तावेगाज्जलौघाः पुरमन्दिरेभ्यः। आपूर्य्य रथ्याः सरितोजनौघाराजाङ्गनाम्भोधिमपूरयन्त॥ ३९ ॥

शैलेन्द्रशृङ्गेभ्यइत्यादि। यथा जलानां पूराः शैलेन्द्रशृङ्गात् प्रवर्त्तन्ते तद्वत्पुरमन्दिरेभ्यः प्रवृत्ताः जनौघारथ्याः सरितइवापूर्य्य राजाङ्गनमम्भोधिमिवापूरयन्त पूरितवन्तः॥ ३९॥ ज०म०

शैलेन्द्रेत्यादि। यथा जलानां वारीणामोघाः पूराः प्रवाहाः शैलेन्द्रशृङ्गेभ्यः प्रवृत्ताः सरितोनदीरापूर्य्य वेगात् सागरं पूरयन्ति तथा जनौघाः लोकसमूहाः पुरमन्दिरेभ्योलङ्कागृहेभ्यः प्रवृत्तारथ्याः प्रतोलीरापूर्य्य वेगात् राजाङ्गनं राज्ञोरावणस्य चत्वरमपूरयन्त तवर्गपञ्चमोपान्तमङ्गलमिति विश्वः पृषोदरादित्वात् णत्वमिति पाणिनीयाः स्वमते मनीषादित्वाद्विभाषया णत्वं॥ ३९॥ भ०

प्रबोधकालात्त्रिदशेन्द्रशत्रोः प्रागूर्द्ध्वशोषं परिशुष्यमाणाः। ह्रीनामहान्तश्च समत्वमीयुर्द्दास्थैरवज्ञापरुषाच्छिदृष्टाः॥ ४०॥

प्रबोधकालादित्यादि। त्रिदशेन्द्रशत्रोरावणस्य प्रबोधकालात्प्राक् पूर्व्वं ऊर्द्ध्वशोषं परिशुष्यमाणाः राजाङ्गने ऊर्द्ध्वङ्गता एव प्रबोधकाले शोषं नीयमानादूति अन्तर्भावितण्यर्थोद्रष्टव्यः ज०म०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



एवञ्च कृत्वा कर्म्मण्यात्मनेपदं अन्ये परिशोष्यमाणाइति णिचं पठन्ति ऊर्द्ध्वशुषीति णमुल् हीनाः महान्तश्च सेवकाः समलं तुल्यत्वमीयुः द्वास्थैर्दौवारिकैः द्वारि तिष्ठन्तीति सुपिस्थइति कः खरवसानयोर्विसर्जनीयइति विसर्जनीयस्य सः अवज्ञया अनादरेण परुषमस्निग्धं यदक्षि तेनाक्ष्णा दृष्टाः॥ ४०॥

भ० प्रबोधेत्यादि। चिदशेन्द्रशत्रोरावणस्य प्रबोधकालात् निद्राभङ्गसमयात् प्राक् पूर्व्वं हीनामहान्तश्च जनाः समलं तुल्यतां ईयुः प्राप्ताः दौवारिकैः सर्व्वेषां प्रवेशनिषेधात् कीदृशाऊर्द्ध्वशोषं परिशुष्यमाणाः ऊर्द्ध्वशोषमिति यदुक्तं तद्विशेषेण सुमुखादिशोषणं सूचनार्थं ऊर्द्ध्वात्शुषिपूरेः स्वार्थेक्ता णमिति परः किमयं करिष्यतीति त्रासात् शुष्काास्यकण्ठतालुकाआसन्नित्यर्थः द्वाःस्थैः दौवारिकैरवज्ञया अनादरेण यत्परुषं रूक्षमक्षि चक्षुस्तेन दृष्टा द्वारि तिष्ठतीति द्वाःस्थः हनजनादिति डः मनीषादित्वाद्विभाषया विसर्गलोपः कादियुक्तशषसेलुग्वेति क्रमदीश्वरसूत्रं॥ ४०॥

गुरूरुचञ्चत्करकर्णजिह्वैरवज्ञयाग्राङ्गुलिसंगृहीतैः। रक्षांस्यनायासहतैरुपास्थुः कपोललीनालिकुलैर्गजेन्द्रैः॥ ४१॥

ज०म० गुरूरुचञ्चदित्यादि। गुरवोऽलघवः उरवोमहान्तः चञ्चन्तश्चलन्तः कराः कर्णाजिह्वाश्च येषां गजेन्द्राणां तैरवज्ञया

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अग्राङ्गुलिसङ्गृहीतैः पदाङ्गुष्ठाग्रेण यन्त्रस्थाने परिगृहीतैः अङ्गुले रग्रमिति राजदन्तादित्वात् पूर्व्वनिपातः अनायासहतैः शनैः शनैः प्रचोदितैः मत्तत्वात् कपोललीनालिकुलैः रक्षांसि उपास्थुः सेवाञ्चक्रुः ॥ ४१ ॥

गुर्व्वित्यादि। कतिचिद्रक्षांसि राक्षसा गजेन्द्रैरुपास्थुः मत्त हस्तिनो गृहीत्वा रावणं सेवितवन्तः कीदृशैर्गुरवोऽलघवः उरवो महापरिमाणाः चञ्चन्तः चञ्चलाः कराः शुण्डाः कर्णाजिकाश्च येषां तैः अवज्ञया अनादरेण अङ्गुल्यग्रेण संगृहीतैः धृतैः अङ्गुलेरग्रं अग्राङ्गुलिरिति राजदन्तादिरिति परः स्वमते एकदेशेऽपि समुदायोपचारात् कर्म्मधारयः अग्रे अग्रतः स्थाने अङ्गुल्यापादाङ्गुष्ठेन संगृहीतैरिति केचित् अनायासेन हतैः शनैः शनैः प्रेरितैर्मत्तत्वात् कपोले लीनानि भ्रमरकुलानि येषां तैः ॥ ४१ ॥

**निकृत्तमत्तद्विपकुम्भमांसैः संपृक्तमुक्तैर्हरयोऽग्रपादैः। आनिन्यिरे श्रेणिकृतास्तथान्यैः परस्परं वालधिसन्निबद्धाः ॥ ४२ ॥**

निकृत्तेत्यादि। अन्यैः सेवार्थं हरयः सिंहाः आनिन्यिरे आनीताः निकृत्तानि मत्तद्विपकुम्भमांसानि यैरग्रपादैः अतएव संपृक्तमुक्तैः लग्नकुम्भमुक्ताफलैः उपलक्षिताः श्रेणीकृताश्श्रेण्यः



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



एवञ्च कृत्वा कर्म्मण्यात्मनेपदं अन्ये परिशोष्यमाणाइति णिचं पठन्ति ऊर्द्धशुषीति णमुल् हीनाः महान्तश्च सेवकाः समत्वं तुल्यत्वमीयुः द्वास्थैर्दौवारिकैः द्वारि तिष्ठन्तीति सुपिस्थइति कः खरवसानयोर्विसर्जनीयइति विसर्जनीयस्य सः अवज्ञया अनादरेण परुषमस्निग्धं यदच्चि तेनाक्ष्णा दृष्टाः॥४०॥

भ० प्रवोधेत्यादि। चिदशेन्द्रशत्रोरावणस्य प्रवोधकालात् निद्राभङ्गसमयात् प्राक् पूर्व्वं हीनामहान्तश्च जनाः समत्वं तुल्यतां ईयुः प्राप्ताः दौवारिकैः सर्व्वेषां प्रवेशनिषेधात् कीदृशाऊर्द्ध शोषं परिशुष्यमाणाः ऊर्द्धशोषमिति यदुक्तं तद्विशेषेण सुमुखादिशोषणं सूचनार्थं ऊर्द्धात्शुषिपूरेः स्वार्थैक्ता णमिति परः किमयं करिष्यतीति त्रासात् शुष्काश्चकण्ठतालुका आसन्नित्यर्थः द्वाःस्थैः दौवारिकैरवज्ञया अनादरेण यत्परुषं रूक्षमच्चि चक्षुस्तेन दृष्टा द्वारि तिष्ठतीति द्वाःस्थः हनजनादितिं डः मनीषादित्वाद्विभाषया विसर्गलोपः कादियुक्तशषसेलुग्वेति क्रमदीश्वरसूत्रं॥४०॥

गुरूरुचञ्चत्करकर्णजिह्वैरवज्ञयाग्राङ्गुलिसंगृहीतैः। रक्षांस्यनायासहतैरुपास्युः कपोललीनालिकुलैर्गजेन्द्रैः॥४१॥

ज०म० गुरूरुचञ्चदित्यादि। गुरवोऽलघवः उरवोमहान्तः चञ्चन्तश्चलन्तः कराः कर्णजिह्वाश्च येषां गजेन्द्राणां तैरवज्ञया

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अग्राङ्गुलिसङ्गृहीतैः पदाङ्गुष्ठाग्रेण यन्त्रस्थाने परिगृहीतैः अङ्गुले रग्रमिति राजदन्तादित्वात् पूर्व्वनिपातः अनायासहृतैः शनैः शनैः प्रचोदितैः मत्तत्वात् कपोललीनालिकुलैः रक्षांसि उपास्थुः सेवामकार्षुः ॥ ४१ ॥

गुर्व्वित्यादि। कतिचिद्रक्षांसि राक्षसागजेन्द्रैरुपास्थुः मत्त भ॰ हस्तिनोऽगृहीत्वा रावणं सेवितवन्तः कीदृशैर्गुरवोऽलघवः उरवो महापरिमाणाः चञ्चन्तः चञ्चलाः कराः शुण्डाः कर्णाजिह्वाश्च येषां तैः अवज्ञया अनादरेण अङ्गुल्यग्रेण संगृहीतैः धृतैः अङ्गुलेरग्रं अग्राङ्गुलिरिति राजदन्तादिरिति परः स्वमते एकदेशेऽपि समुदायोपचारात् कर्म्मधारयः अग्रे अग्रतः स्थाने अङ्गुल्यापादाङ्गुष्ठेन संगृहीतैरिति केचित् अनायासेन हृतैः शनैः शनैः प्रेरितैर्मत्तत्वात् कपोले लीनानि भ्रमरकुलानि येषां तैः ॥ ४१ ॥

निकृत्तमत्तद्विपकुम्भमांसैः संपृक्तमुक्तैर्हरयोऽग्रपादैः। आनिन्यिरे श्रेणिकृतास्तथान्यैः परस्परं वालधिसन्निबद्धाः ॥ ४२ ॥

निकृत्तेत्यादि। अन्यैः सेवार्थं हरयः सिंहाः आनिन्यिरे ज॰म॰ आनीताः निकृत्तानि मत्तद्विपकुम्भमांसानि यैरग्रपादैः अतएव संपृक्तमुक्तैः लग्नकुम्भमुक्ताफलैः उपलक्षिताः श्रेणीकृता अश्रेणयः



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



एवञ्च कृत्वा कर्म्मण्यात्मनेपदं अन्ये परिशोष्यमाणाइति णिचं पठन्ति ऊर्द्धशुषीति णमुल् हीनाः महान्तश्च सेवकाः समत्वं तुल्यत्वमीयुः द्वास्थैर्दौवारिकैः द्वारि तिष्ठन्तीति सुपिस्थइति कः खरवसानयोर्विसर्जनीयइति विसर्जनीयस्य सः अवज्ञया अनादरेण परुषमस्निग्धं यदक्षि तेनाक्ष्णा दृष्टाः ॥ ४० ॥

भ० प्रबोधेत्यादि। त्रिदशेन्द्रशत्रोरावणस्य प्रबोधकालात् निद्राभङ्गसमयात् प्राक् पूर्व्वं हीनामहान्तश्च जनाः समत्वं तुल्यतां ईयुः प्राप्ताः दौवारिकैः सर्व्वेषां प्रवेशनिषेधात् कीदृशाऊर्द्ध शोषं परिशुष्यमाणाः ऊर्द्धशोषमिति यदुक्तं तद्विशेषेण सुमुखादिशोषणं सूचनार्थं ऊर्द्धात्शुषिपूरेः स्वार्थैक्ता णमिति परः किमयं करिष्यतीति त्रासात् शुष्काश्चकण्ठतालुकाआसन्नित्यर्थः द्वाःस्थैः दौवारिकैरवज्ञया अनादरेण यत्परुषं रूक्षमक्षि चक्षुस्तेन दृष्टा द्वारि तिष्ठतीति द्वाःस्थः हनजनादिति डः मनीषादित्वाद्विभाषया विसर्गलोपः कादियुक्तशषसेलुग्वेति क्रमदीश्वरसूत्रं ॥ ४० ॥

गुरूरुचञ्चत्करकर्णजिक्कैरवज्ञयाग्राङ्कुलिसंगृहीतैः। रक्षांस्यनायासहतैरुपास्थुः कपोललीनालिकुलैर्गजेन्द्रैः ॥ ४१ ॥

ज०म० गुरूरुचञ्चदित्यादि। गुरवोऽलघवः उरवोमहान्तः चञ्चन्तश्चलन्तः कराः कर्णजिक्काश्च येषां गजेन्द्राणां तैरवज्ञया

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अग्राङ्गुलिसङ्गृहीतैः पदाङ्गुष्ठाग्रेण यन्त्रस्थाने परिगृहीतैः अङ्गुले रग्रमिति राजदन्तादित्वात् पूर्व्वनिपातः अनायासहतैः शनैः शनैः प्रचोदितैः मत्तत्वात् कपोललीनालिकुलैः रक्षांसि उपास्थुः सेवामकार्षुः ॥ ४१ ॥

गुर्व्वित्यादि। कतिचिद्रक्षांसि राक्षसा गजेन्द्रैरुपास्थुः मत्त भ० हस्तिनोऽगृहीला रावणं सेवितवन्तः कीदृशैर्गुरवोऽलघवः उरवो महापरिमाणाः चञ्चन्तः चञ्चलाः कराः शुण्डाः कर्णाजिह्वाश्च येषां तैः अवज्ञया अनादरेण अङ्गुल्यग्रेण संगृहीतैः धृतैः अङ्गुलेरग्रं अग्राङ्गुलिरिति राजदन्तादिरिति परः स्वमते एकदेशेऽपि समुदायोपचारात् कर्म्मधारयः अग्रे अग्रतः स्थाने अङ्गुल्यापादाङ्गुष्ठेन संगृहीतैरिति केचित् अनायासेन हतैः शनैः शनैः प्रेरितैर्मत्तत्वात् कपोले लीनानि भ्रमरकुलानि येषां तैः ॥ ४१ ॥

निकृत्तमत्तद्विपकुम्भमांसैः संपृक्तमुक्तैर्हरयोऽग्रपादैः। आनिन्यिरे श्रेणिकृतास्तथान्यैः परस्परं वालधिसन्निबद्धाः ॥ ४२ ॥

निकृत्तेत्यादि। अन्यैः सेवार्थं हरयः सिंहाः आनिन्यिरे ज०म० आनीताः निकृत्तानि मत्तद्विपकुम्भमांसानि यैरग्रपादैः अतएव संपृक्तमुक्तैः लग्नकुम्भमुक्ताफलैः उपलक्षिताः श्रेणीकृताश्रश्रणयः



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



श्रेणयः कृताः श्रेण्यादयइति सः परस्परं वालधिसंनिबद्धाः अन्योन्यस्य पुच्छेन संयताः ॥ ४२ ॥

भ॰ निकृत्तेत्यादि। अन्यैराचरैर्हरयः सिंहाआनिन्यिरे आनीताः तथा पूर्व्वापेक्षया अग्रपादैः पादाग्रैरुपलक्षिताः कीदृशैः निकृत्तानि छिन्नानि मत्तद्विपानां कुम्भमांसानि यैः संपृक्ताः संयुक्ताः गजकुम्भस्थमुक्ताययच कीदृशाः श्रेणिकृताश्रश्रेणयः श्रेणयः कृता अभिधानं नियामकमित्युक्तेः च्व्यर्थे श्रेण्यादेः कृतादिना समासः इति बोध्यं परस्परमन्योन्यस्य पुच्छेन बद्धाः षष्ठ्या अमादेशो लोकोपचारादिति विद्यासागरः क्रियाविशेषणमिति केचित् स्वमते मनीषादित्वात् ॥ ४२ ॥

उपेक्षितादेवगणैस्तसद्भिर्निशाचरैर्वीतभयैर्निकृत्ताः। तस्मिन्नदृश्यन्त सुरद्रुमाणां सजालपुष्पस्तवकाः प्रकीर्णाः ॥ ४३ ॥

ज॰म॰ उपेक्षितेत्यादि। सुरद्रुमाणां पारिजातानां सजालाः कलिकासहिताः पुष्पस्तवकाः वीतभयैर्निशाचरैर्निकृत्ताः छिन्नाः वीतदयैरिति पाठान्तरं तच्च किमेतैः स्थितैरिति निर्दयैः सजालाएव छिन्नाः छिद्यमानाश्च देवगणैस्तसद्भिरुपेक्षिताः वाभ्राशेत्यादिना विकल्पेन श्यन् तस्मिन्राजाङ्गने प्रकीर्णाअदृश्यन्त सेवकजनेन ॥ ४३ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



उपेक्षितेत्यादि। तस्मिन् राजाङ्गने सुरद्रुमाणां पारिजाता भ॰
दीनां प्रकीर्णाविच्छिन्नाः जालेन कलिकया सहिताः पुष्पस्तवका
अदृश्यन्त दृष्टाः सेवकैरित्यर्थात् कीदृशाः चसद्भिस्त्रासं गच्छद्भि
र्देवगणैरुपेक्षिताः अरक्षिताः क्रमक्रमभ्रमेत्यादिना त्रसेर्विकल्पेन
श्यन् विहितइति पक्षे शप् वीतभयैर्विगतत्रासैर्निशाचरैर्निकृत्ताः
छिन्नाः वीतदयैरिति पाठे किम्भूतैः स्थितैरिति निर्दयैः जालं
गवाक्षे आनाये कोरके दम्भभेदयोरिति विश्वः ॥ ४३ ॥

निराकरिष्णुर्द्विजकुञ्जराणां तृणीकृताशेषगुणोऽ
तिमोहात्। पापाशयानभ्युदयार्थमार्चीत् प्रागब्रह्म
रक्षःप्रवरान् दशास्यः ॥ ४४ ॥

निराकरिष्णुरित्यादि। दशास्योविबुद्धः सन् अतिमोहाद ज॰म॰
त्यन्ताज्ञानात् निराकरिष्णुर्निराकरणशीलः द्विजवरानित्य
र्थात् द्विजकुञ्जराणां प्रशस्तद्विजानां अभ्युदयहेतूनां सम्बन्धिनो
ऽशेषाः गुणाः तृणीकृतायेन स तृणीकृताशेषगुणः प्राक् पूर्व्वं सभा
प्रवेशात् पापाशयान् पापचित्तवृतीन् ब्रह्मरक्षःप्रवरान् अभ्युद
यार्थमार्चीत् ॥ ४४ ॥

निराकरिष्णुरित्यादि। दशास्योरावणः प्रबुद्धः सन् सभा भ॰
प्रवेशात्प्राक् पूर्व्वं पापाशयान् पापचित्तवृत्तीन् ब्रह्मराक्षसश्रे
ष्ठान् ज्ञातीनभ्युदयार्थमार्चीत् पूजितवान् कीदृशः अतिमोहात्

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



श्रेणयः छताः श्रेण्यादयइति सः परस्परं वालधिसंनिबद्धाः अन्योन्यस्य पुच्छेन संयताः ॥ ४२ ॥

भ० निकृत्तेत्यादि। अन्यैराचरैर्हरयः सिंहाव्यानिन्यिरे आनीताः तथा पूर्व्वापेक्षया अग्रपादैः पादाग्रैरुपलक्षिताः कीदृशैः निकृत्तानि छिन्नानि मत्तद्विपानां कुम्भमांसानि यैः संपृक्ताः संयुक्ताः गजकुम्भस्थमुक्ताश्च कीदृशाः श्रेणिकृताश्श्रेणयः श्रेणयः छता अभिधानं नियामकमित्युक्तेः च्व्यर्थे श्रेण्यादेः छतादिना समासः इति बोध्यं परस्परमन्योन्यस्य पुच्छेन बद्धाः षष्ठ्या अमादेशो लोकोपचारादिति विद्यासागरः क्रियाविशेषणमिति केचित् स्वमते मनीषादित्वात् ॥ ४२ ॥

उपेक्षितादेवगणैस्तसङ्गिर्निशाचरैर्वीतभयैर्निकृत्ताः। तस्मिन्नदृश्यन्त सुरद्रुमाणां सजालपुष्पस्तवकाः प्रकीर्णाः ॥ ४३ ॥

ज०म० उपेक्षितेत्यादि। सुरद्रुमाणां पारिजातानां सजालाः कलिकासहिताः पुष्पस्तवकाः वीतभयैर्निशाचरैर्निकृत्ताः छिन्नाः वीतदयैरिति पाठान्तरं तच्च किमेतैः स्थितैरिति निर्दयैः सजालाएव छिन्नाः छिद्यमानाश्च देवगणैस्तसद्भिरुपेक्षिताः वाभ्राशेत्यादिना विकल्पेन श्यन् तस्मिन्राजाङ्गने प्रकीर्णाअदृश्यन्त सेवकजनेन ॥ ४३ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



उपेक्षितेत्यादि। तस्मिन् राजाङ्गने सुरद्रुमाणां पारिजाता भ०
दीनां प्रकीर्णविक्षिप्ताः जालेन कलिकया सहिताः पुष्पस्तवका
अदृश्यन्त दृष्टाः सेवकैरित्यर्थात् कीदृशाः त्रसद्भिस्त्रासं गच्छद्भि
र्देवगणैरुपेक्षिताः अरचिताः क्रमक्रमभ्रमेत्यादिना त्रसेर्विकल्पेन
श्यन् विहितइति पक्षे शप् वीतभयैर्विगतत्रासैर्निशाचरैर्निकृत्ताः
च्छिन्नाः वीतदयैरिति पाठे किम्भूतैः स्थितैरिति निर्दयैः जालं
गवाक्षे आनाये कोरके दृक्षभेदयोरिति विश्वः॥ ४३॥

निराकरिष्णुर्द्विजकुञ्जराणां तृणीकृताशेषगुणोऽ
तिमोहात्। पापाशयानभ्युदयार्थमार्चीत् प्रागब्रह्म
रक्षःप्रवरान् दशास्यः॥ ४४॥

निराकरिष्णुरित्यादि। दशास्योविबुद्धः सन् अतिमोहाद ज०म०
त्यन्ताज्ञानात् निराकरिष्णुर्निराकरणशीलः द्विजवरानित्य
र्थात् द्विजकुञ्जराणां प्रशस्तद्विजानां अभ्युदयहेतूनां सम्बन्धिनो
ऽशेषाः गुणाः तृणीकृतायेन स तृणीकृताशेषगुणः प्राक् पूर्व्वं सभा
प्रवेशात् पापाशयान् पापचित्तवृतीन् ब्रह्मरक्षःप्रवरान् अभ्युद
यार्थमार्चीत्॥ ४४॥

निराकरिष्णुरित्यादि। दशास्योरावणः प्रबुद्धः सन् सभा भ०
प्रवेशात्प्राक् पूर्व्वं पापाशयान् पापचित्तवृत्तीन् ब्रह्मराक्षसश्रे
ष्ठान् ज्ञातीनभ्युदयार्थमार्चीत् पूजितवान् कीदृशः अतिमोहात्

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अत्यज्ञानात् द्विजकुञ्जराणां विप्रश्रेष्ठानां निराकरिष्णुः द्विजश्रेष्ठान्निराकृत्य ब्रह्मराक्षसान् पूजितवानिति मोहः ढचेकृतीत्यादिना उदन्तकृद्योगे षष्ठी न भवतीति सम्बन्धे षष्ठी यद्वा द्विजकुञ्जराणां तृणीकृताऽवधीरिताः सकलागुणायेनेति सम्बन्धः अतएव निराकरिष्णुस्तानित्यर्थात्॥ ४४॥

मायाविभिस्त्रासकरैर्ज्जनानामाप्तैरुपादानपरैरुपेतः। सतां विघातैकरसैरविक्षत् सदः परिक्षोभितभूमिभागं॥ ४५॥

ज०म० मायाविभिरित्यादि। आप्तैरव्यभिचारिभिर्म्मायाविभिर्वञ्चकैः परेषां चासकरैः जनानामतिरौद्रत्वात् उपादानपरैः सतां सन्मार्गस्थितानां विघातैकरसैर्विनाशैकस्वभावैः उपेतो दशास्यः सदः सभामविक्षत् प्रविष्टः शलद्गुपधानिटः क्सः कीदृशं राक्षसैश्चरणभागेन परिक्षोभितभूमिभागं॥ ४५॥

भ० मायाविभिरित्यादि दशास्यः सदः सभामविक्षत् प्रविष्टवान् हशषोऽनिमिति सक् कीदृशः आप्तैरात्मीयैराक्षसैरुपेतः उपगतः सन् कीदृशैर्मायाविभिर्वञ्चकैर्जनानां चासकरैः अतिरौद्रत्वात् उपादानपरैः स्वाम्यर्थसम्पादनपरैः सतां साधूनां विघातमात्रेक्षुभिः सदः कीदृशं रावणचरणभरेण परिक्षोभितः सञ्चलितो भूमिभागो यत्र॥ ४५॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



विधृतनिशितशल्लैस्तद्युतं यातुधानैरुरुजठरमुखीभिः संकुलं राक्षसीभिः। श्वगणिशतविकीर्णं वागुरावन्मृगीभिर्व्वनमिव सभयाभिर्दैववन्दीभिरासीत्॥ ४६॥

विधृतेत्यादि। तत्सदो यातुधानैः विधृतनिशितशल्लैः गृहीतशल्लैर्युतं युक्तमासीत् तथा राक्षसीभिः उरुजठरमुखीभिः संकुलं व्याप्तं यथा वनं वागुरावत् सवागुरं श्वगणिकशतकीर्णं आखेटकशतछन्नं मृगीभिः सभयाभिः श्वगणिकेभ्यो जातभयाभिः व्याप्तमासीत् श्वगणा विद्यन्ते येषामिति श्वगणिका अत इति ठक्॥ ४६॥ ज० म०

विधृतेत्यादि। तत्सदो वनमिवासीत् कीदृशं सदः विधृततीक्ष्णशल्लैर्यातुधानै राक्षसैर्युक्तं तथा राक्षसीभिः संकुलं व्याप्तं कीदृशीभिः उरु महत् जठरमुदरं मुखञ्च यासां ताभिः तदा देववन्दीभिर्हठात् हृतदेवस्त्रीभिः संकुलमिति सम्बन्धः श्वगणिशतविकीर्णमाखेटकशतच्छन्नं वागुरावत् वागुरा मृगबन्धनी रज्जुस्तद्युक्तं मृगीभिः संकुलं सभयाभिर्भययुक्ताभिरिति मृगीणां देववन्दीनाञ्च विशेषणं तत्सदोऽपि कुक्कुरधारिभिर्युक्तं तथा रज्जुबद्धमृगीभिर्युक्तं वनमपि राक्षसैः राक्षसीभिश्च युक्तं शुनां गणो विद्यते येषां ते श्वगणिन आखेटिकाः॥ ४६॥ भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अत्यज्ञानात् द्विजकुञ्जराणां विप्रश्रेष्ठानां निराकरिष्णुः द्विजश्रेष्ठान्निराकृत्य ब्रह्मराक्षसान् पूजितवानिति मोहः ढघेक्कतीत्यादिना उदन्तकृद्योगे षष्ठी न भवतीति सम्बन्धे षष्ठी यद्वा द्विजकुञ्जराणां तृणीकृता अवधीरिताः सकला गुणा येनेति सम्बन्धः अतएव निराकरिष्णुस्तानित्यर्थात्॥ ४४॥

**मायाविभिस्त्रासकरैर्जनानामाप्तैरुपादानपरैरुपेतः। सतां विघातैकरसैरविक्षत् सदः परिक्षोभितभूमिभागं॥ ४५॥**

ज॰म॰ मायाविभिरित्यादि। आप्तैरव्यभिचारिभिर्मायाविभिर्वञ्चकैः परेषां चासकरैः जनानामतिरौद्रत्वात् उपादानपरैः सतां सन्मार्गस्थितानां विघातैकरसैर्विनाशैकस्वभावैः उपेतो दशास्यः सदः सभामविक्षत् प्रविष्टः शलड्गुपधानिटः क्सः कीदृशं राक्षसैश्चरणभागेन परिक्षोभितभूमिभागं॥ ४५॥

भ॰ मायाविभिरित्यादि दशास्यः सदः सभामविक्षत् प्रविष्टवान् हशषोऽनिमिति सक् कीदृशः आप्तैरात्मीयैराक्षसैरुपेतः उपगतः सन् कीदृशैर्मायाविभिर्वञ्चकैर्जनानां चासकरैः अतिरौद्रत्वात् उपादानपरैः स्वाम्यर्थसम्पादनपरैः सतां साधूनां विघातमात्रेच्छुभिः सदः कीदृशं रावणचरणभरेण परिक्षोभितः सञ्चलितो भूमिभागो यत्र॥ ४५॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



विधृतनिशितशस्त्रैस्तद्युतं यातुधानैरुरुजठरमुखीभिः संकुलं राक्षसीभिः। श्वगणिशतविकीर्णं वागुरावन्मृगीभिर्वनमिव सभयाभिर्दैववन्दीभिरासीत्॥४६॥

विधृतेत्यादि। तत्सदो यातुधानैः विधृतनिशितशस्त्रैः गृहीतशस्त्रैर्युतं युक्तमासीत् तथा राक्षसीभिः उरुजठरमुखीभिः संकुलं व्याप्तं यथा वनं वागुरावत् सवागुरं श्वगणिकशतकीर्णं आखेटकशतच्छन्नं मृगीभिः सभयाभिः श्वगणिकेभ्यो जातभयाभिः व्याप्तमासीत् श्वगणा विद्यन्ते येषामिति श्वगणिका अतइति ठक्॥४६॥ ज०म०

विधृतेत्यादि। तत्सदो वनमिवासीत् कीदृशं सदः विधृततीक्ष्णशस्त्रैर्यातुधानैराक्षसैर्युक्तं तथा राक्षसीभिः संकुलं व्याप्तं कीदृशीभिः उरु महत् जठरमुदरं मुखञ्च यासां ताभिः तदा देववन्दीभिर्हठात् हृतदेवस्त्रीभिः संकुलमिति सम्बन्धः श्वगणिशतविकीर्णमाखेटकशतच्छन्नं वागुरावत् वागुरा मृगबन्धनी रज्जुस्तद्युक्तं मृगीभिः संकुलं सभयाभिर्भययुक्ताभिरिति मृगीणां देववन्दीनाञ्च विशेषणं तत्सदोऽपि कुक्कुरधारिभिर्युक्तं तथा रज्जुबद्धमृगीभिर्युक्तं वनमपि राक्षसैः राक्षसीभिश्च युक्तं शुनां गणो विद्यते येषां ते श्वगणिन आखेटिकाः॥४६॥ भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अत्यज्ञानात् द्विजकुञ्जराणां विप्रश्रेष्ठानां निराकरिष्णुः द्विजश्रेष्ठानिराकृत्य ब्रह्मराक्षसान् पूजितवानिति मोहः ढघेकृतीत्यादिना उदन्तकृद्योगे षष्ठी न भवतीति सम्बन्धे षष्ठी यद्वा द्विजकुञ्जराणां तृणीकृताअवधीरिताः सकलागुणायेनेति सम्बन्धः अतएव निराकरिष्णुस्तानित्यर्थात्॥ ४४॥

मायाविभिस्त्रासकरैर्ज्जनानामाप्तैरुपादानपरैरुपेतः। सतां विघातैकरसैरविक्षत् सदः परिक्षोभितभूमिभागं॥ ४५॥

ज०म० मायाविभिरित्यादि। आप्तैरव्यभिचारिभिर्मायाविभिर्वञ्चकैः परेषां त्रासकरैः जनानामतिरौद्रत्वात् उपादानपरैः सतां सन्मार्गस्थितानां विघातैकरसैर्विनाशैकस्वभावैः उपेतोदशास्यः सदः सभामविक्षत् प्रविष्टः शलदृगुपधानिटः क्सः कीदृशं राक्षसैश्चरणभागेन परिक्षोभितभूमिभागं॥ ४५॥

भ० मायाविभिरित्यादि दशास्यः सदः सभामविक्षत् प्रविष्टवान् हशषोऽनिमिति सक् कीदृशः आप्तैरात्मीयैराक्षसैरुपेतः उपगतः सन् कीदृशैर्मायाविभिर्वञ्चकैर्जनानां त्रासकरैः अतिरौद्रत्वात् उपादानपरैः स्वाम्यर्थसम्पादनपरैः सतां साधूनां विघातमात्रेक्षुभिः सदः कीदृशं रावणचरणभरेण परिक्षोभितः सञ्चलितोभूमिभागोयत्र॥ ४५॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



विधृतनिशितशस्त्रैस्तद्युतं यातुधानैरुरुजठरमुखीभिः संकुलं राक्षसीभिः। श्वगणिशतविकीर्णं वागुरावन्मृगीभिर्वनमिव सभयाभिर्दैववन्दीभिरासीत्॥४६॥

विधृतेत्यादि। तत्सदो यातुधानैः विधृतनिशितशस्त्रैः गृहीतशस्त्रैर्युतं युक्तमासीत् तथा राक्षसीभिः उरुजठरमुखीभिः संकुलं व्याप्तं यथा वनं वागुरावत् सवागुरं श्वगणिकशतकीर्णं आखेटकशतच्छन्नं मृगीभिः सभयाभिः श्वगणिकेभ्यो जातभयाभिः व्याप्तमासीत् श्वगणा विद्यन्ते येषामिति श्वगणिका अतइति ठन्॥४६॥ ज०म०

विधृतेत्यादि। तत्सदो वनमिवासीत् कीदृशं सदः विधृततीक्ष्णशस्त्रैर्यातुधानै राक्षसैर्युक्तं तथा राक्षसीभिः संकुलं व्याप्तं कीदृशीभिः उरु महत् जठरमुदरं मुखञ्च यासां ताभिः तदा दैववन्दीभिर्हठात् हृतदेवस्त्रीभिः संकुलमिति सम्बन्धः श्वगणिशतविकीर्णमाखेटकशतच्छन्नं वागुरावत् वागुरा मृगबन्धनी रज्जुस्तद्युक्तं मृगीभिः संकुलं सभयाभिर्भययुक्ताभिरिति मृगीणां दैववन्दीनाञ्च विशेषणं तत्सदोऽपि कुक्कुरधारिभिर्युक्तं तथा रज्जुबद्धमृगीभिर्युक्तं वनमपि राक्षसैः राक्षसीभिश्च युक्तं शुनां गणो विद्यते येषां ते श्वगणिन आखेटिकाः॥४६॥ भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अत्यज्ञानात् द्विजकुञ्जराणां विप्रश्रेष्ठानां निराकरिष्णुः द्विजश्रेष्ठान्निराकृत्य ब्रह्मराक्षसान् पूजितवानिति मोहः ढघेक्वतीत्यादिना उदन्तकृद्योगे षष्ठी न भवतीति सम्बन्धे षष्ठी यद्वा द्विजकुञ्जराणां तृणीकृता अवधीरिताः सकला गुणा येनेति सम्बन्धः अतएव निराकरिष्णुस्तानित्यर्थात् ॥ ४४ ॥

मायाविभिस्त्रासकरैर्जनानामाप्तैरुपादानपरैरुपेतः। सतां विघातैकरसैरविक्षत् सदः परिक्षोभितभूमिभागं ॥ ४५ ॥

ज०म० मायाविभिरित्यादि। आप्तैरव्यभिचारिभिर्मायाविभिर्वञ्चकैः परेषां त्रासकरैः जनानामतिरौद्रत्वात् उपादानपरैः सतां सन्मार्गस्थितानां विघातैकरसैर्विनाशैकस्वभावैः उपेतो दशास्यः सदः सभामविक्षत् प्रविष्टः शलदृगुपधानिटः क्सः कीदृशं राक्षसैश्चरणभागेन परिक्षोभितभूमिभागं ॥ ४५ ॥

भ० मायाविभिरित्यादि दशास्यः सदः सभामविक्षत् प्रविष्टवान् हशषोऽनिमिति सक् कीदृशः आप्तैरात्मीयैराक्षसैरुपेतः उपगतः सन् कीदृशैर्मायाविभिर्वञ्चकैर्जनानां त्रासकरैः अतिरौद्रत्वात् उपादानपरैः स्वाम्यर्थसम्पादनपरैः सतां साधूनां विघातमात्रेच्छुभिः सदः कीदृशं रावणचरणभरेण परिक्षोभितः सञ्चलितो भूमिभागो यत्र ॥ ४५ ॥

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



विधृतनिशितशस्त्रैस्तद्युतं यातुधानैरुरुजठरमुखीभिः संकुलं राक्षसीभिः। श्वगणिशतविकीर्णं वागुरावन्मृगीभिर्वनमिव सभयाभिर्देववन्दीभिरासीत्॥४६॥

विधृतेत्यादि। तत्सदो यातुधानैः विधृतनिशितशस्त्रैः गृहीतशस्त्रैर्युतं युक्तमासीत् तथा राक्षसीभिः उरुजठरमुखीभिः संकुलं व्याप्तं यथा वनं वागुरावत् सवागुरं श्वगणिकशतकीर्णं आखेटकशतछन्नं मृगीभिः सभयाभिः श्वगणिकेभ्यो जातभयाभिः व्याप्तमासीत् श्वगणा विद्यन्ते येषामिति श्वगणिका अतइति ठक्॥४६॥ जं०म०

विधृतेत्यादि। तत्सदो वनमिवासीत् कीदृशं सदः विधृततीक्ष्णशस्त्रैर्यातुधानैराक्षसैर्युक्तं तथा राक्षसीभिः संकुलं व्याप्तं कीदृशीभिः उरु महत् जठरमुदरं मुखञ्च यासां ताभिः तदा देववन्दीभिर्हठात् हृतदेवस्त्रीभिः संकुलमिति सम्बन्धः श्वगणिशतविकीर्णमाखेटकशतच्छन्नं वागुरावत् वागुरा मृगबन्धनी रज्जुस्तद्युक्तं मृगीभिः संकुलं सभयाभिर्भययुक्ताभिरिति मृगीणां देववन्दीनाञ्च विशेषणं तत्सदोऽपि कुक्कुरधारिभिर्युक्तं तथा रज्जुबद्धमृगीभिर्युक्तं वनमपि राक्षसैः राक्षसीभिश्च युक्तं शुनां गणो विद्यते येषां ते श्वगणिन आखेटिकाः॥४६॥ भ०

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



जलदइव तडित्वान् प्राज्यरत्नप्रभाभिः प्रतिककुभमुदस्यन्निस्वनं धीरमन्द्रं । शिखरमिव सुमेरोरासनं हैममुच्चैर्विविधमणिविचित्रं प्रोन्नतं सोऽध्यतिष्ठत् ॥ ४७ ॥

## इति भट्टिकाव्ये एकादशः सर्गः ॥ ११ ॥

ज०म० जलदइत्यादि । प्राज्यानां प्रभूतानां रत्नानां मणीनां प्रभाभिः तडित्वानिव जलदः प्रोन्नतात्मा सर्व्वेषामुपरि स्थितत्वात् प्रतिककुभं दिशि दिशि धीरमन्द्रं मन्दगम्भीरं निस्वनं उदस्यन्निचिपन् सुमेरोः शिखरमिव हैममासनमुच्चैरुच्चं विविधमणिविचित्रं नानारूपैर्मणिभिर्विचित्रं नानावर्णकर्म्माध्यतिष्ठत् समारोहति स्म ॥ ४७ ॥

भ० इति भट्टिकाव्यटीकायां जयमङ्गलायां प्रसन्नकाण्डे माधुर्य्य प्रदर्शनोनाम द्वितीयोऽध्यायः । काव्यस्य प्रभातवर्णनोनामैकादशः सर्गः ॥ ११ ॥

जलदइत्यादि । सरावणः सुमेरोः शिखरमिवोच्चैरुच्चं हैमं हिरण्मयमासनमध्यतिष्ठत् किं कुर्व्वन् विद्युद्युक्तोमेघइव प्रतिककुभं दिशि दिशि धीरमन्द्रं गभीरतारं निस्वनं ध्वनिमुदस्यन् चिपन् प्रोन्नतः सर्व्वेषामुपरि स्थितः उन्नताकारोवा प्राज्यानां प्रभूतानां रत्नानां प्रभाभिरुपलचितः प्राज्यरत्नप्रभाभिः करण ः भिस्तडित्वान् जलदइव इति वा आसनं कीदृशं विविधैर्ना

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



नावर्णैर्मणिभिर्विचित्रं सुमेरुशिखरमध्येवं प्रोन्नतमिति पाठे उच्चै रिति रावणविशेषणं प्रतिककुभमिति ह्यपनदीति पचे अप्रत्ययः तडित्वानिति तद्वत्साहित्यमात्रमत्र विवक्षितमुपमेये प्राज्यरत्न प्रभासाहित्यादतोनात्र पौनरुक्त्यं॥ ३७॥

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभ रतसेनकृतायां भट्टिटीकायां मुग्धबोधिन्यां प्रसन्नकाण्डे गुणद र्शनं नाम द्वितीयः परिच्छेदः काव्यस्य प्रभातवर्णनं नामैका दशः सर्गः॥ ११॥

CC-0. In Public Domain. Funding by IKS-MoE

